॥ श्रीः ॥

श्रीगोदवर्मविद्वद्युवराजकृतम्

# श्री रा म च रि त म्

पण्डितरत्ननारायणपिषारोटिविरचितव्याख्यासहितम्

# ŚRĪRĀMACARITAM

BY

GODAVARMA VIDVADYUVARĀJAḤ

With a Commentary of

Paṇḍitaratnam Nārāyṇa Piṣāroty

सम्पादकः

पण्डितरत्नं नारायणपिषारोटिः

प्राध्यापकः, आदर्शसंस्कृत विद्यापीठः, बालश्रीः

प्रकाशकः

आदर्श संस्कृत विद्यापीठः

बालश्रीः, केरलराज्यम्

1985

First Edition 1985

ACKNOWLEDGEMENT

We acknowledge with thanks the grant-in-aid given by
the Ministry of Education and Social Welfare
Government of India which has made
possible this publication.

*Published by*
**Adarsa Samskruta Vidyapeetha**
Balusery, Kerala

Price **Rs.**

*Printed by*
Jayanti Printers, Jayanagar, Mysore-14

# विषयानुक्रमणिका



## श्रीरामचरितम्

## उत्तरश्रीरामचरितम्

# आमुखम्

डा० सि. आर्. स्वामिनाथन् (कार्यकारः)

मम गुरुकल्पेन स्वनामधन्येन पण्डितरत्नेन नारायणपिषारोटिमहाभागेन आज्ञप्तोऽहं सहृदयकरपल्लवेषु गोदवर्माख्येन विद्वद्युवराजेन प्रणीतं श्रीरामचरितं नाम महाकाव्यं समर्पयन्न-सीममानन्दभरमनुभवामि। नाहं तादृशः कविधर्ममर्मज्ञः, न चास्ति तादृशी सहृदयता मयि, महाकाव्यमिदमधिकृत्य नीरक्षीरविवेचनमनुष्ठातुम्। किन्त्वत्र मणिकाञ्चनसंयोग इव श्रीपिषारोटि महोदयस्य लघुव्याख्या ग्रन्थस्यास्य आस्वाद्यतामवबोध्यतां च द्विगुणीकरोति, मुखरीकरोति च मादृशमपि विमर्शनाय।

शताब्देभ्यः कविकुलस्य जीवातुभूतं मधुमयभणितीनां मार्गदर्शिनो वाल्मीके रामायणं कथावस्तुत्वेन स्वीकृतमिति काव्यस्याभिधानमेवावगमयति। सिद्धरसप्रख्यं कथावस्तु तादृशौ नायकौ च, येषां रसोत्पादनक्षमता अद्याप्यक्षुण्णा विराजते। कियन्तः कवयः, कियन्तश्च काव्य-नाटकसन्दर्भा रामचरितवर्णनेन चरितार्थतां प्राप्तवन्तः। कियन्तश्च सहृदयाः नवनवोन्मेषप्रतिभा-शालिनां कवीनां रामचरितवर्णनाप्रयुक्तैर्वाग्विलासै रोमाञ्चकञ्चुकिता अनास्वादितपूर्वमानन्द-मन्वभूवन्, अनुभवन्ति, अनुभविष्यन्ति च 'यावत् स्थास्यन्ति गिरयः सरितश्च महीतले'। रामा-यणस्य काव्यप्रसूतिक्षमतामेवानुकरोति भारतसावित्र्या महाकविपरम्पराप्रसूतिप्रवणता। कालि-दासमाघभारविकुमारदासश्रीहर्षादीनां प्राचीनानाम्, राजशेखरक्षेमेन्द्रजगन्नाथादीनां मध्यकाली-नानां च आविर्भावेन भारतक्षोण्या महाकविप्रसूतिक्षमता न शुष्कतां गता, यतो निर्जरेयं पुरातनी युवतिरर्वाचीन एव काले गोदवर्माभिधं महाकविं जनयामास। स च यद्यपि अदीर्घमेव कालं भौतिकशरीरेण व्यराजत, तथापि स्वकृत्या श्रीरामचरितेन अनश्वरं यशश्शरीरमवाप्य अद्यापि जीवति।

कोटिलिङ्गपुराख्यायां राजधान्यां क्षत्रियकुलावतंसत्वेन जनिमलभतायं सारस्वतोपा-सकः। भूम्या धेनूनां च दानेन जगति राजोन्नितां गोदाभिख्यां प्राप्स्यतीति मनीषया स्यादस्य पितृभिर्गोदवर्मेति अभिधा दत्ता। किन्तु त्रेधा गोदत्वमात्मनः सिषाधयिषतानेन सुरगवीदानमपि सम्पादितं श्रीरामचरितमहाकाव्यं निर्माय।

नास्ति किञ्चित् सर्गबन्धरचनोपकरणम्, यदप्रयुक्तमस्मिन् काव्ये। न चास्ति कश्चिदलङ्कारः शाब्दिक आर्थिको वा, येन अप्रसाधितेयं कवितातरुणी। अशेषसहृदयसन्तोषपोषणशेमुषीमषी-कषायदिग्धा कवेरस्य तूलिका प्रकृतिचित्रीकरणे, स्त्रीपुरुषसौन्दर्यनिरूपणे च अनितरसाधारणं चमत्कारं दर्शयतितराम्। नैषधीयकाव्यक्ष्माधरपक्षक्षपणदक्षसहस्राक्षस्यास्य कवेरुत्प्रेक्षापक्षपातितां कीदृक्षं वर्णयामः। दशकन्धरद्विदशदृशास्वादितदाशरथिदारदेहद्युतिवर्णनेन, भावनादरिद्राणां कवीनामन्येषां विस्मयोत्फुल्लानि चक्षूंषि पतनोत्पतनप्रक्रियाव्याकुलीकृतक्रीडाकन्दुकदशां दरीदर्शयन्ति। विलक्षणश्रृङ्गाराभासकलुषितमपि क्षणदाचर्याः शूर्पणख्या अक्ष्णोर्युग्मं रामशरीर-लावण्यगवेषणमिषेण काव्यनिर्माणवैचक्षण्यपरीक्षणाय निकषपाषाणायते। श्लेषशेषशय्याशायि समाश्लिष्टप्रतिभातिशयकुशेशयवासं निरवद्यविद्याविलासकौमोदकीसहितं चतुराशाचतुराननरसन चतुष्टयजेगीयमानयशोराशिप्रलयपयोधिशायिनं विष्णुमनुकरोति काव्यमिदम्।

स्थालीपुलाकन्यायेन कवेरस्य कानिचित्पद्यानि विमर्शयामोऽत्र। वृद्धोऽपि दशरथो निर्जरया जरया सर्वाङ्गेषु चुम्बित इति वर्णयतः कवेरस्य जरा न कालिदासजरावत् कैकेय्या भीतभीता कर्णमूले निलीना वर्तते।

**पश्य मां वश्यमाधातुं जरा नारीव निर्जरा।**
**शनैराहितसान्निध्या सर्वाङ्गेष्वपि चुम्बति॥ ८–४॥**

तृष्णातुरचातकगलकुहरपाती जलबिन्दुरेव सार्थकीकरोत्यपाममृताख्यामित्यन्यापदेश भङ्ग्या, पात्रे दत्तमेव दानं यशसे श्रेयसे पुण्याय च भवतीति सूचयन् कविर्जलधिमध्यगतायां शुक्तौ पतितो जलबिन्दुराढ्यतामेव प्रकटयेदिति ध्वनयति। यथा—

**चिरपिपासितचातकमण्डलीगलबिलाध्वनि यद्गलितं पयः।**
**तदिदमेव जलेषु पयोमुचाममृततामृततामनयन्निजाम्॥ ४–४४॥**

शरदारम्भे पुष्पवतीमपि कमलिनीं न विजहुर्हंसा इति वर्णनाप्रसङ्गे रजोदूषितामपि लावण्यवतीमङ्गनां द्विजा नोपेक्षन्त इति ब्रह्मकुलजातानामाचारच्युतिं निन्दति पुष्पद्विजशब्दयोः प्रयोगेन। यथा—

**शरदि पुष्पवतीमपि पद्मिनीं न विजहुर्विमला अपि ते द्विजाः।**
**यदतिरञ्जनमत्र शरीरिणां मनसि तेन सिते न विवेकिता॥ ४–६६॥**

कालरूपः कृषीवलो वृषभायितेन सूर्येण नभःक्षेत्रं कर्षयन् कर्दमायितैस्तमोभिः बीजावापयोग्यं कुर्वन् नक्षत्रबीजानि वपतीति कवेः कृषिकर्मपरिचयं व्यनक्ति । यथा—

सहस्रपादं वृषभं प्रचार्य क्षेत्रं नभो नाम विकृष्य कालः ।
कृषीवलः कर्दमिते तमोभिर्वपत्यमुष्मिन्नुडुबीजजालम् ॥ ६-३४ ॥

कस्यचन तटाकस्य प्रान्ते शिलाखण्डस्योपरि स्थितो धीवरो मत्स्यग्रहणाय बडिशबद्धं तन्तुं जले यथा क्षिपति, तथा कुचकुम्भोपरि स्थितो मकरकेतनो निजध्वजपताकामलङ्कर्तुं मत्स्यं जिघृक्षुः सीताया नाभिसरसि रोमावलिं बडिशसूत्रं विसृजतीति वर्णयता केरलीयं दृश्यमेव चित्रितम् । यथा—

पृथुस्तनेभ्यः पृथुरोमदृष्टेरस्याः सरस्या नतनाभिनाम्नः ।
स्वकेतुमादातुमिवान्तरास्थल्लोमावलीश्यामलदाम कामः ॥ १२-९२ ॥

निरङ्कुशाः कवय इत्यभिजनोक्तिं समर्थयता नैकेषु स्थलेषु कथावस्तुप्रतिपादने वाल्मीके रामायणाद्व्यतियानमाचरितम् । विश्वामित्रो यागरक्षणार्थं रामं नेतुं यदा वाञ्छति, तदा दशरथो निजमन्तस्तापं बहिरप्रकाशयन्नेव प्राणेभ्यः प्रियतरमूनषोडशवर्षं वत्सं निशाचरैः सह युद्धार्थं दातुं सन्नद्धो भवति । गौतमधर्मदाराः रामायण इव भर्तुः शापेन न केवलमदृश्यतां नीताः, किन्तु शिलात्वमेव प्रापिताः । काकासुरवृत्तान्तः यथासन्दर्भमेव वर्णयति, न तु रामायण इव सीतासन्देशांशरूपेण ।

रामस्य केशादिपादान्तवर्णने यत् पुरुषसौन्दर्यप्रतिपादनम्, तदतीव विलक्षणं चमत्कार जनकं श्रीहर्षकृतनलसौन्दर्यवर्णनमनुकरोति उत्प्रेक्षाबाहुल्येन । परं तु सीतासौन्दर्यविमर्शनं यद्दशाननेन क्रियते, यत्र च कविः केरलीयनाट्यकलायाः कूटियाट्टनाम्न्याः प्रभावमभिव्यनक्ति, यत्र चोत्प्रेक्षालङ्कारः सर्वोत्तरं सार्वभौमत्वं वहति, तत्र किञ्चिदनौचित्यं नूनमाचरितमिवाभाति । व्याजेन रामलक्ष्मणावाश्रमादपाकृष्य चौर्यवृत्त्या सीतामपहर्तुमुद्यतो दशकन्धरः शताधिकैः श्लोकैः सीतासौकुमार्यवर्णने यद्व्यासिक्यं प्रदर्शयति, तत् सन्दर्भोचितां शीघ्रतां बाधते । नेदं दृश्यकाव्यम्, यत्र कालपरिमाणमवश्यं पालनीयमिति समाधातुं शक्यतेऽयमाक्षेपः । अथवा सीतालावण्यास्वादने मग्नचित्तेन रामप्रत्यागमनजन्या भीतिरात्मरक्षा च कामान्धतया विस्मृता इति समर्थनीयम् । मादृशानां न तु काव्यास्वादनैकचित्तानां दृष्टिगोचरो भवत्ययं दोषः ।

तस्माद्विमर्शकस्य रासिक्यदारिद्र्यमेवात्रापराध्यति इति वक्तुं शक्यते । बहुमुखीनं वैदग्ध्य दर्शयतः कवेरस्य विषये अनौचित्यमिदं यदि तथात्वेनैव स्वीक्रियते, तदापि "एको हि दोषो गुणसन्निपाते निमज्जति" इति न्यायेन मर्षणीयमेव ।

कविरयं क्वचित् प्रत्यक्षरश्लेषमयप्रबन्धनिबन्धनपटुं सुबन्धुमनुकरोति, कदाचिल्ललित कोमलकान्तपदावलीभिर्जयदेवकवेः कर्णरसायनायितां कवितां स्मारयति, अन्यत्र सन्दर्भोचितं शब्दार्थयोः सामञ्जस्यमाधाय नारायणभट्टपादसरणिमनुसरति, तत्र तत्र च भट्टिकाव्यस्य व्याख्यागम्यतामवलम्बते ।

शब्दालङ्कारेष्वादरातिशयः, वैदुष्यप्रकटनम्, छान्दसो निर्बन्ध इत्यादिभिः कारणैः कतिचन क्लिष्टा अप्रयुक्ताश्च प्रयोगाः काव्येऽस्मिन् दृश्यन्ते । उदाहरणतया "यमशासनालयक्षमाधरः" न तु कैलासपर्वतः (३–१२), "करमेककं" न तु करमेकं (३–६७), "विजरिहर्ति" (५–७१), "पाकसंशासनीयान्" (९–६९), "अविचारशून्यः" चिन्ताक्रान्त इत्यर्थे (५–५६) इत्यादयः सुलभाः ।

सत्स्वप्येतादृशेषु लघुदोषेषु काव्यस्यास्य स्थानं साहित्यलोके नूनमत्युन्नतं वरीवर्ति ।

गोदवर्मा विद्वद्युवराजो महाकाव्यमिदमसमाप्यैव दिवं गत इति विदुषां खेदाय भवति । तत्पूर्तिश्च कोच्चुण्णिराजकविना व्यधायीति सहृदयानामाश्वासप्रदमेव । किन्तु उत्तरकाव्ये तादृशं प्रौढिमानं चमत्कारजनकत्वं वा न पश्याम इति नेदं तस्यापलापाय । सूर्यदर्शनोत्तरक्षण एव दीपं पश्यतो जनस्य दीपो यदि खद्योतायते, न तद् दीपस्य दोषाय कल्पते । परं तु दर्शकस्यैव । "दीपो नेत्रातुरस्येव प्रतिकूलासि मे दृढम्" इति रावणवधानन्तरं सीताचारित्रे जातशङ्कस्य रामस्य वचनं स्मरामि ।

व्याख्यातुर्विषये किञ्चिदनुक्त्वा प्राक्कथनमिदं परिसमाप्यते चेत् पूज्यपूजाव्यतिक्रमदोषो भविष्यति । अल्पाक्षरमसन्दिग्धं व्याख्यानं लिखन् श्रीपिषारोटिमहाभागो ग्रन्थग्रन्थिभेदनादन्यत् किमपि कर्तुं न व्यवसितवान् "मितं च सारं च वचो हि वाग्मिता" इति वचनमन्वर्थयति । व्याख्यात्रानुष्ठितं शब्दकार्पण्यमनेनामुखेन प्रतिकृतमिति मन्ये । गौडीयाडम्बरबहुलस्य काव्यस्य मिताक्षरया व्याख्यायाश्चान्तरं प्रतिश्लोकमस्मान् बोधयति, यदयं व्याख्याता केवलं काव्यात्मभूतेन तत्त्वेन चमत्कृतः, न तु बाह्यसौन्दर्यसंविधानैः । मल्लिनाथीया वैयाकरणसरणिरपि नादृतानेन, यतो विदुषां सहृदयानां चान्तरं सम्यगवगच्छति ।

अर्वाचीनं यद्यपि महाकाव्यमिदमेतावता अनेहसामुद्रितं प्रकाशितं च नाभूत्, तथापि इदम्प्रथमतया सम्यक् सम्पाद्य व्याख्यया चालङ्कृत्य सहृदयसमक्षमुपस्थापयता श्रीपिषारोटिना न केवलं विद्वद्युवराजकवेर्वैदुष्यं प्रकाशमानीतं, किन्तु, केरलीयानां श्रद्धा सुरभारतीसम्पोषण विषयेऽद्याप्यक्षुण्णा वरीवर्तीति प्रमाणितम्। तदर्थं वयं सर्वे श्रीपिषारोटिमहाभागाय नमोवाकरूपां कृतज्ञतां निवेदयामः। प्रार्थयामश्च अर्काग्निचन्द्राम्बकां जगतामेकावलम्बां लम्बोदराश्रितोत्सङ्गामालिङ्गितत्र्यम्बकां भगवतीं कुरुम्बां, यदस्य विद्वत्तल्लजस्य प्रयासैरेतावत्पर्यन्तमप्रकाशितानि इतराण्यपि केरलीयकविकोकिलानां सारस्वतानि सहृदयश्रुतिपथमवतरन्त्विति ॥

# उपोद्घातः

## (काव्यविचारः)

संस्कृतभाषापरिपोषणे बद्धपरिकरस्य भारतसर्वकारस्य प्रोत्साहनेन धनसाहाय्यदानेन च साम्प्रतं मुद्रयित्वा प्रकाश्यमानस्य श्रीरामचरिताख्यस्य महाकाव्यस्यास्य सन्ति त्रयो भागाः। तत्र प्रथमे भागे द्वादश सर्गाः, एकत्रिंशत् पद्यानि च विद्यन्ते। एष भागो गोदवर्मनामधेयेन विद्वद्युवराजेन स्वजीवितान्त्यकाले रचितः। विद्वद्युवराजस्य भागिनेयीसुतेन कविसार्वभौमेन कोच्चुण्णिराजेन प्रणीतौ द्वितीयतृतीयभागौ। द्वितीयभागारम्भे प्रथमभागकर्तुर्विद्वद्युवराजस्य चरितमुपवर्णयदष्टपञ्चाशत्पद्यात्मकं किमपि लघुकाव्यमामुखरूपेण समायोजितम्। अनन्तरं च त्रयोदशसर्गस्य पूर्वकविकृतावशिष्टानि पञ्चषष्टिः पद्यानि, चतुर्दशादिद्वात्रिंशत्पर्यन्ता एकोनविंशतिः सर्गाश्च वर्तन्ते। तृतीयभागे तु केवलमष्टौ सर्गाः। आहत्य चत्वारिंशत्सर्गनिबद्धमिदं महाकाव्यं श्रीरामचरितमद्य केरलगतेन कलीकट्टप्रान्तस्थितेन बालश्रीं (बालुश्शेरी) ग्रामे प्रवर्द्धमानेन आदर्शसंस्कृतविद्यापीठेन प्रकाशतामुपनीयते।

आदिकाव्ये रामायणे तपस्विना वाल्मीकिनोपवर्णितं रामचरितं समग्रतया काव्येऽस्मिन्निति-वृत्ततयावलम्बितम्। महाभारते भागवतादिपुराणान्तरेषु रघुवंशादिकाव्येषु महावीरचरितोत्तररामचरितादिषु नाटकेष्वन्यासु च रामकथावलम्बासु कृतिषु रामायणकथागतेः क्वचित् क्वचिदन्यथा-भाव उपलभ्यते। तादृशोऽन्यथाभावो नास्मिन् काव्ये विद्वद्युवराजेन, न वा कोच्चुण्णिराजेन क्वाप्यनुसृतः। आदिकविप्रहतं पन्थानमेव कविप्रवरावेतावनुगच्छतः नाल्पेनापि व्यत्ययमातिष्ठितः।

रामायणस्य बालकाण्डकथा, अयोध्याकाण्डकथा आरण्यकाण्डे रामाश्रमं प्रविष्टस्य भिक्षुरूपस्य रावणस्य सीतायाश्च यत् परस्परसम्भाषणं, तदन्ता च कथा प्रथमभागे विद्वद्युवराज-कृते वर्णिता। तदवशिष्टा आरण्यकाण्डकथा किष्किन्धासुन्दरयुद्धकाण्डानां कथा च द्वितीयभागे कोच्चुण्णिराजेन सङ्ग्रथिता। उत्तरकाण्डकथा तु तृतीयभागे। एवं चत्वारिंशत्संख्याकेषु सर्गेषु श्रीरामरितं सम्पूर्णतया कविप्रवेकाभ्यामेताभ्यामभिनवीकृत्य समुल्लिखितम्।

अभिनवीकरणे च महाकविभिः कालिदासप्रमुखैर्यः पन्थाः प्रदर्शितः, स एवामूभ्यां नवनवोल्लेखचतुराभ्यामनुसृतः। महाकाव्येष्वादिमे रघुवंशे कालिदासेन काव्यमध्ये दशमादिभिः पञ्चदशान्तैः षड्भिः सर्गैः समग्रं रामचरितमुपवर्णितम्। आदिकविना रामायणे यो यः कथा-

भागः सविस्तरं वर्णितः, स सर्वः कालिदासेन संक्षिप्य प्रदर्शितः। केवलं संसूचितो यो भागः, स तेन क्रान्तदर्शिना भावनाबलात् साक्षात्कृत्य सप्रपञ्चं चित्रीकृतः। अयमेव मार्गः प्रायेणापि कविपुङ्गवैरितिवृत्तसंविधानविषयेऽनुगम्यते।

इह खलु काव्यनाटकादिषु द्विविधमितिवृत्तम् आधिकारीकं प्रासङ्गिकं चेति। नायकप्रतिनायकादिप्रमुखकथापात्रावलम्बीतिवृतमाधिकारिकम्। प्रधानकथाबाह्यमपि प्रसङ्गवशाद्वर्ण्यतामुपगतमितिवृत्तं प्रासङ्गिकम्। वाल्मीकिरामायणे सीतारामरावणसुग्रीवविभीषणादिसम्बन्धि खल्वाधिकारिकम्। ऋश्यश्रङ्गोपाख्यानम्, विश्वामित्रचरित्रम्, गङ्गावतरणमन्यच्च प्रासङ्गिकम्। रामायणे तत्र तत्र भूयान् भागः प्रासङ्गिकेतिवृत्तवर्णनपरः। स भागः सर्वैरपि रामायणकविभिः प्रायेण परित्यज्यते। रामादिविषयकमाधिकारिकमात्रमितिवृत्तं समुपवर्ण्यते। प्रकृतमनुसरामः।

रघुवंशे कालिदासेन रामायणगता बालकाण्डकथा द्वाभ्यां सर्गाभ्यामुपवर्ण्यते, दशमेनैकदशेन च तथैव विद्वद्युवराजेन सैव बालकाण्डकथा प्रथमद्वितीयाभ्यां सर्गाभ्यां नातिसंक्षेपविस्तरमुपवर्णिता श्रीरामचरितपीठिकाभूताविमौ प्रथमद्वितीयसर्गौ सर्वथा रघुवंशसम्बन्धिनौ दशमैकादशसर्गावनुसरत इति व्यक्तमनुवाचकानाम्॥

कालिदासः पुनरयोध्याकाण्डादारभ्य युद्धकाण्डपर्यन्तं काण्डपञ्चकगतां रामाभिषेकविघ्नादि रावणवधान्तां रामायणकथां केवलमेकस्मिन् द्वादशे सर्गे सूत्ररूपेण सङ्गृह्णाति। तत्र हि महाकविना प्रदर्शिता कथामर्मसंग्रहणकला अनन्यसाधारणीं चातुरीमावहति।

रामायणयुद्धकाण्डान्ते त्र्युत्तरशततमसर्गे संक्षेपेण कृतं यत् सीतारामादीनां पुष्पकविमानमास्थितानामयोध्यां प्रति प्रतिप्रयाणं, तत्र च रामेण सीतामभिसम्बोध्य कृतं यत्तत् प्रदेशवर्णनं, तत् कालिदासेन रघुवंशे त्रयोदशसर्गे चारुतरया शैल्या सविस्तरमुपवर्ण्यते। रामायणापेक्षया विकासमापादिते तस्मिन् स्वतन्त्रे सर्गे कविः स्वस्य भारतवर्षान्तर्गतसर्वप्रदेशविशेषज्ञतां प्रकाशयति।

युद्धकाण्डान्तगतं रामाभिषेकम् उत्तरकाण्डमध्यगतं सीतापरित्यागं च कालिदासः चतुर्दशे सर्गे यावदर्थपदाभिः प्रतिसंस्कृताभिर्वाग्भिर्वर्णितवान्। सीतापरित्यागानन्तरमुत्तरकाण्डगतं सर्वमितिवृत्तं स कविवरेण्यः पञ्चदशे सर्गे संगृहीतवान्।

रामचरितोपवर्णनपरेषु रघुवंशान्तर्गतेषु षट्सु सर्गेषु अनुष्टुब्वृत्तनिबद्धा दशमद्वादशपञ्चदशास्त्रयः सर्गाः संक्षेपलक्षणाः, रथोद्धतोपजातिवसन्ततिलकवृत्तनिबद्धा एकादशत्रयोदशचतुर्दशास्त्रयः

समुचितललितसन्निवेशरमणीया इति शक्यं ज्ञातुं परीक्षकाणाम् । अलमतिप्रसङ्गेन ।

प्रस्तुते श्रीरामचरिते महाकाव्ये प्रथमद्वितीयौ सर्गौ बालकाण्डसङ्ग्रहरूपौ रघुवंशस्य दशमैकादशौ सर्गावनुकुरुत इति पूर्वमुक्तम् । तृतीयादयः सप्तमान्ताः पञ्च सर्गास्तु न रामायणं, न वा रघुवंशमन्यद्वा काव्यमनुकुर्वन्ति । रामायणबालकाण्डान्तर्गतं—

'रामस्तु सीतया सार्धं विजहार बहूनृतून् ।
मनस्वी तद्गतमना नित्यं हृदि समर्पितः ॥' (१-५४-२६)

इतीममेकं बीजत्वेनाङ्गीकृत्य स्वयं भावनापरिकल्पितास्ते सर्गाः । रामः सीतया नवोढया सह अनेकानृतून् विजहारेति आदिकविना केवलमेकस्मिन् पद्ये यत् सूचितं तस्य स्वप्रतिभाविलासानुसृतं वर्णनं विद्वद्युवराजेन नातिह्रस्वैः पञ्चभिः सर्गैरारचितम् । तत्र ऋतुवर्णनस्योपक्रमतया प्रथममेव तृतीये सर्गे कामकेलीषु सीतायां तृष्णायाः क्रमेणारोहो लज्जायाश्च मन्दमन्दमपसरणं सहृदयमनोहारिण्या सरण्या चित्रीकृतम् । तदनुवाचयतां सहृदयानां मनसि कालिदासेन कुमारसम्भवस्याष्टमे सर्गे वर्तिताः पार्वतीपरमेश्वरयोः प्रेमव्यापारविशेषाः स्मृतिपथमारोहन्ति ।

ऋतुषट्कवर्णनपरश्चतुर्थः सर्गः । वसन्ताद्यान् शिशिरान्तान् सर्वानृतून् क्रमेणात्र वर्णयति कविः। कालिदासो रघुवंशे नवमसर्गे द्रुतविलम्बितवृत्तनिबद्धैर्यमकालङ्कृतैर्विंशत्यधिकैः पद्यैर्वसन्तं वर्णितवान् । विद्वद्युवराजस्तु तादृशयमकालङ्कृतैरेव नवत्यधिकैर्द्रुतविलम्बितपद्यैः क्रमात् सर्वानृतून् वर्णयामास । अन्ते च दोधकवृत्तनिबद्धैः षड्ऋतून् क्रमाद्वर्णितवान्, तदन्ते एकस्मिन् पद्ये ऋतुषट्कवर्णनमप्युपसंहाररुपेणारचितवान् ।

पञ्चमे सर्गे उद्यानकेलिवर्णनपरे उपवनगतानां कुसुमितानां वृक्षाणां पद्माकरस्य वसन्तसमृद्धेर्वसन्तोपभोगस्य च वर्णनं, कुमारसम्भवतृतीयसर्गमनुस्मारयत् कृतम् ।

षष्ठसर्गे सन्ध्यायाश्चन्द्रोदयस्य च वर्णनं सप्तमसर्गे तु रात्रिवर्णनं प्रभातवर्णनं च रचितम् । एवं विविधैर्वर्णनैरापूर्णं सर्गपञ्चकं कविप्रतिभाविशेषनिष्पन्नम् ।

अथाष्टमः सर्गो रामायणस्यायोध्याकाण्डं सङ्गृह्णाति । तत्र—

**अथ राजा दशरथो जरसा जीर्णतां गतः ।**
**इयेष तनये रामे निधातुं जगतीभरम् ॥**

इति रामयौवराज्याभिषेकोपक्रमादारभ्य—

**न जगाम पुनर्धीमानयोध्यां सत्यसङ्गरः ।
नन्दिग्रामे वसन् भ्रातुः प्रत्यैक्षत समागमम् ॥**

इति भरतनन्दिग्रामवासपर्यन्तः रामाभिषेकविघ्नरामादिवनगमनदशरथचरमगतिप्रभृतयः सर्वाः कथाः शताधिकैरानुष्टुभैः श्लोकैः संक्षिप्य संकलिताः ।

नवमादयः पञ्चदशान्ताः सप्त सर्गाः वर्णनैकप्रवणाः आरण्यकाण्डमधिकुर्वन्ति । तत्र नवमे चित्रकूटपर्वतवर्णनं, दशमेशूर्पणखाकृतरामाङ्गसौन्दर्यास्वादनम्, एकादशे खरादिवधः, द्वादशे रावणकृतसीताङ्गसौन्दर्यास्वादनम्, त्रयोदशे सीतापहरणं, चतुर्दशे रावणकृतसीताप्रलोभनं पञ्चदशे रामप्रलापः इत्येते प्राधान्येनोपवर्णिता विषयाः ।

अथ षोडशादय एकविंशान्ताः षट् सर्गाः किष्किन्धाकाण्डकथावर्णनपराः । पम्पासरसः पम्पातीरवनस्यच वर्णनं षोडशे, ताराबालिसंवादो बालिरामप्रश्नोत्तरे च सप्तदशे , बर्षर्तोः शरदृतोश्च वर्णनमष्टाशदसर्गे प्राधान्यं वहन्ति । कालिदाससन्देशकाव्यस्य मेघदूतस्य पूर्वोत्तरभागाव-नुकुर्वन्तौ काव्येऽस्मिन्नेकोनविंशो विंशश्च इति द्वौ गौं । तयोः पूर्वस्मिन् सर्गे यत्र यत्र सीता अन्वेष्टव्या, तान् देशान् सर्वानपि सुग्रीवो वानरेभ्य उपदिशति । अनन्तरसर्गे रामो हनुमते वदति सीतायै वक्तव्यं सन्देशम् । अनयोः सर्गयोः सन्देष्टुः सुग्रीवस्य रामस्य च सन्देशहरस्य वानरसंघस्य हनुमतश्च हरिपदवाच्यत्वादस्य सर्गद्वयस्य हरिसन्देश इति विशेषतो नाम च दत्तम् ।

**वक्ता रामो हरिः साक्षात् सुग्रीवश्च हरीश्वरः ।
श्रोता हनूमानत्रान्ये हरयश्चांगदादयः ॥**

इत्येवं कविः सर्गद्वयमुपसंहरति च । सर्वसन्देशकाव्यसाधारणं मन्दाक्रान्तावृत्तमेवात्र निवेशितम् ।

एकविंशे सर्गे सीतान्वेषणं वर्ण्यते । दक्षिणेतराभ्यो दिग्भ्योऽदृष्टसीतानां वानराणां प्रतिनिवृत्तिः, दक्षिणां दिशं गतानां हनूमदङ्गदादीनां दक्षिणसमुद्रतीरप्राप्तिश्च सर्गेऽस्मिन्नुप-वर्ण्यते । इत्थं ष भिः सर्गैः किष्किन्धाकाण्डकथा समाप्यते । समुद्रवर्णनमत्रान्तर्भवति ।

द्वाविंशादयः सप्तविंशान्ता षट् सर्गाः सुन्दरकाण्डकथावर्णनपराः । तत्र द्वाविंशे सर्गे लङ्कावर्णनं प्रधानम् । रावणगृहवर्णनं रावणवर्णनं मन्दोदरीवर्णनं चात्र सविशेषतामावहन्ति । त्रयोविंशे अशोकवनिकागतायाः सीतायाः सकाशे रावणस्य प्रणयप्रार्थना, सीतायाः प्रत्याख्यनं, रावणस्य क्रोध इत्यादयस्तन्मयतया चित्रीकृताः । चतुर्विंशे हनुमत्सीतासंवादः पञ्चविंशे

अशोकवनिकाभङ्गः षड्विंशे लङ्कादाहश्च वर्णितः। सप्तविंशे तु प्रत्यागतेन हनूमता सीता-वृत्तान्तनिवेदनपूर्वकं कृतं रामसान्त्वनम्। एवं सुन्दरकाण्डादुद्धिन्नाः षट् सर्गाः सुन्दरतराः।

ततोऽष्टाविंशाद्याः द्वात्रिंशान्ताः पञ्च सर्गा युद्धकाण्डस्य प्रातिनिध्यं वहन्ति। तत्र रामस्य युद्धयात्रासेतुबन्धलङ्कानिरोधादयोऽङ्गददूत्यपर्यन्ताः कथांशाः अष्टाविंशे सर्गे समुन्मीलिताः।

इन्द्रजिता रामलक्ष्मणयोर्नागास्त्रबन्धनम्, गरुडागमननागबन्धमोक्षौ, धूम्राक्षवज्रदंष्ट्र-कम्पनप्रहस्तानां वधाः, रावणस्य रामेण सह युद्धे पराजयश्चेत्येते युद्धवृत्तान्ताः एकोनविंशसर्गस्य वर्णनविषयाः।

कुम्भकर्णवधः, नरकान्तकादीनां महाबलानां बहूनां राक्षसानां वधः, इन्द्रजिता ब्रह्मास्त्रेण रामलक्ष्मणादीनां निपातनं, हनुमत्कृतमोषधिपर्वतानयनं, कुम्भनिकुम्भमकराक्षाणां वधः, इन्द्रजित्कृतो मायासीतावधः इत्येवं वधबन्धबहुलस्त्रिंशः सर्गः। इन्द्रजितो रावणस्य च घोरं युद्धं च वधश्च, ततो विभीषणस्य लङ्काधिपतित्वेनाभिषेकः, सीताया अग्निशुद्धिः, सीतालक्ष्मणादिसर्वपरिवारसहितस्य श्रीरामभद्रस्य पुष्पकविमानमारूढस्य अयोध्यां प्रति प्रतिप्रयाणं चैकत्रिंशे सर्गे वर्णितानि।

द्वात्रिंशे रामादीनामयोध्याप्रवेशः, श्रीरामपट्टाभिषेकः, सर्वसौख्यावहं राज्यभरणं च वर्णयन् कविर्युद्धकाण्डमुपसंहरति।

उत्तरकाण्डकथावर्णने कोच्चुण्णिभूपेन अष्टौ सर्गा विनियुक्ताः। तत्र प्रथमे सर्गे राक्षसोत्पत्तिकथा इन्द्रजित्पराक्रमातिशयश्च सविशेषं वर्णितौ। अयोध्यायां समागतानां राक्षसानां विभीषणादीनां, वानराणां सुग्रीवादीनां, राज्ञां जनककेकयप्रभृतीनां प्रतिनिवर्तनं द्वितीये सर्गे प्रतिपादितम्। सीतासमेतस्य रामस्य उद्यानक्रीडायाश्च वर्णनं कृतं तृतीये सर्गे। रात्रिवर्णनं, कामलीलावर्णनं, स्तुतिपाठककृतप्रभातप्रबोधनं, प्रभातवर्णनं चाधिकृत्य चतुर्थः सर्गः सङ्ग्रथितः सीतापरित्यागः पञ्चमे, लवणासुरवधः षष्ठे, शम्बूकवधः सप्तमे, सीताभूगर्भप्रवेशादिरामस्वपदप्राप्तिपर्यन्तः कथाभागोऽष्टमे च सर्गे प्रतिपादितः। एवमादिकाव्यस्य सारभूतमाधिकारिकमितिवृत्त-मादाय श्लेषप्रसादादिभिर्गुणैरनुप्रासोपमाभिरलङ्कारैस्तत्तत्प्रकरणोचितै रसभावादिभिश्च परिष्कृत्य प्रणीतमिदं श्रीरामचरितं महाकाव्यं, सर्वलक्षणलक्षितं प्रचुरप्रचाराणां पूर्वेषां रघुवंशादीनां प्रसिद्धमहाकाव्यानां परिमलैरनुवासितं च। तदिदं वस्तुतत्त्वं किञ्चिदिवात्र प्रकाशयितुमुत्सहे।

पूर्वशास्त्राणि संहृत्य प्रयोगाननुपलभ्य च ।
यथासामर्थ्यमस्माभिः क्रियते काव्यलक्षणम् ॥

इति प्रतिज्ञाय महाकविना दण्डिना विरचिते काव्यादर्शे महाकाव्यलक्षणमेवं प्रतिपादितम् —

सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम् ।
आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखम् ॥

इतिहासकथोद्भूतमितरद्वा सदाश्रयम् ।
चतुर्वर्गफलोपेतं चतुरोदात्तनायकम् ॥

नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः ॥
उद्यानसलिलक्रीडामधुपानरतोत्सवैः ॥

विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः ।
मन्त्रदूत्यप्रयाणाजिनायकाभ्युदयैरपि ॥

अलङ्कृतमसंक्षिप्तं रसभावनिरन्तरम् ।
सर्गैरनतिविस्तीर्णैः श्राव्यवृत्तैः सुसन्धिभिः ॥

सर्वत्राभिन्नवृत्तान्तैरुपेतं लोकरंजकम् ।
काव्यं कल्पान्तरथायि जायते सदलंकृति ॥

स्वोपलब्धलक्ष्यानुरोधेन महाकविना दण्डिना काव्यादर्शे प्रथममवतारितं महाकाव्य लक्षणमिदम् । अत्र परिगणितानि सर्वाण्यपि लक्षणानि साम्प्रतं प्रकाश्यमानेऽस्मिन् श्रीरामचरिते महाकाव्ये समुपलभ्यन्ते । तथा हि—चत्वारिंशत्सर्गनिबद्धस्य लोकोत्तरसीतारामचरितवर्णनपरस्य रसभावोचितरमणीयशब्दार्थरचारुणः काव्यस्यास्य महत्वं सर्गबन्धत्वं च प्रत्यक्षम् । यत् माघ नैषधादिषु महाकाव्येषु उपविंशतय एव सर्गा विद्यन्ते, अत्र चत्वारिंशत्सर्गा इति महत्वम् । सर्गबद्धत्वाच्च सर्गबन्धत्वम् ॥

अस्ति त्रयाणां जगतां निदानं नारायणो नाम सुराधिनाथः ।
विराजमानः फणिराजतल्पे पीयूषभानाविव कृष्णसारः ॥

इति श्रीरामप्रकृतिभूतस्त्रिजगन्मूलकारणं नारायणः प्रथमं निर्दिष्ट इति वस्तुनिर्देशः काव्यमुखत्वेनांगीकृतः ।

तत्र सत्तावाचकेनास्तिपदेनारम्भश्च कृतः यथा । कालिदासेन—

'अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।'

इति कुमारसम्भवे, यथा च सुकुमारकविना

'अस्ति श्रियः सद्म सुमेरुनाम समस्तकल्याणनिधिर्गिरीन्द्रः'

इति श्रीकृष्णविलासे । तथा च

''आशीर्नमस्क्रिया वस्तुर्देशो वापि तन्मुखम्'

इति निर्दिष्टेषु त्रिषु काव्यमुखेषु तृतीयं काव्यमुखमत्रांगीकृतं द्रष्टव्यम् ।

आदिकाव्ये वाल्मीकिना प्रकीर्तिता रामकथैवेतिवृत्तत्वेनात्र स्वीकृतेति काव्यस्यास्य इतिहास कथोद्भूतत्वमनुक्तसिद्धम् ।

रामादिवद्वर्तितव्यं न रावणादिवदिति धर्माधर्मविषये प्रथममुदाहरणं रामादय एवेति प्रस्तुतकाव्यस्य सदाश्रयत्वमपि प्रस्पष्टम् ।

धर्मोऽर्थः कामो मोक्ष इति चत्वारः पुरुषार्थाः खलु चतुर्वर्गः । पितृसत्यपरिपलनाय कृते राज्यपरित्यागे, राज्यमधर्माद्रक्षितुं कृते सीतापरित्यागे, स्वसत्यसंरक्षणाय अन्ततः कृते लक्ष्मणपरित्यागे अन्यत्र च तत्र तत्र रामस्य धर्मैकायत्तचित्तत्वं प्रकाशते । न केवलं रामस्य, राममनुव्रतानां सर्वेषामपि वर्ण्यपुरुषाणां धर्मपरत्वं द्रष्टव्यम् ।

धर्माविरोधेन अर्थपरिग्रहं राज्यपरिपालने, धर्मार्थाविरोधेन कामोपभोगं तृतीयादिस - प्रमा न्तेषु पञ्चसु सर्गेषु उत्तरश्रीरामचरितगतयोस्तृतीयचतुर्थसर्गयोश्च रामस्य वर्णयन् कविरन्ते सपौरजनस्य तस्य मोक्षप्राप्तिं च वर्णितवानिति महाकाव्यस्यास्य चतुर्वर्गफलोपेतत्वमप्यतिरोहितम् । नायकस्य रामस्य चतुरत्वमुदात्तत्वं च सर्वत्र सन्दृश्यते । नानाकार्यसन्निपातेऽपि य या तत्तत्कर्मनिर्वहणदक्षता सैव चतुरता । विकारहेतुषु समापतितेष्वपि यच्चेतसोऽक्षोभ्यत्वं सा खलूदात्तता । उभयमप्येतद्रामचरिते सर्वत्राभिव्याप्यावतिष्ठत इति चतुरोदात्तनायकत्वमपि काव्येऽत्र सम्पन्नम् ।

अथ नगरार्णवशैलर्त्वादिवर्णनानां विचारः कर्तव्यः । नगरार्णवादयोऽष्टादशविषया महाकाव्ये वर्ण्यत्वेन लक्षणे निर्दिष्टाः दण्डिना । ते हि केवलमुपलक्षणत्वेन दर्शिताः । तद्भिन्नानामपि प्रकरणोचितानां विषयाणां वर्णनमविरुद्धम् । निर्दिष्टेष्वपि केषाञ्चिदवर्णितत्वेऽपि

न महाकाव्यत्वहानिः । प्रस्तुते श्रीरामचरिते वर्णनानां परम्पराः सन्ति । अत्र वर्तमानानां नगरार्णवादिवर्णनानां स्थानानि प्रथमं क्रमेणात्र निर्दिशामः ।

१. लङ्कानगरवर्णनम्—द्वाविंशे सर्गे १५-९१
२. समुद्रवर्णनम्—एकविंशे सर्गे ७३-८५
३. चित्रकूटपर्वतवर्णनम्—नवमे सर्गे १-४३
४, षण्णामृतूनां क्रमेण वर्णनम्—चतुर्थे सर्गे १-९३
५. सन्ध्यावर्णनपूर्वकं चन्द्रोदयवर्णनम्—षष्ठे सर्गे १-९९
चन्द्रिकावर्णनं रात्रिवर्णनं च—सप्तमे सर्गे१-२४, २५-३८
६. प्रभातवर्णनं सूर्योदयवर्णनं च—सप्तमे सर्गे-३९-९४
रात्रिवर्णनं कामलीलावर्णनं च—उत्तरश्रीरामचरिते चतुर्थे सर्गेऽपि१-२५, २६-३०
प्रभातवर्णनम्उत्तरचतुर्थसर्गेऽपि १-२५, २६-३०
७. उद्यानवर्णनम्—पञ्चमे सर्गे १-९५
८. जलक्रीडावर्णनम्—उत्तरश्रीरामचरिते तृतीयसर्गे ३३-५२
९. मद्यपानवर्णनम्—नात्र विद्यते ।
१०. रतोत्सववर्णनम्—तृतीयसर्गे १-९७
११. विप्रलम्भवर्णनम्—पञ्चदशे सर्गे ३३-६७
१२. विवाहवर्णनम्—द्वितीये सर्गे ७९-८४
१३. कुमारोदयवर्णनम्—द्वितीये सर्गे ४२-८८
१४. मन्त्रवर्णनम्—षड्विंशे सर्गे २-३४
१५. दूत्यवर्णनम्—विंशे सर्गे २-४५. अष्टविंशे सर्गे ९६-१०१
१६. युद्धप्रयाणवर्णनम्—एकोनत्रिंशत्रिंशैकत्रिंशसर्गेषु
१८ नायकाभ्युदयवर्णनम् – द्वात्रिंशे सर्गे ४६-७८

महाकाव्यलक्षणे दण्डिना निर्दिष्टेषु वर्ण्यविषयेषु मधुपानवर्जमन्ये विषयाः सर्वेऽपि श्रीरामचरितेऽस्मिन् कविभ्यां वर्णिता इति उपरिकृतेन विवरणेन, मन्ये, व्यक्तमिति ।

अतोऽन्येपि ते ते बहवो विषयाः कथागतेरनुरोधेन तत्र तत्र वर्णिताः । प्रथममेव भगवतो नारायणस्य वर्णनं षोडशभिः श्लोकैः सङ्कलितम् । रावणकृतदेहवर्णनं द्वादशभिः श्लोकैः कृतम् । विश्वामित्रयज्ञसंरक्षणमष्टादशभिः पद्यैरारचितम् । एवमन्यदपि द्रष्टव्यम् ।

विशिष्य प्रस्तोतव्यं वर्णनद्वितयमस्मिन् काव्ये विद्यते, रामसौन्दर्यवर्णनं सीतासौन्दर्य-वर्णनं च। पुरुषसौन्दर्यवर्णनं प्रायेण काव्येषु न दृश्यते। अस्मिन् काव्ये दशमसर्गे रामस्य सौन्दर्यं चत्वारिंशता श्लोकैरुपवर्ण्यते। तत्र यद्रामस्य केशादिपादान्तं कृतमङ्गप्रत्यङ्गवर्णनं तद्विशेषतो रमणीयम्। वने यदृच्छया रामं सीतासहितं दृष्टवती शूर्पणखा—

विलोकयन्ती वपुरस्य सुन्दरं विकस्वराम्भोरुहकोमलाननम्।
कुतूहलावेशविलोलमानसा विचिन्तयामास चिरं तदाशरी॥ (१०-२)

इत्यारभ्य—

तनुं तनूकृत्य मनुष्यमानिनीसमानमेतस्य समेत्य सन्निधिम्।
वचोभिरादृत्य मुहुर्मनोहरैरवैमि तत्त्वं हृदयं च तत्त्वतः॥ (१०-४२)

इत्यन्तैः पद्यैः शूर्पणखा रामाङ्गरामणीयं दृग्भ्यां पिबति, मनसा च तन्निमग्नेन आत्मगतरूपेण आस्वादयति। तच्च वर्णनं, न कविना क्रियते, कविनिबद्धया प्रतिनायकसहजया कामावेशवशंवदचेतसा शूर्पणखया क्रियत इति परममौचित्यम्।

कुमारसम्भवस्य प्रथमसर्गे कालिदासेन षोडशभिः श्लोकैः कृतं पार्वत्याः पादादिकेशान्त वर्णनं नैषधीयचरितस्य द्वितीयसर्गे श्रीहर्षेण विंशत्या श्लोकैः कृतं दमयन्त्याः केशादिपादान्त वर्णनं च सीमन्तिनीनामङ्गवर्णनेषु मातृकाभूतमिति सर्वे जानन्ति। सौन्दर्यलहर्यादिस्तोत्रेष्वपि तद्दशानि वर्णनानि सुलभानि। प्रस्तुते श्रीरामचरिते द्वादशसर्गे विद्यमानं सीताया अङ्गप्रत्यङ्ग वर्णनं तथाविधं दृष्टपूर्वं सर्वमपि वर्णनमतिशेते।

मायाबलात् कपटभिक्षुरूपमालम्ब्य रामाश्रमं प्रविष्टो रावणः सीताया आ नि प्रथमं "आ केशमा पादमनेकशेषं" दृग्भिः परिपिबति। तदेतच्चाक्षुषमास्वादनं पञ्चदशभिः श्लोकैरुपवर्ण्यते॥

अनन्तरं "मुहुर्मुहुर्मूर्च्छितमन्मथोऽसौ निशाचरेन्द्रो मनसेदमाह" इति मानसमास्वादनं पुरस्कृत्याङ्गवर्णनमारभ्यते। सीताकान्तेरनन्यसाधारणतामादौ त्रिभिः श्लोकैः सामान्यरूपेणो-पन्यस्य—

वेणीयमेणीनयनोत्तमाया माया स्वयं मूर्तिमतीव भाति।

इत्यारभ्य—

जगद्दृशां विस्मयकामधेनुः कामार्णवोद्वेलनशीतभानुः ।
गच्छद्गतागामिवधूविधानां साधारणी सृष्टिरियं न धातुः ॥

इत्येतदन्तैर्द्वानवत्या श्लोकैः रावणस्य मानसमास्वादनं समाप्यते । एतदेव वर्णनमस्मिन् काव्ये द्राघिष्ठं च ।

मूलरामायणवदेतन्महाकाव्यं श्रीरामचरितमपि धर्मवीरयुद्धवीरदयावीरादिभी रसैरुपपन्नम्, करुणारसकरम्बितमन्यैरपि भावैरखिलैरनुसेवितमिति रसभावनिरन्तरत्वमन्यूनम् । सर्गश्च उपशतैः श्लोकैरुपलक्षित इति तेषामनतिविस्तीर्णतापि स्पष्टा ।

अतिप्रसिद्धानि श्रुतिसुभगानि वृत्तानि सर्गेषूपात्तानि । नातिदीर्घं नातिह्रस्वमेकादशाक्षरपदमुपजातिवृत्तमेव सर्वरसभावानुकूलं भूयिष्ठमुपयुज्यते कविभिर्महाकाव्येषु । यथा 'अस्त्युत्तरस्यां दिशी'ति कुमारसम्भवे । अत्र हि चतुर्दश सर्गा उपजातिवृत्तनिबद्धाः ।

उपजातिवृत्तसब्रह्मचारिणा द्वादशाक्षरपदेन लघुमुखेन वंशस्थवृत्तेन माघकिरातार्जुनीय नैषधीयचरितानामारम्भः । महाकविना कालिदासेनाप्यनुगृहीतं कुमारसम्भवरघुवंशयोः केषुचित्सर्गेषु वंशस्थम् । अस्मिन्नपि श्रीरामचरिते चत्वारः सर्गाः वंशस्थवंश्याः । वाल्मीकिव्यासादिभिः सर्वसाधारणतया प्रयुक्तं ह्रस्वं वृत्तमनुष्टुप् । तदपि महाकाव्येषु कथासंग्रहाद्यर्थं तत्र तत्रोपयुज्यते ।

श्रीरामचरितेऽत्र चत्वारः सर्गा आनुष्टुभाः । पुष्पिताग्रावृत्तनिबद्धास्त्रयः सर्गाः । तथा वसन्ततिलकावृत्तनिबद्धा अपि त्रयः । रथोद्धता द्वयोः सर्गयोरुपयुक्ता । सन्देशकाव्यप्रयुक्तं मन्दाक्रान्तावृत्तं हरिसन्देशे विनियुक्तम् । द्रुतविलम्बितम्, प्रहर्षिणी, तोटकं, वियोगिनी, भुजङ्गप्रयातं मञ्जुभाषिणी, मालिनी, वसन्ततिलका इत्येतान्यपि वैचित्र्ययुक्तानि मनोहराणि वृत्तानि औचित्यानुरोधेन एकैकस्मिन् सर्गे दत्तस्थानानि ।

सर्गाणामन्तेषु सर्गसमाप्तिद्योतनार्थं मालिनी, शिखरिणी, हरिणी, शार्दूलविक्रीडितं, स्रग्धराइत्येवमादीनि दीर्घतराणि वृत्तानि योजितानि । एवं वृत्तानां श्राव्यत्वे वैविध्यापादने च सर्वत्र दत्तश्रद्धावेतौ कवी इति द्रष्टव्यं परीक्षकैः ।

भिन्नवृत्तान्तैरिति पदस्य ( वृत्त+अन्त इति, वृत्तान्त इति च विभागसंभवात् ) भिन्नवृत्ता वृत्तभेदवन्तः अन्ताः येषां तैरिति, भिन्ना वृत्तान्ता येषां तैरिति च द्वेधा समासो न्याय्यः । प्रथमं

विग्रहं पुरस्कृत्य सर्गान्तेषु कृतो वृत्तभेदः पूर्वमनुपदं निरूपितः। वृत्तान्तस्य कथांशभूतस्य भेद एव सर्गभेदे नियामक इति द्वितीयविग्रहगम्योऽर्थः। प्रथमसर्गे रामादिकुमारोदयवृत्तान्तवर्णनं द्वितीयसर्गे सीतादिविवाहवृत्तान्तवर्णनमिति वृत्तान्तभेदः सर्गेषु सर्वत्र शक्यं लक्षयितुम्। एवं द्विविधं भिन्नवृत्तान्तत्वं सर्गाणाम्।

सुसन्धिभिरिति सर्गविशेषणस्य शोभनाः सन्धयो येषां तैरिति विग्रहः। सन्धिपदस्य यणूसवर्णदीर्घादयः पदसन्धयः, मुखप्रतिमुखादयः इतिवृत्तान्तसन्धयश्चार्थः। सर्गगतेषु श्लोकेषु सन्ध्यभावः परिहर्तव्य इति एकोऽर्थः। इतिवृत्तसंविधानेऽपि नाटकादिरूपकेष्विव महाकाव्येष्वपि मुखप्रतिमुखगर्भविमर्शनिर्वहणाख्यैः पञ्चभिः सन्धिभिः शोभनैर्भवितव्यमिति तु मुख्योऽर्थः। रामायणे बालकाण्डायोध्याकाण्डयोर्मुखसन्धिः, आरण्यकाण्डे प्रतिमुखसन्धिः, किष्किन्धाकाण्डे गर्भसन्धिः, सुन्दरकाण्डे विमर्शसन्धिः, युद्धकाण्डे च निर्वहणसन्धिरिति शक्यं सन्धिस्वरूपाभिज्ञैर्विवेचयितुम्। तथा अत्राष्टमसर्गपर्यन्तं मुखसन्धिः, ततः पञ्चदशसर्गपर्यंतं सप्त सर्गाः प्रतिमुखसन्धिः, तत एकविंशसर्गपर्यन्ताः षट्सर्गाः गर्भसन्धिः, ततः सप्तविंशसर्गपर्यन्तं षट्सर्गा विमर्शसन्धिः, ततो द्वात्रिंशसर्गपर्यन्तं पञ्च सर्गा निर्वहणसन्धिरिति सूक्ष्मेक्षिकयावगन्तव्यम्। इत्थमुत्तरश्रीरामचरितेऽपि सन्धिर्निरूपणीयः। तस्मात् सर्गाणां सुसन्धित्वमव्याहतम्।

एवं सर्वलक्षणलक्षितमिदं श्रीरामचरितं माधुर्यौजःप्रसादाख्यैस्त्रिभिर्गुणैरनुप्रासयमकादिभिः शब्दालङ्कारैरुपमोत्प्रेक्षारूपकादिभिरर्थालङ्कारैश्च समुपेतत्वात् वैदर्भीप्रभृतीनां प्रकरणोचितानां परिग्रहाद्वक्रोक्तिसुन्दरत्वाच्च सहृदयलोकस्य चेतो रञ्जयिष्यतीत्यत्र नास्ति सन्देहः। एतत्काव्यामृतास्वादनेन संस्कृतचेतसां सचेतसामानन्दो मनसि लभतां प्रतिष्ठामिति प्रकाश्यते॥

सार्धद्वादशसर्गसम्मितस्य प्रथमखण्डस्य प्रणेता विद्वद्युवराजः। तस्य जीवितकालः १८००–१८५१ (ए.डि)। द्वितीयतृतीयखण्डयोः कविसार्वभौमः कोच्चुण्णिराजः। तस्य जीवितकालः—१८५८–१९२६(ए. डि)। कोच्चुण्णिराजपुत्रः कार्तिकेयमेनवः। तस्य जीवितकालः १८९७–१९८१ (ए. डि)। कार्तिकेयमेनवस्य दुहिता ओमना, जामाता महासेनमेनवः।

पितरि पितामहे च तन्मातृमातुले चातिमात्रं भक्तिमती श्रीमती ओमना तत्पतिर्महासेनमेनवश्च पितुरन्त्याभिलाषं श्रीरामचरितमहाकाव्यमुद्रणं पूरयितुं बद्धौत्सुक्यौ तालीपत्रलिखितं श्रीरामचरितग्रन्थं मम हस्ते समर्पितवन्तौ। बालश्री (बालुश्शेरी) ग्रामगते आदर्शसंस्कृतविद्यापीठे प्रमुखसंस्कृतपण्डितपदमातिष्ठन्नहं, भारतसर्वकारकृतेन प्रोत्साहनेन साहाय्यधनेन च साम्प्रतं तदिदं

महाकाव्यं मुद्रयित्वा प्रकाशमुपनयामि । केन्द्रीयसंस्कृतविद्याभ्यासोपद्रष्टारः सुगृहीतनामधेयाः डा० सि. आर्. स्वामिनाथसहोदयाः श्रीरामचरितस्य मुद्रणादिषु परममादरं बहुतरमुपकारं च विहितवन्तः । सहृदयनां श्रद्धामादधतीं रुचिरामवतारिकामपि दत्वा अनुगृहीतवतस्तान् कृतज्ञतापुरस्सरमनुसरामि ।

महीशूरपुरावासी वरदाचार्यपण्डितः ।
संस्कृतोद्धरणैकाग्रमतिर्विजयतेतराम् ॥

जयन्तीमुद्रणगृहनाथोऽयं बद्धसौहृदः ।
साधु मुद्रितवानेतत् श्रीरामचरितं शुभम् ॥

प्रसीदतु गुरुः पूर्वः कुलशेखरमातुलः ।
श्रीनीलकण्ठशर्मापि गुरुनाथः प्रसीदतु ॥

धि

कविरत्नं पण्डिताधीराजः स गुरुसत्तमः ।
आट्टूर् कृष्णप्पिषारोटी कल्पतां श्रेयसे मम ॥

नारायणी मे जननी विप्रः पशुपतिः पिता ।
उभौ तावनुगृह्णीतां सततं पुत्रवत्सलौ ॥

गुरुवायुपुराधीशः करुणामृतवारिधिः ।
मानसे रमतां नित्यमानन्दघनविग्रहः ॥

नारायणीयम् के. पि. नारायणपिषारोटी
तृश्शूर्—११
२७-११-१९८४

## कविचरितम्

### कुलशेखरवंशः

पुरं विराजते रम्यं केरलेषु पुरातनम् ॥
कोटिलिङ्गाभिधं पूर्वतीरे पश्चिमवारिधेः ॥ १ ॥

कोटुङ्ङल्लूरिति चिरात् ख्यातेऽस्मिन् खलु पत्तने ।
अम्बा कुरुम्बा जयति सर्वविद्याधिदेवता ॥ २ ॥

चेङ्कुट्टुवाद्यास्तत्रासन् विख्याताश्चक्रवर्तिनः ।
इलङ्कोप्रमुखाश्चापि महाकविकुलेश्वराः ॥ ३ ॥

कुलशेखरवर्मापि कवीनां कुलशेखरः ।
महोदयपुरेशोऽत्र वसन् शास्ति स्म मेदिनीम् ॥ ४ ॥

धनञ्जयं संवरणमिति नाटकयोर्युगम् ॥
प्रणीतवानसौ कालिदासवाङ्मयमग्नधीः ॥ ५ ॥

वासुभट्टश्च तोलश्चेत्युभावभवतां कवी ।
आस्थानपण्डितौ तस्य भिन्नं पन्थानमाश्रितौ ॥ ६ ॥

काव्यं ग्रथितवानाद्यो युधिष्ठिरजयाह्वयम् ।
यमकाध्वानमाश्रित्य पण्डितानां रसावहम् ॥ ७ ॥

"तस्य च वसुधामवतः काले कुलशेखरस्य वसुधामवतः ।
वेदानामध्यायी भारतगुरुरभवदादिनामध्यायी ॥ "

एवंविधैर्हि पादान्तयमकैः समलङ्कृतम् ।
काव्यं तद्भारतगुरोः सकलं श्रुतिपेशलम् ॥ ८ ॥

महोदयपुरेशस्य चरितं कृतवान् परः ।
यथान्वयपदन्याससुभगं नव्यभावनम् ॥ ९ ॥

नामावशेषमभवन्महाकाव्यमिदं बत ।
पद्यद्वयं तु भाग्येन लब्धं, तदिह लिख्यते ॥ १० ॥

---

एकारौकारयोरस्ति कैरल्यां ह्रस्वतापि च ।
ह्रस्वत्वं यत्र संज्ञासु तद्वक्ष्ये तत्र तत्र हि ॥
कोटुङ्ङल्लूरिति पदे ओकारो ह्रस्वः । चेङ्कुट्टुवपदे एकारो ह्रस्वः ॥ ३ ॥

(क) यत्राङ्गनाः प्रावृषि शुष्ककण्ठान् केलीचकोरानतिलङ्घिताभ्रम् ।
सौधाग्रमानीय समीपभाजा तारापरिण्या सह योजयन्ति ॥

(ख) स्वर्जालिकानिर्जरनिर्झरिण्यां यत्तुङ्गसौधाग्रजुषां वधूनाम् ।
विलोलदृष्टिप्रकरं विलोक्य मीनभ्रमाज्जालशतं क्षिपन्ति ॥

प्रथमे पुरसौधानां चन्द्रबिम्बोपगामिता ।
द्वितीये सुरगङ्गातिलंघिता च प्रकाश्यते ॥ ११ ॥

कुलशेखरवंशोऽयं चिराद्विजयतेतराम् ।
भगिनीसुतदायादः कुटुम्बापरिपोषितः ॥ १२ ॥

विद्वद्युवराजः

अथास्मिन्नुदभूद्वंशे कुमारः शुभलक्षणः ।
गोदवर्मा भगवतीप्रसादोदितवैभवः ॥ १३ ॥

कुञ्जिक्कुट्टीनाम राज्ञी जननी तस्य धीमतः ।
स्वातिनक्षत्रसम्भूता सुताभ्युदयबद्धधीः ॥ १४ ॥

इलंकुरुश्यभिजनो मातृदत्तद्विजोत्तमः ।
सत्कर्मनिरतस्तस्य जनको जनसम्मतः ॥ १५ ॥

प्राप्ते नवशतोपेतपञ्चसप्ततिपूरके । (975)
कोलम्बाब्दे कुम्भमासे श्राविष्ठोऽयमजायत ॥ १६ ॥

क्रिस्तोरष्टशतोपेतसहस्रतमवत्सरे । (1800A-D)
शुभे लग्नेऽयमजनि लक्षणैः शोभनैर्युतः ॥ १७ ॥

स मातुरुपदेशेन बाल्यादाराध्य बुद्धिमान् ।
विद्यास्वरूपिणीं भेजे नियतः परदेवताम् ॥ १८ ॥

वलप्पिलाशान्नाम्नोऽसौ विद्याः कुलगुरोः किल ।
श्रद्धयाध्येतुमारेभे पञ्चमेऽब्देऽक्षरादिकाः ॥ १९ ॥

क्रमादमरकोशं च नामरूपावलीस्तथा ।
धातुरूपावलिश्चापि मुखस्थीकृतवानयम् ॥ २० ॥

रघुवंशादिकाव्यानामधीतौ स प्रवेशितः ।
मेधाधनः सूक्ष्मबुद्धिर्गुरुं भृशमतोषयत् ॥ २१ ॥

---

ताराः परिणीतवान् तारापरिणीः चन्द्रः, तेन तारापरिण्या ।। १० ।। (क)
केरलराजकुलेषु राज्ञां पुत्रा न राज्यादिकं दायमाददते । तेषां भगिनीसुता एव दायभागिनः ॥ १२ ॥

उपनीतः षोडशेऽब्दे ब्रह्मचर्यं यथाविधि ।
निर्वर्त्याथ समावृत्तो युवा भृशमशोभत ॥ २२ ॥

यथाकुलाचारमथ वत्सरं परदेवताम् ।
असेवत महादेवीं भक्त्या परमया युतः ॥ २३ ॥

शस्त्रविद्यागुरोर्वाणियम्पपरम्पत्तुदेशिकात् ।
जग्राहायुधविद्याश्च व्यायामसहितास्ततः ॥ २४ ॥

शास्त्रेष्वादौ व्याकरणं प्रवेष्टुं बद्धकौतुकः ।
कस्माच्चिच्छास्त्रिणोऽध्यैत पूर्वसिद्धान्तकौमुदीम् ॥ २५ ॥

आरूब्रह्मालयभवादाहिताग्नेर्द्विजोत्तमात् ।
एष व्याकरणेऽन्येष्वप्याप शास्त्रेषु वैदुषीम् ॥ ॥२६ ॥

सहजप्रतिभाबीजा देव्यनुग्रहपोषिता ।
कविताक्ल्लरी चास्य समृद्धा बहुलैः फलैः ॥ २७ ॥

ज्योतिस्तन्त्रे वैद्यतन्त्रेऽप्ययमार्जितवान् पुनः ।
प्रवीणत्वं प्रयोगांश्च निरन्तरपरिश्रमैः । ॥ २८ ॥

वीणाशलाकाव्यसने वेणुगानेऽपि नैपुणीम् ।
विलोक्य विस्मितोऽत्यर्थं वैणिकस्तस्य मातुलः ॥ २९ ॥

मातङ्गानां विनयने तच्चिकित्साविधावपि ।
मातङ्गलीलानिष्णातः सोऽयं वैदग्ध्यमाप्तवान् ॥ ३० ॥

चतुर्विधं चाभिनयं शिल्पं च बहुकल्पनम् ।
परिशीलितवानेषः कुशाग्रधिषणः स्वयम् ॥ ३१ ॥

विद्यादानाध्वरे नित्यदीक्षितोऽयं सतां मतः ।
ईप्सितान् विषयान् शिष्यानध्यापयदुपेयुषः ॥ ३२ ॥

सन्मुहूर्तोपनयनाज्जडं वेदविदं व्यधात् ।
कुष्ठिनं व्यधितोल्लाघं दानात् कर्मविपाकतः ॥ ३३ ॥

एतेन रचिता ग्रन्था लघवो गुरवस्था ।
विविधाः शास्त्रविषयाः सर्वसन्देहभंजकाः ॥ ३४ ॥

'तस्यापत्य"मितीदं यत् सूत्रं पाणिनिना कृतम् । (4-1-92)
तत्रास्ति वार्तिकं किञ्चिदस्पष्टार्थं विपश्चिताम् ॥ ३५ ॥

'तस्येदमित्यपत्येऽपि, बाधनार्थं कृतं भवेत् ।
उत्सर्गः शेष एवासौ वृद्धान्यस्य प्रयोजनम्' (2581-2584 वा)

वार्तिकस्यास्य सन्देहनिवृत्त्यर्थमनेन हि ।
व्याख्यानं रचितं सार्धैस्त्रिभिः श्लोकैर्मितं, यथा ॥ ३६ ॥

तस्येदमित्येव भवेदपत्येष्वजित्यतः सूत्रमिदं किमर्थम् ।
अवश्यकं चेदिदमुत्तरार्धं तर्ह्यस्य पार्थक्यमनर्थकं स्यात् ॥

अत्रोच्यते, बाधकबाधनार्थं सूत्रं वृथा भाषितवान् महर्षिः ।
आशैषिकाणां ननु शैषिकच्छबाधा कथं स्यादिति चेत् शृणु त्वम् ॥

सूत्रैक्यतः शब्दविशेषसम्बद्धोऽपत्यरूपी भवतीह योऽर्थः ।
तस्यैव तावत् प्रकृतोपयोगेऽस्याशेषतार्थस्य ततोऽपरस्य ॥
तथा च वृद्धाच्छविधिप्रसङ्गः स्यादित्यतः सूत्रमिदं विभक्तम् ॥

एतैर्हि विस्मितांश्चक्रे वैयाकरणसत्तमान् ।
सङ्गमग्रामजान् विप्रान् पद्यैरेष विचक्षणः ॥ ३७ ॥

तर्केऽपि हेत्वाभासानामयं तर्कविशारदः ।
उदाहरणपद्यानि हृद्यान्यरचयद्यथा ॥ ३८ ॥

(क) सव्यभिचारः साधारणः —

त्वं रुष्टा मयि चेन्नमामि भवतीं नेयं त्वया नम्यतां,
नम्यत्वं त्वयि भाति पार्थिवतया मन्ये महाराजवत् ।
कुम्भादिष्वपि वर्तनात् त्वदुदितं साधारणं साधनं,
वाग्वादेष्विति निर्जितो दयितया रामः सुखं रातु वः ॥

(ख) सव्यभिचारोऽसाधारणः —

कृष्णः पुष्णातु सौख्यं सुमुखि सुमुखतां याहि, याहि प्रियां तां
अन्यासक्तं कुतो मां कलयसि दयिते, केवलं त्वत्स्वभावात् ।
यद्येवं मुग्धता ते, करणमिदमसाधारणं पक्षमात्रे
वृत्तत्वादित्यकस्मात् प्रणयकलहितां राधिकां सान्त्वयन् वः ॥

(ग) सव्यभिचारोऽनुपसंहारी —

सर्वं वस्तु सुखावहं, तव पुनः कौतस्कुतीयं व्यथा,
कस्मादेवमुदीर्यते, जगदिदं यत्तन्मयं भासते ।
हेतुः सव्यभिचार एष विरहाद्दृष्टान्तयोरित्ययं
सल्लापः सह लक्ष्मणेन वियुजः सीतापतेः पातु वः ॥

(घ) विरुद्धः—

भीतोऽहं विरही तुषारकिरणात् सोऽयं समुज्जृम्भते,
विज्ञातः कथमेष ते, मम यतस्तापं करोत्युच्चकैः ।

---

सङ्गमग्रामः—कूटल्लूर्नामकं विप्रगृहम् ॥ ३७ ॥

लिङ्गात् कोऽनुमिनोति साध्यविरहव्याप्तादियं मुग्धता,
मा भैषीरिति पातु वो रघुपतिः सौमित्रिणा सान्त्वितः ॥ ३२ ॥

(ङ) सत्प्रतिपक्षः—

का भीतिस्तव चन्द्रतो रघुपते, दोषाकरत्वादसौ
आसक्तः परपीडने पिशुनव,न्नैवं, कुतः कथ्यते ।
हेतुः सत्प्रतिपक्ष एष, यदयं सद्वृत्ततां गाहते,
सौन्दर्येण निरस्तभीरिति, सुखं पुष्णातु वो राघवः ॥ ३३ ॥

(च) आश्रयासिद्धः —

मिथ्येयं विरहव्यथा, तव मुदं दत्ते पुरोवर्तिनी
मायामैथिलकन्यका प्रियतमाभावेन सत्येव सा ।
इत्युक्तः सहजेन सान्त्वनविधौ हेतोरमुष्याश्रया-
सिद्धत्वं प्रतिपादयन्नवतु वः श्रीजानकीवल्लभः ॥ ३४ ॥

(छ) स्वरूपासिद्धः—

चित्तं मे चित्तजन्मा विदलयति शरैः स्वाश्रयं नाशयेत् कः
स्थूलत्वाच्चेतसोऽसौ किमिव न कुरुते निर्विचारप्रवृत्तः ।
आहुश्चेतोऽणुमानं कथमिव भवति स्थूलता तत्स्वरूपा-
सिद्धोऽयं हेतुरेवं दशरथसुतयोः पातु सम्भाषितं वः ॥ ३५ ॥

(ज) व्याप्यत्वासिद्धः—

वध्येतां शुकसारणौ, न हि तयोर्वध्यत्वमस्त्येव त-
द्वध्यत्वाद्दशकन्धरादिवदयं हेतुः सहोपाधिकः ।
सद्द्रोहत्वमुपाधिरत्र सुगमः शेषस्त्वया चिन्त्यता-
मित्यादित्यसुतोक्तिखण्डनकरः श्रीराघवः पातु वः ॥ ३६ ॥

(झ) बाधितः—

जय्यो राघव एष मानुषतया तद्भक्षिभिर्यातुभिः
नैवं, बाधित एष हेतुरुदितः प्रत्यक्षमानेन हि ।
क्व प्रत्यक्षमिदं खरादिनिहतावित्यग्रजस्याग्रतो
दिश्यात्तन्मतभिद्विभीषणसमुद्गीतः सुखं राघवः ॥ ३७ ॥

(ञ) व्याप्यत्वासिद्धस्योदाहरणान्तरम्—

अज्ञात्वा हृद्गतं ते कथमभिलषितं प्रार्थये भामिनि त्वां,
नन्वेतस्मात् कटाक्षादनुमिनु हृदये राग एवेति चेन्न ।
हेतुः सोपाधिकोऽयं भवति, गुरुतरह्रीभरोऽस्मिन्नुपाधिः
साध्यव्यापी प्रियादौ स खलु रणमुखे साधनाव्यापकश्च ॥ ३८ ॥

(ट) 'कोटिलिङ्गपुरे वासी युवराजो महाकविः ।
हेत्वाभासमुदाजह्रे दशश्लोक्या सतां मुदे ॥'

आशौचं जन्ममृत्यूत्थं निर्णेतुं छिन्नसंशयम् ।
आशौचदीपकव्याख्या कृतानेन मनीषिणा ॥ ३९

आशौचचिन्तामणिमप्याशौचदशकं तथा ।
महार्थैः प्रमितैः पद्यैः स्पष्टैर्ग्रथितवानयम् ॥ ४० ॥

इष्टकानां सहस्रेण यद्वेदिचयनं क्रतौ ।
तस्य क्रमं विवृतवान् पद्यैः सौकर्यसिद्धये ॥ ४१ ॥

यद् भास्करीयगणितं गोलाध्यायश्च यः पुनः ।
तयोर्व्याख्यानमकरोदेष ज्योतिर्विदां कृते ॥ ४२ ॥

नैसर्गिक्या प्रतिभया श्रुतैश्च विमलैर्युतः ।
नित्याभ्यासात् कवित्वं च सर्वदायमपोषयत् ॥ ४३ ॥

देवीं कुरुम्बां विष्णुं च शिवं चाप्यधिकृत्य सः ।
स्तोत्राण्यनेकान्यकरोद्भक्त्या सहजयेरितः ॥ ४४ ॥

बाल्युद्भवं महाकाव्यं बाल्ये षोडशसर्गभाक् ।
प्रचोदितो वासनया रचयामासकौतुकी ॥ ४५ ॥

यौवने युवराजत्वं मातुलेन समर्पितम् ।
आसाद्य शुशुभे विद्वद्युवराजप्रथां गतः ॥ ४६ ॥

मुक्तकानि त्वसंख्यानि रचितानि तदा तदा ।
तेषु नष्टावशिष्टानि विलिख्यन्तेऽत्र कानिचित् ॥ ४७ ॥

अधिकृत्य महावृष्टिं केनचित् सुहृदार्थितः ।
सपद्येतद् ग्रथितवान् पद्यं स प्रासभासुरम् ॥ ४८ ॥

गम्भीराम्भोधिसम्भावितघुमुघुमितध्वानबद्धावलेप-
भ्रान्ताभ्रोद्भ्रान्तविद्युत्पटलपटुतरद्योतविद्योतितद्यौः ।
झञ्झानिर्घोषवर्षी प्रबलमरुदुरुक्षोभितोर्वीसमुद्यद्-
धूलीपालीनिगूढद्रुमपुरनिकरा भ्राजते वृष्टिरेषा ॥

दिशि प्रतीच्यामुदितं धूमकेतुमसौ कविः ।
दिने दिने दृश्यमानं साधु वर्णितवान् यथा ॥ ४९ ॥

इच्छाजन्यो विधातुश्चरमगिरिशिरःप्रोत्थितश्वेतधातु-
र्दण्डो ब्रह्माण्डस्नातुस्तनुरिव हरिपर्यङ्किकापन्नयातुः ।
सायं सायं न जातु स्फुटदुडुनवफेनाम्बराम्भोधिसेतु-
स्त्रैलोक्यत्रासहेतुर्वरुणदिशि दरीदृश्यते कोपि केतुः ॥

स्वातिजन्मा महाराजो वञ्च्यां योऽभूदुदारधीः ।
अभिगच्छन्नमुं कश्चिदर्थी दृष्टोऽमुना द्विजः ॥

तत्साहाय्यकमाधातुं श्लोकत्रयमयं कविः ।
निर्माय दत्तवांस्तस्मै दातुं श्लेषोज्वलं यथा ॥

(क) अश्रान्तं सुन्दराङ्गीवदनमिव मिथश्छिद्रहीनैः समानै-
रूढब्रह्मात्मभिर्यः सर इव शरदि श्रीगृहामोदलोलैः।
सन्मार्गादस्खलद्भिः दिवसकर इव प्राप्तरूपैर्द्विजेन्द्रैः
श्रीमानाश्रीयतेऽसौ जयति वसुमतीमण्डले वञ्चिराजः ॥

(ख) आशा दशापि परिपूरयसे यशोभि-
स्त्वंराजराजवलभिज्ज्वलनादिकानाम् ।
कस्तादृशस्य परिपूरयितुं ममाशां
यत्नस्तवेति किमपि प्रतिबोधयामि ।।

(ग) दारिद्र्यस्य दयालुत्वं किं ब्रवीमि नराधिप ।
आत्मनाशमनादृत्य भवन्तं मामदर्शयत् ।।

श्लोकस्तुष्टो द्विजस्यैतैराशाः पूरितवान् नृपः ।
वर्णयन् वञ्चिराजं तं पद्यमन्यत् कविर्व्यधात् ॥ ५२ ॥

षष्ठीतत्पुरुषाह्वयो नृपतिषु प्रायेण विद्वत्प्रभुः
शब्दः संप्रति कर्मधारयतयाप्याभाति वञ्चीश्वरे ।
इत्याकर्ण्य पुनर्विलोक्य च बहुव्रीहित्वमेतत्पदे
किं शोकादिव न स्थितिः क्वचिदपि द्वन्द्वाव्ययीभावयोः ।।

कूटल्लूर्वासुदेवाख्यद्विजाढ्ययार्पितं त्विदम् ।
पद्यं तदवलोकेच्छाद्योतकं बन्धबन्धुरम् ॥ ५३ ॥

भो भो भूमीसुरेन्द्रा मतिमथितमथितानेकशास्त्राम्बुराशि-
प्रोद्भुतज्ञानचन्द्रस्फुरणविमलितस्वान्तभागान्तरीक्षाः ।
यौष्माकालोकनेच्छां मम चिरजनितां पुष्ययध्वेधुना यां
नो जानीमः किमु स्यात् सपदि फलवती सावकेशिन्यताहो ॥

स्तुतिं निन्दामपि श्लेषभङ्ग्या व्यङ्ग्यं प्रकाशयन् ।
कवितां प्रत्यभिप्रायमाविश्चक्रे कदाप्ययम् ॥ ५४ ॥

(क) कविता परमरसाढ्या मुखतो गलिता निरर्गलं भवतः ।
ध्वनिमुख्यापि च धीमन् विबुधाः कुर्वन्त्यलङ्कारम् ।।

---

परमरसाढ्या, परम् अरसाढ्या इति, मुखतः गलिता, मुखतः अगलिता इति च पदच्छेदे भेदः। ध्वनिमुख्या व्यङ्ग्यार्थप्रधाना, शब्दप्रधाना, इति, अलङ्कारम् भूषणम्, अलमलमिति प्रतिषेधवचनम् इति च अर्थभेदः । आद्ये स्तुतिः द्वितीये निन्दा ।। ५४ ।। (क)

तस्य तद्धितपाण्डित्यं बोधयन् निपुणं कवेः ।
अवैयाकरणं श्लोकः खसूचिं विदधात्ययम् ॥ ५५ ॥

(क) अस्यामेण्यप्रकृत्यां मदकलशिखिनीकोमलालच्प्रकृत्यां
सत्यां स्नञ्प्रत्ययस्य प्रकृतिषु कतमो नञप्रकृत्या विनास्ते ।
दानीमो मे दविष्ठा प्रकृतिरपि सखे मन्मथेकक्प्रकृत्या
शिष्टो धेयप्रकृत्या प्रकृतिरितियुसो ज्ञायतां छस्प्रकृत्या ॥

अवृत्ता केनचिद्वृत्ता समस्या काप्यपार्थिका ।
या,पन्तावूरायमन्नञ्चाटयेतामितीदृशी ॥ ५६ ॥

पन्तावूराख्यभवनजातं निपुणमानिनम् ।
पातयेतां भवन्तावित्यर्थोऽस्याः कैरलीगतः ॥ ५७ ॥

आद्यन्तयोगवैदग्ध्यादेनां वृत्तार्थसंयुताम् ।
अकरोद्युवराजोऽसौ सत्वरं प्रतिभाधनः ॥ ५८ ॥

(क) 'वासुकिं वलयं चक्रे यो यश्चानन्तमीश्वरः ।
तल्पन्तावूरायमन्नञ्चाटयेतां हरिश्च मे ॥ '

एवं तदा तदा तेन सततांभ्यासशालिना ।
कृतानि नाशं प्राप्तानि पद्यान्युच्चावचानि हि ॥ ५९ ॥

रससदनभाणः

रसस्य सदनं नाम भाणं सोऽयं प्रणीतवान् ।
केलियात्रामहः काल्या यत्र वस्तु प्रकल्पितम् ॥ ६० ॥
प्रत्यब्दमर्के मकरराशिं प्राप्ते महो हि सः ।
निर्वर्त्यते तण्डुलस्थाल्युपहारसमन्वितः ॥ ६१ ॥

---

मदकलशिखिनीकोमलवाचि अस्यां प्रावृषि सत्यां पुरसु कतमः स्त्रिया विना आस्ते । अयि सखे, इय मे दविष्ठा । मन्मथाशक्त्या रूपेण शिष्टः अहम् इति ज्ञायताम् इत्यर्थः । प्रावृष एण्यः आलजारचौ बहुभाषिणि, स्त्रीपुंसाभ्यांनञ्स्नञौ दवीं च शक्तियष्टयोरीकक्, अह शुभमोर्युस भवतष्ठक्छसौ इति पाणिनीय सूत्राणि, बागरूपनामभ्योधेयः इति वार्तिकं च अत्र अनुसन्धेयानि ॥ ॥५५॥ (क)

तल्पम् तौ उः रायम् अन्नम् च अटयेताम् इति छेदः । यः उः (शिवः) वासुकिं चक्रे यः अनन्त तल्पं (चक्रे) तौ इश्वर हरिः च मे रायं (धनम्) अन्न च अटयेताम् (गमुमेताम्) इत्यन्वयः ॥ ५८ ॥ (क)

तण्डुलस्थाल्युपहारिः तालप्पोलि इति कैरल भाषायां प्रसिद्धः । तालप्पलिशब्दे ओकारो ह्रस्वः ॥ ६१ ॥

प्रचाल्यते तण्डुस्थाल्युपहारो यथापुरम् ।
अद्यत्वेऽपि तदात्वे यस्तस्य भाणोऽत्र वर्णनम् ॥ ६२ ॥

आदौ कवेः परिचयं ददात्यत्र कविः स्वयम् ।
गीतिवृत्तनिबद्धाभ्यां पद्याभ्यां भाणनाम च । ॥ ६३ ॥

(क) 'प्रयते केरलदेशे प्रथितं राराष्टि कोटिलिङ्गपुरम् ।
श्रीमान् युवराजाख्यस्तत्रास्ते दीर्घदर्शिमकुटमणिः ॥

(ग) कालीकृपाकटाक्षक्षपिताखिलकल्मषौघधिषणोऽयम् ।
रससदननामधेयं सुधियां प्रीत्यै करोति भाणमिमम् ॥'

एकहार्ये हि भाणेऽस्मिन् विद्यते विटनायके ।
चात्वारिंशद्युतं हृद्यपद्यानां शतकद्वयम् ॥ ६४ ॥

आकाशभाषितद्वारा बहुभिः सह भाषणम् ।
मधुरैर्ललितैर्गद्यैर्ग्रथितं च यथोचितम् ॥ ६५ ॥

महापण्डितवेद्यानि पद्यान्यप्यत्र रूपके ।
विद्यन्ते, तेषु किमपि सतां प्रित्यै निदर्श्यते ॥ ६६ ॥

चतुर्षु नान्दीपद्येषु द्वितीयं हि सुदुर्ग्रहम् ।
यमकश्लेषयोगेन विदुषामपि तद्यथा ॥ ६७ ॥

(क) नित्यं नश्चित्तपद्मे परिलसतु कपालीकपालीकपाली-
मालाधारी समस्तप्रमदजनकलापः कलापः कलापः ।
'भूत्वा निर्भाति यस्याधिकमसुसमरीणामरीणामरीणा-
मुत्पेष्टा यश्च दूरीकृतकमलमहस्तोमहस्तो महस्तः ॥

---

६७ (क) कात् यमात् मृत्योः पालयतीति कपाली मृत्युञ्जयः शिवः । कं वायुं पिबन्तीति कपाः सर्पाः । 'उरगः पन्नगो भोगी जिह्मगः पवनाशनः' इत्यमरे पवनाशनपदं सर्पपर्यायः । कपानाम् सर्पाणाम् आली पंक्तिः ॥ कानि शिरांसि । 'मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोम्बुनोः' इत्यमरः । कानाम् शिरसां पालीनाम् भङ्गानां माला पङ्क्तिः । कपालिं कपालि मालां च धारयतीति कपालीकपालीमालाधारी । समस्तानां प्रमदस्य हर्षस्य जनकः उत्पादकः कलापः भूषणं यस्य सः समस्तप्रमदजनकलापः । कलाः पातीति कलापः चन्द्रः कलापः । कलापः भूषणम् । 'कलापो भूषणे बर्हे तूणीरे संहतावपि'' इत्यमरः । के शिरसि इति अधिकम् । विभक्त्यर्थेऽव्ययीभावः । निर्भाति दीप्यते । कलापः (चन्द्रः) यस्य (कपालिनः) अधिकं (शिरासि) कलापः (भूषणम्) भूत्वा निर्भाति इत्यन्वयः । चन्द्रशेखर इति भावः । असुसमैः प्राणतुल्यैः प्रियैः रीणानाम् वियुक्तानाम् अमरीणाम् देवाङ्गनानाम् । अरीणाम् शत्रूणाम् । उत्पेष्टा हन्ता । असुरसंहारी इति भावः । दूरीकृतः तिरस्कृतः कमलमहस्तोमः

वर्णनानि मनोज्ञानि तत्तद्विषयकानि च ।
सचेतसां विनोदाय निर्दिश्यन्तेऽत्र कानिचित् ॥ ६८ ॥

उत्सवार्थमुपेतानां व्यापारा विविधा नृणाम् ।
वर्ण्यन्ते कुत्रचित् पद्ये समस्यापूरणात्मना ॥ ६९ ॥

'केचिद्देवीपदाब्जं स्वयमपर इह स्वात्मजैर्वर्षजातैः-
अन्ये तत्स्तोत्रगानं, निजशिरसि परे तत्पदाम्भोजयुग्मम् ।
प्रादक्षिण्यं च तस्याः कतिचन, कुसुमैरर्चनं केऽपि विप्रान्
वन्दन्ते वन्दयन्ते विदधति दधते कुर्वते कारयन्ते ॥'

पुरस्सरोत्सार्यमाणजनावलिविबाधनम् ।
महाराजस्यागमनमित्थमत्रोपवर्ण्यते ॥ ७० ॥

'रक्तोष्णीषधरैर्नरैरुभयतः कार्पासकूर्पासिभिः
सौवर्णोज्ज्वलदण्डमण्डितकरैरान्दोलिकामन्वितैः ।
अग्रे व्यग्रतरैर्जनापनयने भृत्यैरुदस्तायुधैः
पश्चात् केवलसेवकैश्च सहितः सम्राट् समागच्छति ॥'

उच्छृङ्खलस्य कस्यापि मातङ्गस्य प्रधावनम् ।
मत्तस्य भीतिजनकमेवं समुपवर्ण्यते ॥ ७१ ॥

'मत्तः कोपि मतङ्गजः प्रचलितश्छित्वा बलाच्छृङ्खलां
चित्तं व्याकुलयन् समस्तजगतामुत्तुङ्गशैलाकृतिः ।
स्रस्तो हस्तिपकस्य हस्ततलतः कृत्तद्रुवल्लीकुलः
प्रत्यग्रस्तनितोग्रकण्ठनिनदः प्रत्यध्वमुद्भ्राम्यति ॥

चाक्यार्कूत्तिति यन्नाटचं यन्नृत्यं तुल्ललित्यपि ।
ते उभे वर्णिते ह्यत्र प्रख्याते केरलेष्विह ॥ ७२ ॥

'मध्ये दीपज्वलनमधुरे पार्श्वतः पाणिघस्त्री-
चित्रीभूते सरसहृदयैर्भूसुरैर्भासुराग्रे ।
पृष्ठे मार्दङ्गिकविलसिते रंगदेशे प्रविष्टः
स्पष्टाकूतं नटयति नटः कोऽपि कश्चित् प्रबन्धम् ॥'

'गाथां केरलभाषया विरचितां शृङ्गारहास्यादिभिः
पूर्णां पुण्यपुराणवर्णनमयीं गायन्नयं नर्तकः ।

---

पद्मकान्ति सद्भयः येन तादृशौ हस्तौ करौ यस्य स दूरीकृतकमलमहस्स्तोमहस्तः । महस्तः तेजसा । यः (कपाली) महस्तः दूरीकृतकमलमहस्स्तोमः हस्तः च (भवति) इत्यन्वयः । यथोक्त विशेषणविशिष्टो मृत्युञ्जयो नित्यमस्माकं हृदयकमले विराजतु इत्यर्थः ॥

तालोज्जृम्भितमर्दलस्वनसमं नृत्यन् दृशोर्विभ्रमै-
र्भावव्यञ्जनकारिभिर्वितनुते प्रीतिं सभावासिनाम् ।।'

ऐन्द्रजालिकविद्याया: प्रयोगोऽप्युपवर्ण्यते ।
केनाप्याविष्कृतः सर्वलोकाश्चर्यकरो यथा ।। ७३ ।।

'पिञ्छालङ्कृतवेष्टनाञ्चितशिराः कूसर्पाधारी वहन्
वेत्रं किञ्चन पाणिना परिजनैः पार्श्वस्थितैः संयुतः ।
उच्चैः कानिचिदक्षराणि विलपन्नव्यक्तमव्याजवद्
ध्यायन् भस्म किरन् करोति हृदयव्यामोहनं पश्यताम् ।।'

'उप्त्वा बीजमथाङ्कुरादि सहसा लोष्टादि धृत्वा करे
कुम्भोद्धलनमन्त्रजापविधिना सौवर्णखण्डादिकम ।
अभ्रादम्बुनिपातनादि च बहून्येवंविधान्यद्भुता-
न्यद्धा दर्शयते जनस्य जनयन्नानन्दमुच्चैस्तराम् ।।'

तादात्विकं केरलीयजीवितं प्रतिपादयन् ।
एष भाणः प्रथयति तस्य लोकज्ञतां कवेः ।। ७४ ।।

कैरल्यामप्यनेकानि रचितानि तदा तदा ।
श्लोकगीतादिकाव्यानि न लभ्यन्तेऽद्य तान्यपि ।। ७५ ।।

## श्रीरामचरितम्

विदुषा युवराजेन ह्यमुना गोदवर्मणा ।
अन्ते कृतं महाकाव्यं श्रीरामचरिताह्वयम् ।

वाल्मीकिरचितं रामचरितं वस्तु कल्पयन् ।
स्वीयं वर्णनवैदग्धीं प्राकाशदयं कविः ।।

किन्तु नेदं महाकाव्यमुपनेतुं समापनम् ।
हन्त नावसरो दत्तो विधिनान्यदिवेच्छता ।।

सर्गेषु द्वादशस्वेकविंशत्पद्ययुतेष्वयम् ।
रचितेषु दिवं प्रायात् युवराजः कवीश्वरः ।।

सर्गद्वये कुमाराणामुदयो दारसङ्ग्रहः ।
इत्युभौ विषयौ तत्र वर्णितौ नातिविस्तरात् ।।

ततः पंचसु सर्गेषु दम्पत्योर्नवयोस्तयोः ।
सीताराघवयोर्भोगा विविधा उपवर्णिताः ॥ ८९ ॥

रामस्यारण्यगमनं सीतया लक्ष्मणेन च ।
अष्टमे वनवासस्तु नवमे साध्ववर्ण्यत ॥ ८२ ॥

सर्गे शूर्पणखाक्रोधो दशमेऽनन्तरे पुनः ।
मारीचानुगतिः प्रोक्ता द्वादशे रावणागतिः ॥ ८३ ॥

सीतारावणसंवादमध्ये सर्गे त्रयोदशे ।
हाः विद्वद्युवराजोऽयमगमत् कीर्तिशेषताम् ॥ ८४ ॥

अन्धकारस्तदा व्याप्तः कोटिलिङ्गपुरे घनः ।
सर्वदृष्टितिरोधानकरः सम्मोहबृंहकः ॥ ८५ ॥

विद्याकलाप्रभापूरविद्योतितदिगन्तरम् ।
पुरं तत् सहसा जातं हन्तान्धतमसावृतम् ॥ ८६ ॥

अनारुह्य महाराजपदं यद्दिवमाप्तवान् ।
स्थिरीचकार तद्विद्वद्युवराज इति प्रथाम् ॥ ८७ ॥

अनाथमर्धसृष्टं तत् श्रीरामचरितं बत ।
दयनीयां दशां प्राप्य म्रियते स्म विधेर्बलात् ॥ ८८ ॥

विधवा कवितादेवी परां शोच्यां दधौ दशाम् ।
कंचित् कालं पुनर्विद्यास्तत्र निष्पन्दतां गताः ॥ ८९ ॥

या विद्वद्युवराजस्य सर्वविद्यानिधेः कलाः ।
स्थितास्ता बीजरूपेण क्रमशो जन्मनोत्सुकाः ॥ ९० ॥

## कोच्चुण्णिराजः

अनन्तरमजायन्त तत्र राजकुले शुभे ।
कुमाराः सुकुमाराङ्गाः पुण्यलक्षणलक्षिताः ॥ ९१ ॥

कुशाग्रबुद्धयः सर्वे प्रतिभाबलभूषिताः ।
काव्यशास्त्रकलातन्त्रपरिशीलनतत्पराः ॥ ॥ ९२ ॥

कुञ्ञिरामश्च चक्कं च कोच्चुण्णिश्च तथा महान् ।
कुञ्ञस्तथाल्पः कोच्चुण्णिः कुञ्ञुण्णिश्च पुनर्महान् ॥ ॥ ९३ ॥

अल्पः कुञ्ञुण्णिरपरो भागिनेयाख्ययान्वितः ।
कुञ्ञिक्कुट्टश्च पय्युत्तिरविञ्ञिक्काट्टुनामवान् ॥ ९४ ॥

दशाधिकाः कुमारास्ते कुरुम्बापाङ्गसंगताः ।
महोद्यमा अवर्धन्त महीशकुलकेतवः ॥ ९५ ॥

ते खल्वल्पेन कालेन काव्यशास्त्रकलादिषु ।
सर्वेष्वप्यभवन् शिक्षावशादतिविचक्षणाः ॥ ९६ ॥

समुदित्वरतारुण्याः समे राजकुलाङ्कुराः ।
अप्रतिद्वन्द्विनोऽभूवन्नद्भुतप्रतिभोद्गमाः ॥ ९७ ।

सर्वेऽपि देवीभजने विद्यानां च प्रचारणे ।
दीक्षिताः परया प्रीत्या विदधुः कालयापनम् ॥ ९८ ॥

ोटि ङ्गपुरस्यास्य नवभ्युत्थानमद्भुतम् ।
आकर्ण्याभ्यागमन् हृष्टा ज्ञानसम्पादनेच्छवः ॥ ९९ ॥

शतत्रयाधिका आसन् किल विद्यार्थिनस्तदा ।
नानादेशागतास्तत्र तत्तद्विद्यास्वधीतिनः ॥ १०० ॥

तावत् सर्वकलाकेन्द्रं कोटिलिङ्गपुरं बभौ ।
कुम्भकोणं कृष्णशास्त्री तदाध्यक्षपदं दधौ ॥ १०१ ॥

स विद्वद्युवराजस्य प्रेष्ठशिष्येषु सत्तमः ।
र्वर राजकुमाराणामन्येषामप्यभूद्गुरुः ॥ १०२ ॥

काव्यान्यध्यापयंस्तत्र युवभूपेषु केचन ।
नाटकादीनलङ्कारग्रन्थानपि तथेतरे ॥ १०३ ॥

केचिद्व्याकरणं केचिन्न्यायं शिष्यानुपादिशन् ।
स्थापत्यमायुर्वेदं च ज्यौतिषं च तथापरे ॥ १०५ ॥

नाट्यशास्त्रं च नाट्यस्य प्रयोगांश्चापि केचन ।
सलक्षणं च सङ्गीतं केऽपि शिष्यानशिक्षयन् ॥ १०५ ॥

कलापकम्

अष्टाध्यायीं ससिद्धान्तकौमुदीं समनोरमाम् ।
शब्दरत्नं च शब्देन्दुपरिभाषेन्दुशेखरे ॥ १०७ ॥

मुक्तावलीं दिनकरीं गदाधरकृतीस्तथा ।
ब्रह्मानन्दीयमुख्यांश्च ग्रन्थान् वेदान्तगोचरान् ॥ १०८ ॥

जातकानां च गणितं प्रश्नमार्गविचारणाम् ।
पुराणानां प्रवचनमन्यांश्च विषयांस्तदा ॥ १०९ ॥

अधिगन्तुं सन्निष्कर्षं जिज्ञासासम्प्रचोदिताः ।
ततस्ततः समाजग्मुः कोटिलिङ्गपुरं वरम् ॥ १०९ ॥

काव्यानां ग्रथने तत्र सर्वेऽप्यासन् समुत्सुकाः ।
कोच्चुण्णिकुञ्ञिक्कुट्टाख्यावास्तां तन्मात्रचेतसौ ॥ ११० ॥

कैरल्या भाषया देवभाषयापि कृतीः शुभाः ।
असङ्ख्यास्तावकुरुतां कुरुम्बायाः प्रसादतः ॥ १११ ॥

कोलम्बाब्दे त्रयस्त्रिंशद्युतसाहस्रपूरके (1033)
कोच्चुण्णिभूपो जातोऽभूद्रामवर्माभिधानवान् ॥ ११२ ॥

मीनमासे सप्तदशे दिने सोऽयमजायत
चन्द्रे चोत्तरफल्गुन्या युक्ते लग्ने सुलक्षणे ॥ ११३ ॥

पूराटालयजन्मास्य पिता शङ्करभूसुरः ।
जनयित्री सुकृतिनी त्विक्कावाख्या महीश्वरी ॥ ११४ ॥

कोलम्बाब्दे सहस्राढ्यचत्वारिंशत्प्रपूरके । (1040)
कुञ्ञिक्कुट्टनृपो जातो रामवर्माभिधानवान् ॥ ११५ ॥

कुञ्ञिप्पिल्ल नाम राज्ञी जननी तस्य धीमतः ।
कवीश्वरः सितमणिः पिता विप्रकुलोत्तमः ॥ ११६ ॥

उभावपीमौ कोच्चुण्णिकुञ्ञिक्कुट्टनृपालकौ ।
भूषयामासतुर्देवीं साहितीं काव्यतल्लजैः ॥ ११७ ॥

कुञ्ञिक्कुट्टनृपालोऽत्र देववाण्या दशाधिकान् ।
व्यतनोदुत्तमग्रन्थान् कैरल्या षष्टितोऽधिकान् ॥ ११८ ॥

स्वतन्त्रा अनुवादाश्च गद्यपद्योभयात्मकाः ।
ग्रन्था नानाश्रयास्तेन कृता नित्याभियोगिना ॥ ११९ ॥

अत्यद्भुतमिदं कर्म तस्य सर्वोत्तमं शुभम् ।
यद् भारतस्यानुवादः कृतस्तत्समवृत्तभाक् ॥ १२० ॥

स महाभारतं पूर्णं हरिवंशेन संयुतम् ।
सपादलक्षश्लोकाढ्यमन्ववादीत् स्वभाषया ॥ १२१ ॥

चतुस्सप्ततिसंयुक्तैर्दिवसैरष्टभिः शतैः ।
महाभारतभाषानुवादस्तेन समापितः ॥ १२२ ॥

---

सितमणिः वेण्मणिनामकगृहजातः । वेण्मणिशब्दे एकारो ह्रस्वः ॥ ११६ ॥

स पण्डितः कविर्गद्यकर्ता ग्रन्थविमर्शकः ।
चरित्रोद्धारकश्चासीत्तथा पत्रप्रवर्तकः ॥ १२३ ॥

कुञ्जिक्कुट्टनृपो ह्येकचत्वारिंशद्वया अयम् ।
महाभारतपाथोधिं 'स्वच्छन्द'मतरत् कृती (874) ॥ १२४ ॥

समाप्य जन्मकृत्यं तदधिगत्य कृतार्थताम् ।
दिवमारूढवान् सोऽष्टचत्वारिंशद्वयाः स्वयम् । ॥ १२५ ॥

अथ कोच्चुण्णिभूपस्य चरितं प्रकृतं ब्रुवे ।
श्रीरामचरितं काव्यमपूर्णं येन पूरितम् ॥ १२६ ॥

आरूढयौवनः सोऽयं प्रतिभाव्यवसायवान् ।
समाप्तविद्यः कवितां प्रसादयितुमुद्यतः ॥ १२७ ॥

प्रणीतवान् नव कृतीः स हि संस्कृतभाषया ।
स्वमातृभाषया तास्ताः कैरल्या त्रिशतोऽधिकाः ॥ १२८ ॥

निबन्धाः संस्कृतकृता निर्दिश्यन्तेऽत्र नामतः ।
काव्यनाटकभाणाद्या रसालङ्कारबन्धुराः ॥ १२९ ॥

श्रीरामचरिते काव्ये त्रिभागद्वयपूरणम् ।
श्रीरामवर्मकाव्यं चेत्येवं काव्यद्वयं कृतम् ॥ १३० ॥

श्रीरामपट्टाभिषेकनामकं नाटकोत्तमम् ।
विटराजजयो भाणो भाणोऽन्योऽनङ्गजीवनम् ॥ १३१ ॥

बाणयुद्धाभिधा चम्पूर्विप्रसन्देश उत्तमः ।
अन्यापदेशकाव्यं च तथा सूर्योदयाह्वयम् ॥ १३२ ॥

अष्टवर्षः कुमारोऽयं सहजप्रतिभानवान् ।
सहसाऽरचयत् पद्यं हृद्यभावनमीदृशम् ॥ १३३ ॥

'नवोत्सवे घोरगजेन्द्रमूर्धन्यारोपिताया अवलोकनार्थम् ।
अतिश्रमेणैव सहागतानां वर्षाजलानां तु भयं न कुर्याः'

विटराजस्य विजये तारुण्यारम्भनिर्मिते
भाणेऽनेकानि पद्यानि स्मरणीयानि साधुभिः ॥ १३४ ॥

स्वकीयकाव्यमाधुर्यमधिकृत्य कटाक्षितौ ।
श्लोकौ भाणगतौ तावदुद्धरास्यत्र कौचन ॥ १३५ ॥

---

'स्वच्चन्द'शब्दः कटपायादिगणनया चतुस्सप्त्यधिकाष्टशतदिनवाची ॥ १२४ ॥

'माधुर्यैकनिधानमर्थभरितं कोच्चुण्णिधात्रीपते-
र्नार्यश्चापि नराश्च सूक्तमनिशं जल्पन्त्यनल्पं मुखैः ।
तस्मात् पाठविधौ तदक्षरगलत्पीयूषसम्मेलना-
देतेषां मधुरोऽधिकं मधुसितादिभ्योऽपि जातोऽधरः ।।'

"सुललितपदन्यासां दोषव्रजेन विवर्जिताम्
गुणगणयुतां सालङ्कारध्वनिं रसवर्षिणीम् ।
निजकृतिनटीं लोकाह्लादप्रदां समनर्तयत्
सकलविबुधोत्तंसो धीमान् स सत्कविपुङ्गवः ।।"

विप्रसन्देशगं पद्यं कोटिलिंगपुराश्रयम् ।
उदाहराम्यहं तस्य भद्रकालिस्मृतिप्रदम् ।। १३६ ।।

"वाणी लक्ष्मीवितरणपरान् सेवते यत्र भूपान्
हित्वा पद्माश्रित इति पतिं बद्धरोषा रमायाम् ।
राज्यं पूज्यं व्रज तदनु तत् कोटिलिंगाभिधानं
तत्रैवान्तर्वणभुवि गृहं भाति तद्भद्रकाल्याः।।"

बाणयुद्धाश्रया चम्पूः साप्यत्ययन्तमनोहरा
तत्रापि च स्वकवितामसावेवमवर्णयत् ।। १३७ ।।

सत्स्वन्येष्वपि चम्पुषु ध्वनिरसालंकारहुंकारिषु
स्वीकुर्युः सुभगामिमां मम कृतिं सन्तोऽतिसन्तोषतः ।
क्षीरक्षौद्रसितागुडा मधुरसद्रव्याणि सन्तीयत-
स्त्याज्यः किं हरिणीदृशां स्मररसालम्बः स बिम्बाधरः।।"

अनंगजीवने भाणेऽप्यनेन कविमौलिना ।
आत्मनः सत्कवित्वस्य प्रस्तावो विहितः स्वयम् ।। १३८ ।।

"गीर्वाणेषु शचीपतिर्हि सुमहासर्पेषु तल्पं हरे-
र्नागेष्वभ्रमुवल्लभोऽब्धिषु पयस्सिन्धू रथिष्वर्जुनः ।
आनन्देषु शिवात्मजाभजनजः शैलेषु हेमाचलो
लोकेषु त्रिदिवः कविष्विह बुधः कोच्चुण्णिभूपालकः"

श्रीरामचरिते काव्ये यत् कृतं तेन पूरणम् ।
प्रस्तोष्यते तत्स्वभावः पश्चात्काव्यनिरूपणे ।। १३९ ।।

त्रिशतोऽभ्यधिका भाषाकृतयोऽपि प्रकाशिताः ।
नानाप्रस्थानसंस्थानास्तेन कोच्चुण्णिभूभुजा ।। १४० ।।

षण्नाटकानि भाणश्च स सोमतिलकाभिधः ।
महाकाव्यानि चत्वारि खण्डकाव्यद्वयं तथा ॥ १४१ ॥

लघुकाव्यद्वयं तद्वद् गीतकाव्यानि षट् पुनः ।
अरुबोपदेशबालोपदेशाख्यं च कृतिद्वयम् ॥ १४२ ।

कान्तवृत्तमलंकारमाला स्तोत्राण्यनेकशः ।
विद्याकलाविवरणं श्रीकुरुम्बास्तवस्तथा ॥ १४३ ॥

श्रुतिगीता शब्दशास्त्रं शतशस्तेन तादृशः ।
अकिङ्क्षणेन रचिताः कृतयः कृतिसौख्यदाः ॥ १४४ ॥

काव्यनिर्माणकलया रोगार्तानां चिकित्सया ।
वैद्यविद्यानिधिः सोऽयं सुखं कालमयापयत् ॥ १४५ ॥

कात्तुल्ळिलालयभवा जायासीत्तस्य जानकी ।
तत्र पुत्रावजायेतामुभौ भूपशिरोमणेः ॥ १४६ ॥

प्रथमः कार्तिकेयोऽभूत् कालकण्ठस्त्वनन्तरः ।
मेधाधनौ तौ पाण्डित्यं समवापतुरद्भुतम् ॥ १४७ ॥

स्वपितुर्लब्धया वैद्यवृत्या लोकस्य सेवनम् ।
तौ हि तीर्थात्तशास्त्रार्थौ विदधाते चिरं सुखम् ॥ १४८ ॥

आसन् दुहितरोऽप्यस्य चतस्रः शुभलक्षणाः ।
कालेऽनुरूपैश्च वरैः परीणीताश्चकाशिरे ॥ १४९ ॥

भजन् भगवतीं भक्त्या रुजः प्रशमयन् नृणाम् ।
कलत्रपुत्रसंयुक्तः सुखं कालं निनाय सः ॥ १५० ॥

सेवमानः सहृदयान् सरसैः कवनोत्तमैः ।
चिराय कोच्चुण्णिनृपः परमानन्दमन्वभूत् ॥ १५१ ॥

एकाधिकशतोपेते सहस्रतमवत्सरे ।
मासि कर्कटके प्राप कविः स परमां गतिम् ॥ १५२ ॥

श्रीरामचरिते विद्वद्युराजार्धनिर्मिते ।
असमाप्ते महाकाव्ये कृतं यत् परिपूरणम् ॥ १५३ ॥

पित्रा कोच्चुण्णिभूपेन कालयोगादमुद्रितम् ।
तदैच्छतां मुद्रयितुं पुत्रावुद्यमशालिनौ ॥ १५४ ॥

अनुजन्मा तयोर्वैद्यः कालकण्ठाख्यसेनवः ।
लोकान्तरं गतः पूर्वमनवाप्तमनोरथः ॥ १५५ ॥

ज्येष्ठपुत्रः स वैद्योऽपि कार्तिकेयाख्यमेनवः ।
प्रयत्नं कृतवान् भूयस्तस्य काव्यस्य मुद्रणे ॥ १५६ ॥

स्वस्याप्यसिद्धकामस्य समयं प्राणनिर्गमे ।
उपस्थितमवागच्छन्निमित्तज्ञः स कालवित् ॥ १५७ ॥

अथ प्रेष्ठां दुहितरमोमनामन्तिके स्थिताम् ।
उवाच तत्करे न्यस्यन् श्रीरामचरितं शुभम् ॥ १५८ ॥

श्रीरामचरितस्यास्य जनकेन कृतस्य मे ।
महाकाव्यस्य वत्से त्वं साधु साधय मुद्रणम् ॥ १५९ ॥

एवमुक्त्वाशिषं दत्वा चारितार्थ्यं समावहन् ।
प्रसन्नचेताः साश्राक्षः सिद्धं कामममन्यत ॥ १६० ॥

अन्येद्युः कृतकृत्यं स्वं भावयन्नम्बिकां स्मरन् ।
पुण्यं नाम जपन् सोऽपि स्वां जीर्णां तनुमत्यजत् ॥ १६१ ॥

और्ध्वदैहिककर्माणि यथाकालं यथाविधि ।
अनुष्ठितानि दायादैः श्रद्धाभक्तिसमन्वितैः ॥ १६२ ॥

ओमना सा प्रियश्चास्याः स महासेनमेनवः ।
पितुरन्त्याभिलाषं तं प्रपूरयितुमुद्यतौ ॥ १६३ ॥

तस्य श्रीरामचरितमहाकाव्यस्य मुद्रणे ।
प्रकाशने च तौ साह्यमीप्सन्तौ मामुपस्थितौ ॥ १६४ ॥

नारायणः पिषारोटी सोऽहं तत्साह्यकर्मणि ।
प्रवृत्तो गुरुकारुण्यमात्रमूलधनः स्वयम् ॥ १६५ ॥

केन्द्रस्थसर्वकारस्य विद्याभ्यासप्रवर्तकाः ।
प्रोत्साहनं ममातेनुस्तत्तद्योगोपपत्तिभिः ॥ १६६ ॥

आदर्शविद्यापीठेऽहं बालश्रीदेशभासुरे ।
आदिष्टः संस्कृतोत्थानकर्मणां बृंहणाय तैः ॥ १६७ ॥

श्रीरामचरितस्यास्य संमुद्रणविधावपि ।
प्रचोदितस्तैस्तत्रापि यत्नमास्थितवानहम् ॥ १६८ ॥

श्रीविद्वद्युवराजेन कृताः सर्गा इहादिमाः ।
सार्धा द्वादश पण्डित्यगर्वसर्वङ्कषा भृशम् ॥ १६९ ॥

आस्वादकोपकाराय तत्र व्याख्या कृतामया ।
बोधयन्त्यन्वयेनार्थमन्वयार्थप्रबोधिनी ॥ १७० ॥

महाकाव्यं सहृदयहस्तेष्वेतत् समर्प्यते ।
श्रीरामचरितं साधुमुद्रितं भद्रवर्णनम् ॥ १७१ ॥

स विद्वद्युवराजोऽपि स च कोच्चुण्णिभूपतिः ।
अनुगृह्णातु सर्वान् नः स्वकाव्यख्यापनान्मुहुः ॥१७२ ॥

कोच्चुण्णिभूपतनयावपि तौ सम्प्रसीदताम् ।
तत्पौत्र्यपि कृतार्थास्तु पितुरिच्छाभिपूरणात ॥ १७३ ॥

श्रीरामचरितं चेदमुदात्तैर्वर्णनैर्युतम् ।
महाकाव्यं सतां भूयादानन्दाय सचेतसाम् ॥ १७४ ॥

जयताज्जगतामीशः करुणावरुणालयः ।
गुरुवायुपुराधीशः सतां क्षेमाय सर्वदा ॥ ॥ १७५ ॥

श्रीगोदवर्मविद्वद्युवराजकृतम्

# श्री रा म च रि त म्

पण्डितरत्ननारायणपिषारोटीविरचितव्याख्यासहितम्



श्रीगोदवर्मविद्वद्युवराजकृतम्

# श्री रा म च रि त म्

पण्डितरत्ननारायणपिषारोटीविरचितव्याख्यासहितम्

## प्रथमः सर्गः

**अस्ति त्रयाणां जगतां निदानं नारायणो नाम सुराधिनाथः ।**
**विराजमानः फणिराजतल्पे पीयूषभानाविव कृष्णसारः ॥ १ ॥**

नारायणं नमस्कृत्य गुरून् स्मृत्वा करोम्यहम् ।
श्रीरामचरितव्याख्यामन्वयार्थप्रबोधिनीम् ॥

तत्रभवान् कोटिलिङ्गराजकुलजन्मा गोदवर्माख्यो महाकविर्विद्वद्युवराजः श्रीरामचरितं नाम महाकाव्यं चिकीर्षुः काव्यमुखलक्षणेष्वन्यतमं वस्तुनिर्देशं तन्वन् नारायणमुपक्षिपति—**अस्तीति** । त्रयाणां जगतां निदानं पीयूषभानौ कृष्णसारः इव फणिराजतल्पे विराजमानः नारायणः नाम सुराधिनाथः अस्ति इत्यन्वयः ॥ निदानम्—आदिकारणम् । पीयूषभानौ—चन्द्रे । कृष्णसारः—मृगः ॥ १ ॥

**सुवर्णपूर्णद्युतितुल्यकान्त्या समाश्रितः सागरकन्यया यः ।**
**विभाति गारुत्मतचारुदेहः क्षणप्रभावानिव कालमेघः ॥ २ ॥**

अथ पञ्चदशभिः श्लोकैर्नारायणमेव विशिनष्टि । तत्र प्रथमं लक्ष्मीनिवासत्वं ब्रूते—**सुवर्णेति** । सुवर्णपूर्णद्युतितुल्यकान्त्या सागरकन्यया समाश्रितः गारुत्मतचारुदेहः यः क्षणप्रभावान् कालमेघः इव विभाति ॥ सागरकन्यया—लक्ष्म्या । गारुत्मतम—मरतकम् । क्षणप्रभा—विद्युत् ॥

**या सत्त्वसङ्घानखिलान् प्रसूते बिभर्ति मातेव च तानजस्रम् ।**
**तां पार्श्वसंस्थां धरणीं कटाक्षैः प्रीणाति यः प्रेमरसाभिषिक्तैः ॥ ३ ॥**

धरणीप्रीणनमाह—येति । या अखिलान् सत्त्वसङ्घान् प्रसूते, माता इत तान् अजस्रं बिभर्ति च, तां पार्श्वसंस्थां धरणीं यः प्रेमरसाभिषिक्तैः कटाक्षैः प्रीणाति ।। सत्त्वसङ्घान्—प्राणिसमूहान् ।। ३ ।।

**यस्योत्तमाङ्गे घनकेशपाशे विराजति स्वर्णमयः किरीटः ।**
**घनप्रतानैर्विहितोत्तरीये स्तनन्धयः सूर्य इवोदयाद्रौ ।। ४ ।।**

किरीटकेशपाशौ वर्णयति—यस्येति । घनकेशपाशे यस्य उत्तमाङ्गे स्वर्णमयः किरीटः, घनप्रतानैः विहितोत्तरीये उदयाद्रौ स्तनन्धयः सूर्यः इव विराजति ।। स्तनन्धयः—बालः ।। ४ ।।

**यस्याननं पद्ममिव प्रफुल्लं वराटकिञ्जल्कनिभोष्ठदन्तम् ।**
**पक्ष्मोद्वहत् पक्षमिवाक्षियुग्मं मधुव्रतद्वन्द्वमिवाधिशेते ।। ५ ।।**

ओष्ठदन्तपक्ष्माक्षियुग्मसहितं मुखं वर्णयति—यस्येति । वराटकिञ्जल्कनिभोष्ठदन्तम् प्रफुल्लं पद्मम् इव यस्य आननम् (कर्म) पक्षं इव पक्ष्म उद्वहत् मधुव्रतद्वन्द्वम् इव अक्षियुग्मम् (कर्तृ) अधिशेते ।। वराटः—वीजकोशः । किञ्जल्कः—केसरः । पक्ष्म—अक्षिलोम । मधुव्रतद्वन्द्वम्-भृङ्गस्त्रीपुंसौ ।। ५ ।।

**करे शरच्चन्द्रसमानकान्तिर्विराजते यस्य स कम्बुराजः ।**
**विकस्वरे चारुबिसप्रसूने कलिन्दजाया इव राजहंसः ।। ६ ।।**

पाञ्चजन्याख्यं शङ्खं वर्णयति—करे इति । विकस्वरे कलिन्दजायाः चारुबिसप्रसूने राजहंसः इव, यस्य करे शरच्चन्द्रसमानकान्तिः सः कम्बुराजः विराजते ।। बिसप्रसूनम्—पद्मम् । कम्बुराजः—पाञ्चजन्याख्यः शङ्खः ।। ६ ।।

**चक्रं सहस्रांशुसहस्रशोभं यस्यारिचक्रोन्मथनातिदक्षम् ।**
**मुदावहं मूर्तमिव स्वतेजः कदापि नो मुञ्चति पञ्चशाखः ।। ७ ।।**

सुदर्शनाख्यं चक्रं वर्णयति—चक्रमिति । यस्य पञ्चशाखः सहस्रांशुसहस्रशोभम् अरिचक्रोन्मथनातिदक्षम् मुदावहं चक्रम्, मूर्तं स्वतेजः इव कदापि नो मुञ्चति ।। पञ्चशाखः—हस्तः । सहस्रांशुः—सूर्यः । अरिचक्रम्—शत्रुमण्डलम् । तेजः—वीर्यम् ।। ७ ।।

**यस्याप्रमेयस्य करप्रमेये जगत्कटाहा बहवो महान्तः ।**
**पिचण्डगर्भे परिमान्ति चित्रं हिरण्यगर्भस्य दिनक्षयेषु ॥ ८ ॥**

उदरं वर्णयति—**यस्येति**। हिरण्यगर्भस्य दिनक्षयेषु अप्रमेयस्य यस्य करप्रमेये पिचण्डगर्भे महान्तः बहवः जगत्कटाहाः परिमान्ति। चित्रम्॥ हिरण्यगर्भस्य—ब्रह्मणः। दिनक्षयेषु—दिवसावसानेषु, प्रलयकालेषु इत्यर्थः। करप्रमेये—करेण प्रमातुं शक्ये। कृशे इत्यर्थः। पिचण्डगर्भे—उदराभ्यन्तरे। परिमान्ति—परिमितास्तिष्ठन्ति ॥ ८ ॥

**यं नाभिकेलीसरसीसरोजे भृङ्गायमाणो भुवनस्य कर्ता ।**
**गायन्मुहुर्वेदपदैर्मनोज्ञैः प्रसादयत्यश्रममात्मयोनिम् ॥ ९ ॥**

नाभिकमलस्थं ब्रह्माणं वर्णयति। आत्मयोनिं यं नाभिकेलीसरसीसरोजे भृङ्गायमाणः भुवनस्य कर्ता मनोज्ञैः वेदपदैः मुहुः गायन् अश्रमं प्रसादयति॥ भुवनस्य कर्ता—ब्रह्मा ॥ ९ ॥

**चकास्ति यश्चम्पककुड्मलस्य प्रमुष्णता डम्बरमम्बरेण ।**
**विवेष्टितः काननकृष्णवर्त्मज्वालाभिरुच्चैरिव नीलशैलः ॥ १० ॥**

पीताम्बरं वर्णयति। चम्पककुड्मलस्य डम्बरं प्रमुष्णता अम्बरेण विवेष्टितः यः काननकृष्णवर्त्मज्वालाभिः (विवेष्टितः) उच्चैः नीलमेघः इव चकास्ति। कुड्मलः—मुकुलः। डम्बरम्—गर्वम्। कृष्णवर्त्मा—अग्निः। उच्चैः—उन्नतः॥ १० ॥

**पदे यदीये यमिनां मनांसि श्रियः करेणानिशलाल्यमाने ।**
**विहाय सर्वान् विषयान् निवासमुशन्ति हंसा इव शारदाब्जे ॥ ११ ॥**

पदपद्मं वर्णयति। श्रियः करेण अनिशलाल्यमाने यदीये पदे यमिनां मनांसि, शारदाब्जे हंसाः इव सर्वान् विषयान् विहाय निवासम् उशन्ति॥ उशन्ति—कामयन्ते ॥ ११ ॥

**यस्याग्रतो मूर्तमिवान्तरङ्गं कृताञ्जलिः कञ्जविलोचनस्य ।**
**अभीष्टदिक्प्रापणजागरूको वसत्यजस्रं विनतातनूजः ॥ १२ ॥**

पुरः स्थितं गरुडं वर्णयति। कञ्जविलोचनस्य यस्य अग्रतः मूर्तम् अन्तरङ्गम् इव अभीष्ट दिक्प्रापणजगरूकः विनतातनूजः अजस्रं कृताञ्जलिः वसति॥ विनतातनूजः—गरुडः॥ १२॥

**रसातलं यस्य तलं पदस्य स्वयंभुवो मन्दिरमुत्तमाङ्गम् ।**
**विलोचने वासरयामिनीशौ वदन्ति विज्ञानदृशः पुमांसः ॥ १३ ॥**

विराट्पुरुषादभिन्नत्वं नारायणस्याचष्टे। विज्ञानदृशः पुमांसः यस्य पदस्य तलं रसातलम्, उत्तमाङ्गं स्वयम्भुवः मन्दिरं, विलोचने वासरयामिनीशौ (च) वदन्ति । रसातलं पातालम्। स्वयम्भुवः—ब्रह्मणः। मन्दिरं, गृहम्-सत्यलोकमित्यर्थः। वासरयामिनीशौ—सूर्यचन्द्रौ ॥ १३ ॥

**अगोचरं लोचनचित्तवाचामविक्रियं विष्वगवस्थितं यम् ।**
**आत्मानमाद्यन्तविहीनमेकमानन्दरूपं मुनयो वदन्ति ॥ १४ ॥**

आनन्दरूपात् परमात्मनोऽभेदं नारायणस्याह । मुनयः यं, लोचनचित्तवाचाम् अगोचरम् अविक्रियं विष्वक् अवस्थितम् आद्यन्तविहीनं एकम् आनन्दरूपम् आत्मानं वदन्ति ॥ अविक्रियं—विकाररहितम् । विष्वक्—सर्वतः ॥ १४ ॥

**यत्पादपद्मे सकृदाहितार्चा नराः सुरेन्द्रादिपदं प्रपद्य ।**
**सदा रमन्ते सह नन्दनादौ विलासिनीभिर्विगतान्यचिन्ताः ॥ १५ ॥**

नारायणार्चनं स्वर्गाय कल्पते इत्याचष्टे। यत्पादपद्मे सकृत आहितार्चाः नराः सुरेन्द्रादिपदं प्रपद्य विगतान्यचिन्ताः विलासिनीभिः सह नन्दनादौ सदा रमन्ते ॥ आहितार्चाः—कृतपूजाः ॥ १५ ॥

**यत्सेवया याति पुनः शरीरी न जातु मातुर्जठरेशयत्वम् ।**
**यथा पुनर्नैव निवृत्तिमेति तथा परब्रह्मणि लीयते सः ॥ १६ ॥**

नारायणसेवनं मोक्षफलकमभिधत्ते। शरीरी यत्सेवया पुनः जातु मातुः जठरेशयत्वं न याति। सः पुनः यथा निवृत्तिं न एव एति, तथा परब्रह्मणि लीयते। जठरेशयत्वं—गर्भवासम् ॥

**तमीश्वरं विश्वजनार्तिनाशं पितामहाद्यास्त्रिदशाः कदाचित् ।**
**प्रापुर्दशग्रीवभुजोष्मतप्ता महीरुहां मूलमिवातपार्ताः ॥ १७ ॥**

देवास्तं देवमुपगच्छन्ति। कदाचित् पितामहाद्याः त्रिदशाः दशग्रीवभुजोष्मतप्ताः—आतपार्ताः महिरुहां मूलम् इव विश्वजनार्तिनाशम् ईश्वरं तं प्रापुः॥ त्रिदशाः—देवाः। दशग्रीवः—रावणः। महीरुहाम्—वृक्षाणाम्। तं—नारायणम् ॥ १७ ॥

**शेषे शयानं तमशेषनाथं ते योगनिद्रासहितं सुधाशाः ।**
**कृतप्रणामाः कमलायताक्षं समस्तुवन्नस्तमलैर्वचोभिः ॥ १८ ॥**

देवास्तं स्तुवन्ति । ते सुधाशाः कृतप्रणामाः शेषे शयानं योगनिद्रासहितं कमलायताक्षम् अशेषनाथं तम् अस्तमलैः वचोभिः समस्तुवन् ॥ सुधाशाः—देवाः । शेषे—अनन्ते ॥ १८ ॥

**नमोऽस्तु ते नाथ जगत्त्रयाणां निदानभूताय निराश्रयाय ।**
**स्वमायया मोहयते समस्तान् शरीरभाजो भवसिन्धुमध्ये ॥ १९ ॥**

देवानां स्तुतिस्त्रयः श्लोकाः । नाथ ! जगत्त्रयाणां निदानभूताय निराश्रयाय स्वमायया समस्तान् शरीरभाजः भवसिन्धुमध्ये मोहयते ते नमः अस्तु ॥ शरीरभाजः—प्राणिनः । भव-सिन्धुः—संसारसमुद्रः । मोहयते—मोहं प्रापयते ॥ १९ ॥

**सृजन्नशेषं निजमाययेदं जगत् पुनस्त्वं परिपालयंश्च ।**
**विनाशयन् खेलसि वीतसङ्गो मृदां चयैर्बाल इवालयादि ॥ २० ॥**

बालः मृदां चयैः आलयादि इव, त्वं निजमायया अशेषम् इदं जगत् सृजन् परिपालयन् पुनः विनाशयन् च वीतसङ्गः खेलसि ॥ खेलसि—क्रीडसि ॥ २० ॥

**अपारसंसारसमुद्रमग्नान् जनान् यदीयः सदयः कटाक्षः ।**
**तरीरिव प्रापयते हि पारं नमः परस्मै पुरुषाय तस्मै ॥ २१ ॥**

अपारसंसारसमुद्रमग्नान् जनान् यदीयः सदयः कटाक्षः, तरीः इव पारं प्रापयते हि, तस्मै परस्मै पुरुषाय नमः ॥ तरीः—नौः ॥ २१ ॥

**इति स्तुतः सादरमादितेयैर्विमुक्तनिद्रो भगवान् मुकुन्दः ।**
**उत्थाय सद्यः स्थितवान् फणीन्द्रे सुधाशनान् सस्मितमित्युवाच ॥ २२ ॥**

भगवान् प्रतिब्रूते । आदितेयैः सादरम् इति स्तुतः भगवान् मुकुन्दः, विमुक्तनिद्रः सद्यः उत्थाय फणीन्द्रे स्थितवान् सुधाशनान् सस्मितम् इति उवाच ॥ आदितेयैः—देवैः । फणीन्द्रे—अनन्ते । सुधाशनान्—देवान् ॥ २२ ॥

**प्रसादितोऽहं विबुधा मनोज्ञैः स्तवैरमीभिः सुतरां भवद्भिः ।**
**निदानमस्यागमनस्य सद्यो निवेद्यतामद्य निरस्तशङ्कम् ॥ २३ ॥**

भगवतः प्रतिवचनम् । हे विबुधाः ! मनोज्ञैः अमीभिः स्तवैः भवद्भिः अहं सुतरां प्रसादितः । अद्य अस्य आगमनस्य निदानम् अस्तशङ्कं सद्यः निवेद्यताम् ॥ विबुधाः– देवाः ॥ २३ ॥

इत्युक्तवन्तं भगवन्तमेनं जगत्त्रयीरक्षणजागरूकम् ।
विवक्षितां विश्वसुधाशनानामुवाच वाचं कलहंसवाहः ॥ २४ ॥

ब्रह्मा भगवन्तं प्रतिब्रूते । इति उक्तवन्तं जगत्त्रयीरक्षणजागरूकम् एनं भगवन्तम्, कलहंसवाहः विश्वसुधाशनानां विवक्षितां वाचम् उवाच ॥ कलहंसवाहः–ब्रह्मा ॥ २४ ॥

शरीरभाजां भवनोऽन्तरङ्गेष्ववस्थितस्याविदितं न किञ्चित् ।
निवेद्यते नाथ तथाप्यवस्था प्रवृत्तिरेषा खलु सप्रभूणाम् ॥ २५ ॥

ब्रह्मणः प्रतिवचनं द्वादश श्लोकाः । तत्रोपक्रमः–हे नाथ ! शरीरभाजाम् अन्तरङ्गेषु अवस्थितस्य भवतः किञ्चित् न अविदितम् । तथापि अवस्था निवेद्यते । सप्रभूणां प्रवृत्तिः एषा खलु ॥ सप्रभूणां–प्रभुसहितानाम् । भृत्यानामित्यर्थः ॥ २५ ॥

पूर्वं भवान् नाथ हिरण्यपूर्वं नृसिंहरूपः कशिपुं न्यहिंसीत् ।
स रावणो नाम भवन्निदानीं निशाचरः पीडयति त्रिलोकीम् ॥ २६ ॥

रावणेन क्रियमाणां लोकत्रयपीडामुपक्षिपति । नाथ! भवान् पूर्वं नृसिंहरूपः हिरण्यपूर्वं कशिपुं न्यहिंसीत् । सः इदानीं रावणः नाम निशाचरः भवन् त्रिलोकीं पीडयति ॥ हिरण्यपूर्वं कशिपुं–हिरण्यकशिपुम् ॥ २६ ॥

महाशरीरो दशभिः शिरोभिर्विराजते विंशतिबाहुरेषः ।
तरुप्रकाण्डैर्बहुभिश्च शृङ्गैः शिलोच्चयः प्रोच्च इवाञ्जनाभः ॥ २७ ॥

रावणस्य रूपं वर्णयति । महाशरीरः दशभिः शिरोभिः (उपलक्षितः) विंशतिबाहुः एषः, बहुभिः तरुप्रकाण्डैः शृङ्गैः च (उपलक्षितः) प्रोच्चः अञ्जनाभः शिलोच्चयः इव विराजते ॥ तरुप्राकाण्डैः–वृक्षस्कन्धैः । प्रोच्चः–अत्युन्नतः । शिलोच्चयः–पर्वतः ॥ २७ ॥

विलोकनत्रासितविश्वलोकः स घोररूपो निशिचारवीरः ।
वरेण मे दृप्तमतिर्बलाढ्यो जिगाय सर्वानपि हन्त लोकान् ॥ २८ ॥

रावणस्य सर्वलोकजयमाह । विलोकनत्रासितविश्वलोकः घोररूपः सः निशिचारवीरः, मे वरेण बलाढ्यः दृप्तमतिः सर्वान् अपि लोकान् जिगाय, हन्त ॥ जिगाय–जितवान् । हन्त–कष्टम् ॥ २८ ॥

स कुम्भकर्णप्रमुखैः समेतः सहोदरैश्चेन्द्रजिदादिपुत्रैः ।
विजित्य युद्धे विबुधानशेषान् धनानि दिव्यान्यखिलान्यहार्षीत् ॥ २९ ॥

रावणस्य देवविजयं दिव्यधनहरणं च ब्रूते । सः कुम्भकर्णप्रमुखैः सहोदरैः इन्द्रजिदादिपुत्रैः च समेतः युद्धे अशेषान् विबुधान् विजित्य दिव्यानि अखिलानि धनानि अहार्षीत् ॥ २९ ॥

खगप्रधानादिव काद्रवेया निलीय तस्मान्नितरां निलिम्पाः ।
वसन्ति सर्वे वसुधाधराणां गुहासु गूढं तमसावृतासु ॥ ३० ॥

रावणाद्भीतानां देवानां पर्वतगुहानिलीनतामाचष्टे । सर्वे निलिम्पाः, खगप्रधानात् काद्रवेयाः इव तस्मात् नितरां निलीय, तमसा आवृतासु वसुधाधराणां गुहासु गूढं वसन्ति ॥ निलिम्पाः–देवाः । खगप्रधानात्–गरुडात् । काद्रवेयाः–सर्पाः । वसुधाधराणाम्–पर्वतानाम् ॥ ४० ॥

प्रहस्तमुख्यैर्बलवान् बलौघैः प्रहृत्य वित्ताधिपमस्तशङ्कम् ।
उपार्जितां विक्रमणेन लङ्कां समुद्रसालां स किलाधिशेते ॥ ३१ ॥

रावणस्य लङ्कासमाक्रमणमाह । बलवान् सः प्रहस्तमुख्यैः बलौघैः वित्ताधिपं प्रहृत्य अस्तशङ्कं विक्रमणेन उपार्जितां समुद्रसालां लङ्कां किल अधिशेते ॥ वित्ताधिपं–कुबेरम् । सालः–प्राकारः ॥ ३१ ॥

अश्नन्ति हत्वा मनुजानजस्रं पशूनुपघ्नन्ति महीसुरांश्च ।
विध्वंसयन्ति प्रसभं मखानप्यहो दशग्रीवभटा निशाटाः ॥ ३२ ॥

रावणभटैः क्रियमाणान् द्रोहानाह । दशग्रीवभटाः निशाटाः अजस्रं मनुजान् हत्वा अश्नन्ति । पशून् महीसुरान् च उपघ्नन्ति । मखान् अपि प्रसभं विध्वंसयन्ति । अहो ॥ निशाटाः–राक्षसाः । मखान्–यागान् ॥ ३२ ॥

विच्छिन्नमूलं भुवि धर्मवृक्षं विद्धि प्रभो सम्पतितुं प्रवृत्तम् ।
ऋते भवत्तः कतमे भवन्ति जनास्तदुद्धारविधौ समर्थाः ॥ ३३ ॥

धर्मोद्धरणं भगवतैव कर्तव्यमित्याह । प्रभो ! (त्वं) भुवि धर्मवृक्षं विच्छिन्नमूलं सम्पतितुं प्रवृत्तं विद्धि । तदुद्धारविधौ भवत्तः ऋते कतमे जनाः समर्थाः भवन्ति ॥ ३३ ॥

**जगद्द्रुहां सैन्यभरेण भुग्नां वसुन्धरां धारयितुं न शक्ताः ।**
**विषं वमन्तो विधुरैः शिरोभिर्भजन्ति तेनैव रुजं भुजङ्गाः ॥ ३४ ॥**

भूभारस्य दुर्वहत्वं प्रस्तोति । जगद्द्रुहां सैन्यभरेण भुग्नां वसुन्धरां धारयितुं न शक्ताः भुजङ्गाः विषं वमन्तः विधुरैः शिरोभिः (उपलक्षिताः सन्तः) तेन एव रुजं भजन्ति ॥ विधुरैः–विकलैः । तेन–विषेण । रुजं–पीडाम् ॥ ३४ ॥

**पतिव्रतानामपि कामलीलाविनोदकौतूहलवान् दशास्यः ।**
**निरस्तधर्मः स हरत्यनेकाः समस्तलोकप्रभवाः सुनेत्राः ॥ ३५ ॥**

पतिव्रताहरणमाह । पतिव्रतानाम् अपि कामलीलाविनोदकौतूहलवान् निरस्तधर्मः सः दशास्यः समस्तलोकप्रभवाः अनेकाः सुनेत्राः हरति ॥ सुनेत्राः–सुन्दरीः ॥ ३५ ॥

**विवर्धिते दुष्टजनप्रतापे निजाश्रये धर्मतरौ च भग्ने ।**
**इदं भवन्नायकमप्यजस्रं जगद्भृशं सीदति दीनबन्धो ॥ ३६ ॥**

धर्मभङ्गमाह । दीनबन्धो ! इदं जगत् भवन्नायकम् अपि, दुष्टजनप्रतापे विवर्धिते, निजाश्रये धर्मतरौ च भग्ने, अजस्रं भृशं सीदति ॥ सीदति–क्लिश्नाति ॥ ३६ ॥

**निवेदितेयं जगतामवस्था वयश्च याताः शरणं भवन्तम् ।**
**विचार्यतामुत्तरमत्र कार्यं भवान् हि लोकत्रितयस्य नाथः ॥ ३७ ॥**

उपसंहरति । जगताम् इयम् अवस्था निवेदिता । वयं भवन्तं शरणं याताः च । अत्र उत्तरं कार्यं विचार्यताम् । लोकत्रितयस्य नाथः भवान् हि ॥ ३७ ॥

**एवं विरिञ्चेन निवेदितार्थः स विश्वदर्शी भगवानवोचत् ।**
**जाने यथोक्तं सकलं, विषादेनालं प्रवृत्तोऽस्मि जगद्धिताय ॥ ३८ ॥**

भगवान् प्रतिवदति । एवं विरिञ्चेन निवेदितार्थः विश्वदर्शी सः भगवान् अवोचत् । यथोक्तं सकलं (अहं) जाने । विषादेन अलम् । जगद्धिताय प्रवृत्तः अस्मि ॥ ३८ ॥

**अहं सुराः पङ्क्तिरथस्य राज्ञः पुत्रत्वमादाय मनुष्यलोके ।**
**हत्वा जगद्द्रोहिजनानशेषान् धर्मस्थितिं साधुतरं करिष्ये ॥ ३९ ॥**

धर्मस्थापनं भगवान् प्रतिजानीते । हे सुराः ! अहं मनुष्यलोके पङ्क्तिरथस्य राज्ञः पुत्रत्वम् आदाय अशेषान् जगद्द्रोहिजनान् हत्वा साधुतरं धर्मस्थितिं करिष्ये ॥ पङ्क्तिरथस्य—दशरथस्य ॥ ३९ ॥

**साहाय्यकृत्याय तदा भवन्तो भवन्तु मे योनिषु वानरीषु ।**
**एवं समादिश्य स माधवस्तान् गन्तुं निजं मन्दिरमन्वजानात् ॥ ४० ॥**

कर्तव्यमादिश्य देवान् विसृजति । तदा भवन्तः मे साहाय्यकृत्याय वानरीषु योनिषु भवन्तु । सः माधवः एवं तान् समादिश्य निजं मन्दिरं गन्तुं अन्वजानात् ॥ वानरीषु—वानरसम्बन्धिनीषु ॥ ४० ॥

**ततः प्रहृष्टाः प्रणताश्च तस्माद्गत्वा महीं प्राप्य महानुभावाः ।**
**सर्वेऽप्यजायन्त निजांशभागैर्वलीमुखानां वनितासु देवाः ॥ ४१ ॥**

देवाः स्वांशैर्वानरवनितासु जायन्ते । ततः महानुभावाः सर्वे अपि देवाः प्रहृष्टाः प्रणताः च तस्मात् गत्वा महीं प्राप्य निजांशभागैः वलीमुखानां वनितासु अजायन्त ॥ वलीमुखानाम्—वानराणाम् ॥ ४१ ॥

**अथावनीपालकुलावतंसः सखा सुरेन्द्रस्य निषूदितारिः ।**
**महारथः पङ्क्तिरथो महीशः प्रशासिता चोत्तरकोसलानाम् ॥ ४२ ॥**

**तिस्रस्तनूजाः परिणीय राज्ञां कौसल्यकैकेयकमागधानाम् ।**
**अविश्रमं विश्वमनोहराभिस्ताभिः समं साधितधर्मकामः ॥ ४३ ॥**

दशरथं सपत्नीकं निर्दिशति द्वाभ्यां श्लोकाभ्याम् । अथ अवनीपालकुलावतंसः सुरेन्द्रस्य सखा निषूदितारिः महारथः उत्तरकोसलानां प्रशासिता च पङ्क्तिरथः महीशः, कौसल्यकैकेयकमागधानां राज्ञां तनूजाः तिस्रः परिणीय विश्वमनोहराभिः ताभिः समं अविश्रमं साधितधर्मकामः (आसीत्) ॥ प्रशसिता—संरक्षकः । तनूजाः—पुत्रीः, कौसल्यां कैकेयीं सुमित्रां चेत्यर्थः ॥ ४२–४३ ॥

**अनेकसत्कर्मविधायकोऽपि सुताननालोकसुखानभिज्ञः ।**
**स ऋष्यशृङ्गप्रमुखैः समेतः सन्तानयागं मुनिभिश्चकार ॥ ४४ ॥**

सन्तानालाभात् दशरथः पुत्रकामेष्टिं करोति । अनेकसत्कर्मविधायकः अपि सः सुताननालोकसुखानभिज्ञः ऋष्यशृङ्गप्रमुखैः मुनिभिः समेतः सन्तानयागं चकार ॥ ४४ ॥

**ते तापसास्तस्य महीपतेस्तं महेन्द्रतुल्यस्य महानुभावाः ।**
**यथाविधि व्याहृतसारमन्त्रा निर्वर्तयामासुरनन्यचित्ताः ॥ ४५ ॥**

मुनयः पुत्रकामेष्टिं निर्वर्तयन्ति । महानुभावाः ते तापसाः अनन्यचित्ताः यथाविधि व्याहृतसारमन्त्राः, महेन्द्रतुल्यस्य तस्य महीपतेः तं निर्वर्तयामासुः ॥ तं—सन्तानयागं ॥ ४५ ॥

**होमावसाने हुतवाहकुण्डात् समुत्थितः कश्चन दिव्यमूर्तिः ।**
**वहन् कराभ्यां परमान्नपूर्णं हिरण्मयं भाजनमुग्रतेजाः ॥ ४६ ॥**

अग्निकुण्डात् कश्चन दिव्यपुरुष उत्तिष्ठति । होमावसाने हुतवाहकुण्डात् उग्रतेजाः कश्चन दिव्यमूर्तिः कराभ्यां परमान्नपूर्णं हिरण्मयं भाजनं वहन् समुत्थितः ॥ परमान्नम्—पायसम् । हिरण्मयम्—स्वर्णमयम् । भाजनम्—पात्रम् ॥ ४६ ॥

**'सन्तानलाभाय महीपते त्वमेतद्वधूभ्यो विभजे'ति राज्ञे ।**
**दत्त्वान्नपात्रं पुरतो मुनीनामन्तर्हितोऽभूत् पुरुषः स सद्यः ॥ ४७ ॥**

दशरथाय पायसं ददाति—'महीपते ! त्वं सन्तानलाभाय एतत् वधूभ्यः विभज' इति (उक्त्वा) राज्ञे अन्नपात्रं दत्त्वा सः पुरुषः मुनीनां पुरतः सद्यः अन्तर्हितः अभूत् ॥ एतत्—पायसम् ॥ ४७ ॥

**विभज्य राजान्नमिदं चतुर्धा भागानथ त्रीनपि वल्लभाभ्यः ।**
**ददौ तिसृभ्यः पुनरत्र शिष्टं भागञ्च मोदान्मगधात्मजायै ॥ ४८ ॥**

राजा पायसं विभज्य पत्नीभ्यो ददाति । अथ राजा इदम् अन्नं चतुर्धा विभज्य त्रीन् अपि भागान् तिसृभ्यः वल्लभाभ्यः ददौ । पुनः अत्र शिष्टं भागं च मोदात् मगधात्मजायै (ददौ) ॥ मगधात्मजायै—सुमित्रायै ॥ ४८ ॥

ता राजभार्याः परमान्नभागानास्वादयामासुरिमान् प्रहृष्टाः ।
तदा विभक्तः स्वयमन्तरासां तैरन्नभागैः प्रविवेश विष्णुः ॥ ४९ ॥

विष्णुस्तासां गर्भान् प्रविशति। ताः राजभार्याः प्रहृष्टाः इमान् परमान्नभागान् आस्वादयामासुः। तदा विष्णुः स्वयं विभक्तः तैः अन्नभागैः आसाम् अन्तः प्रविवेश ॥ ४९ ॥

ततः कियद्भिर्दिवसैश्च राजा व्यलोकयद्गर्भवतीः स्वभार्याः ।
अन्तःस्थितस्याखिललोकभर्तुस्तेजोमहिम्ना सुतरां ज्वलन्तीः ॥ ५० ॥

राजभार्या गर्भतेजसा भ्राजन्ते। ततः कियद्भिः दिवसैः राजा, स्वभार्याः गर्भवतीः, अन्तः स्थितस्य अखिललोकभर्तुः तेजोमहिम्ना सुतरां ज्वलन्तीः च व्यलोकयत् ॥ अखिल-लोकभर्तुः–विष्णोः ॥ ५० ॥

ता वैष्णवे धामनि वर्धमाने क्रमेण तत्रातितरां विरेजुः ।
पूर्वाचलोत्सेधनिगूढमूर्तावुदेष्यमाणे शशिनीव काष्ठाः ॥ ५१ ॥

तासां शोभातिशयं वर्णयति। तत्र वैष्णवे धामनि क्रमेग वर्धमाने (सति) ताः, शशिनि पूर्वाचलोत्सेधनिगूढमूर्तौ उदेष्यमाणे (सति) काष्ठाः इव अतितरां विरेजुः ॥ धामनि–तेजसि। उत्सेधः–उन्नतिः। काष्ठाः–दिशः ॥ ५१ ॥

सुवर्णपद्मप्रतिमप्रकाशं स्वभावतस्तेन नृपेण तावत् ।
अलक्ष्यतासां वदनं वधूनां मध्यं दिवः प्राप्तमिवेन्दुबिम्बम् ॥ ५२ ॥

तासां मुखकान्तिं वर्णयति। स्वभावतः सुवर्णपद्मप्रतिमप्रकाशम् आसां वधूनां वदनं तेन नृपेण तावत्, दिवः मध्यं प्राप्तं इन्दुबिम्बं इव अलक्ष्यत ॥ दिवः–आकाशस्य ॥ ५१ ॥

विवर्धमानं प्रसमीक्ष्य मध्यं तासां पुरा स्वाक्रमेणेन नम्रम् ।
रोषादिव स्वाभिभवं विशङ्क्य स्तनद्वयं नीलमुखं बभूव ॥ ५३ ॥

गर्भवृद्धिं वर्णयति। तासां स्तनद्वयं, पुरा स्वाक्रमणेन नम्रं मध्यं अद्य विवर्धमानं प्रसमीक्ष्य स्वाभिभवं विशङ्क्य रोषात् इव नीलमुखं बभूव ॥ स्वाक्रमणेन– स्वभाराक्रमणेन। मध्यम्–उदरम् ॥ ५३ ॥

**यथा यथातीव बभूव तासां शरीरसादोऽनुदिनं वधूनाम् ।**
**तथा तथा तत्परिरम्भणादौ मनः परां प्रीतिमवाप राज्ञः ॥ ५४ ॥**

देहसादं वर्णयति । तासां वधूनाम् अनुदिनं यथा यथा अतीव शरीरसादः बभूव, तथा तथा तत्परिरम्भणादौ राज्ञः मनः (कर्तृ) परां प्रीतिं अवाप ॥ परिरम्भणम्—आलिङ्गनम् ॥

**ततः समादिष्टविधानमार्गः पुरोहितेनात्मभुवः सुतेन ।**
**चकार कर्माणि यथाक्रमं स क्षमापतिः पुंसवनादिकानि ॥ ५५ ॥**

पुंसवनादिकानि कर्माणि करोति । ततः सः क्षमापतिः, पुरोहितेन आत्मभुवः सुतेन समादिष्टविधानमार्गः यथाक्रमं पुंसवनादिकानि कर्माणि चकार । क्षमापतिः—राजा । आत्मभुवः सुतेन—ब्रह्मपुत्रेण वसिष्ठेन ॥ ५५ ॥

**विवासितालङ्करणानि तासामङ्गानि पश्यन्नतिमोहनानि ।**
**अविन्दतानन्दममन्दमन्तः स निर्गुणब्रह्मनिरीक्षयेव ॥ ५६ ॥**

अनलङ्कृतानां तासामङ्गानां दर्शनं राज्ञः परमानन्दाय भवति । विवासितालङ्करणानि अतिमोहनानि तासाम् अङ्गानि पश्यन् सः, निर्गुणब्रह्मनिरीक्षया इव अन्तः अमन्दम् आनन्दम् अविन्दत ॥ विवासितम्—दूरीकृतम् ॥ ५६ ॥

**अलब्धमिष्टं यदि गर्भिणीनां सुतस्य वैकल्यमिति प्रसिद्धिः ।**
**चराचरात्मन्युदरं प्रविष्टे हरौ पुनः कुत्र रुचिस्तु तासाम् ॥ ५७ ॥**

अरुचिं वर्णयति । गर्भिणीनाम् इष्टं यदि अलब्धम् , (तर्हि) सुतस्य वैकल्यम् (भवति) इति प्रसिद्धिः । चराचरात्मनि हरौ उदरं प्रविष्टे तु पुनः, तासां कुत्र रुचिः (भवेत्) ? ॥५७॥

**अजस्य मानुष्यविडम्बना चेद् भवत्वमूषां हृदयेऽभिलाषः ।**
**अलब्धता तस्य कथं सहाये बलद्विषो जाग्रति जीवनाथे ॥ ५८ ॥**

तासां सर्वाभिलषितलाभं वर्णयति । अजस्य मानुष्यविडम्बना (भवति) चेत् , अमूषां हृदये अभिलाषः भवतु । बलद्विषः सहाये जीवनाथे जाग्रति (सति) तस्य अलब्धता कथं (भवति) ॥ अजस्य—विष्णोः । मानुष्यविडम्बना—मनुष्यत्वानुकरणम् । बलद्विषः—इन्द्रस्य ॥

**क्रमेण भूयः परिपूर्णभावं गते तु गर्भे श्लथिताङ्गयष्टीः ।**
**अपश्यदासन्नसुषूतिकालाः शरन्मुखे सारसिनीरिवैषः ॥ ५९ ॥**

गर्भस्य परिपूर्णतामाह । गर्भे भूयः क्रमेण परिपूर्णभावं गते तु, श्लथिताङ्गयष्टीः (ताः) एषः शरन्मुखे सारसिनीः इव आसन्नसुषूतिकालाः अपश्यत् ॥ सारसिनीः– पद्मिनीः ॥ ५९ ॥

**अथोच्चसंस्थेषु शुभे मुहूर्ते कुजार्कशुक्राङ्गिरसासितेषु ।**
**पुनर्वसुभ्यां सहिते च चन्द्रे प्रासूत सा कोसलराजकन्या ॥ ६० ॥**

कौसल्या प्रसूते । अथ कुजार्कशुक्राङ्गिरसासितेसु उच्चसंस्थेषु, चन्द्रे च पुनर्वसुभ्यां सहिते शुभे मुहूर्ते सा कोसलराजकन्या प्रासूत ॥ आङ्गिरसः–गुरुः । असितः–शनिः ॥ पुनर्वसु-नक्षत्रं तारद्वयात्मकम् । अत एव द्विवचनम् ॥ ६० ॥

**ततः परस्मिन्नहनि प्रसूता बभूव कैकेय्यपि चारुगात्री ।**
**अनन्तरं सा मगधेन्द्रपुत्री यमौ कुमारौ सुषुवे सुमित्रा ॥ ६१ ॥**

कैकेयी सुमित्रा च प्रसुवाते । ततः परस्मिन् अहनि चारुगात्री कैकेयी अपि प्रसूता बभूव । अनन्तरं सा मगधेन्द्रपुत्री सुमित्रा यमौ कुमारौ सुषुवे ॥ यमौ–द्विसंख्यौ ॥ ६१ ॥

**तेषां हरेरंशसमुद्भवानां कुमारकाणामवतारकाले ।**
**यथास्वधर्मस्थितभूतजालं जगत् समस्तं समभूत् प्रहृष्टम् ॥ ६२ ॥**

जगत् प्रसीदति । हरेः अंशसमुद्भवानां तेषां कुमारकाणाम् अवतारकाले यथास्वधर्म-स्थितभूतजालं समस्तं जगत् प्रहृष्टं समभूत् ॥ यथास्वम्–यथायथम् ॥ ६२ ॥

**गुणाम्बुराशेरुदितेषु राज्ञस्सुताभिधानेषु सुधाकरेषु ।**
**अमङ्गलध्वान्तमभून्निलीनं निशाचरक्ष्माधरगह्वरेषु ॥ ६३ ॥**

अमङ्गलमपगच्छति । गुणाम्बुराशेः राज्ञः सुताभिधानेषु सुधाकरेषु उदितेषु, अमङ्गल-ध्वान्तं निशाचरक्ष्माधरगह्वरेषु निलीनम् अभूत् ॥ सुधाकरेषु–चन्द्रेषु । ध्वान्तम्–अन्ध-कारम् । क्ष्माधराः–पर्वताः ॥ ६३ ॥

**निवेद्यते येन कुमारजन्म क्षितीश्वराणां स हि दानपात्रम् ।**
**अयं तु राजा सुतजन्महर्षादपूजयद्दृष्टिगतानशेषान् ॥ ६४ ॥**

राजा पुत्रजन्महर्षात् बहु प्रददाति । येन कुमारजन्म निवेद्यते, सः हि क्षितीश्वराणां दानपात्रं (भवति) । अयं राजा तु सुतजन्महर्षात् दृष्टिगतान् अशेषान् अपूजयत् ॥ ६४ ॥

**भविष्यता शत्रुकुलस्य देवा वधेन मर्त्या निजरञ्जनेन ।**
**भूभारभङ्गेन भुजङ्गमाश्च प्रकर्षहर्षोत्सवमन्वभूवन् ॥ ६५ ॥**

लोकत्रयवासिनः प्रहर्षमनुभवन्ति । भविष्यता शत्रुकुलस्य वधेन देवाः, निजरञ्जनेन मर्त्याः, भूभारभङ्गेन भुजङ्गमाः च प्रकर्षहर्षोत्सवम् अन्वभूवन् ॥ ६५ ॥

**ततो वसिष्ठेन पुरोहितेन प्रचोदितः पार्थिववंशकेतुः ।**
**कुमारकाणामकरोदमीषां स जातकर्म स्तनपानतः प्राक् ॥ ६६ ॥**

राजा जातकर्म करोति । ततः पुरोहितेन वसिष्ठेन प्रचोदितः सः पार्थिववंशकेतुः, अमीषां कुमारकाणां स्तनपानतः प्राक् जातकर्म अकरोत् ॥ ६६ ॥

**तैरात्मशय्याशयनैर्जनन्यो विरेजुरुद्यत्सवितृप्रकाशैः ।**
**मनोभिरामैर्मणिभिर्ज्वलद्भिः सुवर्णरेखा इव सुप्रकीर्णाः ॥ ६७ ॥**

पुत्रैर्जनन्यः शोभन्ते । उद्यत्सवितृप्रकाशैः आत्मशय्याशयनैः तैः जनन्यः, मनोभिरामैः ज्वलद्भिः मणिभिः सुवर्णरेखाः इव विरेजुः ॥ सविता—सूर्यः । तैः—कुमारैः ॥ ६७ ॥

**गुणैर्जनानां रमणाद्रिपूणां तथा विरामादपि विक्रमेण ।**
**चक्रे स रूढार्थयुगानुसारादप्यग्रजं रामपदाभिधेयम् ॥ ६८ ॥**

दशरथः सुतस्य नाम करोति । गुणैः जनानां रमणात्, तथा विक्रमेण रिपूणां विरामात् अपि रूढार्थयुगानुसारात् अपि सः अग्रजं रामपदाभिधेयं चक्रे ॥ ६८ ॥

**अनन्तरं केकयकन्यकायाः सुतं स चक्रे भरताभिधानम् ।**
**यमाविमावप्यथ लक्ष्मणाख्यं शत्रुघ्ननामानमपि क्षितीशः ॥ ६९ ॥**

कैकेयीसुमित्रासुतानां नाम करोति । अनन्तरं सः क्षितीशः केकयकन्यकायाः सुतं भरताभिधानं चक्रे । अथ इमौ यमौ अपि लक्ष्मणाख्यं शत्रुघ्ननामानम् अपि (चक्रे) । इमौ–सुतौ ॥ ६९ ॥

**तैरात्मजैरात्ममनोरथानां समानरूपैः सुकृतेन लब्धैः ।**
**रराज राजा हृदयानुमोदैश्चतुर्भिरर्थैरिव मूर्तिमद्भिः ॥ ७० ॥**

रजा पुत्रैर्विराजते । राजा आत्ममनोरथानां समानरूपैः सुकृतेन लब्धैः तैः (चतुर्भिः) आत्मजैः, हृदयानुमोदैः मूर्तिमद्भिः चतुर्भिः अर्थैः इव रराज ॥ अर्थैः–पुरुषार्थैः धर्मार्थकाममोक्षैः ॥ ७० ॥

**दिने दिने बालचतुष्टयी सा जगाम पोषं जगदीश्वरस्य ।**
**प्रशस्तपात्रप्रतिपाद्यमाना यथा प्रदातुः पुरुषस्य लक्ष्मीः ॥ ७१ ॥**

पुत्राः क्रमेण पुष्यन्ति । सा जगदीश्वरस्य बालचतुष्टयी, प्रशस्तपात्रप्रतिपाद्यमाना प्रदातुः पुरुषस्य लक्ष्मीः यथा, (तथा) दिनेदिने पोषं जगाम ॥ बालचतुष्टयी–चत्वारो बालाः । लक्ष्मीः–सम्पद् ॥ ७१ ॥

**स रामचन्द्रः सजलाभ्रनीलः स लक्ष्मणस्तद्बिसकण्ठिकाभः ।**
**तडित्सवर्णावितरौ च तैः सा बभौ पुरी वर्षनभस्थलीव ॥ ७२ ॥**

बालानां वर्णान् वर्णयति । सः रामचन्द्रः सजलाभ्रनीलः । सः लक्ष्मणः तद्बिसकण्ठिकाभः । इतरौ तडित्सवर्णौ च ॥ तैः सा पुरी वर्षनभस्स्थली इव बभौ ॥ अभ्रम्–मेघः । बिसकण्ठिका–बलाका ॥ ७२ ॥

**कुमारकाणां वदनारविन्दं मनोभिरामं मनुजाधिराजः ।**
**निमेषहीनं नयनद्वयेन निपीय नित्यं न जगाम तृप्तिम् ॥ ७३ ॥**

पुत्रमुखारविन्ददर्शनजन्यं पितुराह्लादमाह । मनुजाधिराजः मनोभिरामं कुमारकाणां वदनारविन्दं नयनद्वयेन निमेषहीनं नित्यं निपीय तृप्तिं न जगाम ॥ ७३ ॥

**न तादृशः पूर्णशशाङ्कबिम्बे न तादृशः शारदपङ्कजे च ।**
**तदाननालोकविधौ जनानां बभूव यादृङ्मनसि प्रमोदः ॥ ७४ ॥**

जनानां प्रमोदमाह । तदाननालोकविधौ जनानां मनसि यादृक् प्रमोदः बभूव, तादृशः (प्रमोदः) पूर्णशशाङ्कबिम्बे (आलोकिते) न (बभूव), तादृशः (प्रमोदः) शारदपङ्कजे (आलोकिते) च न (बभूव) ॥ ७४ ॥

**दिनेशवंश्यो दिनमासकार्याः क्रियाः समस्ता अपि बालकानाम् ।**
**यथाक्रमं तर्पितविश्वलोकश्चकार चक्रायुधविक्रमः सः ॥ ७५ ॥**

बालकानामन्नप्राशनादिकाः क्रियाः करोति । दिनेशवंश्यः चक्रायुधविक्रमः सः, तर्पित-विश्वलोकः बालकानां दिनमासकार्याः समस्ताः अपि क्रियाः यथाक्रमं चकार ॥ ७५ ॥

**उत्सङ्गमारोप्य स लालयंस्तान् वत्सान् मृदुस्मेरमुखानजस्रम् ।**
**अपुत्रभावोदितदुःखतप्तं चिरादुपाह्लादयदात्मदेहम् । ॥ ७६ ॥**

पुत्रान् लालयति । सः मृदुस्मेरमुखारविन्दान् तान् वत्सान् उत्सङ्गम् आरोप्य अजस्रं लालयन् चिरात् अपुत्रभावोदितदुःखतप्तम् आत्मदेहम् उपाह्लादयत् ॥ उत्सङ्गम्—अङ्कम् ॥७६॥

**कुमारका जानुकरद्वयेन क्षितौ चरन्तः कतिचिद्दिनानि ।**
**अहार्षुरन्तःकरणं जनानां मनोहराणां सकलं मनोज्ञम् ॥ ७७ ॥**

कुमारका जानुकरेण परिक्रामन्ति । कुमारकाः जानुकरद्वयेन क्षितौ चरन्तः (सन्तः) कतिचित् दिनानि जनानाम् अन्तःकरणम् अहार्षुः । मनोहराणां सकलं मनोज्ञम् ॥ ७७ ॥

**आलम्ब्य धात्रीकरपल्लवं ते पादं न्यसन्तो भुवि मन्दमन्दम् ।**
**विनावलम्बं स्वयमेव भूयः क्रमेण सञ्चारपटुत्वमापुः ॥ ७८ ॥**

क्रमेण सञ्चरणपटुत्वं प्राप्नुवन्ति । ते धात्रीकरपलवम् आलम्ब्य भुवि मन्दमन्दं पादं न्यसन्तः, भूयः अवलम्बं विना स्वयम् एव (पादं न्यसन्तः सन्तः) क्रमेण सञ्चारपटुत्वम् आपुः ॥ धात्री—उपमाता ॥ ७८ ॥

**विना निदानं विहसन्मुखाब्जान् विचेयदन्ताङ्कुरकान्तिकान्तान् ।**
**विलोकयन् विश्लथकुन्तलांस्तान् विभुर्वरिष्ठः कृतिनां बभूव ॥ ७९ ॥**

अङ्कुरितदन्ता भवन्ति। निदानं विना विहसन्मुखाब्जान् विचेयदन्ताङ्कुरकान्तिकान्तान् विश्लथकुन्तलान् तान् विलोकयन् विभुः कृतिनां वरिष्ठः बभूव॥ निदानम्–कारणम्। विचेयाः–अन्वेष्टव्याः। ईषल्लभ्या इत्यर्थः। विभुः–राजा दशरथः। कृतिनाम्–पुण्यवताम्, सद्भाग्यवतामिति यावत् ॥ ७९ ॥

**अमात्यपुत्रैः सह ते वयस्यैः सङ्क्रीडमानाः सततं कुमाराः।**
**प्रवर्धयन्तः प्रमदं जनानां क्रमेण कौमारदशां व्यतीयुः ॥ ८० ॥**

बालक्रीडारसमनुभवन्ति। ते कुमाराः वयस्यैः अमात्यपुत्रैः सह सततं सङ्क्रीडमानाः, जनानां प्रमदं प्रवर्धयन्तः (सन्तः) क्रमेण कौमारदशां व्यतीयुः॥ वयस्यैः–समानवयस्कैः। प्रमदं–हर्षम् ॥ ८० ॥

**अथ स्वपुत्रान् घृतकाकपक्षान् विधाय पूर्वाश्रमवर्तिनस्तान्।**
**न्ययुङ्क्त विद्याभ्यसने विनीतान् नृपः पुरोधश्चरणं प्रणीतान् ॥ ८१ ॥**

राजा पुत्रान् विद्याभ्यासे नियुङ्क्ते। अथ नृपः तान् स्वपुत्रान् धृतकाकपक्षान् पूर्वाश्रमवर्तिनः विधाय विनीतान् पुरोधश्चरणं प्रणीतान् (सतः) विद्याभ्यसने न्ययुङ्क्त॥ काकपक्षः–शिखण्डकः। पूर्वाश्रमः–ब्रह्मचर्यम् ॥ ८१ ॥

**अष्टादशस्वप्यवनीशपुत्रा विद्यासु वेदप्रमुखासु तेन।**
**प्रशिक्षितास्ते गुरुणा वरेण विशिष्य शास्त्रेषु विनीतवेषाः ॥ ८२ ॥**

ते राजपुत्राः सर्वास्वपि विद्यासु प्रशिक्षिता भवन्ति। विनीतवेषाः ते अवनीशपुत्राः वरेण तेन गुरुणा वेदप्रमुखासु अष्टादशसु अपि विद्यासु, विशिष्य शास्त्रेषु, प्रशिक्षिताः॥ चत्वारो वेदाः, षड्वेदाङ्गानि, चत्वार्युपाङ्गानि, चत्वार उपवेदा इति विद्या अष्टादश ॥ ८२ ॥

**गुरोरुदारादधिगम्य विद्याः स्साङ्गास्समस्ता अपि बालकास्ते।**
**तदा बभूवुर्वयसैव बाला न विद्यया विश्रुतसद्गुणौघाः ॥ ८३ ॥**

समस्ता विद्या अधिगच्छन्ति। ते बालकाः उदारात् गुरोः साङ्गाः समस्ताः अपि विद्याः अधिगम्य विश्रुतसद्गुणौघाः (सन्तः) तदा वयसा एव बालाः बभूवुः। विद्यया (बालाः) न (बभूवुः)॥ विद्यावृद्धा बभूवुरिति भावः ॥ ८३ ॥

**शौर्यादिभिर्गुणगणैर्नृपतेः कुमारास्ते रञ्जिताखिलजगज्जनता बभूवुः ।**
**तेषामपि प्रथमतां प्रथमस्तु भेजे पर्यायवृत्तिरखिलेष्वपि शोभते हि ॥ ८४ ॥**

पुत्रेषु रामः शौर्यादिभिर्गुणैरधिकोऽभूदित्याह । ते नृपतेः कुमाराः शौर्यादिभिः गुणगणैः रञ्जिताखिलजगज्जनताः बभूवुः । प्रथमः तु तेषाम् अपि प्रथमतां भेजे । पर्यायवृत्तिः अखिलेषु अपि शोभते हि ॥ पर्यायवृत्तिः—क्रमस्थितिः ॥ ८४ ॥

**आह्लादनामतितरामकरोज्जनानां राकानिशाकर इव प्रियदर्शनोऽसौ ।**
**तेनैव राममधुनापि जगत्त्रयेऽपि श्रीरामचन्द्र इति सर्वजना वदन्ति ॥ ८५ ॥**

रामश्चन्द्र इव जनानाह्लादयामासेत्याह । प्रियदर्शनः असौ राकानिशाकरः इव जनानाम् आह्लादनाम् अतितराम् अकरोत् । तेन एव अधुना अपि जगत्त्रये अपि सर्वजनाः रामं श्रीरामचन्द्रः इति वदन्ति ॥ असौ—रामः । आह्लादनां—आनन्दम ॥ ८५ ॥

**गाम्भीर्यधैर्यमतिनीतिपराक्रमौजःकीर्तिक्षमावगमरक्षणशिक्षणैरसः ।**
**जिग्ये समुद्रहिमवद्भुजगेन्द्रजीवसुत्राममित्रविधुभूमिहराजधर्मान् ॥ ८६ ॥**

रामः गाम्भीर्यादिभिर्गुणैः सर्वाधिकोऽभूदित्याह । सः गाम्भीर्यधैर्यमतिनीतिपराक्रमौजः-कीर्तिक्षमावगमरक्षणशिक्षणैः, समुद्रहिमवद्भुजगेन्द्रजीवसुत्राममित्रविधुभूमिहराजधर्मान् जिग्ये ॥ अवगमः—ज्ञनम् । भुजगेन्द्रः—अनन्तः । जीवः—बृहस्पतिः । सुत्रामा—देवेन्द्रः । मित्रः—सूर्यः । विधुः—चन्द्रः । हरः—शिवः । अजः—विष्णुः । धर्मः—यमः । जिग्ये—जितवान् । रामो गाम्भीर्येण समुद्रम्, धैर्येण हिमवन्तम्, वैबुद्धिभवेनानन्तम्, नीतिविज्ञानेन बृहस्पतिम्, पराक्रमेण देवेन्द्रम्, प्रतापेन सूर्यम्, कीर्त्या चन्द्रम्, क्षमया भूमिम्, ज्ञानेन शिवम्, रक्षणेन विष्णुम्, शिक्षणेन यमं च जितवानित्यर्थः । तैः सदृशोऽभूदिति भावः ॥ ८६ ॥

**लोकोत्तरैर्गुणगणैर्गणनास्वगम्यैस्तारागणैरिव शशी सहितस्तु रामः ।**
**ज्योत्स्नानिभेन यशसां निकरेण चक्रे चित्रं जनौघमुपमाननिराशमेव ॥ ८७ ॥**

रामस्यानुपमत्वं प्रस्तौति । गणनासु अगम्यैः तारागणैः शशी इव (गणनासु अगम्यैः) लोकोत्तरैः गुणगणैः सहितः तु रामः, ज्योत्स्नानिभेन यशसां निकरेण जनौघं उपमाननिराशम्

एव चक्रे । चित्रम् । गणनासु अगम्यैः—सङ्ख्यानेषु अप्राप्यैः । सङ्ख्यातुमशक्यैरित्यर्थः । चित्रम्—आश्चर्यम् ॥ गुणाधिकत्वाद्रामं न्यूनगुणेन शशिनोपमितुं जनानां वैमुख्यमासीदित्याश्चर्यम् ॥ ८७ ॥

गुणस्यूतैरेवं सततमनुरूपैरवरजै-
  र्गुरोरन्तर्मोदं गुरुतरमथावर्धयदयम् ।
स राजाप्येतेषां विरहमसहिष्णुः क्षणमपि
  प्रहृष्टः साकेते सुखमवसदात्मीयनगरे ॥ ८८ ॥

इति श्रीगोदवर्मविद्वद्युवराजकृते
श्रीरामचरिते महाकाव्ये
प्रथमः सर्गः



पितुः सन्तोषवृद्धिमाह । अथ अयम् एवं गुणस्यूतैः अनुरूपैः अवरजैः (सह) गुरोः गुरुतरम् अन्तर्मोदं सततम् अवर्धयत् । सः राजा अपि क्षणम् अपि एतेषां विरहम् असहिष्णुः प्रहृष्टः (सन्) साकेते आत्मीयनगरे सुखम् अवसत् ॥ अयम्—रामः । गुणस्यूतैः—गुणसहितैः । अवरजैः—अनुजैः । गुरोः—पितुः । साकेते—अयोध्यायाम् ॥ ८८ ॥

इति पण्डितरत्नश्रीनारायणपिषारोटिविरचितायां
श्रीरामचरितमहाकाव्यव्याख्यायां अन्वयार्थप्रबोधिन्यां
कुमारोदयो नाम प्रथमः सर्गः



# द्वितीयः सर्गः

अथ जातु जनाधिपं प्रपेदे कुशिकानां कुलनन्दनो महर्षिः ।
निजकर्मविघातकर्तृकाणां निधनार्थी निशिचारकण्टकानाम् ॥ १ ॥

महाराजं दशरथं मुनिर्विश्वामित्र उपगच्छति । अथ जातु कुशिकानां कुलनन्दनः महर्षिः निजकर्मविघाकर्तृकाणां निशिचराकण्टकानां निधनार्थी जनाधिपं प्रपेदे ॥ जातु–कदाचिन् । विघातः–विघ्नः । निधनम्–वधः । निशिचारकण्टकानाम्–क्षुद्रशत्रूणां –राक्षसानाम् ॥ १ ॥

तमुपागतमासने मनोज्ञे मुनिवर्यं विनिवेश्य भक्तिशाली ।
विहितापचितिर्वसुन्धरेशः स्मितपूर्वं समुवाच वाचमेवम् ॥ २ ॥

विश्वामित्रं दशरथः सत्करोति । वसुन्धरेशः भक्तिशाली उपागतं तं मुनिवर्यं मनोज्ञे आसने विनिवेश्य विहितापचितिः स्मितपूर्वम् एवं वाचं समुवाच ॥ अपचितिः–सत्कारः ॥

भवतां समुपागमादिदानीं परिपूता नगरीयमस्मदीया ।
महतां पदपद्मजं परागं पवनानां पवनं ह्युपादिशन्ति ॥ ३ ॥

दशरथः कथयति । भवतां समुपागमात् इदानीम् अस्मदीया इयं नगरी परिपूता । महतां पदपद्मजं परागं पवनानां पवनम् उपदिशन्ति हि ॥ पवनं–परिशुद्धिकरम् ॥ ३ ॥

समयत्रयजैः कुलस्य भानोर्बहुभिः पुण्यचयैस्तवागमोऽयम् ।
कथमल्पवृषैरवापनीया महतां संगतिरीदृगात्मनैव ॥ ४ ॥

तव अयम् आगमः, भानोः कुलस्य समयत्रयजैः बहुभिः पुण्यचयैः (अभवत्) । अल्प-वृषैः महातां ईदृक् सङ्गतिः, आत्मना एव कथम् अवापनीया ॥ समयत्रयं--भूतवर्तमान-भाविनः । वृषः–सुकृतम् । आत्मना–स्वयम् ॥ ४ ॥

अपि काननवासिनां जनानां कुशलं कौशिकवंशरत्नदीप ।
अपि चित्तमनाविलं समाधिष्वपि निर्विघ्नसमापिताः क्रियाश्च ॥ ५ ॥

कुशलं पृच्छति । हे कौशिकवंशरत्नदीप! काननवासिनां जनानाम् अपि कुशलम् ? चित्तं समाधिषु अपि अनाविलम् ? क्रियाः च अपि निर्विघ्नसमापिताः ? ॥ अनाविलम्—निर्मलम् ॥ ५ ॥

भवदागममात्रतः प्रसादं हृदयं मे भृशमश्नुते तथापि ।
श्रवणेन्द्रियतर्पणे कृताशं गुणलुब्धो न किमुत्तरोत्तरार्थी ॥ ६ ॥

भवदागममात्रतः मे हृदयं भृशं प्रसादम् अश्नुते । तथापि श्रवणेन्द्रियतर्पणे कृताशं (भवति) । गुणलुब्धः उत्तरोत्तरार्थी किं न (भवति) । अश्नुते—अनुभवति । लुब्धः—अभिलाषवान् ॥ ६ ॥

सुकृतं खलु मे प्रधानहेतुर्भवदीयागमने मुने तथापि ।
अपरो जनबोधनार्थमस्मिन् नियतं कश्चन हेतुरस्ति बाह्यः ॥ ७ ॥

हे मुने ! भवदीयागमने मे सुकृतं खलु प्रधानहेतुः । तथापि अस्मिन् जनबोधनार्थं अपरः कश्चन बाह्यः हेतुः नियतम् अस्ति ॥ ७ ॥

प्रमिताक्षरमेवमुच्चरन्तं प्रहसन्नाह मुनिर्जनाधिनाथम् ।
दशनामृतदीधितिच्छवीनां प्रसरैः प्रस्फुरिताननाम्बुजन्मा ॥ ८ ॥

विश्वामित्रो दशरथं प्रतिवक्ति । मुनिः एवं प्रमिताक्षरम् उच्चरन्तं जनाधिनाथम् , प्रहसन् दशनामृतदीधितिच्छवीनां प्रसरैः प्रस्फुरिताननाम्बुजन्मा आह । प्रमितम्—अल्पम् । दशनाः—दन्ताः । अमृतदीधितिः—चन्द्रः ॥ ८ ॥

त्वयि गोप्तरि राजराजकल्पे जगति क्वापि भवत्यमङ्गलं न ।
तपने तपति स्फुरन्मयूखे तिमिराणामुदयस्य का नु वार्ता ॥ ९ ॥

राजराजकल्पे त्वयि गोप्तरि (सति) जगति क्वापि अमङ्गलं न भवति । स्फुरन्मयूखे तपने तपति (सति) तिमिराणाम् उदयस्य का नु वार्ता (भवति)॥ राजराजः–वैश्रवणः । गोप्तरि–रक्षके । तपने-सूर्ये ॥ ९॥

भवदीययशःपयःपयोधेर्जगदानन्द उदेयिवानुदारः ।
अत एव विधौ जना निराशा न हि कार्ये सति कारणेषु कामः ॥ १०॥

भवदीययशःपयःपयोधेः उदेयिवान् जगदानन्दः उदारः (भवति) । अतः एव जनाः विधौ निराशाः (भवन्ति) । कार्ये सति कारणेषु कामः न हि (भवति) ॥ विधौ–चन्द्रे, विष्णौ च ॥ १०॥

गुणवारिधिमध्यवर्तिनस्ते जगतामेव तपोभिराविरासन् ।
तनया जनपालनैकदक्षाः पुरुषस्येव परस्य बाहुदण्डाः ॥ ११ ॥

जगताम् एव तपोभिः, गुणवारिधिमध्यवर्तिनः ते, परस्य पुरुषस्य बाहुदण्डाः इव जनपालनैकदक्षाः तनयाः आविरासन् ॥ परस्य पुरुषस्य–विष्णोः ॥ ११ ॥

अधुनैव भवन्तमाप्तलभ्यं परिपूर्णं नृपते जना वदन्ति ।
यदमी जनिताः कुमारकास्ते पुरुषार्था इव चारुमूर्तिमन्तः ॥ १२ ॥

नृपते ! जनाः अधुना एव आप्तलभ्यं भवन्तं परिपूर्णं वदन्ति । यत् चारुमूर्तिमन्तः पुरुषार्थाः इव अमी कुमारकाः ते जनिताः ॥ पुरुषार्थाः–धर्मार्थकाममोक्षाः ॥ १२ ॥

अवलोकयितुं भवन्तमेवं गुणवन्तं चिरमन्तरुज्जजृम्भे ।
सुमहानभिलाष एष राजन् फलितोऽभूदधुनैव दैवयोगात् ॥ १३ ॥

राजन् एवं गुणवन्तं भवन्तम् अवलोकयितुं सुमहान् अभिलाषः चिरम् अन्तः उज्जजृम्भे । एषः अधुना एव दैवयोगात् फलितः अभूत् ॥ अन्तः–मनसि । उज्जजृम्भे–ववृधे ॥ १३ ॥

भवदीक्षणजातकौतुकस्य क्षितिनाथागमने ममाधुना तु ।
उदभूदिह कारणं कनीयः क्षणदाचारिजनप्रयुक्तडिम्बः ॥ १४ ॥

क्षितिनाथ! भवदीक्षणजातकौतुकस्य मम इह आगमने, अधुना तु क्षणदाचारिजन-प्रयुक्तडिम्बः कनीयः कारणम् उदभूत्॥ क्षणदाचारिणः–राक्षसाः। डिम्बः–द्रोहः। कनीयः–अल्पम् ॥ १४ ॥

**यजनाय यदा यदा प्रवृत्ता वयमुत्पाद्य विधानसाधनानि।**
**द्रुतमेत्य तदा तदा निशाटा अपि विघ्नाय कृशानुदूषणाद्यैः ॥ १५ ॥**

वयं यदा यदा विधानसाधनानि उत्पाद्य यजनाय प्रवृत्ताः (भवामः), तदा तदा निशाटाः अपि द्रुतं एत्य कृशानुदूषणाद्यैः विघ्नाय (प्रवृत्ताः भवन्ति)॥ निशाटाः–राक्षसाः। कृशा-नवः–अग्नयः ॥ १५ ॥

**क्रतुविघ्नकृतस्तपोव्ययेन क्षपणीयास्तदपि त्वदाश्रयाः स्मः।**
**तपसैव सदा वयं धनाढ्या यदसाधुक्षपणेन चापि यूयम् ॥ १६ ॥**

यत् त्वदाश्रयाः (वयम्) सदा तपसा एव धनाढ्याः स्मः। यूयम् अपि असाधुक्षपणेन च अपि (धनाढ्याः) स्थ। तत् क्रतुविघ्नकृतः तपोव्ययेन क्षपणीयाः अपि? अपीति प्रश्ने। क्रतुविघ्नकृतः युष्माभिरेव क्षपणीयाः, असाधुक्षपणरूपधनलाभात्; न पुनरस्माभिः, तपोरूपधननाशादिति भावः ॥ १६ ॥

**खलवंशमहाटवीकृशानुस्तनयोऽयं तव देव रामचन्द्रः।**
**जगतामवनाय जागरूको जयतीहावरजैः सहानुरूपैः ॥ १७ ॥**

देव! खलवंशमहाटवीकृशानुः तव तनयः अयं रामचन्द्रः अनुरूपैः अवरजैः सह इह जगताम् अवनाय जागरूकः जयति ॥ अवरजैः–अनुजैः। अवनाय–रक्षणाय। जागरूकः–तत्परः ॥ १७ ॥

**अमुमेव नियुङ्क्ष्व दुष्टशिक्षाविधये विश्रुतसद्गुणाम्बुराशिम्।**
**कथितेषु जनैरमुष्य राजन्नपदानेषु विशिष्य कौतुकं नः ॥ १८ ॥**

दुष्टशिक्षाविधये विश्रुतसद्गुणाम्बुराशिम् अमुम एव नियुङ्क्ष्व। राजन्! जनैः कथितेषु अमुष्य अपदानेषु नः विशिष्य कौतुकम् (अस्ति)॥ अमुम्–रामम्। अपदानेषु–सत्कर्मसु ॥

शिशुरेष कथं निशाचराणां निधनायेति विभो न शङ्कनीयम् ।
शिशुरप्युदयन्मदान् महेभान् विनिहन्तुं न हरिः कदाप्यशक्तः ॥१९॥

विभो ! एषः शिशुः कथं निशाचराणां निधनाय (भवति) इति न शङ्कनीयम् । हरिः शिशुः अपि उदयन्मदान् महेभान् विनिहन्तुम् कदापि न अशक्तः (भवति) ॥ हरिः-सिंहः । इभान्-गजान् ॥ १९ ॥

अतिदुष्टदशाननादिरक्षःकुलमुन्मूलयितुं नितान्तमिच्छोः ।
अधुना मधुनाशनस्य मात्राः परिपश्यामि सुतेषु ते निलीनाः ॥ २० ॥

अतिदुष्टदशाननादिरक्षःकुलं उन्मूलयितुं नितान्तम् इच्छोः मधुनाशनस्य मात्राः अधुना ते सुतेषु निलीनाः परिपश्यामि ॥ मात्राः—अंशान् ॥ २० ॥

तनुभूविरहप्रसङ्गगर्भां नृपतिस्तस्य निशम्य वाचमेवम् ।
अतिवेलमवाप तापमन्तः स विषादं सविषं यथान्नमश्नन् ॥ २१ ॥

मुनिवचनं श्रुत्वा दशरथोऽन्तस्तापं भजते । सः नृपतिः, एवं तनुभूविरहप्रसङ्गगर्भां तस्य वाचं निशम्य, सविषम् अन्नम् अश्नन् यथा विषादम्, (तथा) अतिवेलम् अन्तः तापम् अवाप ॥ तनुभूः—पुत्रः । अतिवेलं—भृशम् ॥ २१ ॥

हृदि धैर्यनिधेरमुष्य पूर्णोऽप्यभितापो न बहिः प्रकाशते स्म ।
बडवानलतापितान्तरोऽपि स्पृशतां शीतल एव सिन्धुराजः ॥ २२ ॥

धैर्यनिधेः अमुष्य हृदि अभितापः पूर्णः अपि बहिः न प्रकाशते स्म । सिन्धुराजः वडवानलतापितान्तरः अपि स्पृशतां शीतलः एव ॥ २२ ॥

[ युग्मकम् ]

असतां दमनं क्रतोश्च रक्षाप्रणयः प्रार्थक एष तापसेन्द्रः ।
अभियाचकलोकचित्तवृत्तेः परिपूर्तिश्च रवेः कुलस्य धर्मः ॥ २३ ॥

इति भूमिपतिः सुतप्रवासे कृतसन्तापमपि प्रसक्त एव ।
न मनः प्रतिकूलतामनैपीद्वचनं चेदमुवाच गाधिपुत्रम् ॥ २४ ॥

दशरथो धैर्यमालम्ब्य प्रतिवक्तुमुपक्रमते। असतां दमनम्, क्रतोः च रक्षाप्रणयः, प्रार्थकः (च) एषः तापसेन्द्रः, अभियाचकलोकचित्तवृत्तेः परिपूर्तिः च रवेः कुलस्य धर्मः इति (मत्वा), भूमिपतिः, सुतप्रवासे प्रसक्ते एव कृतसन्तापम् अपि मनः प्रतिकूलताम् न अनैषीत्। गाधिपुत्रम् इदं वचनं उवाच च॥ प्रणयः–प्रार्थना। गाधिपुत्रम्–विश्वामित्रम् ॥ २३–२४ ॥

**पृथुकः परिशीलितो न युद्धेष्वकृतास्त्रः परकैतवानभिज्ञः ।**
**तदपि त्वदनुग्रहेण मन्ये न भवेत् क्वाप्यपमङ्गलं किलास्य ॥ २५॥**

प्रतिवचनमाह। पृथुकः युद्धेषु न परिशीलितः, अकृतास्त्रः परकैतवानभिज्ञः (च)। तदपि त्वदनुग्रहेण अस्य क्वापि अपमङ्गलं न भवेत् किल (इति) मन्ये ॥ पृथुकः–बालकः। अकृतास्त्रः–अस्त्रप्रयोगं न कृतवान् ॥ २५ ॥

**मुनिनाथ भवान् खलु प्रमाणं परिपाल्यः सततं त्वयैव बालः ।**
**इति वाचमुदीर्य भूपतिस्तं मुनिहस्तेऽथ समर्पयांबभूव ॥ २६ ॥**

रामं विश्वामित्राय समर्पयति। मुनिनाथ ! भवान् खलु प्रमाणं (भवति)। बालः त्वया एव सततं परिपाल्यः। इति वाचम् उदीर्य अथ भूपतिः मुनिहस्ते तं समर्पयाम्बभूव ॥ २६ ॥

**मगधाधिपनन्दिनीसुतो यः क्षणमप्यग्रजमन्तरेण नास्ते ।**
**तमपि प्रददौ तपोधनस्य क्षितिनाथः सुतमेष लक्ष्मणाख्यम् ॥ २७ ॥**

लक्ष्मणमपि समर्पयति। यः मगधाऽधिपनन्दिनीसुतः अग्रजम् अन्तरेण क्षणम् अपि न आस्ते, तं लक्ष्मणाख्यं सुतम् अपि एषः क्षितिनाथः तपोधनस्य प्रददौ ॥ मगधाधिपनन्दिनी–सुमित्रा ॥ २७ ॥

**परिगृह्य स रामलक्ष्मणौ तावनुरूपौ सहजौ सचापबाणौ ।**
**अधिकाधिगमादथैकयाची मुदमत्यन्तमवाप तापसेन्द्रः ॥ २८ ॥**

विश्वामित्रोऽधिकं मोदते। अथ अनुरूपौ सहजौ सचापबाणौ तौ रामलक्ष्मणौ परिगृह्य, एकयाची सः तापसेन्द्रः, अधिकाधिगमात् अत्यन्तं मुदम् अवाप॥ एकयाची–एकं राममात्रं याचितवान् ॥ २८ ॥

नृपतिं नमितारिराजचक्रं नतमूर्धानमथात्मपादपद्मे ।
अनुगृह्य तमाशिषातिसाध्व्या प्रययौ गाधिसुतो निजाश्रमाय ॥ २९ ॥

स्वाश्रमाय प्रतिष्ठते । अथ गाधिसुतः नमितारिराजचक्रम् आत्मपादपद्मे नतमूर्धानं तं नृपतिम् अतिसाध्व्या आशिषा अनुगृह्य निजाश्रमाय प्रययौ ॥ २९ ॥

अनुजग्मतुरादराद्विनीतौ सहजौ राघवलक्ष्मणौ मुनीन्द्रम् ।
नृपतेर्नयने च पुत्रकौ तावविनीते विनिमेषपक्ष्मजाले ॥ ३० ॥

रामलक्ष्मणावनुगच्छतः । विनीतौ सहजौ राघवलक्ष्मणौ आदरात् मुनीन्द्रम् अनुजग्मतुः । अविनीते विनिमेषपक्ष्मजाले नृपतेः नयने च तौ पुत्रकौ (अनुजग्मतुः) ॥ अविनीते-नियन्तुमशक्ये ॥ ३० ॥

अथ गाधिनमन्वितौ कुमारौ सितसौम्याविव सूर्यमुज्ज्वलन्तम् ।
पुरवासिजनानुदश्रुनेत्रान् विदधानौ पुरतो निरीयतुस्तौ ॥ ३१ ॥

पुरान्निर्गच्छतः । उज्ज्वलन्तं सूर्यं सितसौम्यौ इव गाधिनम् अन्वितौ तौ कुमारौ, पुरवासिजनान् उदश्रुनेत्रान् विदधानौ पुरतः निरीयतुः ॥ सितसौम्यौ–शुक्रबुधौ । गाधिनं–विश्वामित्रम् । पुरतः–पुरात् ॥ ३१ ॥

विषयानतिलङ्घ्य पत्तनान्यप्यवनीनाथसुतौ मुनीश्वरश्च ।
प्रययुर्द्रुतमुज्ज्वलस्वरूपा अपधूमा इव पावकास्त्रयस्ते ॥ ३२ ॥

ते बहुदूरं गच्छन्ति । उज्ज्वलस्वरूपाः अपधूमाः (त्रयः) पावकाः इव (उज्ज्वलस्वरूपाः) अवनीनाथसुतौ मुनीश्वरः च (इति) ते त्रयः, विषयान् पत्तनानि अपि अतिलङ्घ्य द्रुतम् प्रययुः॥ अपधूमाः–धूमरहिताः । पावकाः–दक्षिणाग्निः, गार्हपत्यः, आहवनीयः इति त्रिविधाः अग्नयः। विषयान्–देशान् । पत्तनानि–नगराणि ॥ ३२ ॥

अथ वर्त्मनि तापसेन ताभ्यामुपदिष्टौ प्रयतेन सारमन्त्रौ ।
क्षुधया तृषयापि नाभिभूतौ पृथुकावप्यनयोः प्रभावतस्तौ ॥ ३३ ॥

विश्वामित्रो रामलक्ष्मणाभ्यां बलामतिबलां च मन्त्रावुपदिशति । अथ वर्त्मनि प्रयतेन तापसेन ताभ्यां सारमन्त्रौ उपदिष्टौ । अनयोः प्रभावतः, पृथुकौ अपि तौ क्षुधया तृषया अपि न अभिभूतौ ॥ वर्त्मनि–मार्गे । प्रयतेन–शुद्धिमता । सारमन्त्रौ–बला अतिबला च । पृथुकौ–बालकौ । क्षुधया–बुभुक्षया । तृषया–पिपासया ॥ ३३ ॥

**अतिलङ्घितनैकनीवृतस्ते गहनं काननमाविशन्नभीताः ।**
**जनपाटनपाटवप्रसिद्धा वसतिं यत्र चकार ताटका सा ॥ ३४ ॥**

ते ताटकावनं प्रविशन्ति । अतिलङ्घितनैकनीवृतः ते, जनपाटनपाटवप्रसिद्धा सा ताटका यत्र वसतिं चकार, तत् गहनं काननम् अभीताः अविशन् ॥ नीवृतः–जनपदाः । वसतिं–वासम् । गहनम्–दुष्प्रवेशम् ॥ ३४ ॥

**उपलभ्य मनुष्यगन्धमेषा पदवीं सत्वरमन्वियेष तेषाम् ।**
**परपीडनजागरूकबुद्धेर्निशिचार्याश्च मुनिर्निघातयिष्यन् ॥ ३५ ॥**

मुनिस्ताटकामन्विष्यति । एषा मनुष्यगन्धम् उपलभ्य सत्वरं तेषां पदवीम् अन्वियेष । मुनिः निघातयिष्यन्, परपीडनजागरूकबुद्धेः निशिचार्याः च पदवीम् अन्वियेष ॥ एषा–ताटका । निघातयिष्यन्–निहननं कारयिष्यन् ॥ ३५ ॥

**अथ घोरतराट्टहासकोलाहलवित्रासितविश्वसत्त्वसङ्घा ।**
**गतिवेगपतत्समीपवृक्षा तरसा साभिपपात ताटका तान् ॥ ३६ ॥**

ताटका तानभिपतति । अथ सा ताटका घोरतराट्टहासकोलाहलवित्रासितविश्वसत्त्वसङ्घा गतिवेगपतत्समीपवृक्षा (सती) तरसा तान् अभिपपात ॥ ३६ ॥

[ युग्मकम् ]

**घनमार्गविलङ्घनाग्रकायां ज्वलदङ्गारनिभोग्रवृत्तनेत्राम् ।**
**प्रबलोच्छ्रितधूम्रकेशपाशां शितदंष्ट्राविलसन्नृमांसखण्डाम् ॥ ३७ ॥**
**अथ तामवलोक्य घोररूपामभियान्तीमभियोद्यतैकबाहुम् ।**
**भयकम्पितधीर्वधाय तस्यास्त्वरयामास रघूत्तमं महर्षिः ॥ ३८ ॥**

ताटकाया भयङ्करं रूपं दृष्ट्वा तद्वधाय रामं मुनिः प्रेरयितुमुपक्रमते, युग्मकेन । अथ घनमार्गविलङ्घनाग्रकायां ज्वलदङ्गारनिभोग्रवृत्तनेत्रां प्रबलोच्छ्रितधूम्रकेशपाशां शितदंष्ट्रा-

विलसन्नृमांसखण्डां घोररूपां उद्यतैकबाहुम् अभिया अभियान्तीं ताम्, अवलोक्य भयकम्पितधीः महर्षिः तस्याः वधाय रघूत्तमं त्वरयामास ॥ ३७-३८॥

पुरुषानदयं विनिघ्नतीनां न वधः स्याद्दुरिताय दुर्वधूनाम् ।
इति तापसवाक्यतस्स तस्या विजहावाशु वधे वधूत्वशङ्काम् ॥ ३९ ॥

गुरूपदेशाद्रामः स्त्रीवधशङ्कां त्यजति । अदयं पुरुषां विनिघ्नतीनां दुर्वधूनां वधः दुरिताय न स्यात् इति तापसवाक्यतः सः आशु तस्याः वधे वधूत्वशङ्कां विजहौ ॥ ३१ ॥

अधिरोपितसारशिञ्जिनीके स तु सन्धाय ततः शरं शरासे ।
उरसि प्रजिघाय ताटकाया घनपाषाणकठोरघोररूपे ॥ ४० ॥

रामः शरं प्रयुङ्क्ते । ततः सः तु अधिरोपितसारशिञ्जिनीके शरासे शरं सन्धाय घनपाषाणकठोरघोररूपे ताटकायाः उरसि प्रजिघाय ॥ शिञ्जिनी–ज्या । शरासे–चापे । पाषाणः–शिला । प्रजिघाय–प्रयुक्तवान् ॥ ४० ॥

शरघातनिपीडिता ततस्सा विगतासुः पृथिवीतले पपात ।
मघवायुधपातलूनपक्षः शिखरीवोन्मथितान्तिकाटवीका ॥ ४१ ॥

ताटका गतप्राणा भूमौ पतति । ततः सा शरघातनिपीडिता, मघवायुधपातलूनपक्षः शिखरी इव उन्मथितान्तिकाटवीका विगतासुः पृथिवी तले पपात ॥ मघवा–इन्द्रः, तस्य आयुधम्–वज्रम् । शिखरी–पर्वतः । अटवी–वनम् । विगतासुः–मृता ॥ ४१ ॥

रजनीचरमानिनीमथैनां विनिहत्याखिललोकघातशीलाम् ।
पथिकैः सुगमं विधाय दावं प्रययुर्गाधिसुतादयस्त्रयस्ते ॥ ४२ ॥

ते पुनरपि प्रयान्ति । अखिललोकघातशीलां एनां रजनीचरमानिनीं विनिहत्य दावं पथिकैः सुगमं विधाय अथ गाधिसुतादयः ते त्रयः प्रययुः ॥ दावम्–वनम् ॥ ४२ ॥

धनुषि प्रसमीक्ष्य विस्मितात्मा निपुणत्वं पृथुकस्य राघवस्य ।
मुनिरस्य निजन्तरङ्गगुप्तानथ दिव्यास्त्रगणानुपादिशत् सः ॥ ४३ ॥

रामाय मुनिर्दिव्यास्त्राण्युपदिशति । पृथुकस्य अस्य राघवस्य धनुषि निपुणत्वं प्रसमीक्ष्य विस्मितात्मा सः मुनिः अथ निजान्तरङ्गगुप्तान् दिव्यास्त्रगणान् उपादिशत् ॥ पृथुकस्य—बालकस्य ॥ ४३ ॥

**मुनिना खलु मन्त्रपूर्वदत्तान्यथ शस्त्राणि धृतादरेण तानि ।**
**तनुमन्ति रघूत्तमस्य पार्श्वं समसेवन्त तदा क्षणं समेत्य ॥ ४४ ॥**

अस्त्राणि राममुपतिष्ठन्ते । अथ धृतादरेण मुनिना खलु मन्त्रपूर्वदत्तानि तानि शस्त्राणि तनुमन्ति (सन्ति) तदा क्षणं रघूत्तमस्य पार्श्वं समेत्य समसेवन्त ॥ तनुमन्ति—सशरीराणि ॥४४॥

**अधिगम्य मुनेरथास्त्रजालं विधिदैवप्रमुखं विशां वरिष्ठः ।**
**विललास भृशं प्रसन्नभावं शरदः प्राप्य यथा निशीथिनीशः ॥ ४५ ॥**

लब्धास्त्रो रामः समुल्लसति । अथ विशां वरिष्ठः मुनेः विधिदैवप्रमुखम् अस्त्रजालम् अधिगम्य, निशीथिनीशः यथा शरदः प्रसन्नभावं प्राप्य, (तथा) भृशं विललास ॥ विशाम्—मनुष्याणाम् । विधिदैवप्रमुखम्—ब्राह्मादिकम् । निशीथिनीशः—चन्द्रः ॥ ४५ ॥

**अतिलङ्घ्य सरिद्वनप्रदेशानथ तत्तचरितानि वर्णयंश्च ।**
**मुनिराप निजाश्रमं सहाभ्यां विहितप्रत्युदयः स्वशिष्यवर्गैः ॥ ४६ ॥**

मुनिर्निजाश्रमं प्राप्नोति । अथ मुनिः आभ्यां सह तत्तच्चरितानि वर्णयन् सरिद्वनप्रदेशान् अतिलङ्घ्य स्वशिष्यवर्गैः विहितप्रत्युदयः निजाश्रमम् आप च ॥ प्रत्युदयः—प्रत्युत्थानम् ॥ ४६ ॥

**समुपेत्य मुनिः स पर्णशालां निजशिष्यार्जितयज्ञसाधनाढ्याम् ।**
**नृपतेस्तनयौ यथा नगर्यां सुखयामास भृशं प्रसन्नभावः ॥ ४७ ॥**

रामलक्ष्मणौ यथासुखं वासयति । सः मुनिः निजशिष्यार्जितयज्ञसाधनाढ्यां पर्णशालां समुपेत्य भृशं प्रसन्नभावः, नृपतेः तनयौ यथा नगर्यां (तथा) सुखयामास ॥ ४७ ॥

**मुनयः परिवार्य राजपुत्रौ यजनायागमिनो मनोहराङ्गौ ।**
**प्रपपुर्नयनैः कुतूहलोत्कै रविचन्द्राविव भूतलं प्रपन्नौ ॥ ४८ ॥**

रामलक्ष्मणौ दृष्ट्वा मुनयस्तुष्यन्ति। यजनाय आगमिनः मुनयः, मनोहराङ्गौ राजपुत्रौ परिवार्य भूतलं प्रपन्नौ रविचन्द्रौ इव कुतूहलोत्कैः नयनैः प्रपपुः॥ आगमिनः–आगताः, शास्त्रज्ञाश्च। उत्कानि–उत्कण्ठितानि ॥ ४८॥

**अभिवन्द्य महर्षिसत्तमांस्तान् विधिवद्राजसुतौ विनीतभावौ।**
**विरराजतुरत्युदारवीर्यौ प्रवणत्वं हि महत्सु शोभनाय ॥ ४९॥**

रामलक्ष्मणौ मुनीन् वन्देते। विनीतभावौ अत्युदारवीर्यौ राजसुतौ तान् महर्षिसत्तमान् विधिवत् अभिवन्द्य विरराजतुः। महत्सु प्रवणत्वं शोभनाय हि॥ प्रवणत्वम्–विनीतत्वम् ॥ ४९॥

**अथ तां रजनीं सुखेन नीत्वा कृतसन्ध्यानियमः स तापसेन्द्रः।**
**अवदन्नृपतेः कुमारकौ तौ यजनारम्भविधिं विधातुकामः ॥ ५०॥**

रामलक्ष्मणौ मुनिर्वदति। अथ सः तापसेन्द्रः, तां रजनीं सुखेन नीत्वा कृतसन्ध्यानियमः यजनारम्भविधिं विधातुकामः तौ नृपतेः कुमारकौ अवदत्॥ रजनीम्–रात्रिम् ॥५०॥

**निचितानि समस्तसाधनानि द्रुतमारभ्यत एव सप्ततन्तुः।**
**भवदीयभुजाबलावलम्बा वयमद्यैव भवाम सिद्धदीक्षाः ॥ ५१॥**

मुनेरुक्तिः। समस्तसाधनानि निचितानि। सप्ततन्तुः द्रुतम् आरभ्यते एव। वयं भवदीयभुजाबलावलम्बाः अद्य एव सिद्धदीक्षाः भवाम॥ निचितानि–सम्पादितानि। सप्ततन्तुः–यागः ॥ ५१॥

**धृतबाणशरासनौ भवन्तावुटजद्वारि सदैव सज्जितौ स्ताम्।**
**रजनीचरपालिरागमिष्यत्यविलम्बं, प्रतिपाल्यतां कुमारौ ॥ ५२॥**

हे कुमारौ! भवन्तौ धृतबाणशरासनौ सदा एव उटजद्वारि सज्जितौ स्ताम्। रजनीचरपालिः अविलम्बम् आगमिष्यति। प्रतिपाल्यताम्॥ शरासनं–चापः। उटजः–पर्णशाला। सज्जितौ–सन्नद्धौ ॥ ५२॥

**इति स क्रतुरक्षणार्थमेतौ समुपादिश्य मुनिर्महीशपुत्रौ ।**
**परिशुद्धमतिर्जगाम दीक्षां महितर्त्विग्जनवर्तितक्रियावान् ॥ ५३ ॥**

मुनिर्दीक्षितो भवति । इति सः मुनिः क्रतुरक्षार्थं एतौ महीशपुत्रौ समुपादिश्य परिः-शुद्धमतिः महितर्त्विग्जनवर्तितक्रियावान् दीक्षां जगाम ॥ ऋत्विजः—अध्वर्युप्रभृतयो यज्ञकर्म-निर्वर्तकाः । दीक्षा—यज्ञव्रतम् ॥ ५३ ॥

**ज्वलति ज्वलने महर्षिमुख्यैर्विधिवद्धोमविधौ विधीयमाने ।**
**अथ तद्‌गतधूमसञ्चयाद्राक् दिवि नक्तञ्चरपालिराविरासीत् ॥५४॥**

राक्षसाः प्रत्यक्षीभवन्ति । अथ ज्वलति ज्वलने महर्षिमुख्यैः विधिवत् होमविधौ विधीयमाने (सति) तद्गतधूमसञ्चयात् द्राक् दिवि नक्तञ्चरपालिः आविरासीत् ॥ ज्वलने—अग्नौ । नक्तञ्चरपालिः—राक्षसपङ्क्तिः ॥ ५४ ॥

**वितता वियति क्षपाचराब्दाः शितदंष्ट्रारुचिचञ्चलाञ्चिताङ्गाः ।**
**रुधिरोच्चयवर्षमस्थिमालाकरकाढ्यं विदधुः करालघोषाः ॥ ५५ ॥**

राक्षसा रक्तवर्षं कुर्वन्ति । शितदंष्ट्रारुचिचञ्चलाञ्चिताङ्गाः करालघोषाः क्षपाचराब्दाः वियति वितताः (सन्तः) अस्थिमालाकरकाढ्यं रुधिरोच्चयवर्षं विदधुः ॥ चञ्चलाः-विद्युतः । क्षपाचराः-राक्षसाः । अब्दाः—मेघाः । वियति—आकाशे । वितताः—व्याप्ताः । करकाः—वर्षोपलाः । रुधिरम्-रक्तम् ॥ ५५ ॥

**वियति प्रसमीक्ष्य कालमेघप्रतिमं पुण्यजनौघमुन्नदन्तम् ।**
**अपि लोहितपूरवर्षमुच्चैर्मुनयस्तत्र वितत्रसुर्नितान्तम् ॥ ५६ ॥**

मुनयो बिभ्यति । मुनयः वियति कालमेघप्रतिमं उच्चैः उन्नदन्तं पुण्यजनौघम्, तत्र, लोहितपूरवर्षम् अपि प्रसमीक्ष्य नितान्तं वितत्रसुः ॥ उन्नदन्तं—गर्जन्तम् । पुण्यजनाः—राक्षसाः। लोहितं—रक्तम् । वितत्रसुः—बिभ्युः ॥ ५६ ॥

**तदनु क्षितिपात्मजोऽपि रक्षःकुलमुद्वीक्ष्य रणेच्छुरात्तचापः ।**
**प्रथमं हृदि कम्पमाशु तेषां गुणघोषैर्निदधौ ततः शरांश्च ॥ ५७ ॥**

रामः शरान् प्रयुङ्क्ते। तदनु क्षितिपात्मजः अपि रक्षःकुलं उद्वीक्ष्य रणेच्छुः आत्त-चापः आशु तेषां हृदि प्रथमं गुणघोषैः कम्पम्, ततः शरान् च निदधौ ॥ गुणघोषैः—ज्यानिनादैः ॥ ५७ ॥

**पृथुचापधरो नवाम्बुदाभः शरजालैः प्रतिवर्षमादधानः ।**
**रघुसूनुरुदाररक्तवर्षं शमयामास निशाचराब्दमुक्तम् ॥ ५८ ॥**

रक्तवर्षं शमयति। पृथुचापधरः नवाम्बुदाभः रघुसूनुः, शरजालैः प्रतिवर्षम् आद-धानः निशाचराब्दमुक्तम् उदाररक्तवर्षं शमयामास ॥ ५८ ॥

**पिशिताशिषु तेषु यूथपौ यौ धृतमारीचसुबाहुनामधेयौ ।**
**प्रथमं जलधिं निनाय बाणैरपरं तत्र यमस्य धाम रामः ॥ ५९ ॥**

मारीचं विद्राव्य सुबाहुं हन्ति। तेषु पिशिताशिषु धृतमारीचसुबाहुनामधेयौ यौ यूथपौ (भवतः), तत्र प्रथमं रामः बाणैः जलधिं निनाय। अपरं यमस्य धाम (निनाय)॥ पिशिता-शिषु—राक्षसेषु। यूथपौ—नायकौ। तत्र—तयोः। धाम—गृहम् ॥ ५९ ॥

**हतयूथपतिर्निशाचरालिः परिदुद्राव तदाशुगैर्निरस्ता ।**
**दशसु क्षणतो दिशासु भिन्ना द्रुतवातूलविधूतकालिकेव ॥ ६० ॥**

राक्षसाः पलायन्ते। हतयूथपतिः निशाचरालिः तदाशुगैः निरस्ता, द्रुतवातूलविधूत कालिका इव क्षणतः दशसु दिशासु भिन्ना परिदुद्राव ॥ आशुगाः—शराः। वातूलः—चण्ड-वातः। कालिका—मेघजालम् ॥ ६० ॥

**क्षपिते तदनु क्षपाचरौघे नृपपुत्रेण नितान्तशक्तिभाजा ।**
**अपविघ्नममुष्य कर्म शेषं विधिवत्ते निरवर्तयन् मुनीन्द्राः ॥ ६१ ॥**

मुनीन्द्रा निर्विघ्नं यागं निर्वर्तयन्ति। तदनु नितान्तशक्तिभाजा नृपपुत्रेण क्षपाचरौघे क्षपिते, ते मुनीन्द्राः अमुष्य शेषं कर्म अपविघ्नं विधिवत् निरवर्तयन् ॥ ६१ ॥

तस्याथ साधु विहितावभृथाप्लवस्य
प्रोज्झासितारिरनुजेन समं स रामः ।
कर्मावसानसमये कुशिकस्य सूनो-
र्जग्राह पादकमलं जगदेकवीरः ॥ ६२ ॥

रामो मुनेः पादं गृह्णाति । अथ कर्मावसानसमये, प्रोज्झासितारिः जगदेकवीरः सः रामः अनुजेन समं साधु विहितावभृथाप्लवस्य तस्य कुशिकस्य सूनोः पादकमलं जग्राह ॥ प्रोज्झासिताः—हताः । अवभृथाप्लवः—यज्ञान्तस्नानम् ॥ ६२ ॥

पादद्वये निपतितं नृपतेः कुमार-
मुत्थाप्य सानुजमसौ सुतरां प्रसन्नः ।
कर्मानुरूपमचिरेण फलं लभस्वे-
त्यन्वग्रहीच्छिरसि दत्तकरारविन्दः ॥ ६३ ॥

सलक्ष्मणं रामं मुनिरनुगृह्णाति । पादद्वये निपतितं सानुजं नृपतेः कुमारं उत्थाप्य असौ सुतरां प्रसन्नः शिरसि दत्तकरारविन्दः (सन्) 'अचिरेण कर्मानुरूपं फलं (त्वं) लभस्व' इति अन्वग्रहीत् ॥ असौ—मुनिः ॥ ६३ ॥

प्राप्तः पुनर्मुनिवरः कृतकृत्यभावं
ताभ्यां समं सुरसमानपराक्रमाभ्याम् ।
आत्माश्रमे विषयमार्गनिवर्तितात्मा
स्वैरं निवासमकरोत् कतिचिद्दिनानि ॥ ६४ ॥

रामलक्ष्मणाभ्यां सह मुनिः कञ्चित् कालमाश्रमे सुखं निवसति । कृतकृत्यभावं प्राप्तः विषयमार्गनिवर्तितात्मा मुनिवरः पुनः सुरसमानपराक्रमाभ्यां ताभ्यां समं कतिचित् दिनानि आत्माश्रमे स्वैरं निवासम् अकरोत् ॥ विषयमार्गनिवर्तितात्मा—शान्तमानसः ॥ ६४ ॥

तस्यापदानसदृशं प्रतिकर्तुकाम-
स्तेजोनिधेस्तदनु कौशिकवंशदीपः ।
आलोच्य तं परिणयौचितमेव कालं
कन्यां जगाम मनसा जनकस्य राज्ञः ॥ ६५ ॥

मुनिर्जनकस्य सुतया रामं योजयितुं चिन्तयति । तदनु तेजोनिधेः तस्य अपदानसदृशं प्रतिकर्तुकामः कौशिकवंशदीपः, तं एव कालं परिणयोचितम् आलोच्य मनसा जनकस्य राज्ञः कन्यां जगाम ॥ अपदानं–कृतं कर्म । परिणयः–विवाहः ॥ ६५ ॥

गन्तुं मुनिर्मिथिलराजपुरीमियेष
यावत्तदीयतनयाममुना युयुक्षुः ।
आमन्त्रितस्तदनु तेन मखाय तावत्
सद्यः सतामनुगुणो विधिरिष्टसिद्धौ ॥ ६६ ॥

मुनिर्जनकपुरीं गन्तुमिच्छति, जनकश्च तमामन्त्रयते । तदनु मुनिः यावत् मिथिलराजपुरीम्, तदीयतनयाम् अमुना युयुक्षुः गन्तुं इयेष, तावत् तेन मखाय आमन्त्रितः । सतां सद्यः इष्टसिद्धौ विधिः अनुगुणः (भवति)॥ अमुना–रामेण । युयुक्षुः–योक्तुमिच्छुः । मखाय–यागाय ॥ ६६ ॥

संप्रस्थितः सपदि राजकुमारकाभ्यां
सङ्क्रन्दनप्रतिमबाहुपराक्रमाभ्याम् ।
सार्धं विदेहविषयान् हृदयेन्द्रियाभ्यां
देही यथा मुनिवरः स्मरसुन्दराभ्याम् ॥ ६७ ॥

मुनिस्ताभ्यां सह मिथिलापुरीं प्रतिष्ठते । मुनिवरः सपदि, सङ्क्रन्दनप्रतिमबाहुपराक्रमाभ्यां स्मरसुन्दराभ्यां राजकुमारकाभ्यां सार्धम्, हृदयेन्द्रियाभ्यां (सार्धं) यथा देही, (तथा) विदेहविषयान् सम्प्रस्थितः ॥ सङ्क्रन्दनः–इन्द्रः ॥ ६७ ॥

ते गौतमाश्रमचरं वनमेत्य मार्गे
स्निग्धच्छदद्रुमतलेषु निशि न्यवात्सुः ।
यत्तापसेन्द्रतपसश्च तदीयजाया-
दोषस्य धाम च सुधाविषयोरिवाब्धिः ॥ ६८ ॥

ते मार्गमध्ये निशि गौतमाश्रमप्रदेशे निवसन्ति । ते मार्गे गौतमाश्रमचरं वनं एत्य निशि स्निग्धच्छदद्रुमतलेषु न्यवात्सुः । अब्धिः सुधाविषयोः इव यत्, तापसेन्द्रतपसः च,

तदीयजायादोषस्य च धाम ॥ गौतमाश्रमचरं–गौतमाश्रमभूतपूर्वम् । छदाः–पत्राणि । तापसेन्द्रः–गौतमः । तदीयजाया–अहल्या । यत्–गौतमाश्रमभूतपूर्वं वनम् । धाम–निवास स्थानम् ॥ ६८ ॥

शापेन भर्तुरमराधिपजारसङ्गा-
ज्जातक्रुधः पृथुशिलामयमूर्तिमुच्चैः ।
तत्र स्थितां क्वचन गौतमधर्मपत्नीं
तस्मै न्यवेदयदयं रघुपुङ्गवाय ॥ ६९ ॥

मुनिरहल्याशापकथां रामाय निवेदयति । अमराधिपजारसङ्गात् जातक्रुधः भर्तुः उच्चैः शापेन पृथुशिलामयमूर्तिम् तत्र क्वचन स्थितां गौतमधर्मपत्नीम्, अयं तस्मै रघुपुङ्गवाय न्यवेदयत् ॥ ६९ ॥

तस्याङ्घ्रिपङ्कजरजःकणसाध्यमस्याः
शापस्य मोक्षमपि तापसतो निशम्य ।
रामश्चकार चरणं शनकैः शिलायां
सद्यः स्वकं वपुरवाप च तापसी सा ॥७० ॥

रामपादस्पर्शादहल्या शापान्मोक्षं लभते । तस्य अङ्घ्रिपङ्कजरजःकणसाध्यम् अस्याः शापस्य मोक्षम् अपि तापसतः निशम्य रामः शिलायां शनकैः चरणं चकार । सा तापसी सद्यः स्वकं वपुः अवाप च ॥ ७० ॥

निर्मुक्तनिष्ठुरपरिग्रहपाशबन्धः
प्राप प्रियं मुनिवरस्य परिग्रहोऽसौ ।
तेऽपि प्रसन्नतदनुग्रहपात्रभूताः
जग्मुर्जवेन जनकाधिपराजधानीम् ॥ ७१ ॥

ते पुनर्जनकराजधानीं गच्छन्ति । निर्मुक्तनिष्ठुरपरिग्रहपाशबन्धः असौ मुनिवरस्य परिग्रहः प्रियं प्राप । ते अपि प्रसन्नतदनुग्रहपात्रभूताः जवेन जनकाधिपराजधानीं जग्मुः ॥ परिग्रहः–मूलशापः, पत्नी च । प्रियम्–भर्त्तारं गौतमम् ॥ ७१ ॥

आगन्तुकं मुनिवरं जनको यथाव-
दर्घ्यादिभिः सपदि पूजयति स्म विद्वान् ।
इक्ष्वाकुवंशसुकृतावपि बालकौ तौ
पृष्टो मुनिर्नृपतये कथयाम्बभूव ॥ ७२ ॥

जनको विश्वामित्रं पूजयति। विद्वान् जनकः सपदि आगन्तुकं मुनिवरं यथावत् अर्घ्यादिभिः पूजयति स्म। पृष्टः मुनिः, तौ बालकौ अपि इक्ष्वाकुवंशसुकृतौ नृपतये कथयाम्बभूव ॥ ७२ ॥

अभ्यागतेन मुनिना नृपतिर्नितान्तं
दध्रे मुदं मुनिरपि क्षितिपेन तेन ।
लोकत्रयोत्तरचरित्रवतां जनाना-
मन्योन्यतोषणकराणि समागतानि ॥ ७३ ॥

जनको विश्वामित्रश्च भृशं सन्तुष्यतः। नृपतिः अभ्यागतेन मुनिना नितान्तं मुदं दध्रे। मुनिः अपि तेन क्षितिपेन (नितान्तं मुदं दध्रे)। लोकत्रयोत्तरचरित्रवतां जनानां समागतानि अन्योन्यतोषणकराणि (भवन्ति) ॥ ७३ ॥

सभ्यैः परस्परमथाङ्गिरसादिभिस्तैः
सङ्कीर्तितोज्ज्वलविचित्रपुराणवृत्तः ।
यज्ञे समापनमिते जनकाय रामं
व्यज्ञापयत् स विशिखासनदर्शनोत्कम् ॥

मुनिर्जनका यरामस्य शिवकार्मुकदर्शनवाञ्छां निवेदयति। अथ आङ्गिरसादिभिः तैः सभ्यैः परस्परं सङ्कीर्तितोज्ज्वलविचित्रपुराणवृत्तः सः यज्ञे समापनं इते (सति) जनकाय रामं विशिखासनदर्शनोत्कं व्यज्ञापयत् ॥ इते–गते। विशिखासनम्–कार्मुकम्। उत्कम्–तत्परम् ॥ ७४ ॥

क्वासौ शिशुः क्व किल तद्धनुरिन्दुचूड
येन क्षितीशतनया बहवो निरस्ताः ।
वज्रस्य भेदनविधौ कुसुमाग्रधारा
भूयात् कथं नु कठिनान्तरभेदनस्य ॥ ७५ ॥

रामस्य कार्मुकग्रहणसामर्थ्यं जनकः शङ्कते । असौ शिशुः क्व ! ऐन्दुचूडं तत् धनुः क्व किल ! येन बहवः क्षितीशतनयाः निरस्ताः । कठिनान्तरभेदनस्य वज्रस्य भेदनविधौ कुसुमाग्रधारा कथं नु भूयात् ! ऐन्दुचूडम्—शैवम् ॥ ७५ ॥

इत्थं विचिन्त्य नृपतिं विमनायमानं
दृष्ट्वा मुनिः सकलतत्त्वविदां वरिष्ठः ॥
तत्तादृगेतदपदानकथाभिरेनं
सद्यः सतां प्रवरमुन्मनसं चकार ॥ ७६ ॥

मुनिर्जनकस्य वैमनस्यं निरस्यति । इत्थं विचिन्त्य विमनायमानं नृपतिं दृष्ट्वा सकलतत्त्वविदां वरिष्ठः मुनिः तत्तादृगेतदपदानकथाभिः सतां प्रवरं एनं सद्यः उन्मनसं चकार ॥ विमनायमानम्—मन्दोत्साहम् । अपदानम्—कृतं कर्म । उन्मनसं—उत्साहवन्तम् ॥ ७६ ॥

तस्याज्ञया तदनु किङ्करसङ्घनीतं
जग्राह पाणिकमलेन धनुः कुमारः ।
लीलावशेन च मुहुर्मुहुरुल्ललन् ज्यां
सज्यं चकार नृपतिं परितोषयन् सः ॥ ७७ ॥

रामो धनुर्गृहीत्वा मौर्वीमारोपयति । तदनु सः कुमारः, तस्य आज्ञया किङ्करसङ्घनीतं धनुः पाणिकमलेन जग्राह । लीलावशेन मुहुः मुहुः ज्याम् उल्ललन् नृपतिं परितोषयन् (धनुः) सज्यं चकार च ॥ ज्याम्—मौर्वीम् । उल्ललन्—आकर्षन् । सज्यम्—अधिज्यम् ॥ ७७ ॥

तेनातिमात्रपरिकृष्टमनूनसारं
त्रैयम्बकं धनुरहो तरसा विभिन्नम् ।
कोलाहलस्तदनु तत्परिभङ्गजन्मा
लोकत्रयान्तरमपूरयदत्युदारः ॥ ७८ ॥

धनुर्भिन्नं भवति । तेन अतिमात्रपरिकृष्टम् अनूनसारं त्रैयम्बकं धनुः तरसा विभिन्नम् । अहो ! तदनु तत्परिभङ्गजन्मा अत्युदारः कोलाहलः लोकत्रयान्तरं अपूरयत् ॥ त्रैयम्बकम्—शैवम । अत्युदारः—अतिमहान् ॥ ७८ ॥

हृष्टस्तदा भृशमसौ मिथिलाधिनाथ-
श्चक्रे मतिं निजसुताप्रतिपादनाय ।
आनेतुमप्यधिपमुत्तरकोसलानां
स प्राहिणोदथ पुरोहितमेव धन्यः ॥ ७९ ॥

जनकः सन्तुष्टो दशरथानयनाय पुरोहितं प्रेषयति । तदा भृशं हृष्टः असौ मिथिलाधिनाथः निजसुताप्रतिपादनाय मतिं चक्रे । अथ धन्यः सः उत्तरकोसलानाम् अधिपम् अपि आनेतुं पुरोहितम् एव प्राहिणोत् ॥ प्रतिपादनम्–दानम् । प्राहिणोत्–प्रेषयामास ॥ ७९ ॥

गत्वा जवेन समुपेत्य ककुत्स्थवंश्यं
विज्ञाप्य वाचिकमसौ बहुमानपूर्वम् ।
निन्ये विदेहविषयान् सहराजपुत्रं
तं सैन्यभारपरिकम्पितभूमिचक्रम् ॥ ८० ॥

पुरोहितो दशरथमानयति । असौ जवेन गत्वा, ककुत्स्थवंश्यं समुपेत्य, बहुमानपूर्वं वाचिकं विज्ञाप्य, सहराजपुत्रं सैन्यभारपरिकम्पितभूमिचक्रं तं विदेहविषयान् निन्ये ॥ वाचिकं–सन्देशम् । सहराजपुत्रम्–भरतशत्रुघ्नसहितम् ॥ ८० ॥

अभ्येयिवांसमथ सूर्यकुलप्रदीप-
मभ्यर्चितं दशरथं जनको यथावत् ।
पुत्रीचतुष्टयमिदं तनयैश्चतुर्भि-
र्दत्तं हृदा परिगृहीतमयाचतैषः ॥ ८१ ॥

जनकः स्वस्य चतसृणां पुत्रीणां स्वीकरणाय दशरथं याचते । अथ एषः जनकः, अभ्येयिवांसं यथावत् अभ्यर्चितं सूर्यकुलप्रदीपं दशरथम्, इदं पुत्रीचतुष्टयं हृदा दत्तं चतुर्भिः तनयैः परिगृहीतम् अयाचत । परिगृह्यतामित्ययाचत इत्यर्थः ॥ ८१ ॥

कन्यामयोनिजनुषं रघुपुङ्गवाय
स्वामौरसीमथ सुतामपि लक्ष्मणाय ।
द्वाभ्यां कुशध्वजसुते भरताय तस्मै
सौमित्रये च समकल्पयत प्रजेशः ॥ ८२ ॥

सीतां रामाय, ऊर्मिलां लक्ष्मणाय, माण्डवीं भरताय, श्रुतकीर्तिम् शत्रुघ्नाय च दातुं जनकः सङ्कल्पयति। अथ प्रजेशः अयोनिजनुषं कन्यां रघुपुङ्गवाय, स्वाम् औरसीं सुतां लक्ष्मणाय अपि, कुशध्वजसुते भरताय तस्मै सौमित्रये च द्वाभ्यां समकल्पयत॥ अयोनि-जनुषम्—यज्ञभूमिसम्भवां सीताम्। औरसीं सुताम्—ऊर्मिलाम्। कुशध्वजसुते—अनुजस्य कुशध्वजस्य दुहितरौ माण्डवीं श्रुतकीर्तिम् च ॥ ८२ ॥

चक्रुस्ततः परिणयं विधिना कुमारा-
स्तासां क्रमान्निजपुरोहितचोदितेन।
रात्रीन्दुसङ्गम इवातितराममीषा-
मन्योन्यशोभनकरः स बभूव योगः ॥ ८३ ॥

कुमारा विवाहं निर्वर्तयन्ति। ततः कुमाराः निजपुरोहितचोदितेन विधिना क्रमात् तासां परिणयं चक्रुः। अमीषां सः योगः रात्रीन्दुसङ्गमः इव अतितराम् अन्योन्यशोभनकरः बभूव ॥ ८३ ॥

पुत्रैः समं दशरथः कृतदारयोगै-
र्नीत्वा स कानिचिदहानि सुहृन्निकेते।
संप्रस्थितः सहपुरोहितमात्मगेहं
सीरध्वजेन बहुकल्पितपारिबर्हः ॥ ८४ ॥

दशरथः कृतविवाहैः पुत्रैः सह स्वां पुरीं प्रति प्रतिष्ठते। सः दशरथः कृतदारयोगैः पुत्रैः समं सुहृन्निकेते कानिचित् अहानि नीत्वा सीरध्वजेन बहुकल्पितपारिबर्हः सहपुरोहितम् (यथा तथा) आत्मगेहं सम्प्रस्थितः॥ सीरध्वजेन—जनकेन। पारिबर्हम्—कन्यादानकाले दीयमानं स्त्रीधनम् ॥ ८४ ॥

अथ नृपमनुयान्तं मैथिलं मार्गमध्ये
दशरथनरपालस्तं निवर्त्य प्रयातः।
तपतपनसहस्रद्योतवद्दुर्निरीक्षं
स खलु किमपि तेजः स्वाग्रमार्गे ददर्श ॥ ८५ ॥

निवर्तमानो दशरथो मार्गे किमपि तेजः पश्यति। अथ सः खलु दशरथनरपालः, अनुयान्तं मैथिलं तं नृपं निवर्त्य प्रयातः मार्गमध्ये तपतपनसहस्रद्योतवत् दुर्निरीक्षं किमपि तेजः स्वाग्रमार्गे ददर्श ॥ तपः—ग्रीष्मः ॥ ८५ ॥

क्रोधाग्नौ निजताननिग्रहकथाधाय्यासमुद्दीपिते
जुह्वा हन्त जुहाव यः परशुना राजन्यवंशाहुतिम्।
उन्मीलद्गुरुचापभञ्जनरवप्रोत्थापितस्तत्क्षणं
मध्येमार्गमसावदृश्यत मुनिस्तेजोनिधिर्भार्गवः ॥ ८६ ॥

परशुरामः प्रत्यक्षीभवति। यः निजताननिग्रहकथाधाय्या समुद्दीपिते क्रोधाग्नौ परशुना जुह्वा राजन्यवंशाहुतिं जुहाव, हन्त! असौ तेजोनिधिः भार्गवः मुनिः उन्मीलद्गुरुचापभञ्जनरवप्रोत्थापितः तत्क्षणं मध्येमार्गम् अदृश्यत ॥ धाय्या—अग्निसमिन्धनार्था सामिधेनी नाम ऋक्। जुहूः—होमोपकरणविशेषः। गुरुः—परशुरामस्य धनुर्विद्याचार्यः शिवः। भार्गवः मुनिः—परशुरामः ॥ ८६ ॥

एकेनाखिलराजलोकदहनं तेजः कुठाराभिधं
बिभ्रत् पाणितलेन निर्भरतरज्वालावलीभासुरम्।
अन्येनाखिलपापकर्षणचणां रुद्राक्षमालामपि
ब्रह्मक्षत्रियधार्मिको मुनिवरः प्राप्तो नृपस्यान्तिकम् ॥८७॥

परशुरामो दशरथमभिगच्छति। एकेन पाणितलेन अखिलराजलोकदहनं निर्भरतरज्वालावलीभासुरं कुठाराभिधं तेजः बिभ्रत्, अन्येन (पाणितलेन) अखिलपापकर्षणचणां रुद्राक्षमालां अपि (बिभ्रत्) ब्रह्मक्षत्रियधार्मिकः मुनिवरः नृपस्य अन्तिकं प्राप्तः ॥ पापकर्षणचणम्—पापनाशनसमर्थम् ॥ ८७ ॥

ब्रह्मन्नर्घ्यं पाद्यमित्याद्युदीर्य
प्रत्युद्यन्तं भूमिनाथं विहाय।
रामो यत्र त्र्यक्षकोदण्डहन्ता
गत्वा तत्र क्रोधनोऽसौ बभाषे ॥८८॥

परशुरामो राममभिभाषते। ब्रह्मन्! अर्घ्यम्, पाद्यम् इत्यादि उदीर्य प्रत्युद्यन्तं भूमिनाथं विहाय, यत्र त्र्यक्षकोदण्डहन्ता रामः, तत्र गत्वा क्रोधनः असौ बभाषे ॥ ८८ ॥

रे रे बालक कालकालधनुषो भङ्गस्त्वया भावितः
नन्वारोपय वैष्णवं धनुरिदं द्रक्ष्यामि ते विक्रमम् ।
नो चेत्त्वां गुरुचापभङ्गकरणव्यक्तापराधं जवात्
कुर्वे सर्वमहीशवंशदहनक्रूरे कुठारेऽतिथिम् ॥ ८९ ॥

परशुरामस्य वचनम्। रे रे बालक! त्वया कालकालधनुषः भङ्गः भावितः। ननु इदं वैष्णवं धनुः आरोपय, ते विक्रमं द्रक्ष्यामि। नो चेत् (अहं) गुरुचापभङ्ग-करणव्यक्तापराधं त्वां जवात् सर्वमहीशवंशदहनक्रूरे कुठारे अतिथिं कुर्वे॥ कालकालः—कालस्यापि कालः शिवः ॥ ८९ ॥

उक्त्वैवं धनुरार्पयद्भृगुपती रामो गृहीत्वा द्रुतं
सज्यीकृत्य स लीलयैव विशिखं सन्धाय कर्षन् गुणम् ।
ब्रह्मन् कुत्र सृजामि सायकमिमं नैव प्रहार्यो भवान्
विप्रत्वेन पुरोगतोऽपि न शरो मोघो ममेत्यब्रवीत् ॥ ९० ॥

रामः शरं सन्धाय प्रतिब्रूते। एवं उक्त्वा भृगुपतिः धनुः आर्पयत्। सः रामः (धनुः) द्रुतम् गृहीत्वा लीलया एव सज्यीकृत्य विशिखं सन्धाय, गुणं कर्षन्, 'ब्रह्मन्! इदं सायकं कुत्र सृजामि? भवान् पुरोगतः अपि विप्रत्वेन न एव प्रहार्यः, मम शरः न मोघः' इति अब्रवीत्॥ आर्पयत्—ददौ। गुणम्—मौर्वीम्। सृजामि—प्रयुञ्जे। मोघः—निष्फलः ॥ ९० ॥

तदनु मुनिवरेण त्रस्नुना तत्र रामे
स्वगतिहतिसमर्थं वैष्णवं वीक्ष्य वीर्यम् ।
सकरुणपदमेष प्रार्थ्यमानो दयालुः
शरमथ तपसात्तं लोकमाहन्तुमौज्झत् ॥ ९१ ॥

रामस्तेन शरेण परशुरामस्य परलोकगतिं निरुणद्धि। तदनु त्रस्नुना मुनिवरेण, तत्र रामे स्वगतिहतिसमर्थं वैष्णवं वीर्यं वीक्ष्य सकरुणपदं प्रार्थ्यमानः दयालुः एषः अथ तपसा आत्तं लोकम् आहन्तुं शरम् औज्झत्॥ त्रस्नुना–भीतेन। आत्तम्–सम्पादितम्। औज्झत्–विसृष्टवान्॥ ९१॥

दृष्ट्वाद्भुतं तदपि कर्म कुमारकस्य
तुष्टो मुनिस्सपदि नष्टमदातिरेकः।
आशीर्भिरेनमनुगृह्य कृतप्रणामं
साधीयसीभिरथ साधयति स्म शान्तः॥ ९२॥

परशुरामो राममनुगृह्य गच्छति। कुमारकस्य अद्भुतं तं कर्म अपि दृष्ट्वा तुष्टः मुनिः सपदि नष्टमदातिरेकः, कृतप्रणामं एनं साधीयसीभिः आशीर्भिः अनुगृह्य अथ शान्तः साधयति स्म॥ कुमारकस्य–बालस्य रामस्य। साधीयसीभिः–शोभनतराभिः। साधयति स्म–जगाम। कृतप्रणामं–परशुरामस्य विप्रत्वेन, तं प्रति कृतनमस्कारम्। एनं–रामम्॥ ९२॥

याते तत्र मुनीश्वरे दशरथो गाढं समाश्लिष्य तं
पुत्रं जैत्रममंस्त निर्गतमिव क्रूरस्य मृत्योर्मुखात्।
तुष्टः कष्टदशाव्यतिक्रमणतः प्राप स्वकं मन्दिरं
सत्रा पुत्रकलत्रमित्रनिवहैः सुत्रामबन्धुर्नृपः॥ ९३॥

दशरथः स्वमन्दिरं प्राप्नोति। तत्र मुनीश्वरे याते सुत्रामबन्धुः दशरथः नृपः, जैत्रं तं पुत्रं गाढं समाश्लिष्य क्रूरस्य मृत्योः मुखात् निर्गतं इव अमंस्त। कष्टदशाव्यतिक्रमणतः तुष्टः पुत्रकलत्रमित्रनिवहैः सत्रा स्वकं मन्दिरं प्राप॥ सुत्रामा–इन्द्रः। अमंस्त–अमन्यत। सत्रा–सह। जैत्रम्–जयशालिनम्। स्वकं मन्दिरम्–अयोध्यायां विद्यमानं निजं राजभवनम्॥ ९३॥

चरणगतजनत्राश्चारुतापूर्णगात्राः
विदितसकलशास्त्रा वीरभावातिमात्राः ।
चिरतरमथ पित्रा चिन्त्यमानाश्च मात्रा
रमितनिजकलत्रा रेमिरे राजपुत्राः ॥ ९४ ॥

इति श्रीगोदवर्मविद्वद्युवराजकृते
श्रीरामचरिते महाकाव्ये
द्वितीयः सर्गः



राजपुत्राः सुसुखं रमन्ते । अथ चरणगतजनत्राः चारुतापूर्णगात्राः विदितसकलशास्त्राः वीरभावातिमात्राः पित्रा मात्रा च चिन्त्यमानाः राजपुत्राः रमितनिजकलत्राः चिरतरं रेमिरे ॥ जनत्राः—जनरक्षकाः ॥ ९४ ॥

इति पण्डितरत्नश्रीनारायणपिषारोटिविरचितायां
श्रीरामचरितमहाकाव्यव्याख्यायां अन्वयार्थप्रबोधिन्यां
कुमारोदयो नाम द्वितीयः सर्गः



# तृतीयः सर्गः

**अथाधिगम्य क्षितिपालनन्दनामयोनिजामङ्गजशास्त्रकोविदः ।**
**अरीरमत्तामरविन्दलोचनां चिराय रामश्चरणानतप्रियः ॥ १ ॥**

रामस्य कामलीलां वर्णयितुकामः कविः सीतामुपक्षिपति — **अथेति** । अथ अङ्गज-शास्त्रकोविदः चरणानतप्रियः रामः, क्षितिपालनन्दनाम् अयोनिजाम् अधिगम्य, अरविन्दलोचनां तां चिराय अरीरमत् ॥ अयोनिजाम्–सीताम् । अरीरमत्–रमयामास ॥ १ ॥

**अशेषकर्त्रा निजशिल्पनैपुणीपरीक्षणार्थं कमलाशिवादयः ।**
**पुरा व्यरच्यन्त हि दिव्ययोषितो व्यधायि भूयः कुशलेन या ध्रुवम् ॥ २ ॥**

सीतायाः सर्वाधिकं सौन्दर्यं वर्णयति — **अशेषेति** । अशेषकर्त्रा निजशिल्पनैपुणी-परीक्षणार्थं कमलाशिवादयः दिव्ययोषितः पुरा व्यरच्यन्त हि । भूयः कुशलेन (तेन) या व्यधायि । ध्रुवम् ॥ अशेषकर्त्रा–ब्रह्मणा । कमला–लक्ष्मीः । शिवा–पार्वती । व्यधायि–सृष्टा । ध्रुवम्–निश्चितम् ॥ २ ॥

**मनुष्यनारीजनतोऽपि यौवतं दिवौकसां श्रेष्ठतमं वदन्ति यत् ।**
**तदद्य धात्रा विपरीतमाहितं बतेति शोचन्ति सुराश्च यत्कृतौ ॥ ३ ॥**

सीतासौन्दर्यं दिव्ययुवतिभ्योऽप्यधिकमित्याह — **मनुष्येति** । मनुष्यनारीजनतः अपि दिवौकसां यौवतं श्रेष्ठतमं यद् वदन्ति, तद् अद्य धात्रा विपरीतम् आहितम् , बत ! इति यत्कृतौ सुराः च शोचन्ति ॥ यौवतम्–युवतिसमूहम् । आहितम्–कृतम् । यत्कृतौ–सीतासृष्टौ ॥ ३ ॥

**विधुं यदास्यं च विधाय वेधसा न्यधायिषातामनयोर्विषामृते ।**
**तदेव रूपं हृदि दृश्यते तयोः कलङ्कदन्तच्छदकैतवेन हि ॥ ४ ॥**

सीतामुखं वर्णयति —**विधुमिति**। वेधसा विधुं यदास्यं च विधाय अनयोः विषामृते न्यधायिषाताम्। तद् एव हि रूपं तयोः हृदि कलङ्कदन्तच्छदकैतवेन दृश्यते। विधुम्–चन्द्रम्। हृदि–मध्ये। दन्तच्छदः–अधरः ॥ ४ ॥

**जगज्जिगीषोर्मदनस्य साधनैर्यदङ्गमाधायि विरिञ्चिना ध्रुवम्।**
**चकास्ति यल्लोचनयोः पृषत्कता भ्रुवोर्धनुष्ट्वं कुचयो रथाङ्गता ॥ ५ ॥**

सीताया लोचने भ्रुवौ स्तनौ च वर्णयति–**जगदिति**। जगद् जिगीषोः मदनस्य साधनैः, विरिञ्चिना यदङ्गम् आधायि। ध्रुवम्! यद् लोचनयोः पृषत्कता, भ्रुवोः धनुष्ट्वं, कुचयोः रथाङ्गता (च) चकास्ति ॥ साधनैः–आयुधैः। पृषत्कता–शरत्वम्। रथाङ्गता–चक्रत्वम्। वृत्ताकारतया चक्रवाकसादृश्यमपि स्तनयोर्गम्यते ॥ ५ ॥

**यदीययोः काञ्चनपद्मकोशयोरुरोजनाम्नोरविकासतोचिता।**
**समीपवर्ती सततं मुखाह्वयः सुधानिधिः सुन्दरहासचन्द्रिकः ॥ ६ ॥**

स्तनावेव वर्णयति — **यदीययोरिति**। यदीययोः उरोजनाम्नोः काञ्चनपद्मकोशयोः अविकासता उचिता (यतः)। सुन्दरहासचन्द्रिकः मुखाह्वयः सुधानिधिः सततं समीपवर्ती ॥ ६ ॥

**विलासवापी खलु विश्वमोहिनी यदीयनाभिः सुषमामृतं तनोः।**
**कुचद्वयं रोमलताग्रवर्ति तत् सरोजकोशद्वयमेकनालजम् ॥ ७ ॥**

नाभिं रोमावलिं च वर्णयति—**विलासेति**। विश्वमोहिनी यदीयनाभिः विलासवापी खलु! तनोः सुषमा अमृतम्। रोमलताग्रवर्ति तत् कुचद्वयम्, एकनालजं सरोजकोशद्वयम्॥ सुषमा–परमशोभा। अमृतम्–जलम्। कोशः–कुड्मलः ॥ ७ ॥

**श्रियं दधानं करभातिशायिनीं यदीयमूरुद्वयमात्तमार्दवम्।**
**करं करीन्द्रस्य करोति कर्कशं कुतः प्रकारादुपमानमात्मनः ॥ ८ ॥**

ऊरुद्वयं वर्णयति—**श्रियमिति**। करभातिशायिनीं श्रियं दधानम आत्तमार्दवं यदीयम् ऊरुद्वयम्, कर्कशं करीन्द्रस्य करम्, कुतः प्रकारात् आत्मनः उपमानं करोति ॥ करभः–मणिबन्धादाकनिष्ठं करस्य बहिःपार्श्वभागः ॥ ८ ॥

जिगाय रम्भां मरुदङ्गसङ्गमे सवेपथुं स्वोरुगुणेन सुन्दरी ।
निशम्य वार्तामिति जातमत्सरा न यत्र रम्भा रमणीशिखामणिः ॥९॥

ऊरुमेव वर्णयति — **जिगायेति** । सुन्दरी, मरुदङ्गसङ्गमे सवेपथुं रम्भां स्वोरुगुणेन जिगाय । इति वार्तां निशम्य, रमणीशिखामणिः रम्भा, यत्र न जातमत्सरा (भवति) ॥ मरुदङ्गसङ्गमे--वायुस्पर्शे । मरुताम्—देवानाम्, अङ्गसङ्गमे—आलिङ्गने च । रम्भाम्—कदलीम् । स्वोरुगुणेन—स्वस्य ऊरोः गुणेन, उरुगुणेन च । जिगाय—जितवती । रम्भा—तदाख्या स्वर्वेश्या ॥ ९ ॥

सुखस्वनैः साधु सुवर्णहंसकैरलङ्कृतं यत्पदमल्पिताम्बुजम् ।
अजस्रमेतद्गतिमश्नुते परां परन्तु पङ्के रुह एव तिष्ठति ॥ १० ॥

पदं वर्णयति — **सुखेति** । सुखस्वनैः सुवर्णहंसकैः साधु अलङ्कृतम् अल्पिताम्बुजं यत्पदम् अजस्रं परां एतद्गतिम् अश्नुते । परं तु रुहे पङ्के एव तिष्ठति ॥ सुवर्णहंसकैः— पदपक्षे, स्वर्णमयैः पादकटकैः । अम्बुजपक्षे, शोभनवर्णैः प्रशस्तहंसैः । एतद्गतिम्—हंसगमनम् । परम्—अन्यद् । अम्बुजमित्यर्थः । रुहे—उद्भवस्थाने ॥ १० ॥

सदा परश्रीकरमेव काञ्चनं यदङ्गसङ्गेषु तथात्वमुज्झति ।
तदेव गृह्णाति तदा तदत्र यन्न काञ्चनं नाञ्चति काञ्चन श्रियम् ॥ ११ ॥

सीताया अङ्गकान्ति वर्णयति—**सदेति** । सदा परश्रीकरं एव काञ्चनं यदङ्गसङ्गेषु तथात्वं उज्झति । तद् एव तदा तद् गृह्णाति । यद् अत्र काञ्चनं काञ्चनश्रियं न न अञ्चति ॥ यदङ्गसङ्गेषु—सीतावयवयोगेषु । तथात्वम्—परश्रीकरत्वम् । तद्—सीताङ्गम् । तद्— परश्रीकरत्वम् । अत्र—सीताङ्गे । काञ्चन—अनिर्वचनीयाम् । न न अञ्चति—गच्छत्येव ॥ अत्र परश्रीकरशब्दस्य अन्यशोभाकरमिति, उत्तमशोभाकरमिति च द्वावर्थौ । काञ्चनपक्षे प्रथमोऽर्थः, सीताङ्गपक्षे द्वितीयोऽर्थः ॥ ११ ॥

यशो यदीयं यमशासनालयक्षमाधरस्पर्धनमाचचार यत् ।
ततः किमासीदिति लोकचिन्तनं तदीयदुर्वर्णतयैव शाम्यते ॥ १२ ॥

सीतायाः कीर्तिम् वर्णयति — **यश इति**। यदीयं यशः यद् यमशासनालयक्षमाधर-स्पर्धनम् आचचार, ततः किम् आसीत्, इति लोकचिन्तनं तदीयदुर्वर्णतया एव शाम्यते ॥ यमशासनालयक्षमाधरः–कैलासपर्वतः। दुर्वर्णता–रजतत्वम्, वर्णदोषश्च ॥ १२ ॥

**यदन्तरासाद्य पतिप्रचोदिता सरस्वती वादयतीव वल्लकीम् ।**
**तथाहि सर्वे स्वकृतेषु वत्सलाः स्वरस्तदीयश्च गिरीह पञ्चमः ॥ १३ ॥**

सीतायाः स्वरमाधुर्यं वर्णयति — **यदिति**। सरस्वती पतिप्रचोदिता (सती) यदन्तः आसाद्य वल्लकीं वादयति इव। तथा हि, सर्वे स्वकृतेषु वत्सलाः (भवन्ति)। इह गिरि तदीयः स्वरः पञ्चमः च ॥ पतिप्रचोदिता–पत्या ब्रह्मणा प्रेरिता। यदन्तः–सीताया अन्त-र्भागम्। वल्लकीम्–वीणाम्। गिरि–वाचि। पञ्चमः–स रि ग म प ध नि इत्येतेषु सप्तस्वरेषु यः पञ्चमः, सः। "पिकः कूजति पञ्चम"मिति पिकस्वरस्य सीतास्वरस्य च पञ्चमत्वोक्त्या पिकस्वरा सीतेति भावः ॥ १३ ॥

**अवाङ्मुखं वाङ्मुखनिर्जितं यथा ययौ वनं यौवनमान्यपुष्टकम् ।**
**किम ह्वयत्यात्मनिगूहने मुहुर्भयेन तत्रापि तमोमयीं कुहूम् ॥ १४ ॥**

वाङ्माधुर्यं वर्णयति—**अवाङ्मुखमिति**। यया वाङ्मुखनिर्जितम् अवाङ्मुखम् आन्य-पुष्टकं यौवनं वनं ययौ, तत्र अपि, किं भयेन आत्मनिगूहने तमोमयीं कुहूं मुहुः आह्वयति ॥ वाङ्मुखम्–उपन्यासः। आन्यपुष्टकम्–पिकसम्बन्धि। यौवनम्–युवसमूहः। तत्र–वने। कुहूम्–नष्टेन्दुकलाममावास्याम्। कुहूः कुहूः इति पिककूजनानुकरणम् ॥ १४ ॥

**तया समेतः स पुरन्दरः पुरं पुरन्दरक्ष्माधरसुन्दरं भुवः ।**
**समाससाद स्मरकेलिकौतुकी समासमानन्दविधायि सम्पदाम् ॥ १५ ॥**

सीतासमेतस्य रामस्य केलिगृहप्रवेशं वर्णयति — **तयेति**। भुवः पुरन्दरः सः तया समेतः स्मरकेलिकौतुकी, पुरन्दरक्ष्माधरसुन्दरम् आनन्दविधायि सम्पदां समासं पुरं समाससाद ॥ पुरन्दरः–इन्द्रः। पुरन्दरक्ष्माधरः–महामेरुपर्वतः। समासम्–सङ्गमस्थानम् ॥ १५ ॥

**प्रियः प्रियायाः प्रथमोपयोजने प्रयस्तवानप्यभवत् प्रहृष्टधीः ।**
**रसैकसारे रसिकस्य वस्तुनि प्रयाति चेतः प्रमदं हि दुर्लभे ॥ १६ ॥**

सीतायाः प्रथमसमागमे रामस्य प्रयासं प्रस्तौति —**प्रिय इति** । प्रियः प्रियायाः प्रथमोपयोजने प्रयस्तवान् अपि प्रहृष्टधीः अभवत् । रसैकसारे वस्तुनि दुर्लभे हि रसिकस्य चेतः प्रमदं प्रयाति ॥ प्रयस्तवान्–प्रयासयुक्तः । प्रमदम्–हर्षम् ॥ १६ ॥

**उपेत्य केलीगृहमुज्ज्वलोज्ज्वलं बभाज शय्यातलमच्छकोमलम् ।**
**स कालधौतातनुदुग्धपूर्णसत्कटाहमध्यस्थितनूतनाज्यवत् ॥ १७ ॥**

रामः शय्यातले निषीदति । सः उज्ज्वलोज्ज्वलं केलीगृहं उपेत्य, अच्छकोमलं शय्यातलं, कालधौतातनुदुग्धपूर्णसत्कटाहमध्यस्थितनूतनाज्यवत् बभाज ॥ कालधौतम्–स्वर्णमयम् । अतनु–महत् । कटाहः–पात्रम् । आज्यम्–घृतम् ॥ १७ ॥

**अथेषदङ्कूरितचारुयौवनां गुणोत्करक्षोभितविश्वयौवनाम् ।**
**नरेन्द्रसूनुर्निजकेलिमन्दिरे समाजुहाव स्वयमम्बुजेक्षणाम् ॥ १८ ॥**

रामः सीतामाह्वयति । अथ नरेन्द्रसूनुः ईषदङ्कूरितचारुयौवनां गुणोत्करक्षोभितविश्वयौवनाम् अम्बुजेक्षणां स्वयं निजकेलिमन्दिरे समाजुहाव ॥ यौवनम्–तारुण्यम्, युवसमूहश्च ॥ १८ ॥

**न पारयामास चिराय सा ह्रिया बहिः स्थितान्तःस्थितयाप्तुमालयम् ।**
**यदा पुनः सेव कदापि साभवत् तदा न हूतिर्दयितस्य निष्फला ॥ १९ ॥**

सीता लज्जया न केलिगृहं प्राप्नोति । बहिः स्थिता सा, अन्तःस्थितया ह्रिया, चिराय आलयम् आप्तुं न पारयामास । यदा पुनः सा कदापि सा इव (बहिः स्थिता) अभवत्, तदा दयितस्य हूतिः निष्फला न (अभवत्) ॥ सा–लज्जा । सा इव–सीता इव । हूतिः–आह्वानम् ॥ १९ ॥

**प्रवेशितायास्तु कथञ्चिदालयं सखीभिरन्यत्र विलोभनादिभिः ।**
**समीक्ष्य कान्तं सपदि श्रिताह्रियः कवाटपृष्ठः शरणं नतभ्रुवः ॥ २० ॥**

सीतायाः कामपि लज्जाचेष्टां वर्णयति — **प्रवेशिताया इति।** सखीभिः अन्यत्र विलोभनादिभिः कथञ्चित् आलयं प्रवेशितायाः तु सपदि कान्तं समीक्ष्य श्रितह्रियः नतभ्रुव कवाटपृष्ठः शरणं (बभूव) ॥ २० ॥

**वरः परप्रेरितलोचनस्तया दृशः कणेनैव किमप्यचुम्बि सः ।**
**निवर्तिताक्षः स च वीक्ष्य सिष्मिये प्रतीक्षितं येन तदेव चेष्टितम् ॥ २१ ॥**

अन्यां लज्जाचेष्टां वर्णयति — **वर इति।** परप्रेरितलोचनः सः वरः तया दृशः कणेन एव किमपि अचुम्बि। निवर्तिताक्षः च सः वीक्ष्य सिष्मिये। येन प्रतीक्षितं, तद् एव चेष्टितम् ॥ २१ ॥

**तदक्षिणी तामरसे यदि स्फुटे न सह्यतां तस्य मुखेन्दुदर्शनम् ।**
**अनौचितीयं यदसम्मुखः शनैरलोकि ताभ्यामयमन्तरान्तरा ॥ २२ ॥**

सलज्जमपि सीतायाः पुनः पुनरवलोकनं वर्णयति — **तदक्षिणी इति।** तदक्षिणी स्फुटे तामरसे यदि (भवतः, तर्हि) ताभ्यां, तस्य मुखेन्दुदर्शनं न सह्यताम्। असम्मुखः अयम् अन्तरा अन्तरा (ताभ्याम्) शनैः यद् अलोकि, इयम् अनौचिती (भवति) ॥ स्फुटे–प्रफुल्ले। ताभ्याम्–तदक्षिभ्याम्। तस्य–वरस्य। अयम्–मुखेन्दुः ॥ २२ ॥

**चिराय धन्या प्रतिहारदण्डिका कवाटपृष्ठश्च ततस्तदाश्रयात् ।**
**अनेहसाभूद्बहुनैव धन्यता तदङ्गसङ्गाच्छयनस्य तस्य वा ॥ २३ ॥**

सीताया लज्जासङ्कोचमेव वर्णयति— **चिरायेति।** तदाश्रयात् प्रतिहारदण्डिका चिराय धन्या। ततः कवाटपृष्ठः च (धन्यः)। शयनस्य तस्य वा तदङ्गसङ्गात् धन्यता बहुना एव अनेहसा अभूत् ॥ प्रतिहारदण्डिका–द्वारबहिर्भागस्थानविशेषः। तस्य–रामस्य। अनेहसा–कालेन ॥ २३ ॥

**शयानुभावागमितापि तल्पके प्रियाभिमुख्यं न बभाज सा ह्रिया ।**
**नृपस्तु निद्रामभिनीय तद्वशादपापराधः स्फुटमालिलिङ्ग ताम् ॥ २४ ॥**

रामेण सीतायाः स्वतल्पोपनिवेशनमालिङ्गनं च ब्रूते—**शयेति**। सा तल्पले शयानुभावागमिता अपि ह्रिया प्रियाभिमुख्यं न बभाज। नृपः तु निद्राम् अभिनीय तद्वशात् अपापराधः स्फुटं ताम् आलिलिङ्ग॥ शयानुभावः करबलम्॥ २४॥

**प्रियस्य तस्याः प्रथमाङ्गसङ्गमे सुधारसे मग्नमिवास मानसम्।**
**अमन्दमन्दाक्षभयाक्षवारितं तदुत्थमानन्दमियं न चाध्यगात्॥ २५॥**

सीतालिङ्गनभवं रामस्यानन्दमाह—**प्रियस्येति**। तस्याः प्रथमाङ्गसङ्गमे प्रियस्य मानसं सुधारसे मग्नं इव आस। इयं तदुत्थम् आनन्दम् अमन्दमन्दाक्षभयाक्षवारितं (सत्) न च अध्यगात्॥ आस—बभूव। मन्दाक्षम्—लज्जा। अक्षौ—पाशकौ। मन्दाक्षं च भयं च मन्दाक्षभये। ते एव अक्षौ। ताभ्यां वारितम्। प्रतिपक्षस्य अक्षैः स्वकीयस्य अक्षस्य वारणं चतुरङ्गादिषु द्यूतक्रीडासु प्रसिद्धम्। अध्यगात्—प्राप्तवती॥ २५॥

**त्रपानुभावादपदूयदन्तरां विहाय केलीशयनं विनिर्यतीम्।**
**स्वबाहुवल्लीवलयेन वारितामशीशयत्तामयमात्तसाहसः॥ २६॥**

रामः सीतां बलाच्छयने शाययति। त्रपानुभावाद् अपदूयदन्तरां केलीशयनं विहाय विनिर्यतीं ताम् अयम् आत्तसाहसः (सन्) स्वबाहुवल्लीवलयेन वारिताम् (सतीम्) अशीशयत्॥ त्रापानुभावात्—लज्जाबलात्॥ २६॥

**इतस्तव ह्रीर्भयमप्यपास्यतां य एष ते प्रीणनतत्परः परम्।**
**इति प्रियेण ब्रुवतावलोकितं कराङ्गुलीमध्यगतं मृदुस्मितम्॥ २७॥**

रामः सीतां सान्त्वयति—**इत इति**। यः एव ते परं प्रींणनतत्परः (भवति), इतः तव ह्रीः भयम् अपि अपास्यताम्। इति वता प्रियेण कराङ्गुलीमध्यगतं मृदुस्मितम् अवलोकितम्॥ २७॥

**मुहुर्मुहुश्चाटुशतानि वर्षतः प्रियस्य भूयः प्रमदाय साभवत्।**
**भयत्रपामन्मथबालखेलनाविलासरङ्गं दधती कलेवरम्॥ २८॥**

सीता क्रमाद्रामस्य कामानुकूला भवति । मुहुः मुहुः चाटुशतानि वर्षतः प्रियस्य सा, भयत्रपामन्मथबालखेलनाविलासरङ्गं कलेबरं दधती (सती) भूयः प्रमदाय अभवत् ॥ चाटुः—श्लाघा ॥ २८ ॥

**यदा विभिद्य ह्रियमात्मकुण्ठिनीं मनोभुवा किञ्चिदुदञ्चितं शिरः ।**
**हृदि प्रियाया विनिवेशितस्तदा करः प्रियस्याकृत तत्सहायताम् ॥ २९ ॥**

सीताया लज्जां विजित्य कामः क्रमादुदञ्चति । यदा आत्मकुण्ठिनीं ह्रियं विभिद्य मनोभुवा शिरः किञ्चिद् उदञ्चितम्, तदा प्रियायाः हृदि विनिवेशितः प्रियस्य करः तत्सहायताम् अकृत ॥ मनोभुवा—कामेन । उदञ्चितम्—उन्नमितम् । तत्सहायताम्—कामोद्दीपकताम् ॥ २८ ॥

**नताननाया निटिलं नतभ्रुवः कलां विधोश्चुम्बति तन्मुखाम्बुजे ।**
**अवज्ञयेव प्रतिपक्षसंश्रये कराब्जमस्या निरुरोध तन्मुहुः ॥ ३० ॥**

प्रियामुखचुम्बनं वर्णयति । नताननायाः नतभ्रुवः निटिलं (एव) विधोः कलां तन्मुखाम्बुजे चुम्बति (सति) प्रतिपक्षसंश्रये अवज्ञया इव, अस्याः कराब्जं तद् मुहुः निरुरोध ॥ विधोः—चन्द्रस्य । अस्याः—सीतायाः । तद्—राममुखाम्बुजम् ॥ ३० ॥

**क्रमेण तत्तत्परिशीलनादिना नृपेण तस्या भयमापि दूरताम् ।**
**कुमारकेणापि तदा विशिङ्किता मनोभुवेषज्जयता बत ह्रियः ॥ ३१ ॥**

सीताया भयमपि दूरीभवति । क्रमेण तत्तत्परिशीलनादिना नृपेण तस्याः भयं दूरतां आपि । तदा ह्रियः ईषत् जयता कुमारकेण मनोभुवा अपि विशङ्किता दूरताम् आपि । बत ! ॥ ३१ ॥

**सरोजयोस्त्वच्छ्रवणावतंसयोः सुगन्धिता कीदृगिति क्षमाभृता ।**
**तदन्तिकप्रापितवक्त्रवारुहा प्रतार्य साचुम्बि कपोलभूतले ॥ २३ ॥**

कपोलचुम्बनं वर्णयति—**सरोजयोरिति** । त्वच्छ्रवणावतंसयोः सरोजयोः सुगन्धिता कीदृक् इति (उक्त्वा) तदन्तिकप्रापितवक्त्रवारुहा क्षमाभृता, सा कपोलभूतले प्रतार्य अचुम्बि ॥ वक्त्रवारुट्–मुखाम्बुजम् । क्षमाभृता–राज्ञा । प्रतार्य–वञ्चयित्वा ॥ ३२ ॥

**किमत्र जातं तव चुम्बितेऽलिके कपोलयोर्वा कलवाणि भण्यताम् ।**
**इतोऽतिरिक्तं भविता न तेऽधरे न चेदितो मद्गिरि मा स्म विश्वसीः ॥**

रामः सीताया अधरचुम्बनायोपक्रमते —**किमत्रेति** । कलवाणि! तव अलिके चुम्बिते कपोलयोः वा (चुम्बितयोः) अत्र किं जातम् । भण्यताम् । इतः अतिरिक्तम्, ते अधरे (चुम्बिते) न भविता । न चेत्, इतः मद्गिरि मा स्म विश्वसीः ॥ अलिके–निटिले । भण्यताम्–उच्यताम् । मद्गिरि–मम वाचि ॥ ३३ ॥

**इतीश्वरेणेङ्गितसारवेदिना क्षितेस्तदर्धानुमतानुगामिना ।**
**विचुम्ब्य तत्पल्लवकोमलाधरं भृशं ममज्जे प्रमदाभिधाम्बुधौ ॥ ३४ ॥**

अधरं चुम्बति । इति (उक्त्वा) इङ्गितसारवेदिना तदर्धानुमतानुगामिना क्षितेः ईश्वरेण तत्पल्लवकोमलाधरं विचुम्ब्य प्रमदाभिधाम्बुधौ भृशं ममज्जे ॥ क्षितेः ईश्वरेण–राज्ञा । प्रमदः–हर्षः ॥ ३४ ॥

**मनः समाधाय मनोज्ञशीलया बलादुपाक्रामि चिरं विलोकितुम् ।**
**उपाचरद्विघ्नममुष्य तत्क्षणात् स्मितप्रदानात् पतिरेव साहसी ॥ ३५ ॥**

सीता पतिं चिरमवलोकयति । मनोज्ञशीलया (सीतया) मनः समाधाय बलात् चिरं विलोकितुं उपाक्रामि । तत्क्षणात् स्मितप्रदानात् साहसी पतिः एव अमुष्य विघ्नं उपाचरत् ॥ उपाक्रामि–आरब्धम् । उपाचरत्–कृतवान् ॥ ३५ ॥

**कुचद्वयस्योपरि कर्कशात्मनो विधातुकामे करपद्ममीश्वरे ।**
**निपीडनं तस्य विशङ्क्य वल्लभा किमत्र हस्तौ परितस्तरे निजौ ॥ ३६ ॥**

रामः प्रियायाः स्तनग्रहणायोपक्रमते । ईश्वरे कर्कशात्मनः कुचद्वयस्य उपरि करपद्मं विधातुकामे (सति), वल्लभा तस्य निपीडनं विशङ्क्य किम्, अत्र निजौ हस्तौ परितस्तरे ॥ ईश्वरे-पत्यौ । अत्र-कुचद्वये । परितस्तरे-परिस्तृतवती ॥ ३६ ॥

**असम्मुखोऽहं परिरभ्यतामिति प्रियेण साचीकृतमाननं निजम् ।**
**अपारयत् सा न तथापि तत्कृतौ विलोक्य तद्बिम्बमुपान्तभित्तिगम् ॥**

सीता प्रत्यालिङ्गने सङ्कोचं न त्यजति । 'असम्मुखः अहम् । परिरभ्यताम्' इति (उक्त्वा) प्रियेण निजम् आननं साचीकृतम् । तथा अपि सा उपान्तभित्तिगं तद्बिम्बं विलोक्य तत्कृतौ न अपारयत् ॥ परिरभ्यताम्—आलिङ्ग्यताम् । साचीकृतम्—तिर्यक्कृतम् । तत्कृतौ—आलिङ्गनकर्मणि । न अपारयत्—न शक्ता बभूव ॥ ३७ ॥

**करं कृशाङ्ग्याः परिगृह्य पार्थिवः स्ववक्षसा योजयति स्म कोमलम् ।**
**द्रुतं द्रवीभूय तदा तदास्थिताः प्रसस्रुराराद्घुसृणस्य रेणवः ॥ ३८ ॥**

पतिस्पर्शे सीता स्विन्नाङ्गी भवति । पार्थिवः कृशाङ्ग्याः कोमलं करं परिगृह्य स्ववक्षसा योजयति स्म । तदा तदास्थिताः घुसृणस्य रेणवः द्रुतं द्रवीभूय आरात् प्रसस्रुः ॥ घुसृणस्य—कुङ्कुमस्य । आरात्—समीपम् । प्रसस्रुः—व्याप्ताः ॥ ३८ ॥

**प्रसह्य तस्याः पिबता रदच्छदं तदन्तरायाचरणोद्यते करे ।**
**निरङ्कुशीकृत्य कुचद्वयं जवात् समालिलिङ्गे सुदृढं महीभृता ॥ ३९ ॥**

अधरपानं वर्णयति—प्रसह्येति । प्रसह्य तस्याः रदच्छदं पिबता महीभृता, (तस्याः) करे तदन्तरायाचरणोद्यते (सति) निरङ्कुशीकृत्य (तस्याः) कुचद्वयं जवात् सुदृढं समालिलिङ्गे ॥ रदच्छदम्—अधरम् । अन्तरायः—विघ्नः ॥ ३९ ॥

**यदत्र किञ्चित्त्रपया नतास्यया निजेच्छयारम्भि तया समीहितम् ।**
**तदर्थमर्थित्वमवाप चेत् प्रियस्तदेव सद्यः समकोचि सुभ्रुवा ॥ ४० ॥**

सीताया स्वसमीहितसाधने सङ्कोचमाह — यदिति । त्रपया नतास्यया तया, अत्र यत् समीहितं निजेच्छया आरम्भि, तदर्थं प्रियः अर्थित्वम् अवाप चेत्, सुभ्रुवा सद्यः तद् एव समकोचि ॥ समकोचि–सङ्कोचितम् ॥ ४० ॥

**ममाद्य मा भूत् पतिकेलिवामतेत्यहस्सु तस्या हृदि ये समाधयः ।**
**निशासु मन्दाक्षपिशाचहुङ्कृतीर्निशम्य भीतैरिव तैः पलायितम् ॥ ४१ ॥**

दूरीकृतापि लज्जा सीतां न विमुञ्चतीत्याह — **ममेति** । 'अद्य मम पतिकेलिवामता मा भूत्' इति अहस्सु तस्याः हृदि ये समाधयः (आसन्), तैः, निशासु मन्दाक्षपिशाचहुङ्कृतीः निशम्य भीतैः इव पलायितम् ॥ वामता–प्रतिकूलता । समाधयः–निश्चयाः । मन्दाक्षम्–लज्जा ॥ ४१ ॥

**क्षमाभृतश्चाटुसुधाभिषेचनात् क्रमेण तस्या हृदि कामपादपः ।**
**अपि त्रपारूपनिदाघपौरुषं मनागनादृत्य पुपोष पोषणाम् ॥ ४२ ॥**

रामः सीतायाः कामाभिनिवेशं पोषयति । क्षमाभृतः चाटुसुधाभिषेचनात् क्रमेण तस्याः हृदि कामपादपः, त्रपारूपनिदाघपौरुषम् अपि मानक् अनादृत्य पोषणां पुपोष ॥ निदाघः–ग्रीष्मः ॥ ४२ ॥

**निपीडयामास नृपस्य चुम्बतो निजाधरेणाधरमङ्गना शनैः ।**
**तथा मनागुन्नमितस्तनी च सा बभूव पत्युः परिरम्भविभ्रमे ॥ ४३ ॥**

सीता क्रमशः प्रतिप्रवर्तनमारभते । अङ्गना चुम्बतः नृपस्य अधरं निजाधरेण शनैः निपीडयामास । तथा सा पत्युः परिरम्भविभ्रमे मनाग् उन्नमितस्तनी च बभूव ॥ परिरम्भः–आलिङ्गनम् ॥ ४३ ॥

**क्रमेण सा बाह्यरतेषु वामतां विहाय सञ्जातरसा यदा भवत् ।**
**नृपेण, तावत् खलु नीविमोचने करं करेणुप्रचरो व्यचीचरत् ॥ ४४ ॥**

रामः क्रमादाभ्यन्तररते प्रवर्तते । यदा सा क्रमेण बाह्यरतेषु वामतां विहाय नृपेण सञ्जातरसा अभवत्, तावत् खलु (सः) करेणुप्रचरः नीविबन्धने करं व्यचीचरत् ॥

वामताम्–प्रतिकूलताम् । करेणुः–गजः । नीविः–अन्तरीयवस्त्रग्रन्थिः । व्यचीचरत्–व्यापारयामास ॥ ४४ ॥

**स निद्रया मुद्रितचेतसः शनैर्विमुच्य तस्या दृढनीविबन्धनम् ।**
**प्रबोध्य चाह स्तनकम्पनैरिमां कथं तवेयं गलितेति सस्मितम् ॥ ४५ ॥**

रामो निद्रामुद्रितचित्तायाः सीताया नीविं विमोचयति । सः निद्रया मुद्रितचेतसः तस्याः दृढनीविबन्धनं शनैः विमुच्य स्तनकम्पनैः इमां प्रबोध्य च सस्मितम् आह — 'तव इयं कथं गलिता' इति ॥ इयम्–नीविः ॥ ४५ ॥

**अथ ह्रिया संकुचिताङ्गवल्लरी पयस्सु तैलप्रतिवत् प्रसुप्तया ।**
**ससम्भ्रमोद्वेगनिबद्धनीविका प्रियप्रमोदार्णवसेतुमच्छिनत् ॥ ४६ ॥**

सीता सोद्वेगा नीविं बध्नाति । अथ (सीता) पयस्सु तैलप्रतिवत् प्रसुप्तया ह्रिया सङ्कुचिताङ्गवल्लरी ससम्भ्रमोद्वेगनिबद्धनीविका प्रियप्रमोदार्णवसेतुम् अच्छिनत् ॥ तैलस्य लेशः–तैलप्रति, तद्वत् । अच्छिनत्–चिच्छेद ॥ ४६ ॥

**कुचद्वयान्ते निहितोऽपि तत्करस्तया न धूतः परमत्र गाढितः ।**
**विशङ्क्य नीवेरवमोचनं ततः सुमर्द आसीत्तदमुष्य तत्कुचः ॥ ४७ ॥**

सीता किञ्चिदिव सङ्कोचं मुञ्चति । कुचद्वयान्ते निहितः अपि तत्करः तया न धूतः । ततः नीवेः अवमोचनं विशङ्क्य अत्र परं गाढितः । तद् अमुष्य तत्कुचः सुमर्दः आसीत् ॥ ततः–तस्माद्, करात् । अत्र–कुचद्वयान्ते । परम्–अत्यर्थम् । गाढितः–दृढीकृतः । तत्–तस्मात् कारणात् । अमुष्य–रामस्य । सुमर्दः-सुखेन मर्दितुं शक्यः ॥ ४७ ॥

**निधाय तस्याः पुरतः स दर्पणं विलोकयंस्तत्प्रतिबिम्बमुद्बणम् ।**
**विमुच्यते नीविरसाविति ब्रुवन् हसन्मुखस्तज्जघनेऽकरोत्करम् ॥ ४८ ॥**

सीता प्रियेण क्रियमाणं जघने करार्पणं सहते । सः तस्याः पुरतः दर्पणं निधाय उद्बणं तत्प्रतिबिम्बं विलोकयन्, असौ नीविः विमुच्यते इति ब्रुवन् हसन्मुखः तज्जघने करम् अकरोत् ॥ उद्बणम्–सुव्यक्तम् । जघने–कटिपुरोभागे ॥ ४८ ॥

तदूरुकाण्डे सविलासमर्पितः शयः शयानेन सहानयामुना ।
स्फुटं तदीयेन जवादुदञ्चता विधूततां वेपथुनैव यापितः ॥ ४९ ॥

ऊरुकाण्डे रामेण करे अर्पिते सीता वेपथुमती भवति । अनया सह शयानेन अमुना तदूरुकाण्डे सविलासम् अर्पितः शयः, जवात् स्फुटं उदञ्चता तदीयेन वेपथुना एव विधूततां यापितः ॥ शयः—करः । यापितः—प्रापितः ॥ ४९ ॥

सरोजदृष्टेरुरसि स्वमाननं निधाय तस्याः सुचिरं चुचुम्ब सः ।
हृदि स्थितं मन्मथजातवेदसं प्रदीपयिष्यन्निव फूत्कृतानिलैः ॥ ५० ॥

रामः सीतायाः स्तनान्तरं चुम्बति । सः सरोजदृष्टेः तस्याः उरसि स्वम् आननं निधाय, हृदि स्थितं मन्मथजातवेदसं फूत्कृतानिलैः प्रदीपयिष्यन् इव सुचिरं चुचुम्ब ॥ मन्मथजातवेदसम्—कामाग्निम् ॥ ५० ॥

तथा हि चक्रे चटुभिर्मनोहरैः प्रवृत्तिभिश्च प्रणयी निजप्रियाम् ।
यथा सरागा मदनोत्सवेष्वसौ न भीषिता च त्रपयातिधूर्तया ॥ ५१ ॥

रामस्तैस्तैरुपायैः सीताया रागमुद्दीप्य लज्जां दूरयति । प्रणयी (रामः) निजप्रियां मनोहरैः चटुभिः (मनोहराभिः) प्रवृत्तिभिः च तथा हि चक्रे, यथा असौ मदनोत्सवेषु सरागा, अतिधूर्तया त्रपया न भीषिता (भवति) ॥ चटुभिः—श्लाघाभिः ॥ ५१ ॥

निरस्तदीपे निविडे तमोभरैरुदर्चिरिन्द्रोपलमण्डिते गृहे ।
निवेश्य कान्तां शयने महीपतिश्चकार तच्चैलविमोक्षमादिमम् ॥ ५२ ॥

रामस्तमसि प्रथमं सीतायाश्चैलविमोक्षणं करोति । महीपतिः निरस्तदीपे तमोभरैः निविडे उदर्चिरिन्द्रोपलमण्डिते गृहे कान्तां शयने निवेश्य आदिमं तच्चैलविमोक्षं चकार ॥ इन्द्रोपलः—इन्द्रनीलरत्नम् ॥ ५२ ॥

सहाभिलाषं सभयं सकौतुकं सपीडनं सातिसुखं सपूर्च्छनम् ।
सवेपथुश्वासनिदाघसम्भ्रमं सवामतं चानुबभूव सा रतम् ॥ ५३ ॥

सीता रतिसुखमनुभवति । सहाभिलाषं सभयं सकौतुकं सपीडनं सातिसुखं समूर्छनं सवेपथुश्वासनिदाघसम्भ्रमं सवामतं च रतं सा अनुबभूव ॥ निदाघः–स्वेदः । वामता–प्रतिकूलता ॥ ५३ ॥

**विधाय तस्या रतमादिमं पतिः स्मयन्निमामाह नताननाम्बुजाम् ।**
**कथं त्वयासेचनकांगि लुप्यते त्रपा न सम्प्रत्यपि दृष्टपारया ॥५४॥**

रतान्ते रामः प्रियामाभाषते त्रिषु श्लोकेषु । पतिः तस्याः आदिमं रतं विधाय स्मयन् नताननाम्बुजां इमां आह—"हे आसेचनकाङ्गि ! दृष्टपारया त्वया सम्प्रति अपि त्रपा कथं न लुप्यते" ॥ आसेचनकम्–पुनः पुनर्दर्शनीयम् ॥ ५४ ॥

**रतिक्रियामोदभृते विकस्वरे सति त्वदीये हृदयाब्जकोरके ।**
**कुतस्त्रपा नश्यति न त्वदाननक्षपाकरादर्शनकारिकालिका ॥ ५५ ॥**

रतिक्रियामोदभृते त्वदीये हृदयाब्जकोरके विकस्वरे सति त्वदाननक्षपाकरादर्शनकारिकालिका त्रपा कुतः न नश्यति ॥ आमोदः–हर्षः । कालिका–मेघजालम् ॥ ५५ ॥

**चिरं परिण्या परिशीलिताप्यसौ जहाति न ह्रीभरमस्य केलिषु ।**
**इति त्वया मानिनि मा स्म भूयत स्फुटं सखीभिः परिहास्यमानया ॥**

"चिरं परिण्या परिशीलिता अपि असौ, अस्य केलिषु ह्रीभरं न जहाति" इति, हे मानिनि ! त्वया स्फुटं सखीभिः परिहास्यमानया मा स्म भूयत॥ परिण्या–भर्त्रा ॥ ५६ ॥

**इति प्रिये वादिनि वेदिकोदरी स्मितप्रभासुन्दरमास्यमण्डलम् ।**
**वितन्वती किञ्चिदचीकरद्दृशौ नृपस्य पञ्चामृतसारपारणाम् ॥५७॥**

प्रियभाषणं श्रुत्वा सीता स्मितं करोति । इति प्रिये वादिनि (सति) वेदिकोदरी (सा) आस्यमण्डलं किञ्चित् स्मितप्रभासुन्दरं वितन्वती नृपस्य दृशौ पञ्चामृतसारपारणाम् अचीकरत् ॥ वेदिकोदरी–वेदिकावत् कृशमध्या । अचीकरत्–कारयामास ॥ ५७ ॥

**न पारयेऽहं भवदन्तिकाश्रये त्वयैव मत्पार्श्वमुपेष्यतामिति ।**
**जुहाव कान्तं मुहुरङ्घ्रिणैव सा विलज्जिता भूमिविलेखनच्छलात् ॥ ५८ ॥**

लज्जावत्याः सीतायाः पादेन भूमिविलेखनं वर्णयति । 'अहं भवदन्तिकाश्रये न पारये । त्वया एव मत्पार्श्वं उपेष्यताम्' इति विलज्जिता सा भूमिविलेखनच्छलात् अङ्घ्रिणा एव कान्तं मुहुः आजुहाव ॥ उपेष्यताम्–उपागम्यताम् । अङ्घ्रिणा–पादेन ॥ ५८ ॥

**ततो निजोत्सङ्गतले निवेश्य तामुपेत्य पार्श्वं कमिता नताननाम् ।**
**प्रतिप्रतीकेक्षणचुम्बनादिभिश्चकार दक्षः परिशील्य निस्त्रपाम् ॥ ५९ ॥**

रामः सीतामङ्क उपवेश्य लालयति । ततः दक्षः कमिता पार्श्वं उपेत्य नताननां तां निजोत्सङ्गतले निवेश्य प्रतिप्रतीकेक्षणचुम्बनादिभिः परिशील्य निस्त्रपां चकार ॥ दक्षः–चतुरः । प्रतीकाः–अवयवाः ॥ ५९ ॥

**स लालयित्वा चिरमङ्कपञ्जरे बबन्ध तस्या हृदि हार्दमीदृशम् ।**
**यदेति नापद्यपि संपदि क्षयं वनेऽपि नाकेऽपि यतो न गच्छति ॥ ६० ॥**

रामः सीताया हृदि अक्षय्यं प्रेम रूढमूलमकरोदित्याह । सः चिरं अङ्कपञ्जरे लालयित्वा, यत् (हार्दम्) आपदि सम्पदि अपि क्षयं न एति, वने अपि नाके अपि यतः (स्वस्मात्) न गच्छति, ईदृशं हार्दं तस्याः हृदि बबन्ध ॥ यतः–गच्छतः । हार्दम्–प्रेम ॥ ६० ॥

**अधिप्रभातं दयितस्य मन्दिराद्विनिर्यती सा सहसा व्यहस्यत ।**
**विलोकय स्वर्णघटे कलां नवां विधोरिति स्पष्टवचोभिरालिभिः ॥ ६१ ॥**

प्रभाते सख्यः सीतां परिहसन्ति । अधिप्रभातं दयितस्य मन्दिरात् सहसा विनिर्यती सा, "स्वर्णघटे नवां विधोः कलां विलोकय" इति स्पष्टवचोभिः आलिभिः व्यहस्यत ॥ विधोः–चन्द्रस्य । आलिभिः–सखीभिः ॥ ६१ ॥

**प्रियास्यताम्बूलरसारुणे दृशौ सखीजने पश्यति सस्मितं वधूः ।**
**स्फुटं कराभ्यामलकावतंसितप्रसूनरेणोरपराधमभ्यधात् ॥ ६२ ॥**

कारणान्तरमुक्त्वा प्रियोपभोगचिह्नं सीता निगूहति। सखीजने, प्रियास्यताम्बूलरसारुणे दृशौ सस्मितं पश्यति, वधूः अलकावतंसितप्रसूनरेणोः अपराधं कराभ्यां स्फुटं अभ्यधात् ॥ अलकाः—चूर्णकुन्तलाः। अवतंसितानि—भूषितानि। अभ्यधात्—उक्तवती ॥ ६२ ॥

**विनीतिभाजैव विनेतुरन्तिकं तयाभिसस्रे न कदाचनान्यथा।**
**तथा च तस्याजनि तत्र निस्तुला प्रवर्धमाना प्रियता नतभ्रुवि ॥ ६३ ॥**

सीताया विनयेन प्रियोपसरणमाह—**विनीतीति**। तया विनीतिभाजा एव विनेतुः अन्तिकम् अभिसस्रे। कदाचन अन्यथा न (अभिसस्रे)। तथा च तस्य तत्र नतभ्रुवि निस्तुला प्रियता प्रवर्धमाना अजनि ॥ विनेतुः—भर्तुः। अभिसस्रे—उपजगाम। प्रियता—प्रेम ॥ ६३ ॥

**अजस्रमस्यां रसभागपि क्षितेः सहस्रनेत्रः सुहितत्वमाप न।**
**निमेषकालोऽपि वियोगवासितो विकल्पितस्तेन स कल्पकल्पतः ॥ ६४ ॥**

सीतोपभोगे रामस्य अनलम्भावमाह—**अजस्रमिति**। क्षितेः सहस्रनेत्रः अजस्रम् अस्यां रसभाग् अपि सुहितत्वं न आप। वियोगवासितः सः निमेषकालः अपि तेन कल्पकल्पतः विकल्पितः ॥ क्षितेः सहस्रनेत्रः—राजा। सुहितत्वम्—तृप्तिम्। वियोगवासितः—विरहसहितः। कल्पकल्पतः—अत्यन्तदीर्घेण ब्रह्मकल्पेन सदृशः। विकल्पितः—सङ्कल्पितः ॥६४॥

**पिबत्यमुष्मिन् रदनच्छदं मृदु न्यषेधि यत् कुञ्चितया तया भ्रुवा।**
**रराज राजीवशरासनस्य तत् पतिं प्रति स्वायुधदण्डवक्रता ॥ ६५ ॥**

सीताया भ्रूनिकुञ्चनं वर्णयति—**पिबतीति**। अमुष्मिन् मृदु रदनच्छदं पिबति (सति) कुञ्चितया भ्रुवा तया यत् न्यषेधि, तत्, पतिं प्रति, राजीवशरासनस्य स्वायुधदण्डवक्रता-रराज ॥ रदनच्छदम्—अधरम्। राजीवशरासनस्य—कामस्य। स्वायुधदण्डः—शोभनचाप-दण्डः ॥ ६५ ॥

**प्रियामुखेन्दोरमृतं धयन्नयं चिराय कान्तो न विरन्तुमैहत।**
**अतो रुषेव प्रमदापि पाणिजैरमुष्य पार्श्वे विरराद कोमलैः ॥ ६६ ॥**

सीतया रामपार्श्वे नखक्षतकरणं वर्णयति । प्रियामुखेन्दोः अमृतं चिराय धयन् अयं कान्तः विरन्तुं न ऐहत । अतः रुषा इव प्रमदा अपि कोमलैः पाणिजैः अमुष्य पार्श्वे विरराद ॥ धयन्–पिबन् । ऐहत–ऐच्छत् । रुषा–कोपेन । प्रमदा–कान्ता । पाणिजैः–नखैः । विरराद–उत्कीर्णवती ॥ ६६ ॥

**ललाटमौलौ करमेककं वरश्चकार तस्याश्चिबुकेऽपि चापरम् ।**
**उभावभातामभितः सुधाकरं परं ग्रसन्ती इव पङ्कजे हठात् ॥ ६७ ॥**

चुम्बनकाले सीतायां रामस्य करयुगलव्यापारं वर्णयति—ललाटेति । वरः एककं करं तस्याः ललाटमौलौ, अपरं (करं) चिबुके अपि च चकार । उभौ (करौ) अभितः सुधाकरं हठात् ग्रसन्ती पङ्कजे इव परं अभाताम् ॥ चिबुके--ओष्ठाधोभागे । अभितः–उभयोर्भागयोः । अभाताम्–अशोभेताम् ॥ ६७ ॥

**निवेशिते चुम्बनलीलयामुना करे शिरस्यम्बुधिमेखलाभुवः ।**
**निजा मुखेनाम्बुरुहातपत्रिणा स्फुटीकृतेवाननसार्वभौमता ॥ ६८ ॥**

सीताशिरसि रामेण कृतं करार्पणं वर्णयति । असुना चुम्बनलीलया अम्बुधिमेखला-भुवः शिरसि करे निवेशिते (सति) अम्बुरुहातपत्रिणा मुखेन निजा आननसार्वभौमता स्फुटीकृता इव ॥ अम्बुधिमेखलाभुवः–सीतायाः । अम्बुरुहातपत्रिणा–पद्मच्छत्रवता ॥ ६८ ॥

**निधाय मध्ये चिबुकस्य तर्जनीं स तोलयामास शनैर्मृगीदृशः ।**
**स्मितामृतं स्यन्दय वक्त्रचन्दिरादितीव लौल्यात् प्रहितः स्वचक्षुषा ॥**

रामः सीतायाश्चिबुकमुन्नमयति । "वक्त्रचन्दिरात् स्मितामृतं स्यन्दय" इति लौल्यात् स्वचक्षुषा प्रहितः इव सः, मृगीदृशः चिबुकस्य मध्ये तर्जनीं निधाय शनैः तोलयामास ॥ चन्दिरः–चन्द्रः । प्रहितः–प्रेरितः । तोलयामास–उन्नमयामास ॥ ६९ ॥

**महीभृतां यः परिहाप्य धीरतामचीकरत्तान् करदानमात्मनः ।**
**स एष दृष्ट्वा तदुरोजभूभृतौ विमुक्तधैर्यं करदत्वमेयिवान् ॥ ७० ॥**

रामेण कृतं सीतास्तनयोः करार्पणमाह। यः महीभृतां धीरतां परिहाप्य तान् आत्मनः करदानम् अचीकरत्, सः एषः तदुरोजभूभृतौ दृष्ट्वा विमुक्तधैर्यं करदत्वं एयिवान्॥ महीभृताम्—राज्ञाम्। करः—भागः। अचीकरत्—कारयामास। तदुरोजभूभृतौ—तस्याः स्तनपर्वतौ। करदः—हस्तदाता, भागदाता च। एयिवान्—गतवान्॥ ७०॥

**समुद्रकाञ्चीदुहितुः स्तनद्वयं समुद्रघूणामधिपो नखक्षतैः।**
**स मुद्रयामास तदा तदाबभौ समुतस्वर्णघटीव विद्रुमैः॥ ७१॥**

सीतास्तनयो रामकृतं नखक्षतमुद्रणमाह। समुत् सः रघूणां अधिपः समुद्रकाञ्चीदुहितुः स्तनद्वयं नखक्षतैः मुद्रयामास। तदा तत्, विद्रुमैः समुद्द्रुतस्वर्णघटी इव आबभौ॥ समुत्—सहर्षः। समुद्रकाञ्चीदुहितुः—सीतायाः। समुद्द्रुतस्वर्णघटी--तप्तकाञ्चनकुम्भः। आबभौ—बभासे॥ ७१॥

**उरोजसीम्नि छुरितं वितन्वति क्षितीश्वरे साकृत-मन्दसीत्कृतम्।**
**चुचुम्ब तस्याधरमप्यनेन तत्सुखात् समारब्धविधेर्व्यरम्यत॥ ७२॥**

सीतया रामाय दत्तं प्रतिचुम्बनं वर्णयति। क्षितीश्वरे उरोजसीम्नि छुरितं वितन्वति, सा अपि कृतमन्दसीत्कृतं तस्य अधरं चुचुम्ब। अनेन तत्सुखात् समारब्धविधेः व्यरम्यत॥ उरोजसीम्नि—स्तनतटे। छुरितम्—कामशास्त्रप्रसिद्धं नखक्षतमुद्रणम्। समारब्धविधेः—प्रक्रान्तकर्मणः॥ ७२॥

**दुकूलमाकर्षति वल्लभे सति निलीय तस्यैव तनौ ह्रणीयया।**
**निदाघतोयोदयगाढसंगतैरदःप्रतीकैरखिलाङ्गमावृणोत्॥ ६३॥**

वस्त्राक्षेपं वर्णयति—दुकूलमिति। वल्लभे दुकूलं आकर्षति सति, ह्रणीयया तस्य एव तनौ निलीय निदाघतोयोदयगाढसङ्गतैः अदःप्रतीकैः अखिलाङ्गम् आवृणोत्॥ दुकूलम्—वस्त्रम्। ह्रणीयया—लज्जया। निदाघः—स्वेदः। अदःप्रतीकैः—अमुष्य अवयवैः। आवृणोत्—आवरणं कृतवती॥ ७३॥

**परास्तपारावतकूजितै रुतै रते नितान्तं पतिकर्णयोरपि।**
**ववर्ष पीयूषरसं रसात्मजा न केवलं तद्रसनेऽधरार्पणात्॥ ७४॥**

सीताया अधरार्पणं रतिकूजितं च वर्णयति । रते रसात्मजा, अधरार्पणात् न केवलं तद्रसने, परास्तपारावतकूजितैः रुतैः पतिकर्णयोः अपि नितान्तं पीयूषरसं ववर्ष ॥ रसा—भूमिः । रसने—जिह्वायाम् । पारावतः—कपोतः । रुतैः—कूजितैः ॥ ७४ ॥

**पपौ विशङ्कं वसुधासुता सुधां तदाननात् तृप्तमिनस्य मानसम् ।**
**असङ्गतिश्चेतसि शृण्वतामिदं निरस्यते तद्धृदयापृथक्तया ॥ ७५ ॥**

रामस्य मनस्तृप्तिं प्रस्तौति——पपाविति । वसुधासुता तदाननात् सुधां पपौ । इनस्य मानसं तृप्तम् । इदं शृण्वतां चेतसि असङ्गतिः, तद्धृदयापृथक्तया निरस्यते ॥ वसुधासुता—सीता । इनस्य—पत्युः । असङ्गतिः—अनुपपत्तिः । तद्धृदयापृथक्तया—रामहृदयैक्येन ॥

**चिराय चेतोभवकेलिसागरे तरङ्गलीलामनुभूय दम्पती ।**
**विलोचनोन्मेषविलोपरोपणक्षमं श्रमं तौ सुतरामवापतुः ॥ ७६ ॥**

उभौ कामकेलिभिः श्रान्तौ भवतः । तौ दम्पती चिराय चेतोभवकेलिसागरे तरङ्ग-लीलाम् अनुभूय सुतरां विलोचनोन्मेषविलोपरोपणक्षमं श्रमम् अवापतुः ॥ चेतोभवकेलि-सागरे—कामलीलासमुद्रे । विलोचनोन्मेषविलोपरोपणक्षमम्—नेत्रनिमीलनकरम् । श्रमम्—क्लान्तताम् ॥ ७६ ॥

**अखण्डनिःश्वासपरम्पराकिरामसङ्कुचत्स्वेदकणाङ्किताननाम् ।**
**मुहुः कृताचुम्बनमन्तरान्तरा स वीजयामास चिरं जलार्द्रया ॥ ७७ ॥**

रामः प्रियां वीजयति । अखण्डनिःश्वासपरम्पराकिराम् असङ्कुचत्स्वेदकणाङ्किताननाम् (ताम्) अन्तरा अन्तरा मुहुः कृताचुम्बनं जलार्द्रया सः चिरं वीजयामास ॥ असङ्कुचन्—प्रसरन् । जलार्द्रया—जलोक्षिततालवृन्तेन ॥ ७७ ॥

**रतश्रमस्विन्नकपोलमण्डलं विलोकयन्ती मुखमस्य सुन्दरी ।**
**निजाधरे विद्रुमभासि तद्रदैः कृतं यदागस्तदवागमत् स्फुटम् ॥ ७८ ॥**

सीता स्विन्नकपोलं प्रियमुखमवलोकयति । रतश्रमस्विन्नकपोलमण्डलम् अस्य मुखं विलोकयन्ती सुन्दरी विद्रुमभासि निजाधरे तद्रदैः यद् आगः कृतम्, तद् स्फुटम्

अवागमत् ॥ विद्रुमभासि–प्रवालवद्रक्तवर्णे । रदैः–दन्तैः । आगः–अपराधः । अवागमत्–ज्ञातवती ॥ ७८ ॥

**विलोक्य वक्त्रं करदर्पणे निजं स्मितक्रियामाचरति क्षितीश्वरे ।**
**विलोचनप्रान्तचरत्कनीनिकं मुखं मृदुस्मेरमनामि कान्तया ॥ ७९ ॥**

सीता लज्जया नम्रमुखी भवति । करदर्पणे निजं वक्त्रं विलोक्य क्षितीश्वरे स्मितक्रियाम् आचरति (सति) कान्तया विलोचनप्रान्तचरत्कनीनिकं मृदुस्मेरं मुखम् अनामि ॥ कनीनिका–अक्ष्णस्तारका । अनामि–नामितम् ॥ ७९ ॥

**ददर्श पश्यन्नपि तत् कलेवरं चुचुम्ब चुम्बन्नपि तन्मुखाम्बुजम् ।**
**अजस्रमालिङ्गितवानपि प्रियः स्तनोपपीडं मुहुरालिलिङ्ग ताम् ॥८०॥**

रामः प्रियां मुहुः पश्यति, चुम्बति, अलिङ्गति । प्रियः तत्कलेबरं पश्यन् अपि (मुहुः) ददर्श, तन्मुखाम्बुजं चुम्बन्नपि (मुहुः) चुचुम्ब । अजस्रम् आलिङ्गितवान् अपि तां स्तनोपपीडं मुहुः आलिलिङ्ग ॥ स्तनोपपीडम्–स्तनावुपपीड्य ॥ ८० ॥

**रतश्रमालस्यभृतो महीभृतो निदाघपूरप्रशमे निदानता ।**
**दधे दधानैरपि कोष्णतामहो तदीयनासापथिकैः समीरणैः ॥ ८१ ॥**

रामस्य स्वेदः शमं गच्छति । कोष्णतां दधानैः अपि तदीयनासापथिकैः समीरणैः, रतश्रमालस्यभृतः महीभृतः निदाघपूरप्रशमे निदानता दधे अहो ! ॥ कोष्णताम्–मन्दोष्णताम् । निदाघः–स्वेदः । निदानता–करणत्वम् । दधे–धृता । अहो–आश्चर्यम् ॥ ७१ ॥

**श्रमापनोदाय शशाङ्ककोमलं तदङ्गमात्मोरसि सन्निधाय सः ।**
**असिस्वदत्तन्मृदुतां यदा तदा चुकोप ताभ्यां पुनरप्यनन्यजः ॥ ८२ ॥**

सीतारामयोः कामः पुनरपि उज्जृम्भते । सः श्रमापनोदाय शशाङ्ककोमलं तदङ्गम् आत्मोरसि सन्निधाय तन्मृदुतां यदा असिस्वदत् , तदा अनन्यजः ताभ्यां पुनः अपि चुकोप ॥

सन्निधाय–सम्यक् धृत्वा । असिस्वदत्–आस्वादयामास । अनन्यजः–कामः । ताभ्याम्–सीतायै रामाय च ॥ ८२ ॥

**रसातिरेकस्तरसाऽतिवेलतां गतो नताङ्ग्याः श्रितकान्तवक्षसः ।**
**विनेतुमेनां पुरुषायिते रते मनोभुवा देशिकभावमापितः ॥ ८३ ॥**

सीता पुरुषायिते प्रवर्तते । श्रितकान्तवक्षसः नताङ्ग्याः तरसा अतिवेलतां गतः रसातिरेकः, पुरुषायिते रते एनां विनेतुं मनोभुवा देशिकभावम् आपितः ॥ विनेतुम्–परिशीलयितुम् । मनोभुवा–कामेन ॥ ८३ ॥

**यथेष्टमस्यामपशङ्कमत्रपं रतिक्रियाविक्रमभाजि भूपतेः ।**
**चिराय चूतायुधपीडनासहं कृतार्थतामानि बभूव मानसम् ॥ ८४ ॥**

रामः कृतार्थतां भजते । अस्यां यथेष्टम् अपशङ्कम् अत्रपं रतिक्रियाविक्रमभाजि (सत्यां) चिराय चूतायुधपीडनासहं भूपतेः मानसं कृतार्थतामानि बभूव ॥ चूतायुधः–कामः ॥ ८४ ॥

**विदग्धवेश्यास्वपि विद्यते न या प्रकाशिता सा रतिचातुरी तया ।**
**सदैव सारस्यसरस्वतामुना सहासिकां यां सुमतिः प्रतीच्छति ॥ ८५ ॥**

सीताया रतिचातुर्यं वर्णयति—**विदग्धेति** । या विदग्धवेश्यासु अपि न विद्यते, सदा एव सारस्यसरस्वता अमुना सहासिकां यां सुमतिः प्रतीच्छति, सा रतिचातुरी तया प्रकाशिता ॥ सरस्वान्–समुद्रः । सहासिकाम–सहवासवतीम् । सुमतिः–बुद्धिमती सीता ॥

**चिराय भावं परिगृह्य पौरुषं श्रमातिरेकादलसाखिलेन्द्रिया ।**
**अगादुरस्येव वरस्य सुन्दरी शयालुतां शीतलितैतदन्तरा ॥ ८६ ॥**

सीता श्रान्ता प्रियोरसि शेते । चिराय पौरुषं भावं परिगृह्य श्रमातिरेकाद् अलसाखिलेन्द्रिया सुन्दरी, शीतलितैतदन्तरा वरस्य उरसि एव शयालुताम् अगात् ॥ पौरुषम्–पुरुषसम्बन्धिनम् । शीतलितैतदन्तरा–शीतलीकृतरामहृदया ॥ ८६ ॥

**मुखाब्जमीषन्मुकुलीकृतेक्षणं मुहुर्मुहुश्चुम्बति वल्लभे वधूः ।**
**प्रपन्नसंज्ञा तदनु त्रपाबलाद्विहाय शय्यामपि सावसत् क्षणम् ॥ ८७ ॥**

सीता ततोऽधिकं लज्जते । तदनु वल्लभे ईषन्मुकुलीकृतेक्षणं मुखाब्जं मुहुर्मुहुः चुम्बति (सति), सा वधूः प्रपन्नसंज्ञा त्रपाबलात् शय्याम् अपि विहाय क्षणम् अवसत् ॥ प्रपन्नसंज्ञा—लब्धबोधा ॥ ८७ ॥

**विकीर्णमालाकबरं कचोत्करं विभिन्नहारस्फुरितं पयोधरम् ।**
**अपि श्रमाम्भस्सुभगं मुखाम्बुजं निरीक्ष्य तृप्तिं ययतुर्न तद्दृशौ ॥**

रामः सीताङ्गसौन्दर्यं नयनाभ्यां पिबति । विकीर्णमालाकबरं कचोत्करं, विभिन्नहार-स्फुरितं पयोधरम् , श्रमाम्भस्सुभगं मुखाम्बुजं अपि निरीक्ष्य तद्दृशौ तृप्तिं न ययतुः ॥ विकीर्ण-मालाकबरम्—विक्षिप्तमाल्यबन्धम् । कचोत्करम्—केशभारम् । पयोधरम्—स्तनम् ॥ ८८ ॥

**उदूढसम्मोदमथो यथापुरं प्रियस्य पार्श्वे शयितापि सुन्दरी ।**
**विचिन्त्य सा केवलमात्मसाहसं प्रियाननं प्रेक्षितुमक्षमाभवत् ॥ ८९ ॥**

लज्जिता सीता पुनः पत्युर्मुखं वीक्षितुं न क्षमते । अथो यथापुरं उदूढसम्मोदं प्रियस्य पार्श्वे शयिता अपि सा सुन्दरी केवलम् आत्मसाहसं विचिन्त्य प्रियाननं प्रेक्षितुम् अक्षमा अभवत् ॥ यथापुरम्—यथापूर्वम् । अक्षमा—असमर्था ॥ ८९ ॥

**अतिश्रमार्तौ चिरकालखेलनात् परस्पराश्लेषसमर्पिताङ्गकौ ।**
**सुखस्य रूपान्तरमेव मूर्च्छतश्चिरस्य निद्रामथ गच्छतः स्म तौ ॥ ९० ॥**

सीतारामौ निद्रासुखमनुभवतः । चिरकालखेलनात् अतिश्रमार्तौ तौ परस्पराश्लेष-समर्पिताङ्गकौ मूर्च्छतः सुखस्य रूपान्तरं एव निद्रां चिरस्य गच्छतः स्म ॥ मूर्च्छतः—वर्ध-मानस्य । चिरस्य—चिरम् ॥ ९० ॥

**प्रभातकाले प्रथमप्रबुद्धया विचुम्ब्यमानः स्फुटमानने तथा ।**
**प्रबुद्धवानप्ययमप्रबुद्धवच्चिराय शेते स्म सुखानुभावुकः ॥ ९१ ॥**

प्रभाते तौ प्रबुध्येते। प्रभातकाले प्रथमप्रबुद्धया तया स्फुटम् आनने विचुम्ब्यमानः प्रबुद्धवान् अपि अयम् अप्रबुद्धवत् सुखानुभावुकः चिराय शेते स्म ॥ सुखानुभावुकः–सुखमनुभवन्, अनुभावयन्नपि। चिराय–चिरम् ॥ ९१ ॥

**विहाय शय्यां कथमप्युदञ्चति प्रभाकरे केलिगृहाद्विनिर्यती।**
**नृपेण पश्चादुपगम्य सत्वरं निवर्त्य सा द्वारि विचुम्बिता चिरम् ॥ ९२ ॥**

समुत्थाय गच्छन्तीं सीतां रामः पुनरपि चुम्बति। प्रभाकरे उदञ्चति शय्यां विहाय कथमपि केलिगृहात् विनिर्यती सा, नृपेण सत्वरं पश्चात् उपगम्य द्वारि निवर्त्य चिरं विचुम्बिता ॥ प्रभाकरे–सूर्ये। उदञ्चति–उद्गच्छति। विनिर्यती–निर्गच्छन्ती। पश्चात्–पृष्ठतः ॥ ९२ ॥

**विलोलकेशावलि कीर्णमाल्यकं कृशाङ्गरागं करजव्रणाङ्कितम्।**
**बभूव तस्याः परिमर्दविश्लथं मुदे सखीनां वपुरन्वहर्मुखम् ॥ ९३ ॥**

सख्यः प्रियोपभुक्तां सीतां दृष्ट्वा तुष्यन्ति। विलोलकेशावलि कीर्णमाल्यकं कृशाङ्गरागं करजव्रणाङ्कितं परिमर्दविश्लथम् तस्याः वपुः, अन्वहर्मुखं सखीनां मुदे बभूव ॥ करजाः–नखाः। अन्वहर्मुखम्–प्रभाते ॥ ९३ ॥

**वियुक्तिरावश्यककर्मकालिकी तयोरभूत् केवलमेकभावयोः।**
**अवापतुस्तावत एव दम्पती नवं नवं प्रीतिभरं समागमे ॥ ९४ ॥**

अहन्यपि सीतारामौ भूयः समागच्छतः। एकभावयोः तयोः केवलम् आवश्यककर्मकालिकी वियुक्तिः अभूत्। अतः एव तौ दम्पती समागमे नवं नवं प्रीतिभरम् अवापतुः ॥ वियुक्तिः–विरहः ॥ ९४ ॥

**मिथः कृतस्वैरकथारसामृतैः पुराणकाव्यादिविलोकनैरपि।**
**सुजातसङ्गीतमुखाभिरप्युभौ कलाभिरेतौ दिवसानि निन्यतुः ॥ ९५ ॥**

सीतारामौ तैस्तैर्विनोदैर्दिवसानि नयतः। एतौ उभौ मिथः कृतस्वैरकथारसामृतैः, पुराणकाव्यादिविलोकनैः अपि, सुजातसङ्गीतमुखाभिः कलाभिः अपि, दिवसानि निन्यतुः ॥ सुजातम्–सुन्दरम् ॥ ९५ ॥

**इत्थं तयोर्विहरतोरितरेतरेण स्वच्छन्दमेव गणरात्रमतीतमासीत् ।**
**उद्वेलमन्मथविलासजलाशयोद्यद्वीचीवशंवदहृदन्तरयोरजस्रम् ॥ ९६ ॥**

सीतारामावेवं ससुखं कालं नयतः । इत्थम् इतरेतरेण स्वच्छन्दं एव विहरतोः अजस्रं उद्वेलमन्मथविलासजलाशयोद्यद्वीचीवशंवदहृदन्तरयोः तयोः, गणरात्रम् अतीतम् आसीत् ॥ इतरेतरेण–अन्योन्येन । विहरतोः–रममाणयोः । गणरात्रम्–बह्व्यः निशाः ॥ ९६ ॥

**आरामे रमणीयपादपलतानैरन्तरीबन्धुरे**
**सानन्दं सरसीषु सारसवनीसौरभ्यरम्यास्वपि ।**
**क्रीडाशैलशिरस्सु शेखरशिलासंस्तम्भिताम्भोधरे-**
**ष्वन्यत्रापि मनोहरेषु स तया रेमे यथावाञ्छितम् ॥ ९७ ॥**

**इति श्रीगोदवर्मविद्वद्युवराजकृते**
**श्रीरामचरिते महाकाव्ये**
**तृतीयः सर्गः**

---

रामः सीतया सह उद्यानादिक्रीडारसमनुभवति । रमणीयपादपलतानैरन्तरीबन्धुरे आरामे, सारसवनीसौरभ्यरम्यासु सरसीषु अपि, शेखरशिलासंस्तम्भिताम्भोधरेषु क्रीडाशैल-शिरस्सु, अन्यत्र अपि मनोहरेषु (प्रदेशेषु), सः तया (सह) यथावाञ्छितं सानन्दं रेमे ॥ नैरन्तरी–सान्द्रता । बन्धुरे—उन्नतानते रम्ये च ॥ ९७ ॥

**इति पण्डितरत्नश्रीनारायणपिषारोटिविरचितायां**
**श्रीरामचरितमहाकाव्यव्याख्यायां अन्वयार्थप्रबोधिन्यां**
**कामोपभोगवर्णनं नाम तृतीयः सर्गः**



# चतुर्थः सर्गः

## [ वसन्तवर्णनम् ]

**तदनु भूदनुभूरिपुनायकं सहितमाहितमाननयाऽनया ।**
**सरसमारसमानमुपास्त तं कृतरसा तरसा ततिरार्तवी ॥ १ ॥**

वसन्ताद्या ऋतवः सीतासमेतं रामं सेवितुमुपगच्छन्ति । तदनु आहितमाननया अनया सहितं सरसमारसमानं तं भूदनुभूरिपुनायकम्, आर्तवी ततिः तरसा कृतरसा उपास्त ॥ आहितमाननया–स्वेन, स्वस्मिन्नपि कृतबहुमानया । सरसमारसमानम्–सहर्षकामतुल्यम् । भूदनुभूरिपुनायकम्–भुवः दनुभुवः–दानवाः, असुरा इत्यर्थः । तेषां रिपवः–शत्रवः, देवाः इत्यर्थः । तेषां नायकम्–अधिपतिम्, इन्द्रम्, राजानमित्यर्थः । आर्तवी–ऋतुसम्बन्धिनी । ततिः–सङ्घः । उपास्त–सेवितवती ॥ १ ॥

**प्रथममास मधुर्मधुपाङ्गनामधुरगाननिदानसमृद्धिमान् ।**
**प्रमदकोकिलकोमलकाकलीविलसिता लसिताखिलमानसः ॥ २ ॥**

वसन्तदीप्तिमाह—**प्रथममिति** । मधुपाङ्गनामधुरगाननिदानसमृद्धिमान् प्रमदकोकिलकोमलकाकलीविलसितालसिताखिलमानसः मधुः प्रथमम् आस ॥ मधुपाङ्गनामधुरगानस्य निदानम्–कारणम् । चूताङ्कुर इति भावः । तस्य समृद्धिमान् । प्रमदानां मत्तानां कोकिलानां कोमलाभिः काकलीभिः–कलसूक्ष्मध्वनिभिः विलसितुं शीलमस्येति तथा । लसितं–हर्षितम् अखिलानां मानसं येन स तथा । मधुः–वसन्तः । आस–दीप्तवान् ॥ २ ॥

**सकृतमालतमालवनस्थलींस्फुटसमीरसमीरणमैक्षत ।**
**अतिरसेन रसेनसुतो मधुं विमततामततामतिभीषणः ॥ ३ ॥**

रामो वसन्तविलासमीक्षते । विमतताम् अतताम् अतिभीषणः रसेनसुतः सकृतमालतमालवनस्थलीस्फुटसमीरणं मधुम् अतिरसेन ऐक्षत ॥ विमतताम्—शत्रुत्वम् । अतताम्—प्राप्नुवताम् । शत्रूणामित्यर्थः । रसायाः— भूमेः इनः—पतिः । रसेनसुतः

राजपुत्रः। कृतमालसहितानां तमालानां वनस्थलीषु व्यक्तं समीरं समीरयन्तम्। मधुम्—वसन्तम् ॥ ३ ॥

**चपलपल्लवचम्पकमञ्जरी पथिकमानसपल्वलकुञ्जरी।**
**विलसति स्म विलासवती दवानलसमा लसमानशिखावलिः ॥ ४ ॥**

चम्पकमञ्जरीं वर्णयति—**चपलेति**। पथिकमानसपल्वलकुञ्जरी विलासवती लसमानशिखावलिः चपलपल्लवचम्पकमञ्जरीदवानलसमा विलसति स्म ॥ शिखा, चम्पकमञ्जरीपक्षे अग्रभागः, वनाग्निपक्षे ज्वाला। दवानलः—वनाग्निः ॥ ४ ॥

**सुकृतभागयमेकतमः परं वनतरुस्तबकेषु विकासिषु।**
**अनुबभूव न यो मलिनात्मकभ्रमरपामरपातकृतां व्यथाम् ॥ ५ ॥**

चम्पकस्तबकमेव वर्णयति—**सुकृतेति**। यः मलिनात्मकभ्रमरपामरपातकृतां व्यथां न अनुबभूव, अयं एकतमः परं विकासिषु वनतरुस्तबकेषु सुकृतभाग् (भवति) ॥ मलिनात्मकः नीलदेहः, पङ्किलहृदयश्च। अयम्—चम्पकस्तबकः। परम्—केवलम् ॥ चम्पककुसुमेषु भ्रमरा न पतन्तीति प्रसिद्धिः ॥ ५ ॥

**अचिरशैशिरविक्रमशोषिता कमलिनी करहाटकशेषिता।**
**अजनि तत्र नवीनदलोल्लसद्विमलकोमलकोरकभूषिता ॥ ६ ॥**

पद्मकोरकप्रादुर्भावमाह—**अचिरेति**। अचिरशैशिरविक्रमशोषिता करहाटकशेषिता कमलिनी, तत्र नवीनदलोल्लसद्विमलकोमलकोरकभूषिता अजनि ॥ शैशिरः शिशिरऋतुसम्बन्धी। करहाटः—पद्मकन्दः। तत्र—वसन्ते ॥ ६ ॥

**प्रवसति प्रणयावसथे कथं श्वसिति बालवधूरिति दुःखिता।**
**उचितमेतदिह स्फुटिताम्बुजा वननदी न न दीर्घमशिश्वसत् ॥ ७ ॥**

वननद्यां पद्मविकासं वर्णयति—**प्रवसतीति**।प्रणायावसथे प्रवसति बालवधूः कथम् इवश्वसिति इति दुःखिता वननदी इह स्फुटिताम्बुजा (सती) दीर्घं न न अशिश्वसत्। एतद्

उचितम् ॥ प्रणयावसथे–प्रिये । प्रवसति–विदूरदेशे वसतिश्वसिति–प्राणिति । इह–वसन्ते । स्फुटितम्–विकसितम् ॥ ७ ॥

**नवरसालरसावलिपावके भ्रमदलिव्रजधूमसमाविले ।**
**परभृताहुतिमाधित माधवः सुनयनानयनाय विलासिनाम् ॥ ८ ॥**

कुसुमितान् चूतान् वर्णयति—**नवेति** । माधवः विलासिनां सुनयनानयनाय भ्रमदलिव्रजधूमसमाविले नवरसालरसावलिपावके परभृताहुतिम् आधित ॥ माधवः–वसन्तः । सुनयनाः–सुन्दर्यः । रसालरसाः–चूतपुष्परसाः । तेषामावलिरेव पावकः–अग्निः, तस्मिन् । परभृताहुतिम्–कोकिलप्रीणनरूपं होमम् । आधित–कृतवान् ॥ ८ ॥

**कलकलः कलकण्ठमुखोद्गतः श्रवणगोचरभावमनायि यैः ।**
**निजवधप्रसितस्य चमूकृतध्वनिरमानि रमातनयस्य तैः ॥ ९ ॥**

कोकिलकूजितं वर्णयति—**कलेति** । कलकण्ठमुखोद्गतः कलकलः यैः श्रवणगोचरभावम् अनायि, तैः (सः) निजवधप्रसितस्य रमातनस्य चमूकृतध्वनिः अमानि ॥ कलकण्ठः–कोकिलः । प्रसितस्य–उत्सुकस्य । रमातनयस्य–कामस्य । चमूः–सेना ॥ ९ ॥

**विधृतनैकविधागमवेदिताः सुमनसः खलु माधवपोषिताः ।**
**पदमकुर्वत यामियमुन्मधुद्रवसुधा वसुधा सुरभूरभूत् ॥ १० ॥**

पुष्पसमृद्धिं वर्णयति—**विधृतेति** । विधृतनैकविधागमवेदिताः माधवपोषिताः सुमनसः यां खलु पदम् अकुर्वत । इयं उन्मधुद्रवसुधा वसुधा सुरभूः अभूत् ॥ भूमिपक्षे विधृतनैकविधैः–बहुविधैः अगमैः–वृक्षैः वेदिताः–उत्पादिताः । स्वर्गपक्षे, आगमैः– वेदैः वेदिताः, बोधिताः । माधवः–वसन्तः, विष्णुश्च । सुमनसः–पुष्पाणि, देवाश्च । पदम्–स्थानम् । उद्गतो मधुद्रवः एव सुधा यस्यां सा इति च । वसुधा–भूमिः । सुरभूः–स्वर्गः ॥ १० ॥

**निजविलोचननीररुहापणादतिरसस्तिमितैरिह कैर्जनैः ।**
**कुसुमबाणसखेन सुखासितं विपिनमापि न मानमनेहसा ॥ ११ ॥**

सर्वे जना वसन्ताध्यासितं वनं सबहुमानमवलोकयन्ति। इह कुसुमबाणसखेन अनेहसा सुखासितं विपिनम् अतिरसस्तिमितैः कैः जनैः निजविलोचननीररुहार्पणात् मानं न आपि ॥ कुसुमबाणसखेन — कामसुहृदा। अनेहसा–कालेन वसन्तेनेत्यर्थः। नीररुहम्–पद्मम्। पद्मार्पणं नाम पूजैव खलु। आपि–प्रापितम्॥ ११॥

**तरुणपल्लवताम्रपुटे स्थितं मकरकेतनलिङ्गमिवालिनम्।**
**अभिषिषेच मरन्दरसामृतैर्नवलता वलतापनरत्नभम्॥ १२॥**

लता भृङ्गं पुष्परसेनाभिषिञ्चति। तरुणपल्लवताम्रपुटे स्थितम् वलतापनरत्नभम् अलिनम् मकरकेतनलिङ्गम् इव नवलता मरन्दरसामृतैः अभिषिषेच॥ ताम्रपुटे–शुल्बपात्रमध्ये। वलतापनरत्नभम्–इन्द्रनीलरत्नतुल्यम्। अलिनम्–भृङ्गम्। मकरकेतनलिङ्गम्–कामलिङ्गम्। यथा हि शिवलिङ्गम्॥ १२॥

**बहुलसौरभरञ्जितदिङ्मुखा बहुलशाखिलता प्रति कामिनः।**
**अतनुतागतषट्पदपेशलस्वनमिता नमिता वरवर्णिनीः॥ १३॥**

बकुलसौरभं वर्णयति—**बहुलेति**। बहुलसौरभरञ्जितदिङ्मुखा बकुलशाखिलता आगत-षट्पदपेशलस्वनम् इता (सती) वरवर्णिनीः कामिनः प्रति नमिताः अतनुत॥ बहुलम्–प्रचुरम्। वरवर्णिनीः–सुन्दरीः॥ १३॥

**सुरभिलानिलसंहितवेपथू वनलता वनिता च महोद्यमम्।**
**विदधतुर्युगपत् सकलं जगद्वशयितुं शयितुं दयितेन च॥ १४॥**

वनलतां वर्णयति—**सुरभिलेति**। सुरभिलानिलसंहितवेपथू वनलता वनिता च, सकलं जगत् वशयितुम् दयितेन(सह) शयितुं च युगपत् महोद्यमं विदधतुः॥ संहितवेपथू–कृतगात्रकम्पे। वशयितुम्–वशीकर्तुम्। विदधतुः–कृतवत्यौ॥ १४॥

**महिषपत्रकलत्रहरिद्भवं मरुतमाशु निपीय वियोगिनः।**
**तदनुमेलन एव निरायतं श्वसितमासितमात्मनि तत्यजुः॥ १५॥**

वियोगिनां दक्षिणमारुतपीडां वर्णयति—**महिषेति** । महिषपत्रकलत्रहरिद्भवं मरुतं निपीय वियोगिनः, तदनुमेलने एव आत्मनि आसितं निरायतं श्वसितम् आशु तत्यजुः ।। महिषः पत्रम्—वाहनं यस्य सः महिषपत्रः—यमः । तस्य कलत्रम्—भार्या या हरित्—दिक्, दक्षिणा दिगित्यर्थः । तत्र भवम् । तदनुमेलने—तत्संयोगे । आसितम्—स्थितम् । निरायतम्—सुदीर्घम् ॥ १५ ॥

**इति मधौ वनसीमनि जृम्भिते प्रियतमासहितस्स तु तच्छ्रियम् ।**
**अनुभवन्नतिपेशलतानिधिश्चिरमतोऽरमतोदितकौतुकः ॥ १६ ॥**

रामो वसन्तलक्ष्मीमनुभवितुमुपक्रमते । इति मधौ वनसीमनि जृंभिते, प्रियतमासहितः अतिपेशलतानिधिः सः तु, अतः उदितकौतुकः तच्छ्रियम् अनुभवन् चिरम् अरमत । मधौ—वसन्ते । पेशलता—चातुर्यम् । तच्छ्रियम्—वसन्तलक्ष्मीम् ॥ १६ ॥

**भ्रमरयौवतगानलयीभवत्परभृतानकनादिनि कानने ।**
**मलयमारुतचारुतमाधुतव्रततिसन्ततिसम्भृतताण्डवे ॥ १७ ॥**

**इतरपुष्टवधूमुखमण्डितस्खलितपल्लवमण्डितभूतले ।**
**सकलदिक्तटवाहिसुगन्धितावमनवामनवागमशोभिते ॥ १८ ॥**

**निजसखोदयदर्पितमन्मथद्विगुणिताधरपानरसावुभौ ।**
**करणसञ्चयनिर्वृतिमापतुश्चिरतरं रतरंहसि निस्सहौ ॥ १९ ॥**

सीतारामयोः वसन्तसौख्यानुभूतिं वर्णयति त्रिभिः श्लोकैः—**भ्रमरेति** । भ्रमरयौवतगानलयीभवत्परभृतानकनादिनि, मलयमारुतचारुतमारुतव्रततिसन्ततिसंभृतताण्डवे, इतरपुष्टवधूमुखमण्डितस्खलितपल्लवमण्डितभूतले सकलदिक्तटवाहिसुगन्धितावमनवामनवागमशोभिते कानने निजसखोदयदर्पितमन्मथद्विगुणिताधरपानरसौ रतरंहसि निस्सहौ (तौ) चिरतरं करणसञ्चयनिर्वृतिम् आपतुः ।। यौवतम्—युवतीसमूहः । इतरपुष्टवध्वः—कोकिलाङ्गनाः । वमनम्—उद्गमनम् । वामाः—अतिसुन्दराः । अगमाः—वृक्षाः । तौ—सीतारामौ । निजसखः—स्वसुहृद्वसन्तः ।

रतरंहसि–कामकेलिवेगे । निस्सहौ–तत्परौ । उभौ–सीताराघवौ । करणसञ्चयनिर्वृतिम्–पञ्चेन्द्रियसुखम् ॥ १७-१८-१९ ॥

[ ग्रीष्मवर्णनम् ]

**अशुचिता यदि केलिवने कथं शुचिरसौ विहरिष्यति भूपतिः ।**
**तदुपयातु भवानिति किं ततः शुचिरवाचि रवाचितषट्पदैः ॥ २० ॥**

ग्रीष्मप्राप्तिमाह—**अशुचीति** । केलिवने अशुचिता यदि (भवति) शुचिः असौ भूपतिः कथं विहरिष्यति, तद् भवान् उपयातु इति ततः रवाचितषट्पदैः शुचिः अवाचि किम् ॥ अशुचिता–अशुद्धता, ग्रीष्माभावश्च । शुचिः–शुद्धः, श्रृङ्गारी च । रवाचितषट्पदैः-सशब्दैः भृङ्गैः । शुचिः–ग्रीष्मः । अवाचि–उक्तः ॥ ३० ॥

**भजतिकल्पमिनः प्रतिपद्य यं सदृशतामदसीयभुजोष्मणः ।**
**उदभवत् स शुचिः पुरतस्ततो नरपतेरपतेजितविद्विषः ॥ २१ ॥**

ग्रीष्मस्य शुचिः इति नाम कथं सिद्धमित्याह—**भजतीति** । इनः यं प्रतिपद्य अदसीय-भुजोष्मणः सदृशतां भजतिकल्पम्, सः, अपतेजितविद्विषः ततः नरपतेः पुरतः शुचिः उद्-भवन् ॥ इनः–सूर्यः । यम्–ग्रीष्मम् । अदसीयभुजोष्मणः–एतत्प्रतापस्य । भजतिकल्पम्–ईषदसमाप्तं प्राप्नोति । सः–ग्रीष्मः । अपतेजितविद्विषः–निस्तेजसः कृताः शत्रवः येन, तस्य । ततः–तस्य । पुरतः–अग्रभागे । शुचिः–शुभ्रवर्णः, तेजोहीनः इत्यर्थः ॥ २१ ॥

**अजनि तस्य पुरा खलु माधवः सुमनसामुदयस्य विधायकः ।**
**प्रियतमावियुजां किमतः शुचिं गदममन्दममन्यत मानसम् ॥ २२ ॥**

ग्रीष्मस्य दुःखदत्वमाह—**अजनीति** । पुरा खलु माधवः तस्य सुमनसाम् उदयस्य विधायकः अजनि । अतः किम् । प्रियतमावियुजां मानसं (कर्तृ) शुचिम् अमन्दं गदम् अमन्यत ॥ माधवः–वसन्तः । विष्णुरिति गम्यते । सुमनसाम्–पुष्पाणाम् । देवना-मिति गम्यते । प्रियतमावियुजाम्–प्रियावियुक्तानाम् । शुचिम्–ग्रीष्मम् । गदम्–रोगम् ॥

**अवरजोऽपि यदि प्रबलो भवेत् परिभवाय नृणामिति दर्शयन् ।**
**अधिकजृम्भणभाजि ततः शुचेः सपदि सम्पदि सङ्कुचितो मधुः ॥**

ग्रीष्मस्य विजृम्भणमाह—**अवरज इति** । अवरजः अपि यदि प्रबलः भवेत् (तर्हि सः) नृणां परिभवाय (भवेत्), इति दर्शयन् मधुः, शुचेः सम्पदि ततः अधिकजृम्भणभाजि (सत्यां) सपदि संकुचितः ॥ अवरजः–अनुजः, अनन्तरजातश्च । वसन्तादनन्तरः खलु ग्रीष्मः । मधुः–वसन्तः । शुचेः–ग्रीष्मस्य ॥२३ ॥

**विपिनराजिवधूकुचभारतामुपगतोऽथ कपीतनपादपः ।**
**मरतकोपलरेणुसमैः सुमैरुदलसद्दलसत्कुसुमन्धयैः ॥ २४ ॥**

आम्रातकवृक्षः कुसुमित इत्याह—**विपिनेति** । अथ विपिनराजिवधूकुचभारताम् उपगतः कपीतनपादपः मरतकोपलरेणुसमैः दलसत्कुसुमन्धयैः सुमैः उदलसत् ॥ कपीतनपादपः–आम्रातकवृक्षः । दलेषु सन्तः कुसुमन्धयाः–भृङ्गाः येषु तैः दलसत्कुसुमन्धयैः ॥ २४ ॥

**अबिभरुः कलिका नवमल्लिका जलधिनोपहृता इव मौक्तिकाः ।**
**प्रसभमत्र निपीय निजोष्मणा भुवि गता विगता विदधत्यपः ॥ २५ ॥**

नवमल्लिकाः कोरकिता इत्याह—**अविभरुरिति** । अत्र निजोष्मणा निपीय भुवि गताः अपः विगताः विदधति (सति) , नवमल्लिकाः जलधिना उपहृताः मौक्तिकाः इव कलिकाः अबिभरुः ॥ अत्र–अस्मिन् ग्रीष्मे । विदधति–कुर्वाणे । उपहृताः–उपायनीकृताः । कलिकाः–कोरकान् । अबिभरुः–धृतवत्यः । समुद्रजलानां अधोगमनेन समुद्राधः विद्यमाना मौक्तिकाः उपर्यागता इव कलिकाः बभुरिति तात्पर्यार्थः ॥ २५ ॥

**तपऋतौ तपनोऽपि निजातपैरविरतं तपति स्म जगत्त्रयम् ।**
**अपि ततिः पततां तृषिता भृशं रुदितमादित मानितवारिदा ॥ २६ ॥**

सूर्यस्य तापाधिक्यं वर्णयति—**तपेति** । तपऋतौ तपनः अपि निजातपैः अविरतं जगत्त्रयं तपति स्म । पततां ततिः अपि भृशं तृषिता (सती) मानितवारिदा रुदितम् आदित ॥ तपः–ग्रीष्मः । तपनः–सूर्यः । तपति स्म–सन्तापयामास । पतताम्–पक्षिणाम् । ततिः–समूहः । रुदितम्–अश्रुविमोक्षणम् । आदित–आददे, कृतवती इत्यर्थः ॥ २६ ॥

**अजनि चित्रमिदं मदनोष्मणा विहितसञ्ज्वरमब्जदृशां हि यत् ।**
**उरसिजद्वयमूष्मभृतो भृशं वरतनोरतनोदतिनिर्वृतिम् ॥ २७ ॥**

उष्णमुष्णेन शाम्यतीत्याश्चर्यं प्रकाशयति—**अजनीति** । मदनोष्मणा विहितसंज्वरम् अब्जदृशां हि उरसिजद्वयं भृशम् ऊष्मभृतः वरतनोः अतिनिर्वृतिम् अतनोत् (इति) यत्, इदं चित्रम् अजनि ॥ उरसिजौ–स्तनौ । ऊष्मभृतः–उष्णायाः । वरतनोः–प्रियशरीरस्य । अतिनिर्वृतिम्–अत्यन्तसुखम् । अतनोत्–अकरोत् । चित्रम्–आश्चर्यम् । उष्णस्यापि स्तनद्वयस्य कामतापशामकत्वाद्विरोधपरिहारः ॥ २७ ॥

**वसुमतीमपि माधववल्लभां विरहितामभुना ह्यतपत्तपः ।**
**मृगदृशः पुनरिष्टवियोगजज्वरवतीरवतीति तु का कथा ॥ २८ ॥**

ग्रीष्मस्य सर्वसन्तापकरत्वमाह—**वसुमतीमिति** । माधववल्लभाम् अमुना विरहितां वसुमतीम् अपि हि तपः अतपत् । इष्टवियोगजज्वरवतीः मृगदृशः पुनः अवति इति तु का कथा ॥ माधववल्लभाम्–वसन्तप्रियाम् । विष्णुप्रियामिति च गम्यते । वसुमतीम्-भूमिम् । अमुना–माधवेन । मृगदृशः–सुन्दरीः । अवति–रक्षति ॥ २८ ॥

**दिनमुखेष्वपि दिक्षु सुदुस्सहं किरति तत्र रवौ किरणव्रजम् ।**
**सलिलखेलनमेव ततः प्रियैः सततमातत मानवतीजनः ॥ २९ ॥**

जलक्रीडामाह—**दिनेति** । तत्र दिनमुखेषु अपि रवौ दिक्षु सुदुस्सहं किरणव्रजं किरति (सति) मानवतीजनः ततः प्रियैः (सह) सततं सलिलखेलनम् एव आतत ॥ किरति—वर्षति । आतत–अकरोत् ॥ २९ ॥

**नरवरोऽपि निषेवितुमागतं परिसरोपवनोपहितश्रियम् ।**
**सदकरोदृतुमेनमुदारधीरसदृशः स दृशः पदवीं नयन् ॥ ३० ॥**

रामस्तं ग्रीष्मं दर्शनेन सत्कृतवानित्याह—**नरेति** । उदारधीः असदृशः सः नरवरः अपि निषेवितुम् आगतं परिसरोपवनोपहितश्रियम् एनम् ऋतुं दृशः पदवीं नयन् सदकरोत् ॥ उपहितश्रियम्–समर्पितसम्पदम् । दृशः–नेत्रस्य । सदकरोत्–सत्कृतवान् ॥ ३० ॥

**मलयजद्रवसारविलेपनद्विगुणशीतलभावसुगन्धिना ।**
**विधृतमोदमरंस्त स सन्ततं स्तनयुगेन युगेव मृगीदृशः ॥ ३१ ॥**

रामस्य ग्रीष्मोपभोगमाह—**मलयेति** । सः मलयजद्रवसारविलेपनद्विगुणशीतलभावसुगन्धिना मृगीदृशः स्तनयुगेन युग् एव सन्ततं विधृतमोदम् अरंस्त ॥ मृगीदृशः—सारङ्गाक्ष्याः सीतायाः । युग्—युक्तः । अरंस्त—क्रीडितवान् ॥ ३० ॥

**परिलसत्तृणशून्यमतल्लिकापरिमलावहमारुतसेवितः ।**
**व्यहरदेष वनेषु सरस्सु वा सह तया हतया मदनेषुभिः ॥ ३२ ॥**

रामस्य वनक्रीडां जलक्रीडां चाह—**परीति** । एषः मदनेषुभिः हतया तया सह परिलसत्तृणशून्यमतल्लिकापरिमलावहमारुतसेवितः वनेषु सरस्सु वा व्यहरत् ॥ परिलसन्, तृणशून्यः, मतल्लिकापरिमलावहः—प्रशस्तसौरभ्यशाली च यो मारुतः, तेन सेवितः । व्यहरत्—क्रीडितवान् ॥ ३२ ॥

**[ वर्षावर्णनम् ]**

**तदनु तस्य पुरोभुवि भूपतेरखिलतापनिवारणपेशलः ।**
**उदभवन्महिमा महितो जनैररमृतोरमृतोदयकारिणः ॥ ३३ ॥**

वर्षाप्रारम्भमाह—**तदन्विति** । तदनु तस्य भूपतेः पुरोभुवि, अखिलतापनिवारणपेशलः जनैः महितः, अमृतोदयकारिणः ऋतोः महिमा अरम् उदभवत् ॥ पेशलः—दक्षः । महितः—पूजितः । अमृतोदयः—जलवृद्धिः । महिमा—महत्त्वम् । अरम्—क्षिप्रम् । उदभवत्—प्रत्यक्षतां गतः ॥ ३३ ॥

**अभिनवैरुदजृम्भि नभस्स्थले जलधरैरुपगूढतडिद्गुणैः ।**
**नरपतेर्नगरीबहिरङ्कणे करिवरैरिव रैमयभूषणैः ॥ ३४ ॥**

मेघोज्जृम्भणं वर्णयति—**अभीति** । नभस्स्थले अभिनवैः उपगूढतडिद्गुणैः जलधरैः, नरपतेः नगरीबहिरङ्कणे रैमयभूषणैः करिवरैः इव, उदजृम्भि ॥ उपगूढाः—आश्लिष्टाः तडिद्गुणाः—विद्युल्लताः यैः, तैः । रैमयानि—स्वर्णमयानि । उदजम्भि—उज्जृम्भितम् ॥ १४ ॥

**मघवकार्मुकमण्डितमम्बरे मुदिरजालमुदीक्ष्य शिखण्डिनः ।**
**तदुपमारसिका इव पिञ्छिकाभरमुदारमुदा परितेनिरे ॥ ३५ ॥**

मयूराणां हर्षानुभावमाह—**मघवेति** । अम्बरे मघवकार्मुकमण्डितं मुदिरजालं उदीक्ष्य शिखण्डिनः तदुपमारसिकाः इव उदारमुदा पिञ्छिकाभरं परितेनिरे ॥ अम्बरे—आकाशे । मघवकार्मुकम्—इन्द्रचापम् । मुदिराः—मेघाः । शिखण्डिनः—मयूराः । उदारमुदा—महता सन्तोषेण । पिञ्छिकाभरम्—बर्हजालम् । परितेनिरे—मण्डलीकृतवन्तः ॥ ३५ ॥

**हरिणनाभिरिवारुणरूपया कृतरुचिर्नवकुङ्कुमरेखया ।**
**हृदि नृणामधिकं जलदावलिर्मुदमदादमराधिपचापिनी ॥ ३६ ॥**

सेन्द्रचापां मेघावलिं वर्णयति—**हरिणेति** । अरुणरूपया नवकुङ्कुमरेखया कृतरुचिः हरिणनाभिः इव अमराधिपचापिनी जलदावलिः नृणां हृदि मुदम् अधिकम् अदात् ॥ हरिणनाभिः—कस्तूरी । अदात्—दत्तवती ॥ ३६ ॥

**अभिनवाभ्रलसद्बिसकण्ठिकाकपटकैशिकभूषितमल्लिका ।**
**जलदकालविभूतिवधूरियं व्यतनुतातनुतापशमं नृणाम् ॥ ३७ ॥**

वर्षाकालस्य कामतापोपशमनकारितां वर्णयति—**अभिनवेति** । अभिनवाभ्रलसद्बिसकण्ठिकाकपटकैशिकभूषितमल्लिका इयं जलदकालविभूतिवधूः नृणाम् अतनुतापशमं व्यतनुत ॥ अभ्रम्—मेघः । बिसकण्ठिका—वलाका । कैशिकम्—केशकलापम् । विभूतिः—ऐश्वर्यम् । अतनुतापः—कामतापः । व्यतनुत—कृतवती ॥ ३७ ॥

**प्रबलमारुतवेगसमीरिता सकलदिक्षु जवेन विसर्पिणी ।**
**घनततिर्धरणीभवनोपरि प्रविततां विततान वितानभाम् ॥ ३८ ॥**

मेघानामाकाशविसर्पणं वर्णयति—**प्रबलेति** । प्रबलमारुतवेगसमीरिता सकलदिक्षु जवेन विसर्पिणी घनततिः धरणीभवनोपरि प्रवितता वितानभां विततान । प्रवितता—व्याप्ता । वितानभाम्—उल्लोचकान्तिम् । विततान—कृतवती ॥ ३८ ॥

**पतितमभ्रमुखादुदबिन्दुभिः पथिकलोचनवारिकणैः समम् ।**
**अवनिरेणुरपि प्रमदारुषा व्युपरता परतापविधायिनी ॥ ३९ ॥**

वर्षणं धूलिप्रशमनं च वर्णयति--**पतितमिति** । पथिकलोचनवारिकणैः समम् अभ्र-मुखात् उदबिन्दुभि :पतितम् । प्रमदारुषा (समम्) परतापविधायिनी अवनिरेणुः अपि व्युपरता । पथिकाः–विरहिणः । प्रमदारुषा–कान्ताकोपेन । अवनिरेणुः–भूमिधूलिः । व्युपरता–शशाम ॥ ३९ ॥

**दिनकराय घनैः स्थगितात्मने कथयितुं किमु वारिजविप्लवम् ।**
**सपदि हंसगणो दिवमुद्ययावसरसः सरसः कलुषोदकात् ॥ ४० ॥**

हंसानां सरःपरित्यागमाह—**दिनेति** । घनैः स्थगितात्मने दिनकराय वारिजविप्लवं कथयितुं किमु, हंसगणः असरसः (सन्), कलुषोदकात् सरसः सपदि दिवम् उद्ययौ ॥ घनैः–मेघैः । स्थगितात्मने–आच्छादितमूर्तये । असरसः–विरक्तः । सरसः–पद्माकरात् । उद्ययौ–उद्गतवान् ॥ ४९ ॥

**अगमयद्वनिता बहुदूरगं प्रियतमं बत मानसमुत्सुका ।**
**पतगपङ्क्तिमपि त्वरितं सुधासमसितामसिताम्बुधरावलिः ॥ ४१ ॥**

हंसानां मानससरःप्राप्तिं वर्णयति—**अगमयदिति** । उत्सुका वनिता त्वरितं मानसम्, बहुदूरगतं बत प्रियतमम् अगमयत् । असिता अम्बुधरावलिः, सुधासमसितां पतगपङ्क्तिम्, अपि (त्वरितं मानसम् अगमयत्) ॥ मानसम्–मनः, मानसाख्यं सरश्च । अम्बुधरावलिः–मेघपङ्क्तिः । सुधासमसिताम्–सुधामिव धवलाम् । पतगपङ्क्तिम्–पक्षिवृन्दम् । हंसगण-मित्यर्थः ॥ ४१ ॥

**तडिदसिक्षतवारिदवारणच्युतशिरःस्थलमौक्तिकसन्निभाः ।**
**अलमकुर्वत निर्जिततारकप्रकरकाः करकाः पृथिवीतलम् ॥ ४२ ॥**

वर्षोपलवर्षणं वर्णयति—**तडिदिति** । तडिदसिक्षतवारिदवारणच्युतशिरःस्थलमौक्तिक-सन्निभाः निर्जिततारकप्रकरकाः करकाः पृथिवीतलम् अलमकुर्वत ॥ तडितः–विद्युतः ।

ताः एव असयः–खड्गाः। तैः क्षतेभ्यो वारिदेभ्यः एव वारणेभ्यः च्युतैः शिरस्स्थलमौक्तिकैः सदृश्यः। निर्जिताः तारकप्रकराः–नक्षत्रसञ्चयाः याभिस्ताः। करकाः–वर्षोपलाः। अलमकुर्वत–अलङ्कृतवत्यः॥ ४२॥

**श्रवणदुस्सहशब्दविजृम्भितं नवघनं नलिकाभमवेक्ष्य खे।**
**दिविषदां मृगयामिव तर्कयद्विकुलमाकुलमायत लीनताम्॥ ४३॥**

मेघनिर्घोषं वर्णयति—**श्रवणेति**। श्रवणदुस्सहशब्दविजृम्भितम् नलिकाभं नवघनं खे अवेक्ष्य, दिविषदां मृगयां तर्कयद् इव आकुलं विकुलं लीनताम् आयत॥ नलिका– आग्नेयास्त्रोद्गारी यन्त्रविशेषः। तत्तुल्यम्। खे–आकाशे। दिविषदाम्–देवानाम्। मृगयाम्–आखेटम्। विकुलम्–पक्षिगणः। आयत–अगमत्॥ ४३॥

**चिरपिपासितचातकमण्डलीगलबिलाध्वनि यद्गलितं पयः।**
**तदिदमेव जलेषु पयोमुचाममृतताममृततामनयन्निजाम्॥ ४४॥**

अमृताख्या जलस्य यथार्था जातेत्याह—**चिरेति**। पयोमुचां जलेषु यत् पयः चिरपिपासितचातकमण्डलीगलबिलाध्वनि गलितम्, तद् इदम् एव निजाम् अमृतताम् ऋतताम् अनयत्॥ ऋतताम्–सत्यताम्॥४४॥

**मदनकुन्तममन्यत केतकीमुकुलमत्र निशातशिखं जनः।**
**हृदयकृन्तनलग्नमयोगिनामचपलं च पलं भ्रमरं ततः॥ ४५॥**

केतकीमुकुलं वर्णयति — **मदनेति**। जनः अत्र निशातशिखं केतकीमुकुलं मदनकुन्तम् अमन्यत। ततः अचपलं भ्रमरम् अयोगिनां हृदयकृन्तनलग्नं पलं च (अमन्यत)। निशातशिखम्–तीक्ष्णाग्रम्॥ ततः– तत्र। अचपलम्–निश्चलम्। अयोगिनाम्–विरहिणाम्। पलम्–मांसम्। हृन्मांसस्य कृष्णवर्णत्वं प्रसिद्धम्॥ ४५॥

**उपगतैरशरीरनिषङ्गतामुदितसौरभरञ्जितदिङ्मुखैः।**
**अभिनवस्तबकैरिह वीरुधामनवमा नवमालतिका बभौ॥ ४६॥**

मालतीकुसुमोद्गमं वर्णयति--**उपगतैरिति**। इह वीरुधाम् अनवमा नवमालतिका अशरीरनिषङ्गताम् उपगतैः उदितसौरभरञ्जितदिङ्मुखैः अभिनवस्तबकैः बभौ॥ इह-अस्मिन् वर्षाकाले। वीरुधाम्-लतानाम्। अनवमा-श्रेष्ठा। अशरीरनिषङ्गताम्-कामतूणीरत्वम्। स्तबकैः-गुच्छैः॥ ४६॥

**निखिलतापनिवारिणि वारिणि स्रवति सर्वत एव विहायसः।**
**अतिशयं परितापमदीधरद्वरवधूरवधूतवरा ननु॥ ४७॥**

वर्षस्य विरहिणीतापकारित्वं वर्णयति—**निखिलेति**। निखिलतापनिवारिणि वारिणि विहायसः सर्वतः एव स्रवति (सति) अवधूतवरा वरवधूः अतिशयं परितापम् अदीधरत् ननु॥ विहायसः-आकाशात्। अवधूतः-तिरस्कृतः वरः-कान्तः यया सा तथा। अदीधरत्-धृतवती॥ ४७॥

**तिमिरकान्तितिरस्करणत्विषं वियति वीक्ष्य वियोगवती घनम्।**
**सपदि चेतसि जीवितमस्फुरन्मृदुरवा दुरवापममन्यत॥ ४८॥**

मेघकान्तेर्विरहिणीजनदुस्सहतामाह—**तिमिरेति**। वियोगवती वियति तिमिरकान्तितिरस्करणत्विषं घनं वीक्ष्य अस्फुरन्मृदुरवा (सती) सपदि चेतसि जीवितं दुरवापम् अमन्यत॥ वियति-आकाशे। तिमिरकान्तितिरस्करणत्विषम्-अन्धकारातिशायिनीलद्युतिम्। घनम्-मेघम्। न स्फुरन् मृदुः रवः यस्याः सा तथा। अनिर्गच्छद्रोदनस्वनेत्यर्थः। दुरवापम्-दुर्लभम्॥ ४८॥

**नियमिनां मनसेव न केवलं वसुधया समवाप्य परागता।**
**अहिमरोचिरदर्शनकारिणा घनचयेन च येन वृतं नभः॥ ४९॥**

सूर्यादर्शनकारि नभसि मेघव्यापनमाह--**नियमिनामिति**। नियमिनां मनसा इव, न केवलं वसुधया अपरागता समवापि। येन नभः वृतम्, (तेन) अहिमरोचिरदर्शनकारिणा घनचयेन च (अपरागता समवापि)॥ नियमिनाम्-मुनीनाम्। अपगतो रागो-

विषयाभिलाषो यस्मात् तद् अपरागम् । तस्य भावस्तत्ता, इति मुनिमनःपक्षे । अपगतः परागो–रजो यस्याः सा अपरागा, तस्या भावस्तत्ता, इति वसुधापक्षे । मेघपक्षे प्रथमोक्त एव विग्रहः । तत्र रागः–शोणवर्णः । नभः–आकाशम् । वृतम्–आच्छादितम् । भूमौ रजः शान्तम्, आकाशे कालमेघा व्याप्ता इति भावः ॥ अप्रस्तुतं मुनिमन उपमानम् ॥ ४९ ॥

**उपगता बत वायसपेयतामुपचिता घनवारिभिरापगाः ।**
**प्रतिपयोधि ययुस्तटपातनाः कलुषिता लुषिताम्बुजकाननाः ॥ ५० ॥**

नदीनां वृद्धिं वर्णयति—**उपेति** । वायसपेयतां बत उपगताः आपगाः घनवारिभिः उपचिताः तटपतनाः कलुषिताः लुषिताम्बुजकाननाः (सत्यः) प्रतिपयोधि ययुः ॥ वायसैः–काकैः पातुं योग्यतां तथा । अत्यल्पजलत्वमित्यर्थः । आपगाः–नद्यः । तटौ–तीरे पातयन्तीति तथा । लुषितानि–रुषितानि–नाशितानि अम्बुजकाननानि–कमलवनानि याभिस्ताः, तथा । प्रतिपयोधि–पयोधिं लक्ष्मीकृत्य । लुषितेत्यत्र यमकापेक्षया रलयोरभेदः ॥ ५० ॥

**सकलसस्यसमृद्धिसमेतया नववनोदयशोभितया द्विधा ।**
**अजनि सा जनचेतसि हृष्टता वसुधया सुधयापि न यादृशी ॥ ५१ ॥**

वर्षसम्पत्त्या जनानां हर्षं वर्णयति—**सकलेति** । सकलसस्यसमृद्धि समेतया द्विधा नववनोदयशोभितया वसुधया जनचेतसि सा हृष्टता अजनि, यादृशी सुधया अपि न (अजनि) । वनोदयः–जलसमृद्धिः, काननसमृद्धिश्च । सुधया–अमृतेन ॥ ५१ ॥

**इति विहायसि दत्तपयोधरामृतुविभूतिमुदीक्ष्य मुदा ददौ ।**
**जनकजापि पयोधरमात्मनः प्रियतमाय तमालसमत्विषे ॥ ५२ ॥**

सीतारामयोर्वार्षिकं कामोपभोगमाह—**इतीति** । इति ऋतुविभूतिं विहायसि दत्तपयोधराम् (सतीम्) उदीक्ष्य, जनकजा अपि मुदा आत्मनः पयोधरं तमालसमत्विषे प्रियतमाय ददौ ॥ ऋतुविभूतिम्–वर्षासमृद्धिम् । विहायसि–आकाशे । दत्ताः पयोधराः–मेघाः यया तां तथा । पयोधरम्–स्तनम् । तमालसमत्विषे–तापिञ्छतुल्यकान्तये ॥ ५२ ॥

**स्फुटकदम्बकदम्बसमीरणप्रमुदितः प्रियया सह पार्थिवः ।**
**निशमयन्नपि चन्द्रकिणां मृदुप्रसरणान् सरणानृतुमन्वभूत् ।। ५३ ।।**

रामस्य वर्षासुखानुभूतिमाह—**स्फुटेति** । पार्थिवः प्रियया सह स्फुटकदम्बकदम्बसमीरण-प्रमुदितः मृदुप्रसरणान् चन्द्रकिणां सरणान् निशमयन् अपि ऋतुम् अन्वभूत् । स्फुटानाम्—विकसितानां कदम्बानाम्—नीपपुष्पाणां कदम्बस्य—समूहस्य यः समीरणः, तेन प्रमुदितः । मृदुप्रसरणान्—मन्दगतीन् । चन्द्रकिणाम्—मयूराणाम् । सरणान्-षड्जध्वनीन् । निश-मयन्—शृण्वन् ।। ५३ ।।

[ शरद्वर्णनम् ]

**नवघने धृतिभागथ केकिनी सपदि यत्र भविष्यति शोकिनी ।**
**शरदमक्षिभिरर्थपतेरिमामुपपुरं पपुरङ्कुरितां जनाः ।। ५४ ।।**

शरदागमं प्रस्तौति—**नवेति** । अथ नवघने धृतिभाक् केकिनी यत्र सपदि शोकिनी भविष्यति, इमाम् अर्थपतेः उपपुरम् अङ्कुरितां शरदं जनाः अक्षिभिः पपुः ।। नवाः घनाः—मेघाः यस्मिन् , तस्मिन् वर्षारम्भे । धृतिभाक्—सन्तोषवती । केकिनी—मयूरी । अर्थ-पतेः—राज्ञः । उपपुरम्—पुरसमीपे । अक्षिभिः पपुः—दृष्टवन्तः ।। ५४ ।।

**प्रथममेव रुरोध पयोधरान् मृगदृशामिव यौवनपूर्णता ।**
**शरदसौ प्रियतामपि बिभ्रतो जनिभृतां निभृताम्बरमुद्यतः ।। ५५ ।।**

शरदि जलधरनिरोधमाह—**प्रथममिति** । असौ शरत् प्रथमम् एव मृगदृशां यौवन-पूर्णता इव, जनिभृतां प्रियतां बिभ्रतः अपि निभृताम्बरम् उद्यतः पयोधरान् रुरोध।। जनिभृताम्—प्राणिनाम् । निभृतम्—निश्शब्दं, धृतं च अम्बरम्—आकाशं, वस्त्रं च यस्मिन् कर्मणि तद्यथा तथा । उद्यतः—उद्गच्छतः । पयोधरान्—जलधरान् मेघान् , दुग्धवतः स्तनांश्च । रुरोध—आवृतवती ।। ५५ ।।

**विमलवर्षजलैरचिराप्लुतं विगमिताम्बुदकर्दममम्बरम् ।**
**परिदधुः शरदा हरिदङ्गना धवलितं वलितं स्फुटतारकैः ।। ५६ ।।**

शरन्मेघानां धवलतामाह—**विमलेति** । हरिदङ्गनाः, विमलवर्षजलैः अचिराप्लुतं शरदा विगमिताम्बुदकर्दमं धवलितं स्फुटतारकैः वलितम् अम्बरं परिदधुः ॥ हरितः—दिशः एव अङ्गनाः । आप्लुतम्—प्रक्षालितम् । विगमितो अम्बुदः—मेघः एव कर्दमः—पङ्को यस्याम् तत् तथा । स्फुटतारकैः—प्रव्यक्तनक्षत्रैः एव शुद्धमौक्तिकैः । वलितम्—आकीर्णम् । अम्बरम्—आकाशमेव वस्त्रम् । परिदधुः—अन्तरीयवस्त्ररूपेण धृतवत्यः ॥ ५६ ॥

**अनतितीव्रतरेण करेण यः सकललोकमरञ्जयदञ्जसा ।**
**नृप इवाभिनवो रविराबभौ भृशमयं शमयञ्जडतां नृणाम् ॥ ५७ ॥**

शरदि सूर्यस्य अन्यूनानतिरिक्तप्रकाशतां वर्णयति—**अनतीति** । यः अनतितीव्रतरेण करेण अञ्जसा सकललोकम् अरञ्जयत्, अयं रविः, अभिनवः नृपः इव नृणां जडताम् शमयन् भृशम् आबभौ ॥ करेण—रश्मिना, बलिना च । जडताम्—शैत्यम्, मान्द्यं च ॥ ५७ ॥

**विमलचन्द्रविसृत्वरचन्द्रिकाविशदकञ्चुकगुप्तकलेबराः ।**
**उपययुर्मदनस्य सहायतां रजनयो जनयोधनकर्मणि ॥ ५८ ॥**

शरदि चन्द्रिकावैमल्यं वर्णयति—**विमलेति** । विमलचन्द्रविसृत्वरचन्द्रिकाविशदकञ्चुकगुप्तकलेबराः रजनयः जनयोधनकर्मणि मदनस्य सहायताम् उपययुः ॥ रजनयः—रात्रयः । उपययुः—प्राप्ताः । युद्धे कञ्चुकधराः खलु सहाया भवन्ति ॥ ५८ ॥

**दिवि मुनिर्ददृशे कलशोद्भवः कलुषतामपहाय बभौ पयः ।**
**मृदु ययुः प्रकटीकृतसैकता भुवनपावनपाथस आपगाः ॥ ५९ ॥**

अगस्त्योदये जलनैर्मल्यादिकं वर्णयति—**दिवीति** । दिवि कलशोद्भवः मुनिः ददृशे । पयः कलुषताम् अपहाय बभौ । भुवनपावनपाथसः आपगाः प्रकटीकृतसैकताः मृदु ययुः ॥ कलशोद्भवः—अगस्त्यः । कलुषताम्—आविलत्वम् । पाथांसि—जलानि । आपगाः—नद्यः । सैकतम्—वालुकामयतटम् ॥ ५९ ॥

**कुसुमसायकसायकरूपतां दधति ये मुकुलाः सरसीरुहाम् ।**
**सरसि तैरसितैरथ जृम्भितं सरसितै रसितैरलियोषिताम् ॥ ६० ॥**

नीलोत्पलविकासं वर्णयति—**कुसुमेति** । अथ ये सरसीरुहां मुकुलाः कुसुमसायक-सायकरूपतां दधति, असितैः तैः, सरसितैः अलियोषितां रसितैः (सह) सरसि जृम्भितम् ॥ सरसीरुहाम्-सरोजानाम् । कुसुमसायकः—कामः । असितैः-नीलैः । सरसितैः-सरसैः । अलियोषिताम्-भ्रमरीणाम् । रसितैः—शब्दैः । सरसि—जलाशये ॥ ६० ॥

**परिमलातिशयानुभवादरस्तिमितसङ्गतभृङ्गकुरङ्गभृत् ।**
**कमलमुल्लसितं सितमन्वगाद्धिमकरं मकरन्दरसामृतम् ॥ ६१ ॥**

सितपुण्डरीकं वर्णयति—**परिमलेति** । परिमलातिशयानुभवादरस्तिमितसङ्गतभृङ्गकुरङ्ग-भृत् मकरन्दरसामृतम् उल्लसितं सितं कमलं हिमकरं अन्वगात् ॥ कुरङ्गः—मृगः । हिम-करम्—चन्द्रम् । अन्वगात्—अनुगतवात् । सभृङ्गं मकरन्दवत् कमलं मृगलाञ्छनेन अमृत-रश्मिना चन्द्रेण सदृशमभूदित्यर्थः । ६१ ॥

**जनितकोकनदानि जलाशये शरदि कोकनदानि चकाशिरे ।**
**युवसु योजितकामशिलीमुखास्समुदिता मुदिताश्च शिलीमुखाः ॥ ६२ ॥**

रक्ताम्बुजानि वर्णयति—**जनितेति** । शरदि जलाशये जनितकोकनदानि कोकनदानि चकाशिरे । युवसु योजितकामशिलीमुखाः मुदिताः शिलीमुखाः च समुदिताः ॥ जनिताः कोकानाम्—चक्रवाकानां नदाः—शब्दाः येषु तानि तथोक्तानि । कोकनदानि—रक्तोत्पलानि । चकाशिरे—अशोभन्त । शिलीमुखाः—बाणाः, भृङ्गाश्च । समुदिताः—समागताः ॥ ६२ ॥

**कमलमेव सदा हृदि कुर्वता धवलपक्षसमाश्रयसुश्रियाम् ।**
**अभिजलाशयमम्बरमार्गतो निपततां पततां कुलमाबभौ ॥ ६३ ॥**

जलाशयाभिमुखं हंसानामागमनं वर्णयति—**कमलमिति** । कमलम् एव सदा हृदि कुर्वतां धवलपक्षसमाश्रयसुश्रियाम् अभिजलाशयम् अम्बरमार्गतः निपततां पततां कुलम् आबभौ ॥ निपतताम्—आगच्छताम् । पतताम्—पक्षिणाम् ॥ ६३ ॥

**तत इतः परिबभ्रमुरुन्मदाः कमलकोशलसन्मधुलोलुपाः ।**
**अमृतलालसयेव सुरासुराः सकलहं कलहंसमधुव्रताः ॥ ६४ ॥**

हंसभृङ्गकोलाहलं वर्णयति—**तत इति**। उन्मदाः कमलकोशलसन्मधुलोलुपाः कलहंस-मधुव्रताः, अमृतलालसया सुरासुराः इव सकलहम् ततः इतः परिबभ्रमुः ॥ कोशः—कुड्मलः। मधुव्रताः—भृङ्गाः। लालसाः—तीव्राभिलाषाः। सकलहम्—कलहसहितम् ॥ ६४ ॥

**मदविकासिमरालविलासिनीमृदुरवे सति मौनमुँपेयुषीः।**
**कलयति स्म जनः किल केकिनीः कुमुदिनीमुदि नीरजिनीरिव ॥ ६५ ॥**

हंसीनां सन्तोषं मयूरीणां वैमनस्यं च वर्णयति—**मदेति**। मदविकासिमरालविलासिनी मृदुरवे सति मौनम् उपेयुषीः केकिनीः, कुमुदिनीमुदि नीरजिनीः इव जनः किल कलयति स्म ॥ उपेयुषीः—प्राप्ताः। केकिनीः—मयूरीः। नीरजिनीः—नलिनीः। कलयति स्म—चिन्तयामास ॥ ६५ ॥

**शरदि पुष्पवतीमपि पद्मिनीं न विजहुर्विमला अपि ते द्विजाः।**
**यदतिरञ्जनमत्र शरीरिणां मनसि तेन सिते न विवेकिता ।। ६६ ।।**

हंसानां नलिनीतत्परतां वर्णयति—**शरदीति**। शरदि विमलाः अपि ते द्विजाः पुष्पवतीम् अपि पद्मिनीं न विजहुः। यत् शरीरिणाम् अतिरञ्जनम्, तेन सिते मनसि विवेकिता अत्र न (भवति) ॥ द्विजाः—पक्षिणः। हंसा इत्यर्थः। ब्राह्मणाश्च। पुष्पवतीम्—कुसुमसम्पन्नाम्, आर्तववतीं च। पद्मिनीम्—कमलिनीम्। कामशास्त्रप्रसिद्धं पद्मिन्याख्यं स्त्रीविशेषं च। विजहुः—त्यक्तवन्तः। अतिरञ्जनम्—अतिप्रीतिकरम्। सिते—बद्धे। विवेकिता—कृत्याकृत्यज्ञानम् ॥ ३६ ॥

**कुमुदकोरकतारकितां भुवं विमलतारककोरकितां दिवम्।**
**अकलयत् परिवृत्तगुणे नृपः स शरदाशरदावदवानलः ॥ ६७ ॥**

भुवो दिवश्च शरदा रचितं गुणविनियममाह—**कुमुदेति**। आशरदावदवानलः सः नृपः कुमुदकोरकतारकितां भुवं विमलतारककोरकितां दिवं (च) शरदा परिवृत्तगुणे अकलयत् ॥ आशराः—राक्षसाः एव दावाः—वनानि, तेषां दवानलः—वनाग्निः। कुमुदानां कोरकैः तारकिताम्—सञ्जाततारकाम्। विमलैस्तारकैः कोरकिताम्—सञ्जातकलिकाम्। परिवृत्तौ—कृतविनिमयौ गुणौ ययोस्ते। अकलयत्—अमन्यत ॥ ६७ ॥

**मदनवारणवीरमदस्रुतेः पिशुनगन्धमशेखरयद्वधूः ।
विषमपत्रमहीरुहसंभवं प्रसवमासवमादितषट्पदम् ॥ ६८ ॥**

सप्तच्छदपुष्पं वर्णयति—**मदनेति** । वधूः मदनवारणवीरमदस्रुतेः पिशुनगन्धम् विषमपत्रमहीरुहसम्भवम् आसवमादितषट्पदं प्रसवम् अशेखरयत् । वधूः—सीमन्तिनी । मदनः—कामः एव वारणवीरः—महागजः, तस्य मदस्रुतेः—मदजलप्रवाहस्य । पिशुनः—सूचको गन्धो यस्य तम् । विषमपत्रमहीरुहः—सप्तछदवृक्षः । आसवेन—पुष्परसेन मादिताः—जनित-मदाः षट्पदाः—भृङ्गाः येन तम् । प्रसवम्—पुष्पम् । अशेखरयत्—केशालङ्कारं कृतवती ॥६७॥

**नरपतिः शरदङ्गनया वृतं निजवनान्तमुदीक्ष्य मुदान्वितः ।
दयितया सह रन्तुमथात्मनश्चरणचारणचारु चकार तत् ॥ ६९ ॥**

रामस्य शरदुपभोगं वर्णयति—**नरपतिरिति** । अथ नरपतिः निजवनान्तं शरदङ्गनया वृतम् उदीक्ष्य मुदा अन्वितः दयितया सह रन्तुं तद् आत्मनः चरणचारणचारु चकार ॥ तद्— वनम् । चरणचारणचारु चकार—जगाम ॥ ६९ ॥

**प्रचुरसस्यपचेलिममञ्जरीकपिशितामचलामवलोकयन् ।
व्यचरदेष चिरं विपिनान्तिके भृशरसं शरसंहितकान्तिके ॥ ७० ॥**

सीतासमेतस्य रामस्य वनान्तिकसञ्चारमाह—**प्रचुरेति** । एषः शरसंहितकान्तिके विपिनान्तिके प्रचुरसस्यपचेलिममञ्जरीकपिशिताम् अचलाम्, अवलोकयन् चिरं भृशरसं व्यचरत् । शरेण—शरनाम्ना तृणेन संहितकान्तिके—शोभमाने । पचेलिमाः—पक्वाः । मञ्जर्यः—कणिशगुच्छाः । ताभिः कपिशिताम्—पिङ्गलीकृताम् । अचलाम्—भूमिम् ॥ ७० ॥

**क्षणमसौ मुमुदे कणिकाञ्चलग्रहणचुञ्चुभिरञ्चितचञ्चुभिः ।
शुकवधूनिकरैरथ निर्गलद्रुतकपोतकपोतकुलैरपि ॥ ७१ ॥**

रामस्य शुककपोतदर्शनरसमाह—**क्षणमिति** । अथ असौ कणिकाञ्चलग्रहणचुञ्चुभिः अञ्चितचञ्चुभिः शुकवधूनिकरैः निर्गलद्रुतकपोतकपोतकुलैः अपि क्षणं मुमुदे ॥ कणिकाञ्च-लम्—सस्यकणाग्रम् । तस्य ग्रहणेन वित्तैः । निर्गलन्ति रुतानि—शब्दाः येषां तैः कपोत-कानां पोतानां—शावकानां कुलैः ॥ ७१ ॥

**कलयता कलमावनकामिनीकलमनोहरगानममन्यत ।**
**नृपतिना निजगृह्यकशारिका वितनुतां तनुतां वचसामिति ॥ ७२ ॥**

शालिगोपीगानश्रवणरसमाह—**कलयतेति** । कलमावनकामिनीकलमनोहरगानं कलयता नृपतिना, निजगृह्यकशारिका वचसां तनुतां वितनुताम् इति अमन्यत॥ कलमानाम्—तदाख्यशालीनाम् अवने—रक्षणे (नियुक्ताः) कामिन्यः । गृह्यकाः—गृहे भवाः । तनुताम्—अल्पत्वम् । वितनुताम्—करोतु ॥ ७२ ॥

**शरदमभ्युपगम्य शरक्षतैरवयवैरिव शोणितवर्षिणीम् ।**
**निजदृशा स निपीय जपावलिं सुममितामभितामदधान्मुदम् ॥ ७३ ॥**

कुसुमितजपावलिदर्शनसुखमाह—**शरदमिति** । शरदम् अभ्युपगम्य शरक्षतैः अवयवैः शोणितवर्षिणीम् इव सुमम् इताम् जपावलिम् निजदृशा निपीय सः अमितां मुदम् अदधात् ॥ शराः—तदाख्यास्तृणविशेषाः । ते एव शराः—बाणाः । तैः क्षतैः—दीर्णैः । शोणितम्—रक्तम् । सुमम्—पुष्पम् । इताम्—गताम् । पुष्पितामित्यर्थः । जपावलिम्—बन्धुजीवपङ्क्तिम् । अमिताम्—अनल्पाम् ॥७३ ॥

**निशि निशाकरनिर्मलचन्द्रिकाधवलसैकतभूमिषु भूमिजाम् ।**
**अरमयत् स हि तल्पमुपाश्रितो रचितमञ्चितमम्बुरुहां छदैः ॥ ७४ ॥**

चन्द्रिकाधवलसैकतभूमिषु रामः सीतामरमयदित्याह—**निशीति** । सः हि निशि निशाकरनिर्मलचन्द्रिकाधवलसैकतभूमिषु अम्बुरुहां छदैः रचितम् अञ्चितं तल्पम् उपाश्रितः भूमिजाम् अरमयत् ॥ अम्बुरुहाम्—नलिनीनाम् । छदैः—पत्रैः । अञ्चितम्—मञ्जुलम् । भूमिजाम्—सीताम् ॥ ७४ ॥

[हेमन्तवर्णनम्]

**अनुभवन्तमिति प्रियया समं जनमहोत्सवहेतुमृतुश्रियम् ।**
**नृपमुपासितुमाप हिमागमः शमितकामितकार्यमथ द्विषाम् ॥ ७५ ॥**

हेमन्तप्राप्तिमाह—**अनुभवन्तमिति** । इति प्रियया समं जनमहोत्सवहेतुम् ऋतुश्रियम् अनुभवन्तम् द्विषां शमितकामितकार्यं नृपम् उपासितुम् अथ हिमागमः आप ॥ हिमागमः—हेमन्तः ॥ ७५ ॥

**निजपतेरुदयेषु विवस्वतः प्रमुदिता इव भूरि दिगङ्गनाः ।**
**प्रसृमरैः परितो हिमरेणुभिः पुलकजालकजातरुचो बभुः ॥ ७६ ॥**

दिक्षु हिमप्रसरं वर्णयति—**निजपतेरिति**। दिगङ्गनाः निजपतेः विवस्वतः उदयेषु भूरि प्रमुदिताः इव परितः प्रसृमरैः हिमरेणुभिः पुलकजालकजातरुचः बभुः॥ विवस्वतः—सूर्यस्य। प्रसृमरैः—प्रसरद्भिः। जातरुचः— जातशोभाः ॥ ७६ ॥

**अनुगते तुहिनत्रसरेणुभिस्तनुभृतां तनुकम्पिनि मारुते ।**
**मृगदृशां न कुचद्वयमुच्चकैरुरसि कैः रसिकैरधिरोपितम् ॥ ७७ ॥**

शीतमारुतबाधामाह—**अनुगते इति** । तुहिनत्रसरेणुभिः अनुगते मारुते तनुभृतां तनुकम्पिनि (सति) रसिकैः कैः मृगदृशाम् उच्चकैः कुचद्वयम् उरसि न अधिरोपितम्॥ तुहिन-त्रसरेणुभिः—हिमबिन्दुभिः। तनुभृताम्—देहिनाम्। तनुकम्पिनि—देहकम्पनकारिणि। उच्चकैः—उन्नतम् ॥ ७७ ॥

**उषसि यत् कमलच्छदसंस्थितं तुहिनशीकरजालमदृश्यत ।**
**भ्रमकरं निजशोषणचिन्तनादजनि तज्जनितस्य तदश्रुणः ॥ ७८ ॥**

कमलदलगतं हिमशीकरं वर्णयति—**उषसीति**। उषसि कमलच्छदसंस्थितं यत् तुहिन-शीकरजालम् अदृश्यत, तद्, निजशोषणचिन्तनात् जनितस्य तदश्रुणः भ्रमकरम् अजनि॥ छदः—दलम्। तुहिनशीकराः—हिमकणाः। तदश्रुणः—कमलनेत्राम्बुनः ॥ ७८ ॥

**विरहिणी तरुणीव दिने दिने कृशतरा कृशमर्मरनिस्वना ।**
**कमलिनी करुणापदमादधौ हिमहता महतामपि मानसम् ॥ ७९ ॥**

कमलिन्याः शोषमाह—**विरहिणीति**। हिमहता दिने दिने कृशतरा कमलिनी कृश-मर्मरनिस्वना (सती) विरहिणी तरुणी इव महताम् अपि मानसं करुणापदम् आदधौ॥ मर्मरः—पत्रस्वनः। पदं—स्थानम्। आदधौ—कृतवती॥ ७९ ॥

**तुहिनसन्ततितुन्दिलदिङ्मुखे दिनमुखे ददृशे दिननायकः ।**
**जडिमभारनिपीडनकातरो धवलकम्बलकञ्चुकवानिव ॥ ८० ॥**

हिमावृतं सूर्यं वर्णयति--**तुहिनेति**। तुहिनसन्ततितुन्दिलदिङ्मुखे दिनमुखे दिन-नायकः, जडिमभारनिपीडनकातरः धवलकम्बलकञ्चुकवान् इव ददृशे॥ सन्ततिः-समूहः। तुन्दिलम्-उच्छूनम्। दिननायकः-सूर्यः। जडिमा-जाड्यम्। कातरः-भीतः। ददृशे-दृष्टः॥ ८०॥

**सततशीत्कृतशिक्षणदक्षिणैः विरचिते सति बिम्बफलत्विषि।**
**अधरसीमनि हैमनमारुतैररुषि का रुषि कामुकमत्यजत्॥ ८१॥**

अधरस्य व्रणितत्वं प्रस्तौति--**सततेति**। सततशीत्कृतशिक्षणदक्षिणैः हैमनमारुतैः, बिम्बफलत्विषि अधरसीमनि अरुषि विरचिते संति का रुषि कामुकम् अत्यजत्॥ हैमनाः-हेमन्ते भवाः। अरुषि-व्रणे। रुषि-कोपे॥ ८१॥

**हिमकरोऽपि च तापकरोऽभवत्स समयः सरसीरुहदैन्यकृत्।**
**युवजने युवतीविरहव्यथाप्रविधुरे विधुरेव न केवलम्॥ ८२॥**

हेमन्तस्य विरहिजनतापकरत्वमाह—**हिमेति**। सरसीरुहदैन्यकृत् विधुः एव न केवलं, (सरसीरुहदैन्यकृत्), सः समयः च हिमकरः अपि युवितीविरहव्यथाप्रविधुरे युवजने तापकरः अभवत्॥ विधुः-चन्द्रः। हिमकरः-हिमं करोतीति हेमन्तपक्षे, हिमाः-शीतलाः कराः-रश्मयः यस्य स इति चन्द्रपक्षे॥ प्रविधुरे-अत्यन्तदुःखिते। तापकरः-उष्णकरः, दुःखकरश्च॥ ८२॥

**सहसि तत्र समृद्धिमुपागते शरणमेककमेव शरीरिणाम्।**
**न दहनो न रविः स्मरदीपितस्वरमणीरमणीयकलेबरम्॥ ८३॥**

हेमन्ते शैत्यप्रतिविधिमाह—**सहसीति**। तत्र सहसि समृद्धिम् उपागते (सति) शरी-रिणां स्मरदीपितस्वरमणीरमणीयकलेबरं एककं एव शरणम् (अभवत्), दहनः न (शरणम् अभवत्), रविः न (शरणम् अभवत्)। सहसि-हेमन्ते। स्वरमणी-निजकामिनी। शरणम्-रक्षितृ। दहनः-अग्निः॥ ८३॥

**इति विभाति विभावितशीतले सहसहस्य सहस्यथ मैथिलीं ।**
**जितकरीररशरीरमरीरमत् स्वकमिता कमितारमवामताम् ॥ ८४ ॥**

सीता रामं रमयति स्म इत्याह—**इतीति**। अथ मैथिली, इति विभाति विभावितशीतले सहसहस्य सहसि जितकरीरशरीरं स्वकं कमितारम्, अवामताम् इता (सती) अरीरमत् ॥ विभाति—भासमाने। विभावितशीतले—चिन्तितमात्रे शैत्यं जनयति। सहसहस्य सहसि—पौषमाससहितमार्गशीर्षमासे ॥ हेमन्ते—इत्यर्थः। करीरः—वंशाङ्कुरः। स्वकम्—निजम्। कमितारम्—प्रियम्। अवामताम्—अनुकूलताम्। इता—गता ॥ अरीरमत्—रमयामास ॥ ८४ ॥

**[ शिशिरवर्णनम् ]**

**अथ ययावृतुरन्तिकमन्तिमः क्षितिपतेः प्रसितो वरिवस्यया ।**
**अनुसृतः सृतिमग्रजसेवितां चपलमुत्पलमुत्प्रतिरोधिनीम् ॥ ८५ ॥**

शिशिरारम्भमाह—**अथेति**। अथ अग्रजसेवितां उत्पलमुत्प्रतिरोधिनीं सृतिम् अनुसृतः अन्तिमः ऋतुः, क्षितिपतेः वरिवस्यया प्रसितः (सन्) चपलम् (क्षितिपतेः) अन्तिकं ययौ ॥ अग्रजः—पूर्वं जातो हेमन्तऋतुः। तेन सेवितां। उत्पलानां मुदम्—हर्षं प्रतिरुणद्धीति तथोक्ताम्। सृतिम्—मार्गम्। अन्तिमः ऋतुः—शिशिरः। वरिवस्यया—शुश्रूषया। प्रसितः—तत्परः। राजशुश्रूषातत्पर इत्यर्थः। चपलम्—शीघ्रम् ॥ ८५ ॥

**शिशिर एष समेत्य शशित्विषां सुमनसामथ कुण्डलताजुषाम् ।**
**अचिरनष्टहिमागमकीकसभ्रमकृतामकृताधिकसम्पदम् ॥ ८३ ॥**

शिशिरपुष्पाणि वर्णयति—**शिशिर इति**। अथ एषः शिशिरः शशित्विषां कुण्डलताजुषाम् अचिरनष्टहिमागमकीकसभ्रमकृतां सुमनसाम् अधिकसम्पदम् अकृत ॥ शशित्विषाम्—चन्द्रवद्धवलवर्णानाम्। कुण्डलताजुषाम्—कुण्डलाकृतिं वहन्तीनाम्। कीकसम्—अस्थि। सुमनसाम्—पुष्पाणाम्। अकृत—कृतवान् ॥ ८६ ॥

**प्रसवयोर्नवयोर्लवलीलताप्रभवयोरुभयोः शिशिरश्रियः ।**
**अवहदेकतरः सितगण्डतामधरभाधरभावमथापरः ॥ ८७ ॥**

लवलीलताकुसुमफले वर्णयति—**प्रसवयोरिति** । नवयोः लवलीलताप्रभवयोः उभयोः प्रसवयोः (मध्ये) एकतरः शिशिरश्रियः सितगण्डताम् अवहत् । अथ अपरः अधरभाधरभावम् (अवहत्) ॥ प्रसवयोः—पुष्पफलयोः । एकतरः—पुष्पम् । अपरः—फलम् । अधरभाधरभावम्—अधरशोभाधारिताम् ॥ ८७ ॥

**इयमहो प्रकृतिर्मलिनात्मनां विपदि यत् परिहाय पयोजिनीम् ।**
**स्फुटलवङ्गमशिश्रियदभ्रमध्वनिकरो निकरो मधुपायिनाम् ॥ ८८ ॥**

लवङ्गकुसुमोद्गमं वर्णयति—**इयमिति** । मधुपायिनां निकरः अभ्रमध्वनिकरः (सन्) विपदि पयोजिनीं परिहाय स्फुटलवङ्गं यत् अशिश्रियत्, इयम् मलिनात्मनां प्रकृतिः । अहो ॥ मधुपायिनाम्—भ्रमराणाम् । अभ्रमम्—गम्भीरं ध्वनिं करोतीति यथा । पयोजिनीम्—नलिनीम् । परिहाय—त्यक्त्वा । स्फुटम्—विकसितम् । लवङ्गम्—देवकुसुमम् । अशिश्रियत्—आश्रितवान् ॥ ८८ ॥

**जडिमवर्षिणि तत्र जगत्त्रयं नयति कम्पमकम्पितमानसः ।**
**रतिपतिः स्म जयाय विजृम्भणामति करोति करोद्यतकार्मुकः ॥ ८९ ॥**

शिशिरस्य कामोद्दीपकतामाह—**जडिमेति** । जडिमवर्षिणि तत्र जगत्त्रयं कम्पं नयति (सति) अकम्पितमानसः रतिपतिः जयाय करोद्यतकार्मुकः विजृम्भणाम् अति करोति स्म ॥ जडिमा—शैत्यम् । तत्र—तस्मिन् शिशिरे । रतिपतिः—कामः । विजृम्भणाम्—पराक्रमम् । अति—अतिमात्रम् । करोति स्म—चकार ॥ ८९ ॥

**रजतचूर्णरुचः स्फुटशाबरप्रसवरेणुकणाः पवनाहताः ।**
**स्मरयशःशकला इव संलसद्द्रुमवनीमवनीमववव्रिरे ॥ ९० ॥**

लोध्रपुष्परेणून् वर्णयति—**रजतेति** । रजतचूर्णरुचः स्फुटशाबरप्रसवरेणुकणाः पवनाहताः (सन्तः) स्मरयशःशकला इव संलसद्द्रुमवनीम् अवनीम् अववव्रिरे ॥ रुक्—शोभा । स्फुटशाबरप्रसवाः—विकसितलोध्रपुष्पाणि । संलसन्ती—शोभमाना द्रुमवनी—वृक्षवाटिका यस्यां, ताम्—तथोक्ताम् । अववव्रिरे—आच्छादितवन्तः ॥ ९० ॥

**उषसि हंसमुदीक्ष्य हिमानिकाविपुलवागुरया परियन्त्रितम् ।**
**उपवनानि किमश्रु शुचामुचंस्तुहिनगाहिनगावलिपल्लवैः ॥ ९१ ॥**

सूर्यस्य हिमावृतत्वं वर्णयति—**उषसीति** । उषसि हंसं हिमानिकाविपुलवागुरया परियन्त्रितं उदीक्ष्य शुचा किम्, उपवनानि तुहिनगाहिनगावलिपल्लवैः अश्रु अमुचन् ॥ हंसम्—सूर्यमेव हंसाख्यपक्षिविशेषम् । हिमानिका—हिमसंहतिः । तयैव विपुलवागुरया—विशालजालविशेषेण परियन्त्रितम्—बद्धम् । शुचा—दुःखेन । तुहिनगाहिनः—हिमनिर्मग्नाः । ये नगाः—वृक्षाः । तेषाम् आवलेः—पङ्क्तेः । पल्लवैः—किसलयैः । अश्रु—नेत्राम्बु । अमुचन्—मुमुचुः ॥ ९१ ॥

**निरगमन्न विलासगृहोदराद्युवजनास्तदुरःस्थलतोऽङ्गनाः ।**
**कुसुमबाणशराश्च तदीयतो हृदयतोऽदयतोदनतत्पराः ॥ ९२ ॥**

शिशिरस्य कामोद्दीपकत्वमाह—**निरगमन्निति** । युवजनाः विलासगृहोदरात् न निरगमन् । तदुरःस्थलतः अङ्गनाः (न निरगमन्) । तदीयतः हृदयतः अदयतोदनतत्पराः कुसुमबाणशराः च (न निरगमन्) ॥ विलासगृहं—केलिगृहम् । निरगमन्—निर्जग्मुः । तोदनम्—व्यथनम् ॥ ९२ ॥

**सुखमरंस्त सुरेश्वरसन्निभो रघुपतिर्मणिसौधतलेऽनिशम् ।**
**शिशिरचोदितमन्मथकर्मणामसहकः सह कन्यकया भुवः ॥ ९३ ॥**

सीतारामयोः शिशिरोपभोगमाह—**सुखमिति** । सुरेश्वरसन्निभः रघुपतिः शिशिरचोदितमन्मथकर्मणाम् असहकः (सन्) भुवः कन्यकया सह मणिसौधतले अनिशं सुखम् अरंस्त ॥ मन्मथकर्मणाम् असहकः—कामपराक्रमान् न सहमानः । भुवः कन्यकया—सीतया । अरंस्त—अरमत ॥ ९३ ॥

**इत्थमृतून् स ददर्श वनान्ते सप्रमदः सह सालसमूहे ।**
**अप्यमुना न वचोविषयो यः स प्रमदः सहसालसमूहे ॥ ९४ ॥**

वसन्ताद्यानृतूनेकैकेन पद्येनोपवर्ण्य ऋतुवर्णनमुपसंहर्तुमुपक्रमते—**इत्थमिति** । इत्थं सः सप्रमदः सहसालसमूहे वनान्ते ऋतून् ददर्श । यः वचोविषयः न (भवति) सः प्रमदः सहसा अमुना अपि अलसं ऊहे । सप्रमदः—प्रमदया—कान्तया सह वर्तमानः । सहसाल-समूहे—वृक्षसमूहसहिते । प्रमदः—हर्षः । ऊहे—ऊढः । रामो वाचामगोचरं हर्षमवहदि-त्यर्थः ॥ ९४ ॥

**अङ्कुरयन्नथ चूतलतानां जातमहास्त वनानि वसन्तः ।**
**यस्य जना विदधत्यबलाभिर्जातमहाः स्तवनानि वसन्तः ॥ ९५ ॥**

वसन्तं वर्णयति—**अङ्कुरयन्निति** । अथ वसन्तः चूतलतानां जातम् अङ्कुरयन् वनानि अहास्त । अबलाभिः (सह) वसन्तः जनाः जातमहाः यस्य स्तवनानि विदधति ॥ जातम्—समूहम् । अहास्त—अवाप । वसन्तः—वासं कुर्वन्तः । जातः महः—उत्सवः येषां ते तथोक्ताः । स्तवनानि—स्तुतीः । विदधति—कुर्वन्ति ॥ ९५ ॥

**वीक्ष्य दधार वधूः शुचिमुद्यन्मारविधा मनसा कमितारम् ।**
**तेन च न स्वनितैरलियूनामारवि धाम न साकमितारम् ॥ ९६ ॥**

ग्रीष्मं वर्णयति—**वीक्ष्येति** । उद्यन्मारविधा वधूः शुचिं वीक्ष्य कमितारं मनसा दधार । तेन साकम् अलियूनां स्वनितैः आरवि धाम सा अरं न च न इता ॥ उद्यन्मार-विधा—कामविलासवती । शुचिम्—ग्रीष्मम् । कमितारम्—कान्तम् । मनसा दधार—चिन्तित-वती । तेन—कान्तेन । अलियूनाम्—तरुणभृङ्गानाम् । आरवि—शब्दयुक्तम् । धाम—स्थानम् । अरम्—द्रुतम् । न च न इता—इतैव—गतैव ॥ ९६ ॥

**नीलगलोऽथ मुदं दिवि वेगादापततो विरलं घनतोऽयात् ।**
**आप्लवमप्यवनिश्च्यवमानादाप ततोऽविरलं घनतोयात् ॥ ९७ ॥**

वर्षा वर्णयति—**नीलेति** । अथ नीलगलः विः दिवि वेगाद् आपततः घनतः अलं मुदम् अयात् । ततः च्यवमानात् घनतोयात् अवनिः अविरलम् आप्लवम् अपि आप ॥

नीलगलः विः—पक्षी, मयूर इत्यर्थः। आपततः—आगच्छतः। घनतः—मेघात्। अलम्—अत्यर्थम्। अयात्—प्राप। ततः—मेघात्। च्यवमानात्—गलतः। घनतोयात्—सान्द्रजलात्। अविरलम्—अनल्पम्। आप्लवम्—निमज्जनम् ॥ ९७ ॥

**चारु चचार सरस्सु विराजत्काकलिका कलहंसमहेला।**
**कामुकयोर्न जहार नटीभिः काकलिका कलहं समहेला ॥ ९८ ॥**

शरदं वर्णयति—**चार्विति**। विराजत्काकलिका कलहंसमहेला सरस्सु चारु चचार। नटीभिः समहेला का कलिका कामुकयोः कलहं न जहार ॥ विराजन्ती काकलिका—कल-सूक्ष्मध्वनिः यस्याः सा तथोक्ता। महेला—नारी। समा हेला—विलासः यस्याः सा तथोक्ता। नृत्यन्तीत्यर्थः ॥ कलिका—कोरकः। जहार—हृतवती। सर्वापि कलिका कामुकयोः कलहं हृतवतीत्यर्थः ॥ ९८ ॥

**शीतरुजं समयेऽथ परस्मिन् बाहुलतो रसिका शमयन्ती।**
**पत्युरशेत न नित्यमनृत्यद्बाहुलतोरसि का शमयन्ती ॥ ९९ ॥**

हेमन्तं वर्णयति—**शीतरुजमिति**। अथ बाहुलतः परस्मिन् समये का रसिका शीत-रुजं शमयन्ती अनृत्यद्बाहुलता शम् अयन्ती पत्युः उरसि नित्यं न अशेत ॥ बाहुलः—कार्तिक-मासः, तस्मात् परस्मिन् समये—मार्गशीर्षमासे। हेमन्तर्ताविति भावः। शीतरुजम्—शैत्यबाधाम्। अनृत्यद्बाहुलता—निश्चलभुजवल्ली। शम्—सुखम्। अयन्ती—गच्छन्ती। सर्वाः रसिकाः शयितवत्य इत्यर्थः ॥ ९९ ॥

**शीतकणाः श्रियमप्रतिबद्धाः सौरभया सरसामुदमार्जन्।**
**केऽपि जना लवलीलतयोद्यत्सौरभया सरसा मुदमार्जन् ॥ १०० ॥**

शिशिरं वर्णयति—**शीतेति**। सौरभया अप्रतिबद्धाः शीतकणाः सरसां श्रियं उद-मार्जन्। सरसाः केऽपि जनाः उद्यत्सौरभया लवलीलतया मुदम् आर्जन् ॥ सौरभया—सूर्यप्रभया। शीतकणाः—शीतलजलबिन्दवः। सरांसि—जलाशयाः। तेषाम् उदमार्जन्—

उन्मार्जनं कृतवन्तः। उद्यत् सौरभम्-परिमलः यस्याः तया। मुदम्-हर्षम्। आर्जन्-सम्पादितवन्तः ॥ १०० ॥

हृष्टः पिकः कृतरवस्तरवः शिरीषाः
पुष्पं दधुर्मुमुदिरे मुदिरे मयूराः।
रेजे विकासिकमलं कमलं तुषारो
वायुर्लसल्लवलिकावलि काननं च ॥ १०१ ॥

पद्यैनैकेन वसन्ताद्यान् षड्तून् वर्णयति—**हृष्टः इति**। हृष्टः पिकः कृतरवः (अभूत्)। शिरीषाः तरवः पुष्पं दधुः। मुदिरे (दृष्टे) मयूराः मुमुदिरे। विकासिकमलं कमलं रेजे। वायुः तुषारः (अभूत्)। काननं च लसल्लवलिकावलि (अभूत्)॥ पिकाः—कोकिलाः। मुदिरे—मेघे। विकासीनि कमलानि—पद्मानि यस्मिन्, तत्तथा। कमलम्—जलम्। तुषारः—शीतः। लसन्ती लवलिकावलिः यस्मिन् तत्तथा॥ हृष्टः पिकः कृतरवः अभूत् इति वसन्तः। शिरीषाः तरवः पुष्पं दधुः इति ग्रीष्मः। मुदिरे दृष्टे मयूराः मुमुदिरे इति वर्षाः। विकासिकमलं कमलं रेजे इति शरत्। वायुः तुषारः अभूत् इति हेमन्तः। काननं लसल्लवलिकावलि अभूत् इति शिशिरः॥ १०१ ॥

इत्थं सन्ततमार्तवी क्रमगतिः प्रत्यग्रमाधुर्यया-
दारामस्य महीरुहास्तु कलिकाः प्रत्यग्रमाधुर्यया।
रेमे तत्र नृपश्चिरं दयितया प्रत्यग्रमाधुर्यया
लावण्यस्य यया कृता जगति सा प्रत्यग्रमा धुर्यया ॥ १०२ ॥

इति श्रीगोदवर्मविद्वद्युवराजकृते
श्रीरामचरिते महाकाव्ये
चतुर्थः सर्गः

ससीतस्य रामस्य ऋतूपभोगमुपसंहरति— **इत्थमिति ।** यया तु आरामस्य महीरुहाः प्रत्यग्रं कलिका आधुः, (सा) आर्तवी क्रमगतिः इत्थं सन्ततं प्रत्यग्रमाधुरी (सती) अयात् । जगति लावण्यस्य धुर्यया यया सा रमा प्रत्यक् कृता, (तया) प्रत्यग्रमाधुर्यया दयितया (सह) नृपः तत्र चिरं रेमे । यया—ऋतुक्रमगत्या । आरामस्य—उपवनस्य । महीरुहाः—वृक्षाः । प्रत्यग्रम्—अग्रे अग्रे । कलिकाः—कोरकान् । आधुः—धृतवन्तः । आर्तवी—ऋतुसम्बन्धिनी । प्रत्यग्रा—अभिनवा माधुरी—माधुर्यं यस्याः सा तथा । अयात्—अगच्छत् । धुर्यया—धुरन्धरया । सा—प्रसिद्धा । रमा—लक्ष्मीः । प्रत्यक्—पराङ्मुखी । प्रत्यग्रम्—अभिनवं, माधुर्यं यस्याः, तया ॥ १०२ ॥

इति पण्डितरत्नश्रीनारायणपिषारोटिविरचितायां
श्रीरामचरितमहाकाव्यव्याख्यायां अन्वयार्थप्रबोधिन्यां
ऋतूपभोगवर्णनं नाम चतुर्थः सर्गः



# पञ्चमः सर्गः

अध्यासितं तदनु मन्मथबान्धवेन
कालेन काननमुदीक्ष्य कुतूहलिन्या ।
वैदेहराजसुतया सहितोऽयमारा-
दाराममार तरसा नृपतेः कुमारः ॥ १ ॥

सीतासमेतस्य रामस्योपवनप्राप्तिं प्रस्तौति—**अध्यासितमिति** । तदनु अयं नृपतेः कुमारः मन्मथबान्धवेन कालेन अध्यासितं काननं उदीक्ष्य कुतूहलिन्या वैदेहराजसुतया सहितः (सन्) तरसा आरात् आरामम् आर ॥ मन्मथबान्धवेन–वसन्तेन । आरात्–समीपस्थम् । आरामम्–उपवनम् । आर–प्राप ॥ १ ॥

उद्यानसीमनि चिरं स रिरंसमानः
प्रस्थातुमैहत यदा नरदेवसूनुः ।
सख्यं गताः कतिपये सरसाः पुमांसः
सत्रा वधूभिरनुजग्मुरमुं तदैव ॥ २ ॥

दयितासहितानां सुहृदां रामानुगमनमाह—**उद्यानेति** । यदा सः नरदेवसूनुः उद्यानसीमनि चिरं रिरंसमानः प्रस्थातुं ऐहत, तदा एव सख्यं गताः सरसाः कतिपये पुमांसः वधूभिः सत्रा अमुम् अनुजग्मुः ॥ रिरंसमानः–रन्तुमिच्छन् । ऐहत–ऐच्छत् । सत्रा–सह ॥ २ ॥

कन्दर्प एव कमनीयकलेवरोऽसा-
वद्यागतः सहरतिर्निजदर्शनोत्कः ।
इत्थं विशङ्कितमना इव मोदमानः
पुष्टिं चकार परमां विपिने वसन्तः ॥ ३ ॥

वने वसन्तपुष्टिं वर्णयति—**कदर्प इति** । 'असौ कमनीयकलेवरः, निजदर्शनोत्कः अद्य आगतः सहरतिः कन्दर्पः एव' इत्थं विशङ्कितमानाः इव मोदमानः वसन्तः विपिने परमां पुष्टिं चकार ॥ उत्कः–उत्सुकः । सहरतिः–रत्या सहितः । कन्दर्पः–कामः ॥ ३ ॥

स्वावासकाननमुपेयुषि रामचन्द्रे
नीराजनाय निखिलाधिपतेरमुष्य ।
दीपावलीव मधुना विधिना प्रयुक्ता
चाम्पेयकुड्मलततिः सुतरां चकाशे ॥ ४ ॥

चम्पकमुकुलान् वर्णयति—स्वावासेति । रामचन्द्रे स्वावासकाननं उपेयुषि, निखिलाधिपतेः अमुष्य नीराजनाय मधुना विधिना प्रयुक्ता दीपावली इव चाम्पेयकुड्मलततिः सुतरां चकाशे ॥ मधुना–वसन्तेन । चाम्पेयकुड्मलततिः–चम्पकमुकुलपङ्क्तिः । चकाशे–दिदीपे ॥ ४ ॥

मन्दानिलो मलयकन्दरगर्भजातः
सद्यस्तनं परिमलं परिपीय धात्र्याः ।
मुग्धः कुमार इव पूरितवंशकाण्डः
स्वच्छन्दमत्र विपिने सुचिरं चचार ॥ ५ ॥

मन्दानिलसञ्चारमाह—मन्दानिल इति । मलयकन्दरगर्भजातः मन्दानिलः धात्र्याः सद्यस्तनं परिमलं परिपीय मुग्धः कुमारः इव पूरितवंशकाण्डः (सन्) स्वच्छन्दम् अत्र विपिने सुचिरं चचार ॥ धात्र्याः–भूमेः, उपमातुश्च । सद्यस्तनम्–तत्क्षणजातम् । स्तनमिति च गम्यते । वंशकाण्डः–वेणुनाली ॥ वेणुगानलोलस्य नन्दसूनोः साम्यं मन्दानिलस्य शब्दशक्त्या प्रतीयते ॥ ५ ॥

सद्यःप्ररोहसुभगैः स्तबकप्रवालै-
रक्लिष्टकान्तिभिरशोकतरुप्रसूनैः ।
काश्मीरपङ्करचितैः कुचपत्रलेखै-
र्वेश्याङ्गनेव विरराज वनान्तभूमिः ॥ ६ ॥

वनान्तभूमिं वर्णयति—सद्य इति । सद्यःप्ररोहसुभगैः अक्लिष्टकान्तिभिः अशोकतरुप्रसूनैः स्तबकप्रवालैः वनान्तभूमिः काश्मीरपङ्करचितैः कुचपत्रलेखैः वेश्याङ्गना इव विरराज ॥ स्तबकप्रवालैः–कुसुमगुच्छैः पल्लवैश्च । काश्मीरपङ्कः–कुङ्कुमानुलेपनम् । पत्रलेखः–विशेषकरचना ॥ ६ ॥

शिर्णं पुरा शिशिरदुस्सहपौरुषेण
प्रत्यग्रतां गमयति स्म वनं वसन्तः ।
वेनस्य दुष्टचरितेन विनष्टसारं
पृथ्वीतलं पृथुरिव प्रथितप्रभावः ॥ ७ ॥

वनप्रदेशस्य नवीभावं वर्णयति—**शीर्णमिति** । वसन्तः पुरा शिशिरदुस्सहपौरुषेण शीर्णं वनम्, वेनस्य दुष्टचरितेन विनष्टसारं पृथ्वीतलं, प्रथितप्रभावः पृथुः इव, प्रत्यग्रतां गमयति स्म ॥ प्रत्यग्रताम्–नवत्वम् । गमयति स्म–प्रापयामास ॥ ७ ॥

आमोदिनी सुमनसः पुरुषस्य योगा-
दाबिभ्रती तिलकमुल्बणगन्धसारम् ।
आरामवीथिरधिकं सरसेव योषा
केषां न चेतसि चकार विहारवाञ्छाम् ॥ ७ ॥

उपवनपङ्क्तेः कामोद्दीपकतामाह—**आमोदिनीति** । सुमनसः योगात् आमोदिनी उल्बण-गन्धसारं तिलकम् आबिभ्रती आरामवीथिः, पुरुषस्य (योगात् आमोदिनी) (उल्बणगन्धसारं तिलकम् आबिभ्रती) सरसा योषा इव केषां चेतसि विहारवाञ्छाम् अधिकं न चकार ॥ सुमनसः–पुष्पस्य । आमोदिनी–सुरभिला, योषापक्षे प्रमोदवती । उल्बणगन्धसारम्–व्यक्त-विशिष्टगन्धम् । योषापक्षे गन्धसारश्चन्दनम् । तिलकम्–तिलकाख्यवृक्षपुष्पम् । योषापक्षे विशेषकम् । विहारवाञ्छाम्–क्रीडाकौतुकम ॥ ८ ॥

स्कन्धात्प्रभृत्युपचितैः कनकप्रकाशै-
र्गुच्छैः कृतच्छविरराजत राजवृक्षः ।
तस्मै दशाननविनाशमपेक्षमाणैः
र्दत्तो बलिः सुरजनैरिव रत्नसानुः ॥ ९ ॥

कुसुमितं कर्णिकारं वर्णयति— **स्कन्धादिति** । स्कन्धात् प्रभृति उपचितैः कनक-प्रकाशैः गुच्छैः कृतच्छविः राजवृक्षः, दशाननविनाशम् अपेक्षमाणैः सुरजनैः तस्मै दत्तः बलिः रत्नसानुः इव अराजत ॥ गुच्छैः– कुसुमस्तबकैः । राजवृक्षः–कर्णिकारः । दशानन-

विनाशम्–रावणवधम्। तस्मै–रामाय। बलिः–करत्वेन दीयमानो भागः। रत्नसानुः–सुमेरुपर्वतः ॥ ९ ॥

कल्लोलिनीषु कमलानि विकस्वराणि
रेजुर्भ्रमद्भ्रमरमेचकितोदराणि ।
आलोकितुं मनुजभर्तुररण्यलीलां
तासामिव प्रकटितानि विलोचनानि ॥ १० ॥

विकसितानि कमलानि वर्णयति—**कल्लोलिनीष्विति**। कल्लोलिनीषु विकस्वराणि भ्रमद्भ्रमरमेचकितोदराणि कमलानि, मनुजभर्तुः अरण्यलीलाम् आलोकितुं प्रकटितानि तासां विलोचनानि इव रेजुः। कल्लोलिनीषु–नदीषु। मेचकितम्–श्यामीकृतम्। तासाम्–नदीनाम् ॥ १० ॥

कालुष्यहारि वचसः कलिकाकदम्ब-
मालोक्य कोकिलगणः सहकारवल्ल्याः ।
प्रीतिं परामुपजगाम यथा हि लोकः
सान्निध्यमात्मनि गिरामधिदेवतायाः ॥ ११ ॥

चूतकलिकाकलापं वर्णयति—**कालुष्येति**। वचसः कालुष्यहारिं सहकारवल्ल्याः कलिकाकदम्बम् आलोक्य कोकिलगणः, यथा हि लोकः आत्मनि गिराम् अधिदेवतायाः सान्निध्यम् (आलोक्य, तथा) परां प्रीतिम् उपजगाम। कालुष्यम्–दोषं हरतीति तथा। सहकारः–चूतः। कलिका–कोरक। गिराम् अधिदेवतायाः–सरस्वत्याः। उपजगाम–प्राप ॥ कोकिलाः चूतकलिकाङ्कुरभक्षणेन कण्ठमाधुर्यं प्राप्नुवन्तीति प्रसिद्धिः ॥ ११ ॥

दृष्ट्वा वनं वहुलपुष्परसालसालं
बुद्धिर्न कस्य भवति स्म रसालसालम् ।
आविश्चकार ससजोऽपि तदा पशूनां
भावं मनोभवकृतं दयितानुवर्ती ॥ १२ ॥

चूतपुष्पाणि वर्णयति—**दृष्ट्वेति**। बहुलपुष्परसालसालं वनं दृष्ट्वा कस्य बुद्धिः अलं स्मरसालसा न भवति। तदा पशूनां समजः अपि दयितानुवर्ती मनोभवकृतं भावम् आविश्चकार॥ बहुलानि पुष्पाणि येषु ते बहुलपुष्पाः। तादृशा रसालसालाः—चूतवृक्षाः यस्मिन्, तत्तथोक्तम्। अलम्—अत्यर्थम्। स्मरसालसा—कामालस्यवती। समजः—सङ्घः। भावम्—विकारम्॥ १२॥

**नीरन्ध्रशाखिपरिशोभिनि निम्नगानां**
**तीरे निषद्य कृतचर्वितचर्वणानाम्।**
**आघ्राणचुम्बनकरः सततं मृगीणा-**
**मुत्थापनार्थमुदयुङ्क्त कुरङ्गसार्थः॥ १३॥**

मृगाणां कामाभिनिवेशं वर्णयति—**नीरन्ध्रेति**। नीरन्ध्रशाखिपरिशोभिनि निम्नगानां तीरे निषद्य सततं कृतचर्वितचर्वणानां मृगीणां उत्थापनार्थम्, कुरङ्गसार्थः आघ्राणचुम्बनकरः (सन्) उदयुङ्क्त॥ नीरन्ध्रैः—निरन्तरैः शाखिभिः—वृक्षैः परिशोभते इति तथोक्ते। निम्नगानाम्—नदीनाम्। कुरङ्गसार्थः—मृगसङ्घः। आघ्राणं चुम्बनं च कुर्वन् तथा। उदयुङ्क्त—उद्युक्तवान्॥ १३॥

**सौरभ्यपुष्कलितपुष्करपुष्करायां**
**क्रीडद्द्वयं द्विरदयोरथ पुष्करिण्याम्।**
**तत्पुष्करैरकृत पुष्करसंगृहीतै-**
**र्व्यत्युक्षणं यदिह दुष्करमन्यसत्त्वैः॥ १४॥**

गजमिथुनस्य परस्परं जलाभ्युक्षणं वर्णयति—**सौरभ्येति**। अथ सौरभ्यपुष्कलित-पुष्करपुष्करायां पुष्करिण्यां क्रीडत् द्विरदयोः द्वयं पुष्करसङ्गृहीतैः तत्पुष्करैः, इह अन्यसत्त्वैः यद् दुष्करम्, तद् व्यत्युक्षणम् अकृत॥ सौरभ्येण पुष्कलितानि—अतिशोभनीकृतानि पुष्कराणि—पद्मानि यस्मिन्। तादृशं पुष्करम्—जलं यस्यां तस्याम्। पुष्करिण्याम्—नलिन्याम्। द्विरदयोः—गजयोः। पुष्करे—करिहस्ताग्रे सङ्गृहीतैः। तत्पुष्करैः तस्याः—नलिन्याः जलैः। अन्यसत्त्वैः—अन्यमृगैः। व्यत्युक्षणम्—कर्मव्यतिहाररूपं परस्परजलाभ्युक्षणम्। अकृत—चकार॥ १४॥

अङ्गास्पृशि प्रणयिनि प्रबलानुरागं
चुङ्कारमङ्कुरयति स्म रथाङ्गकन्या ।
श्वेतच्छदश्च विततच्छदचामरेण
प्रासेवत प्रियतमां सुरतश्रमार्ताम् ॥ १५ ॥

चक्रवाकहंसमिथुनयोः प्रेमप्रवृत्तिमाह—**अङ्गेति** । प्रणयिनि अङ्गास्पृशि (सति) रथाङ्गकन्या प्रबलानुरागं चुङ्कारं अङ्कुरयति स्म । श्वेतच्छदः विततच्छदचामरेण सुरतश्रमार्तां प्रियतमां प्रासेवत च ॥ प्रणयिनि—कान्ते । अङ्गास्पृशि—शरीरमस्पृशति । रथाङ्गः—चक्रवाकः । श्वेतच्छदः—हंसः । छदः—पक्षः ॥ १५ ॥

उद्दीपितं वनमिति क्षितिपालकेतुः
सत्कर्तुमैहत समेत्य समीकृतेशः ।
सम्भावना भवति माधवसंश्रयाणां
केषां न कुत्र न कदा न कुतो न लोके ॥ १६ ॥

रामो वसन्तोद्दीपितं वनं सत्कृतवानित्याह—**उद्दीपितमिति** । समीकृतेशः क्षितिपालकेतुः इति उद्दीपितं वनं समेत्य सत्कर्तुं ऐहत । लोके माधवसंश्रयाणां केषां सम्भावना न भवति, कुत्र (सम्भावना) न (भवति), कदा (सम्भावना) न (भवति), कुतः (सम्भावना) न (भवति) ॥ समीकृतेशः—शिवतुल्यः । ऐहत—ऐच्छत् । माधवः—वसन्तः, विष्णुश्च । सम्भावना—सत्कारः । कुत्र—कस्मिन् देशे । कदा—कस्मिन् काले । कुतः—कस्मात् पुरुषात् ॥ १६ ॥

उद्यानपालकजनैरुपदिष्टवर्त्मा
सद्यः कृतप्रणमनैः सदयावलोकः ।
अन्तर्विवेश विपिनस्य विशामधीशः
शृङ्गारयोनिरपि चेतसि तावदस्य ॥ १७ ॥

रामस्य वनप्रवेशमाह—**उद्यानेति** । विशाम् अधीशः सद्यः कृतप्रणमनैः उद्यानपालकजनैः उपदिष्टवर्त्मा सदयावलोकः विपिनस्य अन्तः विवेश । तावत् अस्य चेतसि शृङ्गारयोनि

अपि (विवेश) ॥ विशाम्—प्रजानाम् । विपिनस्य—वनस्य । अस्य—रामस्य । शृङ्गार-योनिः-कामः ॥ १७ ॥

तस्मिन् विशत्युपवनीमवनीशसूनौ
कार्यद्वये युगपदेव बभूव वायोः ।
वल्लीवधूकुसुमवासविमोचने च
श्रान्तिच्छिदि व्यजनकर्मणि चाधिकारः ॥ १८ ॥

वायुना कृतं रामस्य सेवनमाह—**तस्मिन्निति**। तस्मिन् अवनीशसूनौ उपवनीं विशति (सति) वायोः वल्लीवधूकुसुमवासविमोचने च, श्रान्तिच्छिदि व्यजनकर्मणि च कार्यद्वये युगपद् एव अधिकारः बभूव ॥ श्रान्तिच्छिदि—श्रमच्छेदकरे। व्यजनकर्मणि—वीजने ॥ १८ ॥

तस्मिन् निरन्तरतरच्छदपादपाली-
संरुद्धभास्करकरप्रकरप्रसारे ।
ज्योतिर्मयेन वपुषा वसुधाधिपस्य
क्षीणं तमिस्रमभवच्चिरलब्धवासम् ॥ १९ ॥

रामस्य कान्त्या वने प्रकाशप्रसरमाह—**तस्मिन्निति**। निरन्तरतरच्छदपादपालीसं-रुद्धभास्करकरप्रकरप्रसारे तस्मिन् चिरलब्धवासं तमिस्रं ज्योतिर्मयेन वसुधाधिपस्य वपुषा क्षीणम् अभवत् ॥ छदाः—पत्राणि। भास्करकराः—सूर्यरश्मयः। तस्मिन्—उपवने। तमिस्रम्—अन्धकारः। ज्योतिर्मयेन—तेजस्विना। वपुषा—शरीरेण। क्षीणम्—प्रशान्तम् ॥ १९ ॥

सन्दर्शितानधिकृतैरतिपारिजातान्
मन्देतरप्रसवभूतिविभूषिताङ्गान् ।
पश्यन्नसौ विटपिनः परिरब्धवल्ली-
नुद्यत्कुतूहलमतिः सुचिरं चचार ॥ २० ॥

रामस्य वृक्षावलोकनकुतूहलं वर्णयति—**सन्दर्शितानीति**। अधिकृतैः सन्दर्शितान् अतिपारिजातान् मन्देतरप्रसवभूतिविभूषिताङ्गान् परिरब्धवल्लीन् विटपिनः पश्यन् असौ उद्यत्-

कुतूहलमतिः सुचिरं चचार ॥ अतिपारिजातान्–पारिजातातिशायिनः । प्रसवभूतिः–पुष्पफल-समृद्धिः । परिरब्धाः–आश्लिष्टाः वल्ल्यः यैः, तादृशान् । विटपिनः–वृक्षान् ॥ २० ॥

**साकं विदेहतनयापि सखीजनेन**
**प्राणेशमार्गमनुसृत्य पयोजमृद्वी ।**
**आगामिनो गहनकाननधावनस्य**
**प्रागेव शीलितुमिव प्रचचार बाला ॥ २१ ॥**

सीताया रामानुगमनं वर्णयति—**साकमिति** । पयोजमृद्वी बाला विदेहतनया अपि, आगामिनः गहनकाननधावनस्य, प्राग् एव शीलितुं इव सखीजनेन साकं प्राणेशमार्गम् अनुसृत्य प्रचचार ॥ धावनस्य शीलितुं–धावनं शीलितुमित्यर्थः ॥ २१ ॥

**नीरन्ध्रपल्लवशिफानिभृतप्रकाण्डं**
**सायन्तनाभ्रसमशोभमशोकसालम् ।**
**देवः पुरोभुवि ददर्श स दर्शनीयं**
**कामस्य दूष्यमिव रक्तपटीनिबद्धम् ॥ २२ ॥**

अशोकवृक्षदर्शनं वर्णयति—**नीरन्ध्रेति** । सः देवः पुरोभुवि, नीरन्ध्रपल्लवशिफा-निभृतप्रकाण्डं सायन्तनाभ्रसमशोभं रक्तपटीनिबद्धं कामस्य दूष्यं इव दर्शनीयं अशोक-सालं ददर्श ॥ नीरन्ध्रपल्लवाभिः–सान्द्रकिसलयाभिः शिफाभिः–शाखामूलैः निभृतः–आच्छादितः प्रकाण्डः–स्कन्धः यस्य तम् । सायन्तनाभ्रं–सान्ध्यमेघः । दूष्यं–वस्त्रगृहम् । सालः–वृक्षः ॥ २२ ॥

**यः सम्पदा सुमनसां निजनामवाच्यं**
**कान्तावियोगविधुरं जनमातनोति ।**
**ऐक्ष्वाक एष नृपतिः कमनीयशोभ-**
**मैक्षिष्ट तं कुरबकद्रुममग्रदेशे ॥ २३ ॥**

कुरवकदर्शनं वर्णयति—**य इति** । यः सुमनसां सम्पदा कान्तावियोगविधुरं जनं निज-नामवाच्यं आतनोति, तं कमनीयशोभं कुरवकद्रुमं ऐक्ष्वाकः एषः नृपतिः अग्रदेशे ऐक्षिष्ट ॥

सुमनसां–पुष्पाणां निजनामवाच्यं–निजेन कुरवक इति नाम्ना वक्तुं योग्यम्। कु–ईषत् रवः–शब्दः यस्य सः कुरवकः। आक्रन्दगद्गदकण्ठ इत्यर्थः, तादृशम्। आतनोति–करोति। ऐक्षिष्ट–दृष्टवान् ॥ २३ ॥

दृष्ट्वा नृपस्तमबलाकुचकुम्भसङ्ग-
मभ्यर्थयन्तमिव षट्पदकाकुनादैः।
स्मित्वा मनागनुचरद्दयितामुखेन्दौ
व्यापारयद्वलितकन्धरमक्षिकोणम् ॥ २४ ॥

युवतीजनालिङ्गनरूपं कुरवकदोहदं सूचयति—दृष्ट्वेति। षट्पदकाकुनादैः अबलाकुचकुम्भसङ्गं अभ्यर्थयन्तं इव तं दृष्ट्वा नृपः मनाक् स्मित्वा अनुचरद्दयितामुखेन्दौ वलितकन्धरम् (यथा तथा) अक्षिकोणं व्यापारयत्॥ षट्पदानां–भृङ्गाणां काकुनादैः–ध्वनिविकारैः। अबलाकुचकुम्भसङ्गं–स्त्रियाः आलिङ्गनम्। तत् खलु कुरवकस्य दोहदम्। तं–कुरवकम्। वलितकन्धरं–परिवर्तितकण्ठम्॥ २४ ॥

कैवर्तवृत्तिमवलम्ब्य मनोभवेन
क्षिप्तं वने बडिशमग्रलसद्द्विरेफम्।
अन्तर्विसारमखिलस्य जिघृक्षुणेति
शङ्कां चकार स निरीक्ष्य पलाशपुष्पम् ॥ २५ ॥

पलाशपुष्पं वर्णयति—कैवर्तेति। सः अग्रलसद्द्विरेफं पलाशपुष्पं निरीक्ष्य, अखिलस्य अन्तर्विसारं जिघृक्षुणा मनोभवेन कैवर्तवृत्तिम् अवलम्ब्य वने क्षिप्तं बडिशं इति शङ्कां चकार॥ द्विरेफः–भृङ्गः। अन्तः–अन्तरङ्गं मनः एव विसारम्–मत्स्यम। जिघृक्षुणा–ग्रहीतुमिच्छुना। मनोभवेन–कामेन। कैवर्तवृत्तिम्–धीवरजीवितम्। वने–कानने, जले च। बडिशम्–मत्स्यवेधनं ॥ २५ ॥

चामीकराभमपि चम्पकमुग्रगन्धं
दूरोज्झितं मधुकरैर्मृदितान्यपुष्पैः।
आलोक्य भूपतिरचिन्तयदन्तरेवं
क्रूरत्वमेव कुरुते नरमप्रधृष्यम् ॥ २६ ॥

चम्पकपुष्पं वर्णयति—चामीकरेति। चामीकराभम् अपि उग्रगन्धं चम्पकं मृदितान्यपुष्पैः मधुकरैः दूरोज्झितम् आलोक्य भूपतिः अन्तः एवम् अचिन्तयत्—'क्रूरत्वम् एव नरम् अप्रधृष्यं कुरुते' ॥ चामीकरम्—स्वर्णम्। मधुकरैः—भृङ्गैः। उज्झितम्—त्यक्तम्। अप्रधृष्यम्—अनभिभवनीयम् ॥ २६ ॥

पञ्चायुधस्य शरपञ्चकमीक्षणाभ्यां
प्रत्येकमस्य पपुषोऽपि न चित्तभीतिः।
भेत्तुं पुरेव हृदयं न हि तस्य शक्ति-
र्यत् प्रेयसी सहचरी प्रमदा कुलश्रीः ॥ २७ ॥

यानि पुष्पाणि कामस्य शराः, तानि रामो निर्भयं नेत्राभ्यां पिबति। पञ्चायुधस्य शरपञ्चकम् ईक्षणाभ्यां प्रत्येकं पपुषः अपि अस्य चित्तभीतिः न (आसीत्)। तस्य पुरा इव (अस्य) हृदयं भेत्तुं शक्तिः न हि (अस्ति), यत् कुलश्रीः प्रमदा प्रेयसी (अस्य) सहचरी (अस्ति)। पञ्चायुधस्य—कामस्य। शरपञ्चकम्—पञ्चशरान्। अरविन्दाशोकचूतनवमल्लिका-नीलोत्पलाख्यानि पञ्च पुष्पाणीत्यर्थः। पपुषः—पीतवतः। तस्य—कामस्य। अस्य—रामस्य। सहचरी—सह चरन्ती ॥ २७ ॥

आलम्बितं द्विजकुलेन विरोचमानं
बालातपद्युतिमुषा नवपल्लवेन।
आम्रातकं प्रतिननन्द वसन्तलक्ष्म्या-
स्ताम्राधरं मुखमिव प्रकटं प्रजेशः ॥ २८ ॥

आम्रातकं रामः प्रतिनन्दति। द्विजकुलेन आलम्बितं बालातपद्युतिमुषा नवपल्लवेन विरोचमानम् आम्रातकम्, ताम्राधरं प्रकटं वसन्तलक्ष्म्याः मुखम् इव प्रजेशः प्रतिननन्द॥ द्विजकुलेन—पक्षिवृन्देन, मुखपक्षे दन्तपङ्क्त्या। आम्रातकम्—तदाख्यं वृक्षम्। प्रतिननन्द—प्रशशंस ॥ २८ ॥

सम्भावनीयमभिरूपजनेन मूर्ध्ना
पुष्टं रसैरुपचितैरुदयत्परार्थम्।
हृद्यं कवेरिव वचः कलधौतवर्णं
पृथ्वीपतिर्निरवर्णत कर्णिकारम् ॥ २९ ॥

रामः कर्णिकारं निर्वर्णयति । अभिरूपजनेन मूर्ध्ना सम्भावनीयं उपचितैः रसैः पुष्टं उदयत्परार्थम् कलधौतवर्णं कवेः वचः इव हृद्यं कर्णिकारं पृथ्वीपतिः निरववर्णत ॥ अभि-रूपाः—मनोज्ञाः, पण्डिताश्च । सम्भावनीयम्—आदरणीयम् । रसैः—मकरन्दैः, शृङ्गारादिभिश्च । उदयन् परार्थः परप्रयोजनम्, व्यङ्ग्यार्थश्च यस्मिन्, तत्तथा । कलधौतवर्णम्—स्वर्णवर्णम्, मधुर-शुद्धाक्षरयुक्तं च । कर्णिकारं—कर्णिकारपुष्पम् । निरववर्णत—विलोकितवान्, वर्णितवांश्च ॥ २९ ॥

सज्जन्मधुव्रतमषीकृतमध्यशोभं
तिग्मांशुवंशतिलकस्तिलकं विलोक्य ।
कस्तूरिकाकृतविशेषविशेषकाढ्य-
स्वप्रेयसीवदनदर्शनमोदमादात् ॥ ३० ॥

रामस्तिलकपुष्पं पश्यन् मोदते । तिग्मांशुवंशतिलकः सज्जन्मधुव्रतमषीकृतमध्यशोभं तिलकं विलोक्य, कस्तूरिकाकृतविशेषविशेषकाढ्यस्वप्रेयसीवदनदर्शनमोदम् आदात् ॥ तिग्मांशुवंशतिलकः—सूर्यवंशालङ्कारभूतो रामः । मधुव्रतः—भृङ्गः । तिलकम्—तिलकपुष्पम् । विशेषकाढ्यम्—तिलकयुक्तम् । आदात्—प्राप ॥ ३० ॥

पुष्पं दधाति पुरुषोऽयमतः परं किं
चित्रं भुवीति परिहासमिवादधाना ।
आशङ्कि दाशरथिना दशनायमानै-
राविर्भवद्भिरतिमुक्तलता प्रसूनैः ॥ ३१ ॥

अतिमुक्तलतां वर्णयति—**पुष्पमिति** । दशनायमानैः आविर्भवद्भिः प्रसूनैः (उपलक्षिता) अतिमुक्तलता, 'अयं पुरुषः पुष्पं दधाति । भुवि अतः परं चित्रं किम्' इति परिहासम् आदधाना इव दाशरथिना आशङ्कि ॥ दशनायमानैः—दन्तसदृशैः प्रसूनैः । पुष्पम्—कुसुमम्, आर्तवं च । चित्रम्—आश्चर्यम् । आशङ्कि—उत्प्रेक्षितम् ॥ ३१ ॥

वक्षोरुहः किमु वनालिविलासवत्याः
कन्दर्पदारकरपङ्कजकन्दुकः किम् ।
शङ्कामिति क्षितिभृता वहता तदानीं
जम्बीरजं फलमलोकि विपाकपिङ्गम् ॥ ३२ ॥

जम्बीरफलं वर्णयति—**वक्षोरुह इति।** वनालिविलासवत्याः वक्षोरुहः किमु, कन्दर्पदारकरपङ्कजकन्दुकः किम्, इति शङ्कां वहता क्षितिभृता, विपाकपिङ्गं जम्बीरजं फलम् अलोकि॥ वनालिः–वनपङ्क्तिः एव विलासवती–सुन्दरी, तस्याः। कन्दर्पदाराः–रतिदेवी। जम्बीरजं फलम्–नारङ्गकम्। अलोकि–दृष्टम्॥ ३२॥

**छन्नं छदेन शिथिलं फलमेतदाप्तुं**
**मन्दं परिभ्रमति पश्य मधुव्रतोऽयम्।**
**इत्थं प्रिये वदति सस्मितमुत्पलाक्षी**
**वक्षोजकङ्कटपटं दृढमामुमोच॥ ३३॥**

रामो जम्बीरफलमधिकृत्य सीतां साकूतं वदति। 'अयं मधुव्रतः छदेन छन्नं शिथिलं एतत् फलम् आप्तुम् मन्दं परिभ्रमति। पश्य।' इत्थं प्रिये सस्मितं वदति (सति) उत्पलाक्षी वक्षोजकङ्कटपटं दृढम् आमुमोच॥ छदेन–पत्रेण। छन्नम्–आच्छादितम्। उत्पलाक्षी–सीता॥ वक्षोजकङ्कटपटम्–स्तनावरणवस्त्रम्। आमुमोच–बबन्ध॥ ३३॥

**खर्जूरसाररचितः कमलायुधस्य**
**स्वच्छः पतद्ग्रह इव प्रतिभासते यत्।**
**धत्तूरमैक्षत स तद्भ्रमरेण पूर्णं**
**भुक्तोज्झितक्रमुकलेशविलासभाजा॥ ३४॥**

धत्तूरपुष्पं वर्णयति—**खर्जूरेति।** यत्, कमलायुधस्य खजूरसाररचितः स्वच्छः पतद्ग्रहः इव प्रतिभासते, भुक्तोज्झितक्रमुकलेशविलासभाजा भ्रमरेण पूर्णं तद् धत्तूरं सः ऐक्षत॥ कमलायुधस्य–कामस्य। खर्जूरसारः–स्वच्छं रजतम्। पतद्ग्रहः–प्रतिग्राहः। धत्तूरम्–उन्मत्तकुसुमम्॥ ३४॥

**तत्तद्द्रुमानथ विलोक्य विलोक्य मन्दं**
**पत्न्या समं कुसुमकोमलगात्रयष्ट्या।**
**उद्यानभूवरतनोरिव नाभिरन्ध्रं**
**पद्माकरं परमशोभनमाप भूपः॥ ३५॥**

राम उद्यानमध्यगतं पद्माकरमुपगच्छति। अथ भूपः कुसुमकोमलगात्रयष्ट्या पत्न्या समं तत्तद्द्रुमान् मन्दं विलोक्य विलोक्य, उद्यानभूवरतनोः नाभिरन्ध्रम् इव (स्थितं) परमशोभनं पद्माकरम् आप॥ उद्यानभूः एव वरतनुः—सुन्दरगात्री, तस्याः। आप—प्राप ॥ ५३ ॥

विद्वज्जनस्य हृदयैरिव नष्टपङ्कै-
र्मुक्तापरागनिकरैरिव शुभ्रवर्णैः।
माधुर्यवद्भिरमृतैरिव वारिपूरैः
पूर्णं हिमांशुकिरणैरिव शीतशीतैः ॥ ३६ ॥

अथाष्टभिः श्लोकैरुद्यानमेव विशिनष्टि। कीदृशं पद्माकरमाप? विद्वज्जनस्य हृदयैः इव नष्टपङ्कैः, मुक्तापरागनिकरैः इव शुभ्रवर्णैः, अमृतैः इव माधुर्यवद्भिः, हिमांशु-किरणैः इव शीतशीतैः वारिपूरैः पूर्णं (पद्माकरम् आप)। नष्टः पङ्कः—कर्दमः, पापं च येषां तैः ॥ ३६ ॥

पर्यन्तभित्तिगतनूतनपद्मराग-
ज्योतिष्प्रतानपरिवेषविशेषरम्यम्।
आताम्रगैरिकपरिष्कृतनेमिभाग-
शीतांशुमण्डलमिवोल्लिखितं धरायाम् ॥ ३७ ॥

पुनः कीदृशं पद्माकरम्? पर्यन्तभित्तिगतनूतनपद्मरागज्योतिष्प्रतानपरिवेषविशेषरम्यम् आताम्रगैरिकपरिष्कृतनेमिभागं धरायाम् उल्लिखितं शीतांशुमण्डलम् इव (स्थितं पद्माकरम्) ॥ पद्मरागाः—तदाख्यानि रत्नानि। प्रतानम्—समूहः। गैरिकम्—मनश्शिलाविशेषः। नेमिः—पर्यन्तभागः। धरायाम्—भूमौ। शीतांशुः—चन्द्रः ॥ ३७ ॥

लाक्षारसेन पुरवासिविलासिनीनां
संक्रामितेन चरणैरुपलक्षिताभिः।
स्वच्छप्रभस्फटिकसञ्चयसञ्चिताभिः
सोपानवीथिभिरलङ्कृतमुज्ज्वलाभिः ॥ ३८ ॥

पुनः कीदृशं पद्माकरम्? पुरवासिविलासिनीनां चरणैः संक्रामितेन लाक्षारसेन उपलालिताभिः स्वच्छप्रभस्फटिकसञ्चयसञ्चिताभिः उज्ज्वलाभिः सोपानपङ्क्तिभिः अलङ्कृतं (पद्माकरम्। लाक्षारसेन–अलक्तकरसेन ॥ ३८ ॥

आकर्षतेव तलमंशुमतः करेण
संसर्गतः स्वपयसामपि निर्मलत्वात्।
आलोककस्य विदुषोऽपि जनस्य चित्ते
निम्नत्वमात्मगतमप्रतिभासयन्तम् ॥ ३९ ॥

पुनः कीदृशं पद्माकरम्? तलम् आकर्षता इव अंशुमतः करेण संसर्गतः, स्वपयसां निमलत्वाद् अपि, विदुषः अपि आलोककस्य जनस्य चित्ते आत्मगतं निम्नत्वं अप्रतिभासयन्तं (पद्माकरम्)। तलम्–अन्तस्तलम्। अंशुमतः–सूर्यस्य। करेण–रश्मिना। संसर्गतः–संयोगात्। विदुषः–विज्ञानवतः। निम्नत्वम्–अगाधताम्। अप्रतिभासयन्तम्–अप्रकाशयन्तम् ॥ ३९ ॥

बालानिलागमविजृम्भितवीचिमालं
नीलारविन्दललितं लसमानफेनम्।
सभ्रूविलासमनुवर्तितनेत्रपद्मं
वक्त्रं सहासमिव वारविलासिनीनाम् ॥ ४० ॥

पुनः कीदृशं पद्माकरम्? बालानिलागमविजृम्भितवीचिमालं नीलारविन्दललितं लसमानफेनम्, सभ्रूविलासम् अनुवर्तितनेत्रपद्मं सहासं वारविलासिनीनां वक्त्रम् इव (स्थितं पद्माकरम्)। बालानिलः–मन्दमारुतः। वारविलासिनीनाम्–वेश्यास्त्रीणाम्। वक्त्रम्–मुखम् ॥ ४० ॥

नालावधिस्फुटितनीरजकोरकाणां
व्याजेन सादरमिलद्भ्रमरद्वयानाम्।
आदर्शभावमवलम्ब्य नभश्चरीणां
गृह्णानमश्रममिवाप्सरसां मुखानि ॥ ४१ ॥

पुनः कीदृशं पद्माकरम् ? सादरमिलद्भ्रमरद्वयानां नालावधिस्फुटितनीरजकोरकाणां व्याजेन नभश्चरीणाम् अप्सरसाम् आदर्शभावमवलम्ब्य (तासाम्) मुखानि गृह्णानम् इव (स्थितम् पद्माकरम्)॥ नालावधि–नालपर्यन्तं स्फुटितानाम्–विकसितानाम् नीरजकोरकाणाम्–कमलकलिकानाम्। नभश्चरीणाम्–आकाशसञ्चारिणीनाम्। अप्सरसाम्–स्वर्वेश्यानाम्। आदर्शभावम्–दर्पणत्वम्। गृह्णानम्–प्रतिबिम्बयन्तम् ॥ ४१ ॥

शोभाभिभूतहिमवालुकवालुकेन
छायाजुषा सविधरोपितपादपेन।
तीरेण राजितमतीरयता विमोक्तुं
बन्दीकृतं निजगुणैर्हृदयं जनानाम् ॥ ४२ ॥

पुनः कीदृशं पद्माकरम ? शोभाभिभूतहिमवालुकवालुकेन सविधरोपितपादपेन छायाजुषा, निजगुणैः बन्दीकृतं जनानां हृदयं विमोक्तुम् अतीरयता तीरेण राजितं (पद्माकरम्)। शोभया अभिभूता–जिता हिमवालुका–कर्पूरं यया तादृशी वालुका–सिकता यस्मिन्, तेन तथोक्तेन। सविधे रोपिताः–संवर्धिताः पादपाः–वृक्षाः यस्मिन्, तेन तथोक्तेन। छायाजुषा–अनातपवता। बन्दीकृतम्–प्रसह्य बद्धम्। अतीरयता–अपारयता। अशक्नुवतेत्यर्थः॥

हस्तं हरेरिव रथाङ्गनिवासभूतं
चित्तं मुनेरिव चिराय गृहीतहंसम्।
सौमेरवं शिर इवानिमिषावलम्बं
सङ्ग्रामचत्वरमिव प्रचलत्कबन्धम् ॥ ४३ ॥

पुनः कीदृशं पद्माकरम् ? हरेः हस्तम् इव रथाङ्गनिवासभूतम्, मुनेः चित्तम् इव चिराय गृहीतहंसम्, सौमेरवं शिरः इव अनिमिषावलम्बम्, सङ्ग्रामचत्वरम् इव प्रचलत्कबन्धं (पद्माकरम्)॥ रथाङ्गः–चक्रवाकः, सुदर्शनाख्यं चक्रं च। गृहीतः–स्वायत्तीकृतः, ज्ञातश्च, हंसः पक्षिविशेषः, परमात्मा च येन तं तथोक्तम्। सौमेरवम्–सुमेरुसम्बन्धि। शिरः–शिखरम्। अनिमिषाः–मत्स्याः, देवाश्च। सङ्ग्रामचत्वरम्–रणाङ्गणम्। कबन्धम्–क्रियायुक्तम् अपमूर्धकलेबरम्, जलं च ॥ ४३ ॥

सम्प्राप्य तं रघुपतिश्चिरमीक्षमाणः
पञ्चेन्द्रियाण्यपि तदीयगुणैरतर्प्सीत् ।
कूले च तस्य कमनीयरसालमूले
नीलाश्मजालनिचिते निषसाद जोषम् ॥ ४४ ॥

रामः पद्माकरकूले निषीदति । रघुपतिः तं सम्प्राप्य चिरं ईक्षमाणः (सन्) तदीयगुणैः पञ्चेन्द्रियाणि अपि अतर्प्सीत् । तस्य कूले नीलाश्मजालनिचिते कमनीयरसालमूले जोषं निषसाद च ॥ अतर्प्सीत्–तर्पितवान् । नीलाश्मानः–नीलोपलाः । रसालः–चूतवृक्षः । जोषम्–तूष्णीम् । निषसाद–निषण्णः ॥ ४४ ॥

छायेव भर्तुरनु चेष्टितमाकलय्य
क्षोणीसुतापि तदुपान्तमलञ्चकार ।
आबध्नती सुमनसां स्वयमार्जितानां
लीलापयोरुहमृणालगुणेन मालाम् ॥ ४५ ॥

सीतापि रामसमीपे उपविशति । क्षोणीसुता अपि छाया इव भर्तुः चेष्टितम् आकलय्य अनु स्वयम् आर्जितानां सुमनसां मालां लीलापयोरुहमृणालगुणेन आबध्नती (सती) तदुपान्तम् अलञ्चकार ॥ आकलय्य–दृष्ट्वा । अनु–पश्चात् । आर्जितानाम्–सम्पादितानाम् । सुमनसाम्–पुष्पाणाम् । पयोरुहमृणालगुणेन–कमलबिसतन्तुना । तदुपान्तम्–रामसमीपम् ॥ ४५ ॥

आलीजनैरथ समं सविधे सुमाना-
मादानकेलिरसभाजि वयस्यवर्गे ।
आलिङ्गनादिजनितप्रतिमध्यविघ्न-
माह स्म तां स मधुरस्मितसुन्दरास्यः ॥ ४६ ॥

रामः सीतायै वसन्तसमृद्धिमधिकृत्य वर्णयितुमारभते—**आलीजनैरिति** । अथ वसस्यवर्गे आलीजनैः समं सविधे सुमानाम् आदानकेलिरसभाजि (सति) सः मधुरस्मितसुन्दरास्यः ताम् आलिङ्गनादिजनितप्रतिमध्यविघ्नम् आह स्म ॥ वयस्यवर्गे–सुहृज्जने ।

आलीजनैः। आलिङ्गनादिभिः जनितो मध्ये मध्ये विघ्नो यस्मिन् कर्मणि तद्यथा तथा। आह स-उवाच ॥ ४६ ॥

**पश्य प्रिये विपिनसीम्नि विजृम्भमाणा-**
**मृद्धिं मधोरिषुममोघतमां स्मरस्य।**
**अन्यादृशं मम मनः कुरुते किलैषा**
**त्वन्नेत्रवृत्तिरिव भिन्नजनान्तरङ्गा ॥ ४७ ॥**

वसन्तसमृद्धिं प्रस्तौति—**पश्येति**। प्रिये! बिपिनसीम्नि विजृम्भमाणाम् अमोघतम स्मरस्य इषुं मधोः ऋद्धिं पश्य। भिन्नजनान्तरङ्गा एषा त्वन्नेत्रवृत्तिः इव मम मनः अन्यादृशं किल कुरुते॥ विपिनम्—वनम्। विजृम्भमाणाम्—वर्धमानाम्। अमोघतमाम्—अत्यन्तसफलाम् इषुम्—बाणम्। मधोः—वसन्तस्य। ऋद्धिम्—समृद्धिम्। एषा—वसन्तसमृद्धिः। भिन्नं जनानाम् अन्तरङ्गम्—मनः यया सा तथा। नेत्रवृत्तिः—कटाक्षव्यापारः। अन्यादृशम्—अवर्णनीयविकारयुक्तम् ॥ ४७ ॥

**अस्याः कथं नु कथयाम्यनुभावमुच्चै-**
**र्येन त्रिलोचनविलोचनसंहृतोऽपि।**
**उज्जीवितः कृतजगज्जयकौतुकश्री-**
**रुज्जृम्भते सुमुखि सम्प्रति पुष्पकेतुः ॥ ४८ ॥**

वसन्तसमृद्धेः कामोद्दीपकत्वमाह—**अस्याः इति**। सुमुखि! अस्याः उच्चैः अनुभावं कथं नु कथयामि। त्रिलोचनविलोचनसंहृतः अपि येन उज्जीवितः पुष्पकेतुः सम्प्रति कृतजगज्जयकौतुकश्रीः उज्जृम्भते॥ अस्याः—वसन्तसमृद्धः। उच्चैः—महान्तम्। अनुभावम्—महिमानम्। त्रिलोचनः—शिवः। येन—वसन्तमहिम्ना। पुष्पकेतुः—कामः ॥ ४८ ॥

**द्वेधा विभक्ततनुरत्र वसन्तलक्ष्मी-**
**रेषा लतासु विटपिष्वपि सन्निधत्ते।**
**पश्य त्वदङ्गमनसोरिव यौवनश्री-**
**स्तत् सुन्दरि त्वमिव रम्यतरा वनालिः ॥ ४९ ॥**

लतासु वृक्षेषु च वसन्तलक्ष्मीसन्निधानं दर्शयति—**द्वेधेति**। सुन्दरि! पश्य। एषा वसन्तलक्ष्मीः, यौवनश्रीः त्वदङ्गमनसोः इव, लतासु विटपिषु अपि द्वेधा विभक्ततनुः सन्निधत्ते। तद् वनालिः त्वम् इव रम्यतरा (भवति)॥ त्वदङ्गमनसोः–तव अङ्गे मनसि च। विटपिषु–वृक्षेषु। विभक्ता तनुः–मूर्तिः यया सा तथा। सन्निधत्ते–सन्निधानं करोति। वनालिः–काननपङ्क्तिः। रम्यतरा–अत्यन्तमनोहरा॥ ४९॥

**एते द्रुमाः स्फुटितकुड्मललग्नभृङ्गी-**
**लीलाविकस्वरमृदुस्वरगीतिभेदैः।**
**वैतालिका इव रतेः परिणायकस्य**
**व्यामोहयन्ति भुवनं वरवाणिरूपे॥ ५०॥**

वृक्षगतभृङ्गीगीतिभेदान् वर्णयति—**एते इति**। वरवाणिरूपे! एते द्रुमाः, रतेः परिणायकस्य वैतालिकाः इव, स्फुटितकुड्मललग्नभृङ्गीलीलाविकस्वरमृदुस्वरगीतिभेदैः भुवनं व्यामोहयन्ति॥ वरवाणिरूपा–प्रशस्ता वरवाणी। द्रुमाः–वृक्षाः। रतेः परिणायकस्य–भर्तुः। कामस्येत्यर्थः। वैतालिकाः–स्तुतिपाठकाः। स्फुटितः–विकसितः यः कुड्मलः–मुकुलः, तस्मिन् लग्नायाः–सक्तायाः भृङ्ग्याः लीलया विकस्वराः ये मृदुस्वरगीतिभेदाः, तैः॥ ५०॥

**भित्त्वा भुवं भुवनतः पवनाशनाना-**
**मन्तश्चिराय निबिडस्तिमिरप्रकाण्डः।**
**वैभाकरीमपि विभामपिधित्सुरुच्चै-**
**रुत्तिष्ठति स्फुटतमालकुलच्छलेन॥ ५१॥**

तापिञ्छवृक्षानुपक्षिपति—**भित्त्वेति**। पवनाशनानां भुवनतः, अन्तः चिराय निबिडः तिमिरप्रकाण्डः, भुवं भित्त्वा स्फुटतमालकुलच्छलेन वैभाकरीं विभाम् अपि अपिधित्सुः उच्चैः उत्तिष्ठति॥ पवनाशनानाम्–सर्पाणाम्। भुवनतः–लोकात्। पातालादित्यर्थः। निबिडः–मेदुरः। तिमिरप्रकाण्डः–महान्धकारः। स्फुटतमालकुलच्छलेन–विकसिततापिञ्छवृन्दव्याजेन। वैभाकरीम्–सूर्यसम्बन्धिनीम्। विभाम्–शोभाम्। अपिधित्सुः–अपिधातुम्–आच्छादयितुम् इच्छुः। उच्चैः–औन्नत्यवान्। उत्तिष्ठति–ऊर्ध्वं गच्छति॥ ५१॥

लुब्धान् विजित्य नृपतीन् प्रसभं हृतायाः
पित्रा स्वयं सुमुखि नः प्रणयान्निबद्धः ।
धम्मिल्लभार इव सागरमेखलाया-
स्सम्मोदमेष वितनोति तमालसालः ॥ ५२ ॥

तापिञ्छवृक्षमेव वर्णयति—**लुब्धानिति** । लुब्धान् नृपतीन् विजित्य नः पित्रा स्वयं प्रसभं हृतायाः सागरमेखलायाः, प्रणयात् निबद्धः धम्मिल्लभारः इव एषः तमालसालः सम्मोदं वितनोति । सागरमेखलायाः—भुवः । धम्मिल्लभारः केशकलापः । तमालसालः—तापिञ्छ-वृक्षः । वितनोति—विस्तारयति ॥ ५२ ॥

माकन्दकन्दलरसायनमन्दिताना-
माकर्ण्यते कलरवः कलकण्ठयूनाम् ।
वल्लीलतोदरवसद्वनदेवतानां
प्रेङ्खद्विपञ्चिभवपञ्चममूर्च्छनेव ॥ ५३ ॥

कोकिलरवं वर्णयति—**माकन्देति** । माकन्दकन्दलरसायनमन्दितानां कलकण्ठयूनां कलरवः, वल्लीलतोदरवसद्वनदेवतानां प्रेङ्खद्विपञ्चिभवपञ्चममूर्च्छना इव आकर्ण्यते ॥ माकन्दकन्दलः—चूतपल्लवः, तस्य रसायनेन मन्दितानाम्—तृप्तानां तरुणकोकिलानाम् । वल्लीनां लताः—शाखाः । प्रेङ्खन्—प्रसरन् । विपञ्ची—वीणा । पञ्चमः—स्वरविशेषः । मूर्च्छना—आरोहावरोहक्रमः ॥ ५३ ॥

किञ्चिद्वचः किरसि चेदधुना कृशाङ्गि
सङ्कोचयिष्यति पिकः स्वगिरं जवेन ।
कस्तादृशो जगति येन विजेतुरग्रे
त्यक्त्वा त्रपां निजगुणाः प्रकटीक्रियन्ते ॥ ५४ ॥

सीतावचसः कोकिलस्वराधिकमाधुर्यं प्रस्तौति—**किञ्चिदिति** । कृशाङ्गि! (त्वं) अधुना किञ्चिद् वचः किरसि चेत्, पिकः स्वगिरं जवेन सङ्कोचयिष्यति । येन विजेतुः अग्रे त्रपां त्यक्त्वा निजगुणाः प्रकटीक्रियन्ते, तादृशः जगति कः (अस्ति) । किरसि—उच्चरसि । स्वगिरम्—निजवाचम् ॥ ५४ ॥

उत्सारितः परिसरप्रसरद्द्विजाली-
पक्षोदितेन मरुता नवविद्रुमश्रीः ।
आकाशवीथिवनिताकुचकुङ्कुमत्व-
मालम्बते विकचवञ्चुलरेणुराशिः ॥ ५५ ॥

अशोकपुष्परेणून् वर्णयति—**उत्सारित इति** । परिसरप्रसरद्द्विजालीपक्षोदितेन मरुता उत्सारितः नवविद्रुमश्रीः विकचवञ्चुलरेणुराशिः, आकाशवीथितवनिताकुचकुङ्कुमत्वम् आलम्बते॥ द्विजाल्यः—पक्षिसमूहाः । तेषां पक्षेभ्यः—उदितेन । मरुता—वायुना । उत्सारितः—उत्क्षिप्तः विद्रुमश्रीः—प्रवालशोभः । वञ्चुलरेणुराशिः—अशोककुसुमपरागपङ्क्तिः । आकाशवीथिः एव वनिता तस्याः कुचकुङ्कुमत्वम् ॥ ५५ ॥

व्याप्तं दिशासु मृदुकेसरकेसरोत्थं
दृष्ट्वा परागपटलं तुहिनर्तुबुद्ध्या ।
पीताम्बरावृत इवैष चकास्ति चूतः
पुष्पैर्निरन्तरभवैरविचारशून्यः ॥ ५६ ॥

बकुलपुष्परेणून्, चूतं च वर्णयति—**व्याप्तमिति** । एषः चूतः, मृदुकेसरकेसरोत्थं परागपटलं दिशासु व्याप्तं दृष्ट्वा तुहिनर्तुबुद्ध्या अविचारशून्यः निरन्तरभवैः पुष्पैः पीताम्बरावृतः इव चकास्ति ॥ मृदुकेसराणि—सुकुमारकिञ्जल्कानि यानि केसराणि—बकुलपुष्पाणि, तदुत्थम् । परागपटलम्—कुसुमरेणुनिकरम् । तुहिनर्तुः—हेमन्तऋतुः । अविचारशून्यः—चिन्ताकुलः । पीताम्बरेण—पीतनिचोलेन आवृतः—प्रावृतशरीरः । चकास्ति—विभाति ॥ ५६ ॥

आलोलभृङ्गतरुणीजनपानभूमि-
रालोक्यतां कमलगन्धिनि गन्धसारः ।
साधारणादखिलशाखिषु पुष्पगन्धा-
दन्योऽपि कश्चिदमुकं विशिनष्टि गन्धः ॥ ५७ ॥

चन्दनं वर्णयति—**आलोलेति** । कमलगन्धिनि ! आलोलभृङ्गतरुणीजनपानभूमिः गन्धसारः आलोक्यताम् । अखिलशाखिषु साधारणात् पुष्पगन्धाद् अन्यः अपि कश्चिद् गन्धः अमुकं विशिनष्टि ॥ कमलगन्धिनि—पद्मगन्धवति । कामशास्त्रप्रसिद्धपद्मिनीत्ववतीति

भावः। गन्धसारः—चन्दनः। शाखिषु—वृक्षेषु। अमुकम्—चन्दनम्। विशिनष्टि—विशिष्टं करोति ॥ ५७ ॥

**उद्वर्तितः सरसपेषणपूर्वमस्य**
**मज्जा निमज्जयति चित्तमपीश्वराणाम्।**
**आह्लादनामनि सरस्वति सारसाक्षि**
**क्वैतादृशस्तरुरशेषजनोपकारी ॥ ५८ ॥**

चन्दनस्याह्लादकरत्वं विवृणुते—**उद्वर्तित इति**। सारसाक्षि! सरसपेषणपूर्वम् उद्वर्तितः अस्य मज्जा ईश्वराणाम् अपि चित्तम् आह्लादनामनि सरस्वति निमज्जयति। अशेषजनोपकारी एतदृशः तरुः क्व (अस्ति) ॥ सरसम्—जलयुक्तं यत् पेषणम्, तत्पूर्वम्। उद्वर्तितः—उपलिप्तः। अस्य—चन्दनस्य। मज्जा—सारः। ईश्वराणाम्—देवानाम्। सरस्वति—समुद्रे। तरुः—वृक्षः ॥ ५८ ॥

**अत्रत्यचन्दनतरुष्ववलम्बनाय**
**सर्पन्ति ये क्षितिपनन्दिनि सर्पशाबाः।**
**सौवर्णवेदिरुचिनिर्मितचञ्चलाभिः**
**सम्भीषितास्सपदि ते विमुखीभवन्ति ॥ ५९ ॥**

चन्दनवृक्षाणां सौवर्णवेदिकत्वं सर्पाश्रयत्वं च प्रकाशयति—**अत्रत्येति**। हे क्षितिपनन्दिनि! अत्रत्यचन्दनतरुषु अवलम्बनाय ये सर्पशाबाः सर्पन्ति, ते सौवर्णवेदिरुचिनिर्मितचञ्चलाभिः सम्भीषिताः सपदि विमुखीभवन्ति॥ शाबाः—शिशवः। सर्पन्ति—गच्छन्ति। चञ्चलाभिः—विद्युद्भिः ॥ ५९ ॥

**पक्वैरियं निजफलैः प्रतिपर्वजातै-**
**र्बिम्बीलता विपिनसीमनि लम्बमाना।**
**शोभाममुष्य वितनोति तवाङ्गयष्टे-**
**र्माणिक्यखण्डरचिता महतीव माला ॥ ६० ॥**

बिम्बीलतां वर्णयति—**पक्वैरिति**। विपिनसीमनि लम्बमाना इयं बिम्बीलता प्रतिपर्वजातैः पिकैः निजफलैः, माणिक्यखण्डरचिता महती माला इव अमुष्य तव अङ्गयष्टेः शोभां

वितनोति ॥ विपिनम्–वनम् । पर्वणि पर्वणि–प्रतिपर्व । अङ्गयष्टेः–प्रशस्तशरीरस्य । वितनोति–विस्तारयति ॥ ६० ॥

चेष्टा लतासु ललितासु विलासिनीनां
पोस्फुर्यते क्षितिरुहेष्वपि पूरुषाणाम् ।
अन्योन्ययुक्तिरनयोरधुना जनानां
मन्ये मनस्त्वरयति प्रसभं रताय ॥ ६१ ॥

लतावृक्षयोगं वर्णयति—**चेष्टेति**। विलासिनीनां चेष्टा, ललितासु लतासु, पूरुषाणां (चेष्टा) क्षितिरुहेषु अपि पोस्फुर्यते। अनयोः अन्योन्ययुक्तिः अधुना जनानां मनः रताय प्रसभं त्वरयति (इति) मन्ये ॥ क्षितिरुहेषु–वृक्षेषु। पोस्फुर्यते–पुनः पुनरतिशयेन स्फुरति–प्रकाशते। अनयोः–लतावृक्षयोः। युक्तिः–योगः। त्वरयति–सम्भ्रमयति ॥ ६१ ॥

लक्ष्मीमिमामिह मधोरवरोधभूतां
निध्यायतो मम निरङ्कुशकौतुकस्य ।
चित्तं विभेत्तुमधुना मदनः समिन्धे
सख्युः प्रियाय कतमे वद नोत्सहन्ते ॥ ६२ ॥

वसन्तलक्ष्म्याः कामोद्दीपकत्वं वर्णयति—**लक्ष्मीमिति**। इह मधोः अवरोधभूताम् इमां लक्ष्मीं निध्यायतः निरङ्कुशकौतुकस्य मम चित्तं विभेत्तुं अधुना मदनः समिन्धे। सख्युः प्रियाय कतमे न उत्सहन्ते, वद। मधोः–वसन्तस्य। अवरोधभूताम्–पत्नीसमाम्। निध्यायतः–पश्यतः समिन्धे–दीप्तो भवति ॥ ६२ ॥

नारीगुणैरसि रतिस्त्वमतस्त्वदीये
कामः करोति मयि कार्मुककौशलं तत् ।
बाल्यात् परे वयसि यत्त्वयि दत्तदृष्टौ
लक्ष्यीकृताखिलयुवा समपीपदत् सः ॥ ६३ ॥

कामस्य स्वस्मिन् कार्मुककौशलकरणे कारणं राम उत्प्रेक्षते—**नारीगुणैरिति**। त्वं नारीगुणैः रतिः असि। अतः त्वदीये मयि कामः तत् कार्मुककौशलं करोति। यत् सः,

त्वयि बाल्यात् परे वयसि दत्तदृष्टौ (सत्यां) लक्ष्यीकृताखिलयुवा समपीपदत् ॥ त्वदीये–त्वत्सम्बन्धिनि । बाल्यात् परे वयसि– यौवने । लक्ष्यीकृताः शरव्यीकृताः अखिलयुवानो येन स तथा । समपीपदत्–सम्पादितवान् ॥ ६३ ॥

**उच्चावचाः सुमुखि सम्प्रति चित्तयोने-**
**र्बाणा भवन्ति बहवः सुलभा वनेऽस्मिन् ।**
**द्वेधा स लक्षयति मामिह जातमेक-**
**मासन्नमन्यदिति भामिनि भावयस्व ॥ ६४ ॥**

कामः स्वबाणानां लक्ष्यं करोति मामित्याह । सुमुखि ! सम्प्रति अस्मित् वने चित्तयोनेः उच्चावचाः बहवः बाणाः सुलभाः भवन्ति । सः इह मां द्वेधा लक्षयति । एकं जातम् । अन्यत् आसन्नम् । इति हे भामिनि ! त्वं भावयस्व ॥ चित्तयोनेः–कामस्य । उच्चावचाः–अनेकरूपाः । लक्षयति–वीक्षते, लक्ष्यं करोति च । एकम्–वीक्षणम् । अन्यत्–लक्ष्यीकरणम् । भामिनि–सुन्दरि ॥ भावयस्व–चिन्तय ॥ ६४ ॥

**निर्माय ते वपुरिदं कुसुमस्य सारैः**
**शेषं शरार्थमददान्मदनाय वेधाः ।**
**तत्तादृशेन वपुषाङ्ग मदङ्गमेतत्**
**संवर्मय स्मरशराः प्रतियान्तु मोघाः ॥ ६५ ॥**

कामबाणप्रतिविधानं कर्तुं रामः सीतामभ्यर्थयति—**निर्मायेति** । अङ्ग! वेधाः कुसुमस्य सारैः इदं ते वपुः निर्माय शेषं मदनाय शरार्थम् अददात् । तत्तादृशेन वपुषा (त्वम्) एतद् मदङ्गं संवर्मय । स्मरशराः मोघाः प्रतियान्तु ॥ अङ्ग–हे प्रिये ! वेधाः–स्रष्टा । तत्तादृशेन–कुसुमसारभूतेन । वपुषा–शरीरेण । मदङ्गम्–मम शरीरम् । संवर्मय–कवचितं कुरु । मोघाः–निष्फलाः ॥ ६५ ॥

**सख्यः सरोजमुखि सम्प्रति दूरदेशे**
**साकं चरन्ति रसिकैस्त्वपसे यतस्त्वम् ।**
**नेदिष्ठमेतदपि पश्य निकुञ्जमस्मिन्**
**कन्दर्पदर्पशमनं करवाव किञ्चित् ॥ ६६ ॥**

कामलीलार्थं रामः सीतां प्रचोदयति—**सख्य इति**। सरोजमुखि ! यतः त्वं त्रपसे, (ताः) सख्यः सम्प्रति दूरदेशे रसिकैः साकं चरन्ति। नेदिष्ठम् एतद् निकुञ्जम् अपि पश्य। अस्मिन् (आवाम्) किञ्चित् कन्दर्पदर्पशमनं करवाव ॥ यतः—याभ्यः सखिभ्यः। त्रपसे—लज्जसे। नेदिष्ठम्—अत्यन्तसमीपस्थम्। निकुञ्जम्—लतागृहम्। कदर्पदर्पः—कामगर्वः ॥ ६६ ॥

**एतल्लतागृहसनीडकृतस्वनीडाः**
**पारावताः परमसुन्दरि तावकीनम्।**
**कर्णामृतं सुरतकूजितमाकलय्य**
**स्वां हुङ्कृतिं शिथिलयन्तु निरूढलज्जाः ॥ ६७ ॥**

प्रकारान्तरेण सीतां रतौ प्रचोदयति—**एतदिति**। परमसुन्दरि ! एतल्लतागृहसनीड-कृतस्वनीडाः पारावताः, कर्णामृतं तावकीनं सुरतकूजितं आकलय्य निरूढलज्जाः स्वां हुङ्कृतिं शिथिलयन्तु ॥ सनीडे—समीपे कृतः स्वनीडः—निजकुलायः यैः ते, तथा। पारावताः—कपोताः। सुरतकूजितम्—मणितम्। आकलय्य—आकर्ण्य। शिथिलयन्तु—लघूकुर्वन्तु ॥ ३७ ॥

**निर्भिन्ननीरजरजःप्रसरप्रसङ्गा-**
**दुद्गन्धयस्तनुतरङ्गनिदानभूताः।**
**मन्दानिला मधुरवाणि रतक्लमोत्थं**
**घर्मोदभारमपनेतुमलं क्षमन्ते ॥ ६८ ॥**

मन्दानिलान् वर्णयति—**निर्भिन्नेति**। मधुरवाणि ! निर्भिन्ननीरजरजःप्रसरप्रसङ्गात् उद्गन्धयः तनुतरङ्गनिदानभूताः मन्दानिलाः, रतक्लमोत्थं घर्मोदभारम् अपनेतुम् अलं क्षमन्ते ॥ निर्भिन्नानाम्—विकसितानां नीरजानां—कमलानां रजःप्रसरस्य—परागपटलस्य प्रसङ्गात्—संसर्गात्। उद्गन्धयः—सुरभिलाः। तनूनाम्—अल्पानां तरङ्गाणां निदानभूताः—कारणभूताः। घर्मोदम्—स्वेदजलम्। अलम्—पर्याप्तम्। क्षमन्ते—शक्नुवन्ति ॥ ६८ ॥

**इत्थं निशम्य दयितस्य वचः प्रियं तत्**
**स्मित्वा मनागनुजगाद मुदा मृगाक्षी।**
**मुग्धोऽपि कान्त जितचैत्ररथेऽत्र गत्वा**
**नो विक्रियेत कतमः पुरुषोऽङ्गना वा ॥ ६९ ॥**

सीता रामं प्रतिवदति—**इत्थमिति**। दयितस्य तद् प्रियं वचः निशम्य मुदा मनाक् स्मित्वा अनुजगाद। कान्त! जितचैत्ररथे अत्र गत्वा, मुग्धः अपि कतमः पुरुषः, अङ्गना वा नो विक्रियेत?। जितचैत्ररथे–चैत्ररथं–कुबेरोद्यानं जितवति। अत्र–अस्मिन् उपवने। मुग्धः–मूढः। नो विक्रियेत–विकारविवशो न भवेत्। न कोपि न विक्रियेतेत्यर्थः ॥ ६९॥

**नित्यप्रपुष्टधरणीरुहवल्लिजालं**
**हृष्टद्विरेफपरपुष्टनिनादरम्यम्।**
**सौवर्गयौवतरहस्यकलाविलास-**
**स्थानं वनं तदतिशय्य विराजतीदम् ॥ ७० ॥**

वनमिदं नन्दनोद्यानमतिशेते इत्याह—**नित्येति**। नित्यप्रपुष्टधरणीरुहवल्लिजालं हृष्टद्विरेफपरपुष्टनिनादरम्यं सौवर्गयौवतरहस्यकलाविलासस्थानं तद् वनम् अतिशय्य इदं (वनं) विराजति॥ धरणीरुहाः–वृक्षाः। द्विरेफाः–भृङ्गाः। परपुष्टाः–कोकिलाः। सौवर्गयौवतानि–स्वर्गवासियुवतिसमूहः। तद् वनम्–नन्दनोद्यानमित्यर्थः ॥ ७० ॥

**आयातमत्र कुलमप्सरसां यदि स्या-**
**न्मन्येत नाम न तृणाय शिरांसि मेरोः।**
**पुण्यातिरेकनिजसात्कृतदेवभावैः**
**पुम्भिः समं विजरिहर्ति सदैव यत्र ॥ ७१ ॥**

उपवनस्यास्य मेरुशिखरादपि सुभगतरत्वमस्तीत्याह—**आयातमिति**। अप्सरसां कुलं अत्र आयातं यदि स्यात् (तर्हि), पुण्यातिरेकनिजसात्कृतदेवभावैः पुम्भिः समं यत्र सदा एव विजरिहर्ति, तानि मेरोः शिरांसि तृणाय न मन्येत नाम किमिति काकुः। अप्सरसाम्–उर्वश्यादीनाम्। निजसात्कृतः–सम्पादितः। देवभावः–देवत्वं यैस्तैः। विजरिहर्ति–पुनः पुनरतिशयेन विहरति। तृणाय न मन्येत नाम–तृणमिव न तिरस्करोति किमित्यर्थः। तिरस्करोत्येवेति भावः ॥ ७१ ॥

**धीरे भवत्यपि मनोभववैभवेन**
**क्षीणे भवत्यमितरूपगुणाभिरामे।**
**का नाम कान्त कथयस्व कथा वधूनां**
**स्वाभाविकं भवति यत्र हि कातरत्वम् ॥ ७२ ॥**

सीता कामाधीनतामात्मनः सूचयति—**धीरे इति**। कान्त! अमितरूपगुणाभिरामे धीरे भवति अपि मनोभववैभवेन क्षीणे भवति (सति), यत्र हि कातरत्वं स्वाभाविकं भवति, (तासां) वधूनां का नाम कथा? कथयस्व॥ क्षीणे—नष्टधैर्ये। यत्र—यासु। कातर-त्वम्-अधीरता। वधूनाम्—स्त्रीणाम् ॥७२॥

**कन्दर्पसायकनिपीडितचित्तवृत्तिः**
**सूक्तिस्रजं सृजसि यन्मयि सद्गुणाढ्याम्।**
**प्रत्यर्पयामि तदिमां कुसुमस्रजं ते**
**वाचा भवन्तमनुवर्तितुमीश्वरः कः ॥७३॥**

सीता रामाय पुष्पमालां समर्पयितुमुपक्रमते—**कन्दर्पेति**। कन्दर्पसायकनिपीडीत-चित्तवृत्तिः (त्वं) मयि यत् सद्गुणाढ्यां सूक्तिस्रजं सृजसि, तद् (अहं) ते (सद्गुणाढ्यां) कुसुमस्रजं प्रत्यर्पयामि। वाचा भवन्तम् अनुवर्तितुं कः ईश्वरः (भवति)?॥ सद्गुणाढ्याम्-माधुर्यादि-गुणयुक्ताम्। सूक्तिस्रजम्—सूक्तिमेव स्रजम्—मालाम्। सृजसि—विसृजसि—ददासि। सद्गुणा-ढ्याम्—सता गुणेन—तन्तुना युक्ताम्। ईश्वरः—समर्थः ॥७३॥

**इत्यूचुषी जनकजा दयितस्य कण्ठे**
**चिक्षेप तां सरभसं कुसुमस्य मालाम्।**
**एतावती शरतती रतिवल्लभेन**
**क्षिप्ता मयि स्फुटमितीव निवेदयन्ती ॥७४॥**

सीता पुष्पमालां रामस्य कण्ठे समर्पयति। इति ऊचुषी जनकजा तां कुसुमस्य मालाम्, एतावती शरततिः रतिवल्लभेन मयि क्षिप्रा इति स्फुटं निवेदयन्ती इव सरभसं दयितस्य कण्ठे चिक्षेप॥ ऊचुषी—उक्तवती। एतावती—एतावत्सङ्ख्यावती। शरततिः—बाणपङ्क्तिः। रतिवल्लभेन—कामेन। सरभसम्—सहर्षम्। चिक्षेप—आमुमोच ॥७४॥

**कान्ताकरेण गलसीमनि बद्धमाले**
**तस्मिन् मनोभवगतिर्द्विगुणीबभूव।**
**आश्लिष्य तामथ जवेन कुचोपपीडं**
**निन्ये निकुञ्जगृहमेष समीपवर्ति ॥७५॥**

रामः सीतां लतागृहं नयति। कान्ताकरेण गलसीमनि बद्धमाले तस्मिन् मनोभवगतिः द्विगुणीबभूव। अथ एषः जवेन कुचोपपीडं ताम् आश्लिष्य समीपवर्तिनिकुञ्जगृहं निन्ये॥ बद्धा माला यस्मिन्, तस्मिन् बद्धमाले। मनोभवगतिः—कामावेशः। कुचोपपीडम्—कुचावुपपीड्य। निकुञ्जगृहम्—लतागृहम्। निन्ये—नीतवान्॥ ७५॥

तत्रान्तरे तरुणवल्लभसङ्गतानां
प्रत्यग्रविभ्रमवतां प्रमदाजनानाम्।
कामोदयेन चलतां विविधा बभूवु-
श्चेष्टा मरुद्धतिजुषामिव गुल्मिनीनाम्॥ ७६॥

प्रियसङ्गतानां नितम्बिनीनां तत्कालोदिताः कामचेष्टा वर्णयितुमुपक्रमते—**तत्रेति**। तत्र अन्तरे तरुणवल्लभसङ्गतानां प्रत्यग्रविभ्रमजुषां कामोदयेन चलतां प्रमदाजनानाम्, मरुद्धति जुषां गुल्मिनीनाम् इव विविधाः चेष्टाः बभूवुः॥ प्रत्यग्रविभ्रमाः—अभिनवविलासाः। प्रमदाजनानाम्—कामिनीनाम्। मरुद्धतिजुषाम्—वाताहतानाम्। गुल्मिनीनाम्—लतानाम्। चेष्टाः—कामव्यापाराः॥ ७६॥

काचित् प्रियेण सहिता सहकारवल्ली-
बालप्रवालरचिते शयने निविष्टा।
तत्पाणिजाग्रमृदुकृष्टशिरस्यभारा
रेमे चिरं रहसि नर्मकथाप्रसङ्गैः॥ ७७॥

काचित् प्रियेण सह नर्मभाषणं कुरुते। काचिद् रहसि प्रियेण सहिता सहकारवल्ली-बालप्रवालरचिते शयने निविष्टा तत्पाणिजाग्रमृदुकृष्टशिरस्यभारा (सती) चिरं नर्मकथाप्रसङ्गैः रेमे॥ सहकारवल्ली-चूतलता। पाणिजाः—नखाः। शिरस्यभारः—केशकलापः॥ ७७॥

अग्रे विलोक्य रमणं रमणीयगात्री
हस्तापचेयमपि काञ्चनपुष्पमन्या।
नो चक्षमे यदपचेतुमुदीतलज्जा
तच्चित्तपङ्कजममुष्य जहास सद्यः॥ ७८॥

अग्रे प्रियं दृष्ट्वा काचिद् चम्पकपुष्पमपचेतुं लज्जते । अन्या रमणीयगात्री अग्रे रमणं विलोक्य उदीतसज्जा हस्तापचेयम् अपि काञ्चनपुष्पम् अपचेतुं यत् नो चक्षमे, तद् अमुष्य चित्तपङ्कजं सद्यः जहास ॥ हस्तापचेयम्—करेण अपचेतुं शक्यम् । काञ्चनपुष्पम्—चम्पक-कुसुमम् । यत्—यस्मात् कारणात् । नो चक्षमे—न शशाक । तत्—तस्मात् कारणात् । अमुष्य—रमणस्य । जहास—विकसितम् ॥ ७८ ॥

**रामां रिरञ्जयिषता रसिकेन यूना**
**विश्राणितेषु विकचद्रुमकुड्मलेषु ।**
**सा केवलं न हि ररञ्ज विलोकयन्त्या**
**नेत्रद्वयाञ्चलमपि प्रसभं सपत्न्याः ॥ ७९ ॥**

रसिकः कश्चित् प्रियायै पुष्पाणि ददाति । रामां रिरञ्जयिषता रसिकेन यूना विकच-द्रुमकुड्मलेषु विश्राणितेषु (सत्सु) केवलं सा न हि ररञ्ज । विलोकयन्त्याः सपत्न्याः नेत्र-द्वयाञ्चलम् अपि प्रसभं (ररञ्ज)॥ रामाम्—रमणीम् । रिरञ्जयिषता—रञ्जयितुम्—अनुरक्तां कर्तुम् इच्छता । विकचद्रुमकुड्मलेषु—विकसितवृक्षमुकुलेषु । विश्राणितेषु—दत्तेषु । केवलम्—एका । ररञ्ज—अनुरक्ता बभूव । नेत्राञ्चलपक्षे रक्तवर्णा बभूव ॥ प्रसभम्—बलात्कारेण ॥ ७९ ॥

**अन्तर्निकुञ्जमधितिष्ठति रन्तुकामे**
**कान्ते वधूरविदतीव गता सखीभ्यः ।**
**अन्विष्यमाणकुसुमा सविलासमत्र**
**प्राप्यामुना परिरराम चिराय काचित् ॥ ८० ॥**

काचित् निकुञ्जं गत्वा कान्तेन सह रमते । कान्ते रन्तुकामे अन्तर्निकुञ्जम् अधितिष्ठति (सति) काचिद् वधूः अविदती इव सखीभ्यः (सकाशात्) अन्विष्यमाणकुसुमा गता सविलासम् अत्र प्राप्य अमुना (सह) चिराय परिरराम ॥ अन्तर्निकुञ्जम्—लतागृहस्य अन्तर्भागम् । अवि दती—अजानती । अत्र—निकुञ्जे । अमुना—कान्तेन ॥ ८० ॥

**अन्तर्हितग्रहणकेलिमिषेण कश्चि-**
**ल्लीनो लतासु वनितापि गवेषमाणा ।**
**तत्रागता सपदि वाञ्छितमेष लेभे**
**सापि न्यवर्तत सखीस्तदवीक्षिणीव ॥ ८१ ॥**

निकुञ्जे निलीय स्थितं कान्तं प्राप्य काचित लब्धकामा भवति । अन्तर्हितग्रहण-केलिमिषेण कश्चित् लतासु लीनः । वनिता अपि गवेषमाणा तत्र आगता । एषः सपदि वाञ्छितं लेभे । सा अपि तदवीक्षिणी इव सखीः न्यवर्तत ॥ अन्तर्हितग्रहणाख्या या केलिः, तस्याः मिषेण । लीनः—निगूढं स्थितः । गवेषमाणा—अन्वेषणं कुर्वती । तदवीक्षिणी—तम् अदृष्टवती ॥ ८१ ॥

**अङ्गुष्ठमात्रतलभूमितलावलम्बां**
**तुङ्गप्रसूनविनिवेशितपाणिपद्माम् ।**
**योषामुपेत्य परिरम्भरसेन कश्चि-**
**न्मा भून्निपात इति तां जगृहे कराभ्याम् ॥८२॥**

पुष्पापचयं कुर्वतीमवलम्बमान इव कश्चित् परिरम्भसुखमनुभवति । अङ्गुष्ठमात्रतल-भूमितलावलम्बां तुङ्गप्रसूनविनिवेशितपाणिपद्मां योषाम् उपेत्य कश्चित् परिरम्भरसेन 'निपातः मा भूत्' इति (उक्त्वा) तां कराभ्यां जगृहे ॥ अङ्गुष्ठमात्रेण तलभूमेः—अधः स्थितभूमेः तलम्—उपरिभाग एव अवलम्बः—आश्रयः यस्याः, तां तथोक्ताम् । योषाम्—नारीम् । परिरम्भः—आलिङ्गनम् । निपातः—अधः पतनम् । जगृहे—गृहीतवान् ॥ ८२ ॥

**उत्तानितानननमुदक्षमुदीक्षमाणा**
**लक्ष्मीं तरोरुपरिजां क्षणमायताक्षी ।**
**सद्यः पतद्भिरदसीयरजोभिरन्धा**
**मन्तूयतापि दयितेन मुहुश्चुचुम्बे ॥ ८३ ॥**

पुष्परजःपातेन निमीलिताक्षीं काञ्चित् कान्तः सरभसं चुम्बति । आयताक्षी क्षणं तरोः उपरिजां लक्ष्मीं, उत्तानिताननम् उदक्षम् उदीक्षमाणा सद्यः पतद्भिः अदसीयरजोभिः अन्धा (सती) मन्तूयता अपि दयितेन मुहुः चुचुम्बे ॥ उत्तानितम्—उन्मुखीकृतम् आननम् यस्मिन्, तथा । उदक्षम्—इद्धमिते अक्षिणी यस्मिन्, तथा । अदसीयरजोभिः—वृक्षसम्बन्धिभिः परागैः । अन्धा—मीलिताक्षी । मन्तूयता—मन्तुम्—अपराधं कुर्वता । चुचुम्बे—चुम्बिता ॥ ८३ ॥

क्षिप्त्वा स्वयं मृगदृशः कुसुमं मुखेन्दौ
लग्नं परागमथ जातरुषोऽपनेतुम् ।
प्राप्यान्तिकं विधमता मुखमारुतेन
तत्सौरभानुभवसौख्यमलम्भि यूना ॥ ८४ ॥

प्रियायाः मुखे लग्नं पुष्परजः प्रियो मुखमारुतेन विधमति । मृगदृशः मुखेन्दौ स्वयं कुसुमं क्षिप्त्वा अथ लग्नं परागं जातरुषः (तस्याः) अपनेतुम् अन्तिकं प्राप्य मुखमारुतेन विधमता यूना तत्सौरभानुभवसौख्यम् अलम्भि ॥ ८४ ॥

वर्णेन निर्जितसुवर्णगुणं सपत्न्याः
कर्णावतंसयति कामिनि कर्णिकारम् ।
अन्यापदेशवचनैरतिसूचितेर्ष्यै-
रन्या तदीयमपि कर्णमलंचकार ॥ ८५ ॥

सपत्नीं मानयति प्रिये काचिदीर्ष्यां प्रकाशयति । कामिनि वर्णेन निर्जितसुवर्ण-गुणं कर्णिकारं सपत्न्याः कर्णावतंसयति (सति) अतिसूचितेर्ष्यैः अन्यापदेशवचनैः, अन्या तदीयं कर्णम् अपि अलञ्चकार ॥ कामिनि—कामुके । कर्णावतंसयति—कर्णभूषणं कुर्वति ॥ ८५ ॥

रत्यामधश्शयनमेव पणं भणन्तौ
पुष्पैः परस्परमभिप्रहितैः सलीलम् ।
कौचिद्विजह्रतुरथापजितेन यूना
साकूतसुस्मितमलोकि मुखं सखीनाम् ॥ ८६ ॥

कौचिद्युवानौ परस्परं पुष्पैः प्रहृत्य क्रीडतः । कौचित् रत्याम् अधः शयनम् एव पणं भणन्तौ परस्परम् अभिप्रहितैः पुष्पैः विजह्रतुः । अथ अपजितेन यूना साकूतसुस्मितं सखीनां मुखम् अलोकि ॥ पणम्—पराजये देयं ग्लहम् । भणन्तौ—वदन्तौ । विजह्रतुः—क्रीडां चक्रतुः । साकूतम्—साभिप्रायम् । पराजितेनापि मया जितमित्यभिप्रायः । अलोकि—दृष्टम् ॥ ८६ ॥

व्याजेन दोषमभिनीय परागपात-
जातं दृशोः स्खलितचारुपदं चलन्ती ।
विश्रम्य काचन विवेश विदग्धनारी
सख्याः पुरः कमितुरङ्कमजानतीव ॥ ८७ ॥

कामितसाधने कस्याश्चन वैदग्ध्यमाह—**व्याजेनेति** । काचन विदग्धनारी व्याजेन दृशोः परागपातजातं दोषम् अभिनीय स्खलितचारुपदं चलन्ती विश्रम्य सख्याः पुरः कमितुः अङ्कम् अजानती इव विवेश ॥ कमितुः–कामुकस्य अङ्कम्–उत्सङ्गम् ॥ ८७ ॥

इत्यादिभिर्बहुविधैर्वनकेलिभेदै-
र्विश्रम्य ताः श्रमपयःकणभूषिताङ्गाः ।
योषाः समं प्रियतमैश्चितपुष्पभाराः
प्रापुर्यतो रघुपतिर्दयिता च तस्य ॥ ८८ ॥

सहचर्यस्ताः स्त्रियः प्रियतमैः सह रामसमीपं गच्छन्ति । ताः योषाः इत्यादिभिः बहुविधैः वनकेलिभेदैः विश्रम्य श्रमपयःकणभूषिताङ्गाः चितपुष्पभाराः प्रियतमैः समं यतः रघुपतिः तस्य दयिता च (स्तः) तत्र प्रापुः ॥ विश्रम्य–क्रीडित्वा । श्रमपयः–स्वेदजलम् । चितः–सञ्चितः पुष्पभारो याभिः, तथोक्ताः ॥ ८८ ॥

यावत् सुमानि तरुणैरुपहर्तुकामै-
रासाद्यते न सविधं स्म सह प्रियाभिः ।
तावत् पुरेव तरुमूलमनूषतुस्तौ
बालानिलेन सुरतश्रममस्तयन्तौ ॥ ८९ ॥

सीतारामौ यथापूर्वं वृक्षमूले तिष्ठतः । प्रियाभिः सह सुमानि उपहर्तुकामैः तरुणै यावत् सविधं न आसाद्यते स्म, तावत् तौ बालानिलेन सुरतश्रमम् अस्तयन्तौ पुरा इव तरुमूलवः अनु ऊषतुः ॥ अस्तयन्तौ–शमयन्तौ । तरुमूलम् अनु–वृक्षमूले । ऊषतुः–न्यासं चक्रतुः ॥ ८९ ॥

तानग्रतो विनिहितप्रसवोपहारान्
दृष्ट्वा ननन्द नृपतिः स्मितसुन्दरास्यः ।
तत्पुष्पसञ्चयमपि स्वयमेव भूयः
कान्ताकचप्रकरभूषणमाततान ॥ ९० ॥

रामः सुहृद्भिः कृतैः पुष्पोपहारैः सीतायाः केशकलापमलङ्कुरूते । नृपतिः अग्रतः विनिहितप्रसवोपहारान् तान् दृष्ट्वा स्मितसुन्दरास्यः ननन्द । भूयः तत्पुष्पसञ्चयम् अपि स्वयम् एव कान्ताकचप्रकरभूषणम् आततान ॥ प्रसवोपहारः–पुष्पोपायनम् । ननन्द–सुन्तुष्टवान् । आततान–चकार ॥ ९० ॥

रेजुर्नृपेण निहिताः प्रमदोत्तमायाः
केशेषु ताः सुमनसः प्रविकीर्णशोभाः ।
सूर्यात्मजासलिलवेणिषु विस्फुरन्त्यो
व्यूहीभवन्त्य इव कोमलशुक्तिपेश्यः ॥ ९१ ॥

सीतायाः केशानां शोभातिशयं वर्णयति––रेजुरिति । प्रमदोत्तमायाः केशेषु नृपेण निहिताः प्रविकीर्णशोभाः ताः सुमनसः, सूर्यात्मजासलिलवेणिषु विस्फुरन्त्यः व्यूहीभवन्त्यः कोमलशुक्तिपेश्यः इव रेजुः ॥ सुमनसः–पुष्पाणि । सूर्यात्मजासलिलवेणिषु–कालिन्दी-जलप्रवाहेषु । कोमलशुक्तिपेश्यः–मृदुलशुक्त्यण्डविशेषाः । रेजुः–शुशुभिरे ॥ ९१ ॥

भूयोपि तत्र भुवनैकमनोहराङ्गौ
तौ दम्पती सहचरैः सह सप्रमोदम् ।
वक्राभिधानपरिहासकथाप्रधानै-
रारेमतुश्चिरतरं बहुनर्मभेदैः ॥ ९२ ॥

पुनरपि सीतारामौ तत्र सुहृद्भिः सह नर्मभेदैः क्रीडतः । भूयः अपि तत्र भुवनैक-मनोहराङ्गौ तौ दम्पती सहचरैः सह सप्रमोदं वक्राभिधानपरिहासकथाप्रधानैः बहुनर्मभेदैः चिरतरं आरेमतुः ॥ वक्राभिधानम्–वक्रोक्तिः । नर्मभेदैः–क्रीडाविशेषैः ॥ ८२ ॥

तेषां वने विहरतामिह माधवश्री-
शय्यातले जनितशम्बरवैरिवीरे ।
कस्मै जनाय न चुकोप निसर्गवाम-
श्चित्तं च कस्य न बिभेद शरैः सुतीक्ष्णैः ॥९३॥

तत्र वने विहरत्सु सर्वेष्वपि कामः शरान् प्रयुक्तवानित्याह—**तेषामिति**। माधव-श्रीशय्यातले जनितशम्बरवैरिवीरे इह वने विहरतां तेषां (मध्ये) कस्मै जनाय, निसर्गवामः (कामः) न चुकोप? । कस्य नु चित्तं च सुतीक्ष्णैः शरैः न बिभेद? ॥ माधवश्रियः—वसन्त-लक्ष्म्याः शय्यातले । शम्बरवैरी—कामः । विहरताम्—क्रीडताम् । निसर्गवामः—स्वभाव-प्रतिकूलः । बिभेद—विदारितवान् ॥ ९३ ॥

इत्थं रामश्चिरतरमसौ सार्धमुर्वीशपुत्र्या
तस्मिन्नुद्यत्प्रसरमदने काननान्ते विहृत्य ।
अस्तक्षोणीधरपरिसरं लम्बमाने दिनेशे
प्रत्यावृत्तः सपदि सदनं प्राप कामातुरः स्वम् ॥९४॥

उद्यानक्रीडां परिसमाप्य रामः स्वगृहं प्रत्यागच्छति । इत्थम् असौ रामः उर्वीशपुत्र्या सार्धम् उद्यत्प्रसरमदने तस्मिन् काननान्ते चिरतरं विहृत्य दिनेशे अस्तक्षोणीधरपरिसरं लम्बमाने (सति) प्रत्यावृत्तः कामातुरः (सन्) स्वं सदनं प्राप ॥ उर्वीशपुत्र्या—सीतया । उद्यत्प्रसरः—उज्जृंभमाणः मदनः यस्मिन्, तस्मित् तथोक्ते । दिनेशे-सूर्ये । क्षोणीधरः—पर्वतः । सदनम्-गृहम् ॥ ९४ ॥

याते तस्मिन्नथ नरपतौ वासतेयीं स्वकीयां
सर्वे स्वं स्वं निवसनमनु प्रस्थिताः कामिनस्ते ।
तुङ्गं शृङ्गं चरमधरणीधारिणः सोऽधिरोढुं
रूढोत्सहः पतिरपि रुचां सञ्चुकोच स्वपादम् ॥९५॥

इति श्रीगोदवर्मविद्वद्युवराजकृते
श्रीरामचरिते महाकाव्ये
पंचमः सर्गः

रामस्य सहचरा अपि प्रतिगच्छन्ति । तस्मिन् नरपतौ स्वकीयां वासतेयीं याते (सति) अथ सर्वे ते कामिनः स्वं स्वं निवसनम् अनु प्रस्थिताः । सः रुचां पतिः अपि चरम-धरणीधारिणः तुङ्गं शृङ्गम् अधिरोढुं रूढोत्साहः स्वपादं सञ्चुकोच ॥ वासतेयीम्—वासगृहम् । निवसनम्—गृहम् । रुचां पतिः—सूर्यः । चरमधरणीधारिणः—अस्तपर्वतस्य । स्वपादम्—निजरश्मिम् । निजचरणं च । सञ्चुकोच—सङ्कोचितवान् ॥ ९५ ॥

इति पण्डितरत्नश्रीनारायणपिषारोटिविरचितायां
श्रीरामचरितमहाकाव्यव्याख्यायां अन्वयार्थप्रबोधिन्यां
ऋतूपभोगवर्णनं नाम पञ्चमः सर्गः



# षष्ठः सर्गः

**अथावलोक्य स्वयमम्बुजाक्ष्या रिरंसुमेनं रविरात्मवंश्यम् ।**
**तत्प्रीतिमाधित्सुरिवास्तमेष्यन्नुपास्तशृङ्गं भगवानुपास्त ॥ १ ॥**

सूर्योऽस्तोन्मुखोऽभवदित्याह—**अथेति**। अथ भगवान् रविः आत्मवंश्यम् एनम् अम्बुजाक्ष्या (सह) रिरंसुम् अवलोक्य स्वयं तत्प्रीतिम् आधित्सुः इव अस्तम् एष्यन् उपास्तशृङ्गम् उपास्त॥ आत्मवंश्यम्—स्ववंशभवम् । सूर्यवंशसम्भवमित्यर्थः । एनम्—रामम् । अम्बुजाक्ष्या—सीतया । रिरंसुम्—रन्तुमिच्छुम् । आधित्सुः—कर्तुमिच्छुः । अस्तम्—अदर्शनम् । एष्यन्—गमिष्यन् । उपास्तशृङ्गम्—अस्तपर्वतशिखरसमीपे । उपास्त—प्रविष्टवान् ॥ १ ॥

**निश्शेषदिक्पालकलाविभूतेरस्येव दृष्ट्वा दयितानुरागम् ।**
**दिशोऽपि जाताः सहसा सरागाः स्वस्वामिभावोचितवृत्तिरेषा ॥ २ ॥**

सन्ध्यया दिशो रक्तवर्णा भवन्ति । निश्शेषदिक्पालकलाविभूतेः अस्य दयितानुरागं दृष्ट्वा इव दिशः अपि सहसा सरागाः जाताः । एषा स्वस्वामिभावोचितचित्तवृत्तिः॥ निश्शेषदिक्पालकलाविभूतेः—सर्वदिक्पालांशसम्पन्नस्य । 'अष्टाभिर्लोकपालानां मात्राभिर्निर्मितो नृपः' इति प्रसिद्धेः । अस्य—राज्ञो रामस्य । सरागाः—रक्तवर्णाः, सानुरागाश्च । एषा—स्वामिना सह स्वस्यापि रागवत्ता । दिशां स्वामिनो दिक्पालाः दिक्पालांशसम्भवश्च रामः । तस्मात् तासां स्वामी रामः ॥ २ ॥

**शिखाग्रलग्नैः शिशिरेतरांशोरारेजुरारामनगाः करौघैः ।**
**कौसुम्भकौशेयकृतैरभीक्ष्णमुष्णीषपट्टैरिव सावतंसाः ॥ ३ ॥**

रक्तवर्णैः सूर्यकिरणैरुपवनवृक्षाः शोभन्ते । आरामनगाः शिखाग्रलग्नैः शिशिरेतरांशोः करौघैः, कौसुम्भकौशेयकृतैः उष्णीषपट्टैः सावतंसाः इव अभीक्ष्णम् आरेजुः॥ नगाः—वृक्षाः । शिशिरेतरांशोः—सूर्यस्य । करौघैः—रश्मिसञ्चयैः । कौसुम्भकौशेयकृतैः—रक्तांशुकरचितैः । उष्णीषपट्टैः—शिरोवेष्टनैः । अभीक्ष्णम्—पुनःपुनः । आरेजुः—शुशुभिरे ॥ ३ ॥

सायाह्नशीतेन समीरणेन पतत्रिणः कम्पितपत्रचूडाः ।
आकाशमार्गेऽभिकुलायसालं मन्दं विचेरुर्मधुरं रुवन्तः ॥ ४ ॥

पक्षिणो वासवृक्षं प्रति निवर्तन्ते । पतत्रिणः सायाह्नशीतेन समीरणेन कम्पितपत्रचूडाः मधुरं रुवन्तः (सन्तः) आकाशमार्गे अभिकुलायसालं मन्दं विचेरुः ॥ पतत्रिणः–पक्षिणः । कम्पितपत्रचूडाः–चालितपक्षशिखाः । अभिकुलायसालम्–स्वावासवृक्षम् अभिमुखीकृत्य । विचेरुः–सञ्चारं कृतवन्तः ॥ ४ ॥

दिनान्तरज्यद्द्युमणिप्रभाभिश्छन्नासु सर्वत्र हरित्स्वरोदीत् ।
निजामजानन् निलयद्रुशाखां काकेति पृच्छन्निव काकलोकः ॥ ५ ॥

काकाः शब्दं कुर्वन्ति । दिनान्तरज्यद्द्युमणिप्रभाभिः सर्वत्र हरित्सु छन्नासु (सतीषु) निजां निलयद्रुशाखाम् अजानन् काकलोकः, का (शाखा) का (शाखा) इति पृच्छन् इव अरोदीत् ॥ दिनान्ते–सायङ्काले रज्यन्–रक्तीभवन् यो द्युमणिः–सूर्यः, तस्य प्रभाभिः । हरित्सु–दिक्षु । छन्नासु–आवृतासु । निलयद्रुः–वासवृक्षः । काकलोकः–काकसमूहः । अरोदीत्–रोदनं कृतवान् ॥ ५ ॥

पत्यै निजे खेलति पश्चिमाशावक्षोजशैले विवृतातिरागम् ।
द्रागब्जिनी द्रष्टुमिवासमर्था न्यमीलयत् पङ्कजमात्मनेत्रम् ॥ ६ ॥

कमलिनी निमीलति । निजे पत्यौ पश्चिमाशावक्षोजशैले विवृतातिरागं खेलति (सति) अब्जिनी द्रष्टुम् असमर्था इव द्राक् आत्मनेत्रं पङ्कजं न्यमीलयत् ॥ निजे पत्यौ–सूर्ये । पश्चिमाशायाः (कामिन्याः) वक्षोजे–स्तने एव शैले । अस्तपर्वते इति भावः । विवृतः–प्रकाशितः अतिरागः–अत्यन्तरक्तिमा, स एव अतिरागः–अत्यन्तानुरागः यस्मिन् कर्मणि तद्यथा तथा । खेलति रममाणे । अब्जिनी–कमलिनी । न्यमीलयत्–निमीलितवती ॥ ६ ॥

आरुह्य तुङ्गं चरमाद्रिशृङ्गं तत्रत्यमाणिक्यरुचेव रक्तः ।
आकुञ्चयन् पादसहस्रमाशु पाथोधिमध्ये पतितः पतङ्गः ॥ ७ ॥

सूर्यः समुद्रमध्ये पतति । तुङ्गं चरमाद्रिशृङ्गम् आरुह्य तत्रत्यमाणिक्यरुचा इव रक्तः पतङ्गः पादसहस्रम् आकुञ्चयन् आशु पाथोधिमध्ये पतितः ॥ चरमाद्रिः–अस्तपर्वतः । रुचा–

कान्त्या। पतङ्गः—सूर्यः। पादाः—रश्मयः, चरणाश्च। आकुञ्चयन्—सङ्कोचयन्। उत्प्लवनारम्भे पादसङ्कोचनं स्वभावः। पाथोधिः—समुद्रः ॥ ७ ॥

**रत्नाकरोत्सङ्गतरङ्गरङ्गे त्वङ्गत् क्षणं बिम्बमशीतरश्मेः।**
**लीलाचलद्दोर्वलयाग्रभास्वन्माणिक्यशोभामभजत् प्रतीच्याः ॥ ८ ॥**

समुद्रतरङ्गप्रतिबिम्बितं सूर्यबिम्बं वर्णयति—**रत्नाकरेति**। रत्नाकरोत्सङ्गतरङ्गरङ्गत्वङ्गत् अशीतरश्मेः बिम्बं क्षणं प्रतीच्याः लीलाचलद्दोर्वलयाग्रभास्वन्माणिक्यशोभाम् अभजत् ॥ रत्नाकरोत्सङ्गः—समुद्रमध्यम्। त्वङ्गत्—चलत्। अशीतरश्मेः—सूर्यस्य। बिम्बम्—मण्डलम्। प्रतीच्याः—पश्चिमायाः दिशः। लीलया—विलासेन चलन् यो दोः—भुजः, तत्र यो वलयः—कङ्कणः तदग्रे भास्वत्—प्रकाशमानं यन्माणिक्यं तस्य शोभाम् ॥ ८ ॥

**अस्तं गते भास्वति संकुचन्तीं सरोजमालामवलोक्य तस्य।**
**सौहार्दखेदादिव नेत्रयुग्मं मिमील सन्ध्याविधिकैतवेन ॥ ९ ॥**

रामः सन्ध्याविधिं निर्वर्तयति। भास्वति अस्तं गते (सति) सङ्कुचन्तीं सरोज-मालाम् अवलोक्य सौहार्दखेदाद् इव तस्य नेत्रयुग्मं सन्ध्याविधिकैतवेन मिमील ॥ भास्वति—सूर्ये। अस्तम्—अदर्शनम्। तस्य—रामस्य। सन्ध्याविधिकैतवेन—सन्ध्यानियमव्याजेन। मिमील—निमीलितम्। नेत्रसरोजयोः सादृश्यनिमित्तकं सौहार्दम् ॥ ९ ॥

**सद्यस्त्रिलोकीजनवन्दनीयां सन्ध्यामुपस्थाय स राघवेन्दुः।**
**सुधावलेपोज्ज्वलमभ्रगङ्गाकूलङ्कषं हर्म्यतलं प्रपेदे ॥ १० ॥**

सन्ध्योपासनानन्तरं रामः समुन्नतं हर्म्यं प्राप्नोति। सः राघवेन्दुः त्रिलोकीजनवन्द-नीयां सन्ध्याम् उपस्थायसद्यः सुधावलेपोज्ज्वलम् अभ्रगङ्गाकूलङ्कषं हर्म्यतलं प्रपेदे ॥ उपस्थाय—वन्दित्वा। अभ्रगङ्गाकूलङ्कषम्—आकाशगङ्गास्पर्शि। अत्युन्नतमित्यर्थः। प्रपेदे—प्राप ॥ १० ॥

**तत्रासने चारुणि सन्निविष्टः सत्रा दुहित्रा मिथिलाधिपस्य।**
**नितान्तशोणीकृतदिग्विभागां निरीक्ष्य सन्ध्यामयमित्युवाच ॥ ११ ॥**

रामः सन्ध्यावर्णनायोपक्रमते । तत्र मिथिलाधिपस्य दुहित्रा सत्रा चारुणि आसने सन्निविष्टः अयं नितान्तशोणीकृतदिग्विभागां सन्ध्यां निरीक्ष्य इति उवाच ॥ मिथिलाधिपस्य दुहित्रा सत्रा–सीतया सह ॥ ११ ॥

**विलोक्यतां विश्वविलासिनीनामनुत्तमे चित्तहरं जनानाम् ।**
**महोमहत्त्वं महनीयशीले विलासलोलेन विलोचनेन ॥ १२ ॥**

रामः सीतायै सान्ध्यं तेजो दर्शयति । विश्वविलासिनीनां अनुत्तमे, महनीयशीले! (त्वया) विलासलोलेन विलोचनेन जनानां चित्तहरं महोमहत्त्वं विलोक्यताम् ॥ अनुत्तमे–परमोत्तमे । महोमहत्त्वम्–महसाम्–तेजसां महिमा ॥ १२ ॥

**शङ्केतरां शोणितसिन्धुपूरं सन्ध्यामहस्सञ्चयमञ्चिताङ्गि ।**
**पतत्परोष्णीगतिभङ्गिभङ्गं वीप्सन्तमन्तर्वियदण्डभाण्डम् ॥ १३ ॥**

सान्ध्यतेजसां शोणिमानं वर्णयति—**शङ्केतरामिति** । अञ्चिताङ्गि! अन्तर्वियत् अण्डभाण्डं वीप्सन्तं सन्ध्यामहस्सञ्चयं पतत्परोष्णीगतिभङ्गिभङ्गं शोणितसिन्धुपूरं शङ्केतराम् ॥ अञ्चिताङ्गि–सुन्दरि । वियतः–आकाशस्य अन्तः–अभ्यन्तरे–अन्तर्वियत् । भाण्डम्–पात्रम् इव अण्डम्–अण्डभाण्डम्–ब्रह्माण्डम् । वीप्सन्तम्–व्याप्तुमिच्छन्तम् । सन्ध्यायाः महस्सञ्चयम्–तेजस्समूहम् । पतन्तीनां परोष्णीनाम्–तैलपायिकाख्यकीटविशेषाणां गति भङ्गिः इव गतिभङ्गिः–गतिवैचित्र्यं येषाम्, तादृशाः भङ्गाः यस्मिन्, तं तथाभूतम् । शोणितसिन्धुपूरम्–रक्तसमुद्रप्रवाहम् । शङ्केतराम्–अहम् अतिशयेन शङ्के ॥ १३ ॥

**कराभिघातेन कठोरधामा जनस्य पीडां जनयन् वृथैव ।**
**कृतानुतापः कलुषं प्रमार्ष्टुं पुण्ये पयोधौ पतति स्म मन्ये ॥ १४ ॥**

सूर्येण कृतस्य समुद्रपतनस्य कारणमुत्प्रेक्षते—**करेति** । कराभिघातेन वृथा एव जनस्य पीडां जनयन् कठोरधामा कृतानुतापः कलुषं प्रमार्ष्टुं पुण्ये पयोधौ पतति स्म । इति मन्ये ॥ करेण–रश्मिना, हस्तेन च योऽभिघातः–प्रहारः, तेन । कठोरधामा–सूर्यः । अनुतापः–पश्चात्तापः । कलुषम्–पापम् । प्रमार्ष्टुम्–अपनोदितुम् । पयोधौ–समुद्रे । पतति स्म–पपात ॥ १४ ॥

**पतद्ग्रहत्वेन कृतात् पतङ्गः पत्न्या जलेशस्य दिशा विहस्य ।**
**ताम्बूलरज्यन्मुखशीधुदानादारक्तबिम्बोऽजनि युक्तमेतत् ॥ १५ ॥**

सूर्यबिम्बस्य रक्तवर्णत्वे हेतुमाशङ्कते — **पतद्ग्रहत्वेनेति** । पतङ्गः पतद्ग्रहत्वेन पत्न्या जलेशस्य दिशा विहस्य कृतात् ताम्बूलरज्यन्मुखशीधुदानात् आरक्तबिम्बः अजनि । एतद् युक्तम् ॥ पतङ्गः–सूर्यः । पततीति पतन् । स च असौ ग्रहश्च–पतद्ग्रहः । ताम्बूलोच्छिष्ट-निष्ठीवनार्थः पात्रविशेषश्च । तत्त्वेन । जलेशस्य–वरुणस्य दिशा प्रतीच्या, दिशः सूर्यस्य पत्न्यः इति प्रसिद्धिः । ताम्बूलेन रज्यतो–रक्तीभवतो मुखशीधोः–अर्धपीतस्य मद्यस्य दानात् । अजनि–अभवत् ॥ १५ ॥

**मन्ये जघन्यस्य महीधरस्य शृङ्गाणि कालायसनिर्मितानि ।**
**आसन्नवैरोचनदीप्तिदीपान्यासन्नमून्येव हि लोहितानि ॥ १६ ॥**

अस्तपर्वतशृङ्गाणां रक्तवर्णत्वे हेतुमाह — **मन्ये इति** । जघन्यस्य महीधरस्य शृङ्गाणि कालायसनिर्मितानि (इति) मन्ये । अमूनि एव हि आसन्नवैरोचनदीप्तिदीप्तानि लोहितानि आसन् ॥ जघन्यस्य–चरमस्य । महीधरस्य–पर्वतस्य । अस्तपर्वतस्य इत्यर्थः । शृङ्गाणि–शिखराणि । कालायसेन–अश्मसारलोहेन निर्मितानि । विरोचनः–सूर्यः, अग्निश्च । तत्सं-बन्धिन्या दीप्त्या दीप्तानि । लोहितानि–रक्तानि ॥ १६ ॥

**आदाय लक्ष्मीमरविन्दिनीनामस्तं गतोऽर्कः किल चोरभर्ता ।**
**निपात्य तां दिग्वरुणस्य सिन्धौ सन्ध्यामिषात्तामियमाददाति ॥ १७ ॥**

नलिनीनां शोभैव सन्ध्यारूपेण परिणतेत्याह — **आदायेति** । चोरभर्ता किल अर्कः अरविन्दिनीनां लक्ष्मीम् आदाय अस्तं गतः । इयं वरुणस्य दिक् तां सिन्धौ निपात्य सन्ध्यामिषात् ताम् आददाति ॥ चोरश्च असौ भर्ता च तथा । अरविन्दिनीनाम्–पद्मिनीनाम् । लक्ष्मीम्–शोभाम्, सम्पदं च । अस्तम्–अस्तपर्वतम्, अदर्शनं च । सिन्धौ–समुद्रे । सन्ध्यामिषात्–सन्ध्याव्याजेन आददाति–गृह्णाति ॥ १७ ॥

**अभ्यर्णवाभ्यर्णमशीतधाम्नस्तीव्रातपैर्जाततृषः पिपासोः ।**
**दिक्चक्रवालस्य विसार्यमाणा सन्ध्येति संज्ञां लभते रसज्ञा ॥ १८ ॥**

सन्ध्यायां दिक्चक्रवालजिह्वात्वमारोपयति—**अभ्यर्णवेति**। अभ्यर्णवाभ्यर्णम् अशीतधाम्नः तीव्रातपैः जातरुषः पिपासोः दिक्चक्रवालस्य विसार्यमाणा रसज्ञा सन्ध्या इति संज्ञां लभते॥ अभ्यर्णवाभ्यर्णम्–समुद्रसमीपं लक्षीकृत्य। अशीतधाम्नः–सूर्यस्य। जातरुषः–उदितकोपस्य। पिपासोः–(तीव्रातपं) पातुमिच्छोः। रसज्ञा–जिह्वा ॥ १८ ॥

**अस्ताद्रिपद्माकरचक्रचक्रे तत्कालविज्ञातपतङ्गपाते।**
**सद्यो दिदीपे विरहानलः किं तज्ज्वालया शोणति वारुणीयम् ॥१९॥**

सान्ध्ये तेजसि चक्रवाकविरहाग्निज्वालात्वमाशङ्कते—**अस्तेति**। तत्कालविज्ञातपतङ्गपाते अस्ताद्रिपद्माकरचक्रचक्रे विरहानलः सद्यः दिदीपे किम्? इयं वारुणी तज्ज्वालया (किं) शोणति?॥ पतङ्गपातः–सूर्यपतनम्। चक्रचक्रम्–चक्रवाकसमूहः। दिदीपे–दीप्तवान्। शोणति–रक्ता भवति ॥ १९ ॥

**रुचेरपाकृष्य रविः स्विकस्याश्चक्रेषु चक्रे निजतापभारम्।**
**ददौ पुनस्तां दमुनस्यतस्ते तपन्ति नक्तं न च तस्य भेदः ॥२०॥**

चक्रवाकेषु रात्रौ तापः कथं जात इत्याह—**रुचेरिति**। रविः स्विकस्याः रुचेः निजतापभारं अपाकृष्य चक्रेषु चक्रे। तां पुनः दमुनसि ददौ। अतः ते नक्तं तपन्ति। तस्य न च भेदः॥ स्विकस्याः–आत्मीयायाः। रुचेः–प्रभायाः। तापभारम्–उष्णाधिक्यम्, दुःखातिशयं च। अपाकृष्य–उद्गृह्य। चक्रेषु–चक्रवाकेषु। चक्रे–निदधे। ताम्–रुचिम्। दमुनसि–अग्नौ। ददौ-अर्पितवान्। ते–चक्रवाकाः। नक्तम्–रात्रौ। तपन्ति–तापमनुभवन्ति। तस्य–अग्नेः। न च भेदः–रुचिविषये विशेषो नास्ति ॥ २० ॥

**हंसः खगानामधिपः किलायं चिराय सण्डीय परिश्रमार्तः।**
**पपात मध्येजलधीति जाने सङ्कूजनं पक्षिगणः करोति ॥ २१ ॥**

पक्षिणां कूजने सूर्यस्य समुद्रपतनं कारणमित्युत्प्रेक्षते—**हंस इति**। खगानां अधिपः किल अयं हंसः चिराय सण्डीय परिश्रमार्तः मध्येजलधि पपात इति पक्षिगणः सङ्कूजनं करोति (इति अहं) जाने॥ खगानाम्–ग्रहाणम्, पक्षीणां च। हंसः–सूर्यः, हंसाख्यपक्षिविशेषश्च। सण्डीय–सण्डयनं कृत्वा। मध्येजलधि–समुद्रमध्ये। सङ्कूजनम्–रोदनम्। जाने–मन्ये॥

**विधाय सङ्गं वरुणस्य दारैर्दिशा स रक्ताम्बरया विशिष्य ।**
**सन्ध्याकुमारीं सविता ससर्ज ध्रुवं तदल्पायुरसौ बभूव ॥ २२ ॥**

सूर्यस्य प्रतीच्यां जाता कन्यका सन्ध्येत्याह—**विधायेति**। सविता विशिष्य रक्ताम्बरया वरुणस्य दिशा दारैः सङ्गं विधाय सन्ध्याकुमारीं ससर्ज। तत् ध्रुवम् असौ अल्पायुः बभूव ॥ सविता—सूर्यः। रक्तम् अम्बरम्-आकाशम् ; वस्त्रं च यस्याः, तया तथोक्तया। दारैः—पत्न्या। सङ्गम्—संसर्गम्। विधाय—कृत्वा। ससर्ज—सृष्टवान्। असौ—सन्ध्या। ऋतुस्नातायां पञ्चमरात्रावुत्पादितमपत्यम् अल्पायुर्दारिका भवतीति 'पुत्रोऽल्पायुर्दारिका' इत्यादिना ज्योतिश्शास्त्रेऽनुशासनादिति भावः ॥ २२ ॥

**समन्ततः पश्यतमां तमिस्रं सुमध्यमे सम्प्रति जृम्भमाणम् ।**
**विकस्वरेन्दीवरकुड्मलौघादुदञ्चदुच्चैरिव कान्तिजालम् ॥ २३ ॥**

अन्धकारजृम्भणं नीलोत्पलविकासं च वर्णयति—**समन्तत इति**। सुमध्यमे! संप्रति विकस्वरेन्दीवरकुड्मलौघात् उदञ्चद् उच्चैः कान्तिजालम् इव समन्ततः जृम्भमाणं तमिस्रं (त्वं) पश्यतमाम् ॥ उदञ्चत्—उद्गच्छत्। उच्चैः—उन्नतम्। तमिस्रम्—अन्धकारम्। पश्यतमाम्—अतिशयेन वीक्षस्व ॥ २३ ॥

**कल्हारवापीकलिकाकरण्डमुद्घाट्य सन्ध्या मृदुवातयन्त्रैः ।**
**पत्रस्थितं भृङ्गकुरङ्गनाभिमादाय योषेव नु लिम्पति स्वम् ॥ २४ ॥**

सौगन्धिकविकासं वर्णयति—**कल्हारेति**। सन्ध्या योषा इव मृदुवातयन्त्रैः कल्हार-वापीकलिकाकरण्डम् उद्घाट्य पत्रस्थितं भृङ्गकुरङ्गनाभिम् आदाय स्वं लिम्पति नु ॥ मृदुवातयन्त्रैः—ताडाख्ययन्त्रसदृशैः मृदुवातैः। कल्हारः—सौगन्धिकम्। कलिकाकरण्डम्—करण्डाख्य पात्रविशेषसदृशं कोरकम्। भृङ्गकुरङ्गनाभिम्—कुरङ्गनाभिः—कस्तूरी, तत्सदृशं भ्रमरम्। स्वम्—आत्मानम् ॥ २४ ॥

**निर्वर्ण्य वर्णेन समानमेनं बिम्बेन बिम्बं च्युतमंस्तशृङ्गात् ।**
**भ्रमेण दष्टुं बलिपुष्टलोकः समोपतत्याशु तमिस्ररूपः ॥ २५ ॥**

सूर्यबिम्बाभिमुखं काककुलाभिगमनं वर्णयति—**निर्वर्ण्येति**। तमिस्ररूपः बलिपुष्टलोकः वर्णेन बिम्बेन समानम् अस्तशृङ्गात् च्युतम् एनं बिम्बं निर्वर्ण्य भ्रमेण दष्टुम् आशु समापतति। तमिस्ररूपः—अन्धकार इव कृष्णवर्णः। बलिपुष्टलोकः—काकसमूहः। वर्णेन—रूपेण। बिम्बेन-बिम्बफलेन। च्युतम्-पतितम्। बिम्बम्—सूर्यबिम्बम्। निर्वर्ण्य—दृष्ट्वा। भ्रमेण—बिम्बफलबुद्ध्या। दष्टुम्—खादितुम् ॥ २५ ॥

**नेदं तमः किन्तु कलिन्दकन्या दिवा निरस्ते पितरि स्वकीये।**
**क्रोधादिवैनां ग्रसितुं प्रवृत्ता समन्ततः सत्वरमुत्पतन्ती ॥ २६ ॥**

अन्धकारजृम्भणं वर्णयति—**नेदमिति**। इदं न तमः। किन्तु, स्वकीये पितरि दिवा निरस्ते (सति) क्रोधात् एनां ग्रसितुं प्रवृत्ता इव समन्ततः सत्वरम् उत्पतन्ती कलिन्दकन्या ॥ स्वकीये पितरि सूर्ये। 'कालिन्दी सूर्यतनया' इति प्रसिद्धम्। दिवा—आकाशेन। एनाम्—दिवम्। कलिन्दकन्या—कालिन्दी। कृष्णवर्णा खलु कालिन्दी ॥ २६ ॥

**अब्धौ मृतेऽर्के हरितः स्वनाथे सन्ध्यानलं प्रापुरिवानुमर्तुम्।**
**तद्दाहजन्मा तनुते रजन्यास्तमस्विनीत्वं तरसैव धूम्या ॥ २७ ॥**

रात्रेधूमपटलव्याप्तत्वमुत्प्रेक्षते—**अब्धाविति**। हरितः, स्वनाथे अर्के अब्धौ मृते (सति) अनुमर्तुं सन्ध्यानलं प्रापुः इव। तरसा इव तद्दाहजन्मा धूम्या रजन्याः तमस्विनीत्वं तनुते ॥ हरितः—दिशः। सन्ध्यानलम्—सन्ध्यारूपमग्निम्। तद्दाहजन्मा—दिग्दहनसम्भवा। धूम्या—धूमपटली। रजन्याः—रात्रेः। तमस्विनीत्वम्—बहुलान्धकारयुक्तताम्। तनुते—विस्तारयति ॥ २७ ॥

**शीतालवः शीतकरांशुमर्शाद्भीता इवैताः ककुभोऽविदूरात्।**
**अच्छादनायाददते विशालं तमोमयं नीलनिचोलचेलम् ॥ २८ ॥**

दिशां तिमिरावृतत्वमाह—**शीतालव इति**। शीतालवः एताः ककुभः शीतकरांशुमर्शात् भीताः इव अविदूरात् आच्छादनाय विशालं तमोमयं नीलनिचोलचेलम् आददते॥ शीतालवः—शैत्यबाधिताः। ककुभः—दिशः। शीतकरांशुमर्शात्—चन्द्ररश्मिस्पर्शात्।

तमोमयम्--अन्धकाररूपम्। नीलनिचोलचेलम्--नीलकम्बलम्। आच्छादनाय--प्रावरणाय आददते--गृह्णन्ति ॥ २८ ॥

**अनेन भिन्नाञ्जनमेचकेन कृत्वाक्षिलेपं खलु पेचकेन।**
**विश्वे पदार्था विषयीक्रियन्ते देहानुरूपं बलमौषधानाम् ॥ २९ ॥**

उलूकस्य अन्धकारेऽपि दर्शनशक्तेः कारणमुत्प्रेक्षते—**अनेनेति**। अनेन खलु अक्षिलेपं कृत्वा भिन्नाञ्जनमेचकेन पेचकेन विश्वे पदार्थाः विषयीक्रियन्ते। औषधानां बलं देहानुरूपम् ॥ अनेन—अन्धकारेण। भिन्नम्—दलितम् अञ्जनम् इव मेचकः—श्यामलः, तेन। पेचकेन—उलूकेन। विश्वे—सर्वे। विषयीक्रियन्ते—साक्षात्क्रियन्ते ॥ २९ ॥

**व्यक्तीभवन्तं दिवि पश्य बाले तारासमूहं तमसा वृतायाम्।**
**रूपान्तराक्रान्तनिजाश्रयत्वे रूपाश्रयं वस्तु सुलक्षमाहुः ॥ ३० ॥**

नक्षत्राणां प्रकाशाधिक्ये हेतुमाह—**व्यक्तीभवन्तमिति**। बाले! तमसा वृतायां दिवि व्यक्तीभवन्तं तारासमूहं पश्य। रूपाश्रयं वस्तु, रूपान्तराक्रान्तनिजाश्रयत्वे सुलक्षम् आहुः॥ दिवि—आकाशे। ताराः—नक्षत्राणि। रूपम्—सौन्दर्यम्, वर्णश्च। सुलक्षम्—सुखेन लक्षयितुं—द्रष्टुम् शक्यम् ॥ ३० ॥

**रत्नं निजं नीरनिधौ नियत्या निपातितं या बहुशः शुशोच।**
**तस्या दिवो नेत्रपयःपृषन्ति तारापदेशात् प्रकटीभवन्ति ॥ ३१ ॥**

नक्षत्राणि अश्रुबिन्दुत्वेन वर्णयति—**रत्नमिति**। या, नियत्या नीरनिधौ निपातितं निजं रत्नं बहुशः शुशोच, तस्याः दिवः नेत्रपयःपृषन्ति तारापदेशात् प्रकटीभवन्ति ॥ नियत्या—दैवेन। नीरनिधौ—समुद्रे। निजं रत्नम्—सूर्यम्। तस्य आकाशरत्नत्वप्रसिद्धेः। शुशोच—दुःखितवती। दिवः—आकाशस्य। नेत्रपयःपृषन्ति—अश्रुबिन्दवः। ताराः—नक्षत्राणि ॥ ३१ ॥

**दिनं दिनेशस्य करैः कठोरैः सन्तापितायाः सरणेः सुराणाम्।**
**मिषेण तारामयमौक्तिकानां प्रस्वेदबिन्दुप्रकरा भवन्ति ॥ ३२ ॥**

नक्षत्राण्येव स्वेदबिन्दुत्वेन वर्णयति— **दिनमिति** । कठोरैः दिनेशस्य करैः दिनं सन्तापितायाः सुराणां सरणेः तारामयमौक्तिकानां मिषेण प्रस्वेदबिन्दुप्रकराः भवन्ति । करैः—रश्मिभिः । सुराणां सरणेः—देवपद्धतेः । आकाशादित्यर्थः । मिषेण—व्याजेन ॥ ३२ ॥

**न्यस्तानि लक्ष्मीकमितुः पदत्वात् पुष्पाणि कल्पद्रुमजानि देवैः ।**
**दामानि यद्वा दिवि कीकसानां शम्भोः कचत्वान्न तु भान्यमूनि ॥ ३३ ॥**

नक्षत्राण्येव पुष्पत्वेन अस्थित्वेन च वर्णयति— **न्यस्तानीति** । दिवि अमूनि, लक्ष्मीकमितुः पदत्वात् देवैः न्यस्तानि कल्पद्रुमजानि पुष्पाणि । यद्वा, शम्भोः कचत्वात् कीकसानां दामानि (भवन्ति) । न तु भानि (भवन्ति) । दिवि—आकाशे । अमूनि—दृश्यमानानि । लक्ष्मीकमितुः—विष्णोः । विष्णुपदमित्याकाशपर्यायः । शम्भोः—शिवस्य । कचत्वात्—केशत्वात् । व्योमकेशः इति शिवपर्यायः । कीकसानाम्—अस्थीनाम् । दामानि—मालाः । शिवः शिरसि अस्थिमालाः धरति इति प्रसिद्धिः । भानि—नक्षत्राणि ॥ ३३ ॥

**सहस्रपादं वृषभं प्रचार्य क्षेत्रं नभो नाम विकृष्य कालः ।**
**कृषीवलः कर्दमिते तमोभिर्वपत्यमुष्मिन्नुडुबीजजालम् ॥ ३४ ॥**

नक्षत्राण्येव बीजजालत्वेन वर्णयति— **सहस्रेति** । कालः कृषीवलः सहस्रपादं वृषभं प्रचार्य नभः नाम क्षेत्रं विकृष्य तमोभिः कर्दमिते अमुष्मिन् उडुबीजजालं वपति । सहस्रं पादाः—रश्मयः यस्य तम्, सहस्रपादम्—सूर्यम् । नभः—आकाशम् । क्षेत्रम्—केदारम् । तमोभिः—अन्धकारैः । कर्दमिते—सञ्जातपङ्के । अमुष्मिन्—क्षेत्रे । उडूनाम्—नक्षत्राणामेव बीजानां जालम् । वपति—विकिरति ॥ ३४ ॥

**स्फुटीभवत्कैरवकोरकाणां क्षपामुखे पुस्करपुष्करिण्याः ।**
**बिम्बानि दृष्ट्वा विमलाम्बुपूरे ताराधियं तत्र तनोति लोकः ॥ ३५ ॥**

नक्षत्राण्येव कुमुदप्रतिबिम्बत्वेन वर्णयति— **स्फुटीभवदिति** । क्षपामुखे स्फुटीभवत्कैरवकोरकाणां बिम्बानि, पुष्करपुष्करिण्याः विमलाम्बुपूरे दृष्ट्वा तत्र लोकः ताराधियं तनोति ॥ क्षपायाः रात्रेः मुखे आरम्भे । सायङ्काले इत्यर्थः । स्फुटाः—विकसिताः । कैरवकोरकाणाम्—

कुमुदकलिकानाम्। बिम्बानि–प्रतिबिम्बानि। पुष्करपुष्करिण्याः–आकाशनद्याः गङ्गयाः। लोकः–जनः। ताराधियम्–नक्षत्रबुद्धिम्। तनोति–करोति ॥ ३५ ॥

**उत्थाय सन्ध्याकपटेन सिन्धोरागन्तुमालोक्य रुचामधीशम्।**
**दत्तार्चनस्तारकतण्डुलौघैः प्रत्युज्जगाम ज्वलनः किमौर्वः ॥ ३६ ॥**

नक्षत्राणि तण्डुलकणजालत्वेनोत्प्रेक्षते—**उत्थायेति**। और्वः ज्वलनः रुचाम् अधीशम्-आगन्तुम् आलोक्य सन्ध्याकपटेन सिन्धोः उत्थाय तारकतण्डुलौघैः दत्तार्चनः प्रत्युज्जगाम किम्? और्वः ज्वलनः–वडवाग्निः। रुचाम्–दीप्तीनाम् अधीशम्–सूर्यम्। आगन्तुम्–अतिथिम्। सिन्धोः–समुद्रात्। तारकाणाम्–नक्षत्राणामेव तण्डुलानाम् ओघैः–समूहैः। प्रत्युज्जगाम–स्वीकृतवान् ॥ ३६ ॥

**व्यक्तीभवत्तारतमिस्रमिश्रमशान्तसान्ध्यप्रभमम्बुजाक्षि।**
**मुदे ममोदेति रतान्ततान्तत्वदाननश्रीधरमन्तरिक्षम् ॥ ३७ ॥**

अन्तरिक्षं वर्णयति—**व्यक्तीति**। अम्बुजाक्षि! व्यक्तीभवत्तारतमिस्रमिश्रम् अशान्त-सान्ध्यप्रभं रतान्ततान्तत्वदाननश्रीधरम् अन्तरिक्षं मम मुदे उदेति॥ ताराणि–नक्षत्राणि। तमिस्रम्–अन्धकारः। अन्तरिक्षम्–आकाशः ॥ ३७ ॥

**तारावलीराजतबिन्दुराजत्पितृप्रसूभासुरपत्रपाश्यः।**
**वियद्द्विपस्तिष्ठति धारयिष्यन् सुधाकरं मध्यमणिं सुनीलः ॥ ३८ ॥**

सान्ध्यमाकाशमेव वर्णयति—**तारावलीति**। तारावलीराजतबिन्दुराजत्पितृप्रसू-भासुरपत्रपाश्यः सुनीलः वियद्द्विपः सुधाकरं मध्यमणिं धारयिष्यन् तिष्ठति॥ पितृप्रसूः–सन्ध्या। सैव पत्रपाश्या–ललाटालङ्कारः यस्य सः। वियद् एव द्विपः। सुधाकरम्–चन्द्रम् ॥ ३८ ॥

**कालेन वैशाखधरं विधाय प्राभाकरं बिम्बममन्थि सिन्धुः।**
**जज्ञे ततस्तारकरत्नकूटं तमिस्रनामापि च कालकूटम् ॥ ३९ ॥**

तारकाणां रत्नत्वम् अन्धकारस्य कालकूटत्वं चारोप्य वर्णयति—**कालेनेति।** कालेन प्राभाकरं बिम्बं वैशाखधरं विधाय सिन्धुः अमन्थि। ततः तारकरत्नकूटं तमिस्रनाम कालकूटं अपि च जज्ञे ॥ प्राभाकरं बिम्बम्—सूर्यबिम्बम्। वैशाखधरम्—मन्थदण्डयुक्तम्। विधाय—कृत्वा। सिन्धुः—समुद्रः। अमन्थि—मथितः। ततः—समुद्रात्। कूटम्—समूहः। तमिस्रनाम—अन्धकारनामकम्। कालकूटम्—विषम्। जज्ञे—जातम् ॥ ३९ ॥

**रत्नाकरश्चेद्वियदौपसन्ध्यं किं भासुरास्तत्र सुरा न ताराः।**
**इदं तमश्चाप्यभियुक्तमेभिर्जानीमहे दानववीरसैन्यम् ॥ ४० ॥**

ताराणां देवत्वम्, अन्धकारस्य असुरसैन्यत्वं चारोप्य वर्णयति—**रत्नाकर इति।** औपसन्ध्यं वियत् रत्नाकरः चेत् तत्र भासुराः किम्? सुराः, न ताराः। इदं तमः च अपि एभिः अभियुक्तं दानववीरसैन्यं जानीमहे ॥ औपसन्ध्यम्—सन्ध्यासमीपभवम्। वियत्—आकाशम्। रत्नाकरः—समुद्रः। भासुराः—शोभमानाः। एभिः—सुरैः ॥ ४० ॥

**सुवर्णशारीः कपटेन भानां विहायसि द्यूतपटे वितत्य।**
**विक्रीडितुं शीतमयूखमक्षं ग्रहीतुकामा इव भान्ति काष्ठाः ॥ ४१ ॥**

आकाशस्य द्यूतपटत्वं नक्षत्राणां शारीत्वं चन्द्रस्य अक्षत्वं च प्रकल्प्य वर्णयति—**सुवर्णेति।** काष्ठाः विहायसि द्यूतपटे भानां कपटेन सुवर्णशारीः वितत्य विक्रीडितुं शीतमयूखम् अक्षं ग्रहीतुकामाः इव भान्ति ॥ काष्ठाः—दिशः। विहायसि—आकाशे। भानाम्—नक्षत्राणाम्। सुवर्णशारीः—कनकपाशकान्। वितत्य—विस्तीर्य। शीतमयूखम्—चन्द्रम्। अक्षम्—द्यूतक्रीडोपकरणविशेषम्। भान्ति—शोभन्ते ॥ ४१ ॥

**सन्ध्याप्रवालस्तिमिरच्छदौघो यस्तारकैः कोरकितो बभूव।**
**नभस्तरोरस्य न वक्ति को वा जनिष्यमाणं फलमिन्दुबिम्बम् ॥ ४२ ॥**

आकाशस्य वृक्षत्वं परिकल्प्य वर्णयति—**सन्ध्येति।** सन्ध्याप्रवालः तिमिरच्छदौघः यः तारकैः कोरकितः बभूव। अस्य नभस्तरोः जनिष्यमाणं फलम्, इन्दुबिम्बं कः वा न वक्ति? ॥ सन्ध्या एव प्रवालं यस्य, तादृशः। तिमिरमेव छदौघः—पत्रसञ्चयः यस्य, तादृशः। कोरकितः—सञ्जातकलिकः। नभस्तरोः—आकाशवृक्षस्य ॥ ४२ ॥

**निधाय तेजो निजमुष्णतेजाः सन्ध्याङ्गनायां जनयाम्बभूव।**
**निशाकुमारीं नितरां तदेषा वियोगभाजां विशिनष्टि तापम् ॥ ४३ ॥**

रात्रेः सूर्यपुत्रीत्वं समर्थयति—**निधायेति**। उष्णतेजाः निजं तेजः सन्ध्याङ्गनायां निधाय निशाकुमारीं जनयाम्बभूव। तद् एषा वियोगभाजां नितरां तापं विशिनष्टि॥ उष्णतेजाः–सूर्यः। तेजः–दीप्तिम्, शुक्रं च। एषा–निशाकुमारी। तापम्–दुःखम्, औष्ण्यं च। विशिनष्टि–वर्धयति ॥ ४३ ॥

**सन्ध्यावधूसारसबन्धुयोगे जाता निशा नाम कुमारिकेयम्।**
**रथाङ्गवक्षोरुहनेत्रनिर्यत् पयो धयन्ती परिपोषमेति ॥ ४४ ॥**

निशायाः सन्ध्याकुमारीत्वं समर्थयति—**सन्ध्येति**। सन्ध्यावधूसारसबन्धुयोगे जाता निश नाम इयं कुमारिका, रथाङ्गवक्षोरुहनेत्रनिर्यत्-चक्रवाकस्तननेत्रप्रवहत् पयः धयन्ती परिपोषम् एति॥ सारसबन्धुः–सूर्यः। रथाङ्गवक्षोरुहनेत्रनिर्यत्–चक्रवाकस्तननेत्र-प्रवहत्। पयः–अश्रु, क्षीरं च। धयन्ती–पिबन्ती ॥ ४४ ॥

**निशीथिनी नीलतमःप्रवेणी कुमारिका कैरवकुड्मलाक्षी।**
**पीयूषभासा परिणेष्यमाणा तारावलीमालिकयाञ्चति स्वम् ॥ ४५ ॥**

नक्षत्रपङ्क्तिर्निशाकुमार्याः मालिकेत्याह—**निशीथिनीति**। नीलतमःप्रवेणी कैरव-कुड्मलाक्षी निशीथिनी कुमारिका पीयूषभासा परिणेष्यमाणा तारावलीमालिकया स्वम् अञ्चति॥ नीलं तमः एव प्रवेणी–केशपाशो यस्याः, तादृशी। कैरवकुड्मलः–कुमुदमुकुल एव अक्षि यस्याः, तादृशी। निशीथिनी–रात्रिः। पीयूषभासा–चन्द्रेण। स्वम्–आत्मानम्। अञ्चति–अलङ्करोति ॥ ४५ ॥

**इत्यत्र सूक्तिस्रजमम्बुजाक्ष्यै सन्ध्यागुणौघग्रथितां ददाने।**
**आपाण्डुरः शक्रदिशि प्रकाशः क्षीरोदधेः पूर इवोज्जगाम ॥ ४६ ॥**

सन्ध्यावर्णनमुपसंहरति—**इत्यत्रेति**। इति अत्र सन्ध्यागुणौघग्रथितां सूक्तिस्रजम् अम्बुजाक्ष्यै ददाने (सति) शक्रदिशि आपाण्डुरः प्रकाशः क्षीरोदधेः पूरः इव उज्जगाम॥

अत्र—अस्मिन् रामे। सन्ध्याया गुणानाम्—धर्माणामेव तन्तूनाम् ओघेन—समूहेन ग्रथितानाम्। शक्रदिशि—पूर्वस्यां दिशि। उज्जगाम—उद्गतः ॥ ४६ ॥

**रामान्तरङ्गप्रमदप्रदाता ताराधिपेन प्रहितो जवेन।**
**उत्पत्य च प्राग्गिरितो मरीचिस्तोमो हनूमानिव नाकमाञ्चत् ॥ ४७ ॥**

उदयपर्वताद्रश्मिसमूह उद्गच्छति। रामान्तरङ्गप्रमदप्रदाता ताराधिपेन प्रहितः मरीचिस्तोमः प्राग्गिरितः उत्पत्य च हनूमान् इव जवेन नाकम् आञ्चत् ॥ रामाणाम्—सुन्दरीणाम्। अन्तरङ्गे प्रमदम्—हर्षम् प्रदातुं शीलमस्येति तथा। रामस्य अन्तरङ्गे इति च। ताराधिपेन—चन्द्रेण, सुग्रीवेण च। मरीचिस्तोमः—रश्मिसमूहः। प्राग्गिरितः—पूर्वपर्वतात्। नाकम्—आकाशम्। आञ्चत्—प्राप ॥ ४७ ॥

**दृष्ट्वा मुखं दर्शितहासमैन्द्र्याः प्रियः प्रियां तां पुनरप्युवाच।**
**निपीय तत्सूक्तिसुधामतृप्ता भूयस्तृषेवास्य चुचुम्ब यास्यम् ॥ ४८ ॥**

रामश्चन्द्रोदयं वर्णयितुमुपक्रमते। ऐन्द्र्याः मुखं दर्शितहासं दृष्ट्वा प्रियः तां प्रियां पुनः अपि उवाच। या तत्सूक्तिसुधां निपीय अतृप्ता भूयः तृषा इव अस्य आस्यं चुचुम्ब ॥ ऐन्द्र्याः—पूर्वाशायाः। मुखम्—प्रारम्भभागम्, वदनं च। हासः—मन्दहासः, प्रकाशश्च। प्रियः—रामः। तृषा—पिपासया। अस्य—रामस्य। आस्यम्—मुखम् ॥ ४८ ॥

**सलीलमालोलय लोचनान्तं प्रति प्रतिचीतरदिग्विभागम्।**
**पूर्वाचलाग्रस्फुटलोध्ररेणुरम्या रुचः प्रेरयतीह चन्द्रः ॥ ४९ ॥**

प्राचीमालोकयेति रामः सीतामाह—**सलीलमिति**। (त्वम्) लोचनान्तं प्रतीचीतरदिग्विभागं प्रति सलीलम् आलोलय। चन्द्रः इह पूर्वाचलाग्रस्फुटलोध्ररेणुरम्याः रुचः प्रेरयति ॥ प्रतीचीतरदिक्—पूर्वदिक्। रुचः—द्युतीः ॥ ४९ ॥

**सायं स्मरार्तैः सभमात्मकान्तैः प्रक्रीडितानां प्रथमाद्रिकुञ्जे।**
**आशामुखोऽयं शबराङ्गनानां श्वेतायते नर्मविलासहासैः ॥ ५० ॥**

पूर्वदिङ्मुखस्य श्वेततां वर्णयति—**सायमिति** । सायं स्मरार्तैः आत्मकान्तैः समं प्रथमाद्रिकुञ्जे प्रक्रीडितानां शबराङ्गनानां नर्मविलासहासैः अयम् आशामुखः श्वेतायते ॥ प्रथमाद्रिकुञ्जे–उदयपर्वतलतागृहे । आशामुख इति मुखशब्दस्य पुस्त्वं चिन्त्यम् ॥ श्वेतायते–श्वेतो भवति ॥ ५० ॥

**यथा यथोदञ्चति कान्तिरिन्दोरनूदयन्ती हरिगोचराशाम् ।**
**तथा तथापैति तमिस्रजालं मायेव साक्षात् परचित्प्रकाशात् ॥ ५१ ॥**

चन्द्रकान्त्या अन्धकारापगमनमाह—**यथेति** । हरिगोचराशाम् अनु उदयन्ती इन्दोः कान्तिः यथा यथा उदञ्चति, तथा तथा तमिस्रजालं साक्षात् परचित्प्रकाशात् माया इव अपैति ॥ हरिः–इन्द्रः । हरिगोचराशाम् अनु–इन्द्रदिशं लक्षीकृत्य । पूर्वस्यां दिशीत्यर्थः । उदञ्चति–उद्गच्छति । साक्षात्–प्रत्यक्षीभूतात् । परचित्प्रकाशात्–परमात्मज्ञानोदयात् । अपैति–दूरीभवति ॥ ५१ ॥

**अर्धार्धदृष्टामृतरोचिरङ्गं मुग्धे पुरस्तादुदयस्य शृङ्गम् ।**
**आलोक्यतामास्यमिवादिघृष्टेर्दिगम्बरीभूतपिशङ्गदंष्ट्रम् ॥ ५२ ॥**

चन्द्रस्योदयं वर्णयति—**अर्धार्धेति** । मुग्धे ! दिगम्बरीभूतपिशङ्गदंष्ट्रम् आदिघृष्टेः आस्यम् इव अर्धार्धदृष्टामृतरोचिरङ्गम् उदयस्य शृङ्गं पुरस्ताद् आलोक्यताम् ॥ मुग्धे–सुन्दरि । दिगम्बरीभूता–प्रत्यक्षीभूता पिशङ्गी–पिङ्गला दंष्ट्रा यस्मिन्, तादृशम् । आदिघृष्टेः–प्रथमवराहस्य । आस्यम्–मुखम् । अर्धार्धदृष्टम्–खण्डशः खण्डशः प्रत्यक्षीभूतम् अमृतरोचिषः–चन्द्रस्य अङ्गम्–स्वरूपं यस्मिन्, तादृशम् । उदयस्य–पूर्वपर्वतस्य । शृङ्गम्–शिखरम् । पुरस्तात्–पूर्वस्यां दिशि । आलोक्यताम्–दृश्यताम् ॥ ५२ ॥

**उस्रैरुदस्रीकृतविप्रयुक्तैर्विस्रंसयन्नाशु तमिस्रबन्धम् ।**
**उल्लोलसङ्क्रान्तविलोलमूर्तिरुद्याति सिन्धोरुडुचक्रवर्ती ॥ ५३ ॥**

समुद्रात् चन्द्रस्य उद्गमनं वर्णयति—**उस्रैरिति** । उदस्रीकृतविप्रयुक्तैः उस्रैः तमिस्रबन्धम् आशु विस्रंसयन् उल्लोलसङ्क्रान्तविलोलमूर्तिः (सन्) उडुचक्रवर्ती सिन्धोः उद्याति ॥ उदस्रीकृताः–उद्गलदश्रवः कृताः विप्रयुक्ताः–प्रियाविरहिणः यैः तादृशैः । उस्रैः–रश्मिभिः ।

तमिस्रेण—अन्धकारेण बन्धम् । विस्रंसयन्—शिथिलयन् । उल्लोलेषु—कल्लोलेषु । सङ्क्रान्ता—प्रतिबिम्बिता मूर्तिः—स्वरूपं यस्य, तादृशः । उडुचक्रवर्ती—चन्द्रः । सिन्धोः—समुद्रात् । उद्याति—उद्गच्छति ॥ ५३ ॥

**पीयूषसारस्रविणा करेण विधाय सम्मार्जनमोषधीशः ।**
**विलोपयत्येष दिवः शरीरे प्रायेण तारामयसिध्मजालम् ॥ ५४ ॥**

चन्द्रोदये नक्षत्राणामप्रकाशतामाह—**पीयूषेति** । एषः ओषधीशः दिवः शरीरे पीयूषसारस्रविणा करेण सम्मार्जनं विधाय तारामयसिध्मजालं प्रायेण विलोपयति ॥ ओषधीशः—चन्द्रः, वैद्यश्च । दिवः—आकाशस्य । अङ्गनायाः इति च गम्यते । पीयूषसारम्—अमृतरसं स्रवतीति तथा । करेण—रश्मिना, हस्तेन च । सम्मार्जनम्—संवाहनम् । सिध्मम्—त्वग्रोगविशेषः । विलोपयति—नाशयति ॥ ५४ ॥

**स्वच्छन्दखेलत्प्रथमाद्रिमस्तवास्तव्यहस्तीन्द्रकरैरुदस्तः ।**
**प्रत्यग्रमाणिक्यशिलामयः किमुज्जृम्भते सम्प्रति गण्डशैलः ॥ ५५ ॥**

चन्द्रबिम्बं गण्डशैलत्वेनोत्प्रेक्षते—**स्वच्छन्देति** । स्वच्छन्दखेलत्प्रथमाद्रिमस्तवास्तव्यहस्तीन्द्रकरैः उदस्तः प्रत्यग्रमाणिक्यशिलामयः गण्डशैलः सम्प्रति उज्जृम्भते किम् ? ॥ प्रथमाद्रिमस्तम्—उदयपर्वतमूर्धा । उदस्तः—उत्क्षिप्तः । प्रत्यग्रः—अभिनवः । गण्डशैलः—स्थूलोपलः । उज्जृम्भते—उत्पतति ॥ ५५ ॥

**सन्ध्याग्निसन्तप्तनभश्शरावे तारालिफेनानुमितद्रुताज्ये ।**
**निधाय कालः पचतीन्दुपिष्टं निवेशितं प्राग्लवणोदपूरे ॥ ५६ ॥**

चन्द्रबिम्बे अपूपविशेषत्वमारोप्य वर्णयति—**सन्ध्येति** । कालः तारालिफेनानुमितद्रुताज्ये सन्ध्याग्निसन्तप्तनभश्शरावे, प्राक् लवणोदपूरे निवेशितम् इन्दुपिष्टं पचति ॥ तारालिरेव फेनः, तेन अनुमितं द्रुतम्—द्रवतां गतम् आज्यं यस्मिन्, तादृशे । सन्ध्ययैव अग्निना सन्तप्तं नभः एव शरावः—पात्रविशेषः, तस्मिन् । इन्दुम्—चन्द्रमेव पिष्टम्—अपूपविशेषम् ॥ ५६ ॥

**कालेन पक्वस्तमसः कदाचिदाहारदानाय शशाङ्कपूपः ।**
**जग्राह सद्यस्तम एव सेयं वैधी विचित्रा भवति प्रवृत्तिः ॥ ५७ ॥**

अपूपत्वमेवाश्रित्य चन्द्रं वर्णयति—**कालेनेति**। कदाचित् कालेन तमसः आहारदानाय पक्वः शशाङ्कपूपः सद्यः तमः एव जग्राह । सा इयं वैधी प्रवृत्तिः विचित्रा भवति ॥ तमसः–राहोः, अन्धकारस्य च । पक्वः–कृतपाकः । शशाङ्क एव पूपः–अपूपाख्यो भक्ष्यविशेषः । तमः–अन्धकारम्, राहुं च । जग्राह–भक्षितवान् । विधेरियम्–वैधी, दैवसम्बन्धिनीत्यर्थः । प्रवृत्तिः–वृत्तान्तः । विचित्रा–अद्भुता ॥ ५७ ॥

**लीलां भुजङ्गोन्मददानशीलां वामामनःक्षोभकरीं वहन्ती ।**
**सत्कीर्तिभास्वत्कृतगोकुलस्य मूर्तिर्विधोः कं समुदं न कुर्यात् ॥ ५८ ॥**

श्लिष्टोक्त्या चन्द्रबिम्बस्य कृष्णशरीरसादृश्यं ब्रूते—**लीलामिति**। भुजङ्गोन्मददान-शीलां वामामनःक्षोभकरीं लीलां वहन्ती, सत्कीर्तिभास्वत्कृतगोकुलस्य विधोः मूर्तिः कं समुदं (कंसमुदं) न कुर्यात् ॥ भुजङ्गानाम्–विटानाम् उन्मददानम्–सन्तोषप्रदानं शीलं यस्याः, तादृशीम् । भुजङ्गस्य–कालियसर्पस्य, उन्मदस्य–गर्वस्य दानम्–खण्डनं शीलं यस्याः, तादृशीम् । वामानाम्–अङ्गनानाम्, कृष्णपक्षे, गोपाङ्गनानाम् मनसः क्षोभं करोतीति तथा । लीलाम्–विलासम् । सत्कीर्तिरेव भाः अस्यास्तीति तथा । कृतं गोकुलम्–रश्मिवृन्दम्, धेनु-वृन्दं च येन, सः कृतगोकुलः । सत्कीर्तिभास्वांश्चासौ कृतगोकुलश्चेति विशेषणोभयपदकर्म-धारयः । विधोः–चन्द्रस्य, विष्णोश्च । मूर्तिः–स्वरूपम्, कृष्णावतारमूर्तिश्च । कम्–कतमम् । समुदम्–सहर्षम् । न कुर्यात् ? सर्वमपि सहर्षं कुर्यादित्यर्थः । कृष्णपक्षे, कंसमुदमिति पदच्छेदः । कंसस्य हर्षं न कुर्यादित्यर्थः ॥ ५८ ॥

**स्वर्वर्तिकैवर्तवरैरदृश्यैरुद्रश्मिजालप्रतिमुक्तमूर्तिः ।**
**उत्कृष्यमाणो जलधेर्जनौघैः शङ्खः शशाङ्कः समशङ्कि शङ्के ॥ ५९ ॥**

चन्द्रे शङ्खत्वमुत्प्रेक्षते—**स्वर्वर्तीति**। शशाङ्कः, अदृश्यैः स्वर्वर्तिकैवर्तवरैः उद्रश्मिजाल-प्रतिमुक्तमूर्तिः जलधेः उत्कृष्यमाणः शङ्खः (इति) जनौघैः समशङ्कि, (इति अहं) शङ्के ॥ स्वर्वर्ति कैवर्तवरैः–स्वर्गवासिभिर्धीवरश्रेष्ठैः । उद्गतं रश्मिजालम् एव जालम्–आनायः, तेन प्रतिमुक्तमूर्तिः–बद्धशरीरः । समशङ्कि–शङ्कितः ॥ ५९ ॥

**वृन्दारकस्त्रैणविलासधाम्नि व्योम्नि ध्रुवं पूगफलानि भानि ।**
**विम्वं सुधांशोरपि चूर्णपूर्णं जानामि खर्जूरमयं करण्डम् ॥ ६० ॥**

चन्द्रे रजतकरण्डत्वमुत्प्रेक्षते—**वृन्दारकेति** । वृन्दारकस्त्रैणविलासधाम्नि व्योम्नि, भानि पूगफलानि । ध्रुवम् । सुधांशोः बिम्बम् अपि चूर्णपूर्णं खर्जूरमयं करण्डं जानामि ॥ वृन्दारकस्त्रैणम्—देवस्त्रीसमूहः । तस्य विलासधाम्नि—क्रीडारङ्गे । व्योम्नि—आकाशे । भानि—नक्षत्राणि । सुधांशोः—चन्द्रस्य । खजूरमयम्—रजतमयं करण्डं चूर्णपात्रविशेषम् ॥ ६० ॥

**हतान्धकस्याशुभलोपकर्तुर्गौरीकृताशस्य धृतामृतस्य ।**
**चन्द्रस्य शंभोश्च विशेषमूहे परं स्मरोज्जीवननाशनाभ्याम् ॥ ६१ ॥**

चन्द्रस्य शिवस्य च साम्यं व्यतिरेकं चाह—**हतेति** । हतान्धकस्य अशुभलोपकर्तुः गौरीकृताशस्य धृतामृतस्य चन्द्रस्य शम्भोः च, परं स्मरोज्जीवननाशनाभ्यां विशेषं ऊहे ॥ हतम्—नाशितम् अन्धकम्—अन्धकारः येन, तस्य । शिवपक्षे अन्धकः—तदाख्योऽसुरः । अशुभलोपस्य—पापनाशस्य, दुष्टसंहारस्य च कर्तुः । गौरीकृताः—धवलीकृताः—आशाः येन, तस्य । गौर्या—पार्वत्या कृता आशा—अनुरागः यस्मिन्, तस्येति च । धृतम् अमृतं येन तस्य । अमृतरश्मिः खलु चन्द्रः । शिवपक्षे अमृतम्—गङ्गाजलम् । परम्-केवलम् । स्मरस्य—कामस्य उज्जीवनम्—उद्दीपनम् नाशनम्—वधश्च, ताभ्याम् । विशेषम्—भेदम् । ऊहे—वितर्कयामि ॥ ६१ ॥

**तमालनीलानि तमांसि कामं पीत्वापि सैत्यं न जहाति चन्द्रः ।**
**स्वच्छामहो तच्छविमम्बुराशिरापीय धत्ते घनवर्णमर्णः ॥ ६२ ॥**

चन्द्रसमुद्रदृष्टान्तेन महतां स्थिरस्वभावतां प्रकाशयति—**तमालेति** । तमालनीलानि तमांसि कामं पीत्वा अपि चन्द्रः सैत्यं न जहाति । स्वच्छां तच्छविं (कामं) निपीय (अपि) अम्बुराशिः घनवर्णं अर्णः धत्ते ॥ तमालानि—तापिञ्छपुष्पाणि इव नीलानि । तमांसि—अन्धकाराणि । कामम्—पर्याप्तम् । सितस्य भावः सैत्यम्—धावल्यम् । जहाति—मुञ्चति । तच्छविम्—चन्द्रकान्तिम् । अम्बुराशिः—समुद्रः । घनस्य—मेघस्य वर्णः इव वर्णो यस्य, तादृशम् । अर्णः—जलम् ॥ ६२ ॥

**विधोरधीना भुवनत्रयीयं तथा ममाप्यस्तु तदाह्वयस्य।**
**इतीव तन्मूलविधायि चूर्णं ज्योत्स्नामयं विक्षिपतीह चन्द्रः॥ ६३ ॥**

चन्द्रस्य लोकवशीकरणशक्तिमाह—**विधोरिति**। इयं भुवनत्रयी विधोः अधीना। तदाह्वयस्य मम अपि तथा अस्तु। इति इव चन्द्रः इह तन्मूलविधायि ज्योत्स्नामयं चूर्णं विक्षिपति॥ विधोः—विष्णोः, चन्द्रस्य च। सः—विधुः इति आह्वयः यस्य, तादृशस्य। तथा—अधीना। तन्मूलविधायि—अधीनतामूलहेतुभूतम्। वश्यत्वकरमित्यर्थः। ज्योत्स्नामयम्—चन्द्रिकारूपम्। विक्षिपति—विकिरति ॥ ६३ ॥

**राजन्ति सर्वा हरितः सितांशोरंशुप्रतानैरभितोनुलिप्ताः।**
**ज्वलद्वियोगज्वलनप्रतापे भस्मायमानैरिव चक्रदेहैः ॥ ६४ ॥**

चन्द्ररश्मीनां भस्मत्वमुत्प्रेक्षते—**राजन्तीति**। ज्वलद्वियोगज्वलनप्रतापे भस्मायमानैः चक्रदेहैः इव (स्थितैः) सितांशोः अंशुप्रतानैः अभितः अनुलिप्ताः सर्वाः हरितः राजन्ति॥ ज्वलतो वियोगज्वलनस्य—विरहाग्नेः प्रतापे—तेजसि। चक्रदेहैः—चक्रवाकशरीरैः। सितांशोः—चन्द्रस्य अंशुप्रतानैः—रश्मिसमूहैः। हरितः—दिशः। राजन्ति—शोभन्ते ॥ ६४ ॥

**क्षीरोदपूरादतिपीय दुग्धं माधुर्यनिर्धूतसुधं सुधांशुः।**
**वमत्यनन्तर्मितमेतदाशु ज्योत्स्नामयं तेन सिताः किलाशाः ॥ ६५ ॥**

चन्द्रिकां क्षीरत्वेनोत्प्रेक्षते—**क्षीरोदेति**। सुधांशुः क्षीरोदपूरात् माधुर्यनिर्धूतसुधं दुग्धम् अतिपीय अनन्तर्मितम् एतत् आशु ज्योत्स्नामयं (सत्) वमति। तेन किल आशाः सिताः॥ क्षीरोदः—क्षीरसमुद्रः। माधुर्येण निर्धूता—तिरस्कृता सुधा—अमृतं येन, तादृशम्। अतिपीय—अतिमात्रं पीत्वा। एतत्—दुग्धम्। वमति—छर्दयति आशाः—दिशः। सिताः—धवलाः ॥ ६५ ॥

**छायासु भानि च्छदनान्तरालैरन्तःप्रविष्टान्यवनीरुहाणाम्।**
**शशाङ्करोचिश्शकलानि शङ्के भुवं गता साम्बुधरा वलाकाः ॥ ६६ ॥**

वृक्षच्छायामध्यगतान् चन्द्रिकाखण्डान् वलाकात्वेनोत्प्रेक्षते—**छायास्विति**। अवनीरुहाणां छदनान्तरालैः अन्तः प्रविष्टानि छायासु भान्ति शशाङ्करोचिश्शकलानि, भुवं गताः साम्बुधराः वलाकाः शङ्के॥ अवनीरुहाणाम्—वृक्षाणाम्। छदनान्तरालैः—पत्राभ्यन्तरैः। छायासु—अनातपेषु। भान्ति—दीप्यमानानि। शशाङ्करोचिश्शकलानि—चन्द्रप्रकाशखण्डानि। साम्बुधराः—मेघसहिताः। वलाकाः—विसकण्ठिकाः॥ ६६॥

**हृष्यच्चकोरद्विजराजमन्त्रैः पूतं पयोधेरिव पूर्णमद्भिः।**
**उद्यच्छति द्यौरुडुराजकुम्भं स्मरं जगज्जैत्रमिवाभिषेक्तुम्॥ ६७॥**

चन्द्रं कामाभिषेकघटत्वेनोत्प्रेक्षते—**हृष्यदिति**। द्यौः हृष्यच्चकोरद्विजराजमन्त्रैः पूतं पयोधेः अद्भिः पूर्णम् इव (स्थितम्) उडुराजकुम्भं, जगज्जैत्रं स्मरम् अभिषेक्तुम् इव उद्यच्छति॥ द्यौः—आकाशः। हृष्यन्तः चकोरा इव ये द्विजराजाः ब्राह्मणश्रेष्ठाः तेषां मन्त्रैः विरावरूपैः। पूतम्—परिशुद्धम्। पयोधेः—समुद्रस्य। अद्भिः—जलैः। उडुराजः—चन्द्रः, सः एव कुम्भः—घटः, तम्। जगज्जैत्रम्—लोकजयशीलम्। उद्यच्छति—उन्नमयति॥ ६७॥

**अयं किल प्रेयसि पश्य धत्ते मध्ये वपुर्मेचकिमानमिन्दुः।**
**अमुष्य लोके कविभिः क्रियन्ते बहुप्रकाराणि विकल्पनानि॥ ६८॥**

चन्द्रकलङ्कवर्णनमारभते—**अयमिति**। प्रेयसि! पश्य। अयम् इन्दुः मध्येवपुः मेचकिमानं धत्ते किल। अमुष्य लोके कविभिः बहुप्रकाराणि विकल्पनानि क्रियन्ते॥ मध्यवपुः—शरीरमध्ये। मेचकिमानम्—कृष्णवर्णम्। अमुष्य—कृष्णवर्णस्य। विकल्पनानि—वितर्काः॥ ६८॥

**वस्वौकसारावनितामुखेन्दुसौहार्दसम्भावितचुम्बनेन।**
**सङ्क्रान्तमिन्दौ तनुते तदीयं कस्तूरिकाचित्रकमङ्कशङ्काम्॥ ६९॥**

चन्द्रगतं कलङ्कं देवाङ्गनामुखचुम्बनसंक्रान्तं कस्तूरीतिलकं शङ्कते—**वस्वौकसारेति**। वस्वौकसारावनितामुखेन्दुसौहार्दसम्भावितचुम्बनेन संक्रान्तं तदीयं कस्तूरिकाचित्रकं इन्दौ अङ्कशङ्कां तनुते॥ वस्वौकसारा—अमरावती। तस्यां याः वनिताः—देवनार्यः; तासां मुखेन्दुना यत् सौहार्दं सादृश्यकृतम्, तेन सम्भावितम्—सत्कृतं यच्चुम्बनम्, तेन। चित्रकम्—तिलकम्। अङ्कशङ्काम्—कलङ्कबुद्धिम्। तनुते—करोति॥ ६९॥

**व्याकोशमाकाशसरित्समुत्थं विशङ्क्य पङ्केरुहमिन्दुबिम्बम् ।**
**उड्डीय भृङ्गावलिरत्र सक्ता युक्तं कुरङ्गस्य कथं प्रसक्तिः ॥ ७० ॥**

चन्द्रकलङ्के भृङ्गावलित्वमारोप्यते । इन्दुबिम्बम्, आकाशसरित्समुत्थं व्याकोशं पङ्करुहं विशङ्क्य भृङ्गावलिः उड्डीय अत्र सक्ता । इति युक्तम् । कुरङ्गस्य प्रसक्तिः कथम्? ॥ आकाश-सरित्–अकाशगङ्गा । व्याकोशम्-विकसितम् । उड्डीय–उड्डयनं कृत्वा । कुरङ्गस्य–मृगस्य । प्रसक्तिः–सम्वन्धः ॥ ७० ॥

**प्रसाधिनीभिः प्रतिसायमिन्दौ नीतेऽप्सरोभिः करदर्पणत्वम् ।**
**सवर्णतागूढमुखानुबिम्बे बिम्बं विशङ्के स्फुटमङ्कमक्ष्णोः ॥ ७१ ॥**

चन्द्रकलङ्के स्वर्वेश्यानेत्रप्रतिबिम्बत्वं शङ्कते—**प्रसाधिनीभिरिति** । प्रतिसायं प्रसाधि-नीभिः अप्सरोभिः करदर्पणत्वम् नीते सवर्णतागूढमुखानुबिम्बे इन्दौ स्फुटम् अक्ष्णोः बिम्बम् अङ्कं विशङ्के ॥ प्रसाधिनीभिः–वेषविधानं कुर्वतीभिः । अप्सरोभिः–उर्वश्यादिभिः स्वर्वे-श्याभिः । सवर्णतया–वर्णसाम्येन । गूढम्–अदृश्यतां गतं मुखानुबिम्बम्–स्वमुखप्रतिबिम्बं यस्मिन् तादृशे । स्फुटम्–प्रव्यक्तम् । अक्ष्णोः–नेत्रयोः । बिम्बम्–प्रतिबिम्बम् ॥ ७१ ॥

**ये राहुमाशीविषमामनन्ति जानन्ति ते नूनमनेन लग्नम् ।**
**पुनः पुनः प्रत्यवसीयमाने चिरेण सान्द्रं विषमङ्कमिन्दौ ॥ ७२ ॥**

चन्द्रकलङ्कं राहुविषं सङ्कल्पते—**ये इति** । ये राहुम् आशीविषम् आमनन्ति, ते अङ्कम्, अनेन पुनः पुनः प्रत्यवसीयमाने इन्दौ लग्नं चिरेण सान्द्रं विषं नूनं जानन्ति ॥ आशीविषम्–सर्पम् । आमनन्ति–कथयन्ति । अङ्कम्-कलङ्कम् । अनेन–राहुणा । प्रत्यव-सीयमाने–ग्रस्यमाने । सान्द्रम्–घनीभूतम् ॥ ७२ ॥

**भिन्नं स्वदेशोदिततालपक्वभ्रमेन्द्रशक्वक्ष्णुतदन्तकुन्तैः ।**
**क्षणं सुधांशुः स्रवदस्रसिक्तः सद्यः पुना रूढकिणाङ्कमध्यः ॥ ७३ ॥**

चन्द्रकलङ्के व्रणकिणत्वमुत्प्रेक्षते—**भिन्न इति** । स्वदेशोदिततालपक्वभ्रमेन्द्रशक्वक्ष्णुतदन्त-क्षणं भिन्नः सुधांशुः सद्यः स्रवदस्रसिक्तः पुनः रूढकिणाङ्कमध्यः (अभवत्) ॥

स्वस्य (ऐरावतस्य) देशे—पूर्वस्यां दिशि उदितस्य तालस्य पक्वमिति भ्रमेण, इन्द्रस्य यः शक्रः—गजः। ऐरावत इत्यर्थः। तस्य क्ष्णुताः ये दन्ताः कुन्ताः इव, तैः। भिन्नः—क्षतः। स्रवता अस्रेण—शोणितेन सिक्तः। रूढः किणः एव अङ्को मध्ये यस्य, तादृशः ॥ ७३ ॥

**पुरा पयोधौ सहवासकाले विषे च पीयूषरसे च लब्धे।**
**धत्ते जडोऽयं हृदि तत्र पूर्वं परं करेण स्रुतमातनोति ॥ ७४ ॥**

चन्द्रकलङ्के विषत्वं प्रकारान्तरेण कल्पयति—**पुरेति**। पुरा पयोधौ सहवासकाले विषे च पीयूषरसे च लब्धे (सति) जडः अयं तत्र पूर्वं हृदि धत्ते। परं करेण स्रुतम् आतनोति॥ जडः—शीतस्वभावः, अज्ञश्च। अयम्—चन्द्रः। पूर्वम्—विषम्। परम्—पीयूषरसम्। करेण—रश्मिना, हस्तेन च ॥ ७४ ॥

**पूर्वाद्रिणोपहृियमाणमेणं सूर्योढमागन्तुमनुस्वमिन्दुः।**
**आस्वाद्य कुक्षिम्भरिरास तस्मिन् स्वच्छे स एव स्फुटतामुपैति ॥ ७५ ॥**

कुक्षिस्थो मृग एव कलङ्कतया दृश्यत इत्याह—**पूर्वाद्रिणेति**। इन्दुः, पूर्वाद्रिणा उपह्रियमाणं सूर्योढम् अनुस्वम् आगन्तुम् एणम् आस्वाद्य कुक्षिम्भरिः आस। स्वच्छे तस्मिन् सः एव स्फुटताम् उपैति॥ पूर्वाद्रिणा—उदयपर्वतेन। उपह्रियमाणम्—उपायनतया दीयमानम्। सूर्येण ऊढम्—धृतम्। अनुस्वम्—अनुपदम्, स्वस्य पश्चादित्यर्थः। आगन्तुम्—आगच्छन्तम्। एणम्—मृगम्। आस्वाद्य—भुक्त्वा। कुक्षिम्भरिः—उदरे बिभ्रत्। आस—बभूव। तस्मिन्—चन्द्रे। सः—मृगः। स्फुटताम्—प्रत्यक्षताम् ॥ ७५ ॥

**सहोदरी चन्द्रमसः किल श्रीरमुं समुद्यन्तममुक्तरागा।**
**जहाति नाश्लिष्य न याति सोऽयं कथं कलङ्कं तदवामवृत्तिः ॥ ७६ ॥**

चन्द्रस्य कलङ्कोदये कारणमाशङ्कते—**सहोदरीति**। चन्द्रमसः सहोदरी किल श्रीः समुद्यन्तम् अमुम् आश्लिष्य न जहाति। तदवामवृत्तिः सः अयं कलङ्कं कथं न याति॥ चन्द्रस्य श्रियश्च दुग्धसमुद्रादुत्पन्नत्वात् सहोदरत्वं प्रसिद्धम्। समुद्यन्तम्—उद्गच्छन्तम्, अभ्युदयं गच्छन्तं च। अमुक्तरागा—उदयवशात् शोणवर्णा, सानुरागा च। न जहाति—

न परित्यजति। कलङ्कम्–अङ्कम्, अपवादं च। सहोदर्याः नित्यसमालिङ्गनमपवादकारण-मिति भावः ॥ ७६ ॥

**मन्ये रथं मान्मथमिन्दुबिम्बं यत्रेक्ष्यते लक्षणकैतवेन।**
**त्रिणेत्रनेत्रज्वलनावलीढः श्यामायमानः स किलाधिरूढः ॥ ७७ ॥**

चन्द्रबिम्बे मन्मथ एव कृष्णवर्णो दृश्यते इत्याह—**मन्ये इति**। इन्दुबिम्बं (अहं) मान्मथं रथं मन्ये। यत्र अधिरूढः त्रिणेत्रनेत्रज्वलनावलीढः श्यामायमानः सः किल लक्षणकैतवेन ईक्ष्यते ॥ त्रिणेत्रनेत्रज्वलनावलीढः–शिवनिटिलनेत्राग्निदग्धः। श्यामायमानः–कृष्णवर्णतां गतः। लक्षणकैतवेन–कलङ्कव्याजेन ॥ ७७ ॥

**प्राप्नोति चेत् साधु सुधामरीचिर्मरुत्वदाशामहिलामुखत्वम्।**
**श्रयत्ययं च श्रवणावतंसश्यामारविन्दश्रियमङ्करङ्कुः ॥ ७८ ॥**

चन्द्रस्य प्राचीमुखत्वं कलङ्कस्य नीलोत्पलावतंसत्वं च कल्पयति—**प्राप्नोतीति**। सुधामरीचिः मरुत्वदाशामहिलामुखत्वं प्राप्नोतीति चेत् (तत्) साधु (भवति)। अयम् अङ्करङ्कुः च श्रवणावतंसश्यामारविन्दश्रियं श्रयति ॥ सुधामरीचिः–चन्द्रः। मरुत्वतः–इन्द्रस्य आशा–दिक्, सा एव महिला, तस्याः मुखभावम्। साधु–शोभनम्। रङ्कुः–मृगः। श्रवणा-वतंसः–कर्णभूषणम्। श्यामारविन्दश्रियम्–नीलोत्पलशोभाम्। श्रयति–प्राप्नोति ॥ ७८ ॥

**अन्तर्निलीय क्षणमम्बुराशेः प्रतिक्षपं यः समुपैति सोऽयम्।**
**बिभर्ति मध्यं बडवाग्निकीलानिर्दग्धनिर्वाणमिवातिनीलम् ॥ ७९ ॥**

चन्द्रमध्यस्य बडवाग्निदग्धत्वमुत्प्रेक्षते—**अन्तरिति**। यः प्रतिक्षपं क्षणम् अम्बुराशेः अन्तः निलीय समुपैति, सः अयं बडवाग्निकीलानिर्दग्धनिर्वाणम् इव अतिनीलं मध्यं बिभर्ति ॥ क्षपा–रात्रिः। अम्बुराशेः–समुद्रस्य। निलीय–गत्वा। कीला–ज्वाला। निर्वाणम्–शान्तम् ॥ ७९ ॥

**किरीटिना शर्वकिरीटवासी कोदण्डदण्डेन कृतव्रणः प्राक्।**
**अद्याप्ययं तत्किणबद्धमध्यां बिभर्ति मूर्तिं विमलां विशिष्टाम् ॥ ८० ॥**

चन्द्रकलङ्क व्रणकिणत्वं कल्पयति—**किरीटिनेति** । शर्वकिरीटवासी किरीटिना प्राक् कोदण्डदण्डेन कृतव्रणः अयम् अद्य अपि तत्किणबद्धमध्यां विमलां विशिष्टां मूर्तिं बिभर्ति ॥ शर्वकिरीटवासी–शिवशिरस्थः । किरीटिना–अर्जुनेन । प्राक्–किरातार्जुनयुद्धे । मूर्तिम्–बिम्बम् ॥ ८० ॥

**विजित्य लोकानसकृत् समस्तान् सान्द्रीकृतः सारससायकेन ।**
**अयं यशोराशिरमुत्र शङ्के शैवाभियोगात् पतितः कलङ्कः ॥ ८१ ॥**

कामस्य कीर्तिपुञ्जश्चन्द्रः । अकीर्तिश्च कलङ्कः इत्याह—**विजित्येति** । सारससायकेन समस्तान् लोकान् असकृत् विजित्य सान्द्रीकृतः यशोराशिः अयम्, अमुत्र शैवाभियोगात् कलङ्कः पतितः (इति) शङ्के ॥ सारससायकेन–कामेन । सान्द्रीकृतः–पुञ्जीकृतः । अयम्–चन्द्रः । अमुत्र–यशोराशौ । शैवाभियोगात्–शिवविरोधात् । कलङ्कः–अपवादः ॥ ८१ ॥

**यस्यावलम्बः पदमेव विष्णोः यश्चाधिपत्यं वहति द्विजानाम् ।**
**नाभोगभाज्यो हरिणाधिरूढः सोऽयं गरुत्मानिव राजतीन्दुः ॥ ८२ ॥**

चन्द्रस्य गरुडसादृश्यं वक्ति—**यस्येति** । विष्णोः पदम् एव यस्य अवलम्बः (भवति), यः द्विजानाम् आधिपत्यं च वहति, नाभोगभाज्यः हरिणाधिरूढः सः अयं गरुत्मान् इव राजति ॥ विष्णोः पदम्–आकाशः, विष्णोः पादश्च । अवलम्बः–आश्रयः । द्विजानाम्–ब्राह्मणानाम्, पक्षिणां च । नभसि गच्छन्तीति नभोगाः–ग्रहाः, पक्षिणश्च । नभोगाः एव नाभोगाः, (स्वार्थेऽण्), तैः भाज्यः भजनीयः सेवनीयः । चन्द्रस्य ग्रहराजत्वात्, गरुडस्य च पक्षिराजत्वात् । हरिणेन मृगेण अधिरूढः हरिणाधिरूढः, हरिणा विष्णुना अधिरूढश्च । गरुत्मान्–गरुडः । राजति–शोभते ॥ ८२ ॥

**हृत्वामरीणामपि मानपङ्कमङ्के निधायाभिपतत्ययं नः ।**
**इतीव दृष्ट्वा सकलङ्कमेनं स्त्रियस्त्यजन्ति स्वयमद्य मानम् ॥ ८३ ॥**

देवस्त्रीणां हृतो मानः एव चन्द्रे कलङ्क इत्याह—**हृत्वेति** । अमरीणाम् अपि मानपङ्कं हृत्वा अङ्के निधाय अयं नः अभिपतति इति (मत्वा) इव सकलङ्कम् एनं दृष्ट्वा स्त्रियः स्वयम् अद्य मानं त्यजन्ति ॥ अमरीणाम्–देवस्त्रीणाम् । मानः गर्वः एव पङ्कः कर्दमः, तम् । अङ्के–उत्सङ्गे । मानस्य दुर्विकारत्वात् पङ्कत्वमारोप्यते ॥ ८३ ॥

**याति स्म यातिस्मयमाहितान्तर्लेपावलेपा वनिता न कान्तम्।**
**साराभिसाराभिरुचिं प्रतीमं दृश्येऽसदृश्ये सति का न चन्द्रे ॥ ८४ ॥**

चन्द्रस्य कामोद्दीपकत्वमाह— **यातीति**। आहितान्तर्लेपावलेपा या वनिता अतिस्मयं कान्तं न याति स्म, सा का असदृश्ये चन्द्रे दृश्ये सति अभिसाराभिरुचिम् इमं प्रति न आर॥ आहितः—कृतः अन्तर्लेपः मनःप्रवेशः येन, तादृशः अवलेपः—गर्वः यस्याः, तादृशी। अति-स्मयम्—अत्यन्ताभिमानिनम्। असदृश्ये—अनुपमे। दृश्ये—दृष्टिगोचरे। अभिसाराभिरुचिम्—अभिसरणप्रियम्। इमम्—कान्तम्। आर—जगाम। सर्वाः गताः एव इत्यर्थः॥ ८४ ॥

**मुग्धेक्षणामानसमानशङ्कुमुद्धर्तुमिन्दोरयमेव कालः।**
**उद्भिद्य यत् कुड्मलमुत्पलिन्यास्तत्रास्थितं भृङ्गमपाकरोति॥ ८५॥**

चन्द्रस्य मानिनीमानभङ्गहेतुत्वमाह—**मुग्धेति**। मुग्धेक्षणामानसमानशङ्कुं उद्धर्तुम् इन्दोः कालः अयम् एव। यत (इन्दुः) उत्पलिन्याः कुड्मलम् उद्भिद्य तत्र आस्थितं भृङ्गम् अपाकरोति॥ मुग्धेक्षणानां मानसे यो मान एव शङ्कुः—कीलः, तम्। उत्पलिन्याः—कुमुदिन्याः। उद्भिद्य—उद्धाट्य। अपाकरोति—दूरीकरोति॥ ८५॥

**कुमुद्वतीनां कुसुमेषु गन्धो द्विधा भवत्यद्य पुनर्द्विधा सः।**
**विकस्वरत्वादतिकान्तिमत्वात्तन्मित्रमैत्र्या शरशैत्यतश्च॥ ८६॥**

चन्द्रोदयस्य कुमुदविकासहेतुत्वं कामोद्दीपकत्वं चाह—**कुमुद्वतीनामिति**। अद्य कुमुद्वतीनां कुसुमेषु गन्धः द्विधा भवति। सः पुनः, विकस्वरत्वाद्, अतिकान्तिमत्त्वाद्, तन्मित्रमैत्र्या शरशैत्यतः च द्विधा (भवति)॥ कुमुद्वतीनां—कुमुदसरसीनाम्। पक्षान्तरे, मुद्वत्यः—प्रीतिमत्यः। कुमुद्वत्यः—अप्रीतिमत्यः। विरहिण्य इत्यर्थः। तासाम्। कुसुमेषु—पुष्पेषु गन्धः—सौरभ्यम्। पक्षान्तरे, कुसुमेषोः—पुष्पशरस्य कामस्य गन्धः—सम्बन्धः। सः—कुसुमेषुगन्धः। विकस्वरत्वात्—विकसनशीलत्वात् पुष्पेषु गन्धः—सौरभम्, अतिकान्तिमत्त्वात् पुष्पेषु गन्धः—गर्वः। तस्य—कामस्य मित्रम्—सुहृत् चन्द्रः। तस्य मैत्र्या कुसुमेषोः—कामस्य गन्धः—सम्बन्धः। शराणां शैत्यम्—शितस्य भावः। तैक्ष्ण्यमित्यर्थः। तस्मात् कुसुमेषोः गन्धः—गर्वः। 'गन्धो गन्धक आमोदे लेशे सम्वन्धगर्वयोः' इति कोशादिति भावः॥ ८६॥

**कर्पूरसारप्रतिमप्रभाभिः स्वभाभिरालिप्य विभावरीशः ।**
**करोति देहे किमु कैरविण्या विशेषकं पुष्पलगद्द्विरेफैः ॥ ८७ ॥**

चन्द्रस्य कुमुदिनीतिलककर्तृत्वमुत्प्रेक्षते—**कर्पूरेति** । विभावरीशः कर्पूरसारप्रतिमप्रभाभिः स्वभाभिः कैरविण्याः देहे आलिप्य पुष्पलगद्द्विरेफैः विशेषकं करोति किमु ॥ विभावरीशः—चन्द्रः । कैरविण्याः—कुमुदिन्याः । द्विरेफैः—भृङ्गैः । विशेषकम्—तिलकम् ॥ ८७ ॥

**दोषाकरोद्भावितमप्यदोषमामोदमाबिभ्रति कैरवाणि ।**
**संसिद्धिरादेरनुसारिणीति व्याहारमारादपयापयन्ति ॥ ८८ ॥**

कुमुदगन्धं वर्णयति—**दोषाकरेति** । आदेः अनुसारिणी संसिद्धिः इति व्याहारम् आरात् अपयापयन्ति कैरवाणि, दोषाकरोद्भावितम् अपि अदोषम् आमोदम् आबिभ्रति ॥ आदेः—कारणस्य व्याहारम्—उक्तिम् । आरात्—दूरात् । अपयापयन्ति—अपगमयन्ति (सन्ति) । कैरवाणि—कुमुदानि । दोषाकरेण—निशाकरेण चन्द्रेण उद्भावितम्—जनितम् । दोषाणाम् आकरेण—जन्मस्थानेन इति च गम्यते । अदोषम्—दोषरहितम् । आमोदम्—मनोहरगन्धम् । आबिभ्रति—वहन्ति ॥ ८८ ॥

**श्रिताभ्रतापिञ्छलताग्रतारगन्धोलिपालीगृहसिक्थकुम्भात् ।**
**विधोर्मधुश्च्योतितमङ्करन्ध्रैरास्वाद्य माद्यन्ति रुचं चकोराः ॥ ८९ ॥**

चन्द्रस्य मधुसिक्थकुम्भत्वं कल्पयति —**श्रितेति** । चकोराः श्रिताभ्रतापिञ्छलताग्रतारगन्धोलिपालीगृहसिक्थकुम्भात् विधोः अङ्करन्ध्रैः श्च्योतितं मधु रुचम् आस्वाद्य माद्यन्ति ॥ चकोराः—चन्द्रिकापायिनः पक्षिविशेषाः । अभ्रम्—आकाशम् एव तापिञ्छः—तमालवृक्षः, तस्य लताः—शाखाः, तासाम् अग्राणि श्रितानि यैः, तादृशानि ताराणि—नक्षत्राण्येव गन्धोल्यः—मक्षिकाविशेषाः, तासां पाल्यः—पङ्क्तयः, तासां गृहमेव यः सिक्थकुम्भः—मधूच्छिष्टपूपः, तस्मात् । विधोः चन्द्रात् । अङ्कः—कलङ्कः एव यानि रन्ध्राणि, तैः । श्च्योतितम्—स्रावितम् । मधु—माक्षिकम् । तद् एव रुचम्—कान्तिम् ॥ माद्यन्ति—मत्ताः भवन्ति ॥ ८९ ॥

**आलम्बितव्योमतमालशाखात् सुधानिधेः सिक्थकपुञ्जपिण्डात् ।**
**व्याधेन केनापि कृताङ्करन्ध्रादाश्च्योतदासीन्मधु चन्द्रिकास्यम् ॥ ९० ॥**

उक्तमेवार्थं भङ्ग्यन्तरेणाह—**आलम्बितेति** । आलम्बितव्योमतमालशाखात् केनापि व्याधेन कृताङ्करन्ध्रात् सुधानिधेः (एव) सिक्थकपुञ्जपिण्डात् चन्द्रिकाख्यं मधु आश्च्योतद् आसीत् ॥ व्याधेन–शबरेण ॥ ९० ॥

**हंसैरिव क्षीरनिलीनमम्भः करम्बितं चन्द्रिकया हिमाम्भः ।**
**पृथग्वितन्वद्भिरिवेन्दुकान्तैरुत्स्रावितं पश्य पयःप्रवाहम् ॥ ९१ ॥**

चन्द्रकान्ताद् जलस्रुतिं वर्णयति—**हंसैरिति** । क्षीरनिलीनम् अम्भः हंसैः इव, चन्द्रिकया करम्बितं हिमाम्भः पृथग् वितन्वद्भिः इन्दुकान्तैः उत्स्रावितम् इव पयःप्रवाहं पश्य ॥ करम्बितम्–सम्मिश्रम् । इन्दुकान्तैः–तदाख्यैः अश्मभिः ॥ ९१ ॥

**शशाङ्ककान्तैर्विगलत्कबन्धैर्निरस्तनीहारमिवाहितं यत् ।**
**तदेव शुद्धं करजालमिन्दोश्चकोरचञ्चूमहमातनोति ॥ ९२ ॥**

हिमरहितं शुद्धं चन्द्ररश्मिजालं चकोरानानन्दयतीत्याह—**शशाङ्केति** । विगलत्कबन्धैः शशाङ्ककान्तैः निरस्तनीहारम् इव आहितं यत्, तद् एव शुद्धम् इन्दोः करजालं (कर्तृ) चकोर-चञ्चूमहम् (कर्म) आतनोति ॥ कबन्धम्–जलम् । नीहारः–हिमम् । आहितम्–कृतम् । कराः–रश्मयः । चकोराणां चञ्चोः महम्–उत्सवम् । आतनोति–करोति ॥ ९२ ॥

**प्रदुह्य दैवेन सहस्रगोर्गाः सन्ध्यानले दुग्धमपाकि यत्तत् ।**
**तेनैव सङ्क्रामितमभ्रभाण्डे ज्योत्स्ना ध्रुवं तन्नवनीतमिन्दुः ॥ ९३ ॥**

चन्द्रस्य नवनीतत्वं कल्पयति—**प्रदुह्येति** । दैवेन सहस्रगोः गाः प्रदुह्य यद् दुग्धं सन्ध्यानले अपाकि, तद् तेन एव अभ्रभाण्डे सङ्क्रामितं (सत्) ज्योत्स्ना (भवति) । इन्दुः तन्नवनीतम् । ध्रुवम् ॥ सहस्रं गावः–रश्मयः एव धेनवः यस्य, तस्य सूर्यस्य एव सहस्रधेनुमतः । गाः–रश्मीन् एव धेनूः । सन्ध्यानले–सन्ध्याग्नौ । अपाकि–कृतपाकम् । तेन–दैवेन । अभ्रे–आकाशे एव भाण्डे–पात्रे । तस्य–ज्योत्स्नारूपस्य दध्नः नवनीतम् ॥ ९३ ॥

**शुक्लैव शुक्लांशुकराभिषेकादेषा निशा नः प्रतिभाति चित्ते ।**
**तथापि केषामपि कालरात्री भवत्ययोगज्वलनेन्धनानाम् ॥ ९४ ॥**

चन्द्रिकया धवला रात्रिर्विरहिणां कालरात्रिरेवेत्याह—**शुक्लेति**। एषा निशा शुक्लांशुकराभिषेकाद् शुक्लैव नः चित्ते प्रतिभाति। तथापि अयोगज्वलनेन्धनानां केषामपि (चित्ते) कालरात्रीभवति॥ शुक्लांशुकराः—चन्द्ररश्मयः। अयोगज्वलनेन्धनानाम्—विरहाग्निदह्यमानानाम्। कालरात्रिः—कृष्णरात्रिः॥ ९४॥

**आमोदवद्भिः सरसैर्मरुद्भिरालिङ्गिता स्वच्छतराम्बरान्ता।**
**एषाप्सरोभिः स्फुटतारहारा सोमानना साम्यमुपैति रात्रिः॥९५॥**

रात्रेः स्वर्वेश्यातुल्यत्वं साधयति—**आमोदेति**। आमोदवद्भिः सरसैः मरुद्भिः आलिङ्गिता स्वच्छतराम्बरान्ता स्फुटतारहारा सामानना एषा रात्रिः अप्सरोभिः साम्यम् उपैति॥ आमोदः—सन्तोषः, सौरभं च। रसः—शृङ्गारः, जलं च। मरुद्भिः—वायुभिः, देवैश्च। अम्बरान्तः—आकाशदेशः, वस्त्राञ्चलं च। स्फुटानि—सुव्यक्तानि ताराणि नक्षत्राणि हाराः इव यस्याः, तादृशी। स्फुटानि ताराणि इव हाराः यस्याः, तादृशी च। सोम एव आननं यस्याः, तादृशी। सोम इव आननं यस्याः, तादृशी च॥ ९५॥

**सन्ध्याचूडैरनिबिडतमस्ताम्रचूडैरुडूनि**
**प्रासूयन्त स्फुटमधिवियद्भाण्डमण्डानि यानि।**
**दृष्ट्वा तानि ध्रुवमुपगतः सैन्धवादन्तरीपाद्-**
**ग्रासं ग्रासं चरति परितः कश्चिदेणाङ्कहूणः॥ ९६॥**

नक्षत्राणां कुक्कुटाण्डत्वं चन्द्रस्य हूणत्व च परिकल्प्य वर्णयति—**सन्ध्याचूडैरिति**। सन्ध्याचूडैः अनिबिडतमस्ताम्रचूडैः अधिवियद्भाण्डं यानि अण्डानि स्फुटं प्रासूयन्त, तानि दृष्ट्वा सैन्धवाद् अन्तरीपाद् उपगतः कश्चित् एणाङ्कहूणः ग्रासं ग्रासं परितः चरति। ध्रुवम्॥ सन्ध्या एव चूडा येषां, तैः। अनिबिडानि शिथिलानि यानि तमांसि, तान्येव ताम्रचूडाः—कुक्कुटाः तैः। अधिवियद्भाण्डम्—आकाशपात्रे। प्रासूयन्त—प्रसूतानि। सैन्धवात्—समुद्रगतात्। अन्तरीपात्—द्वीपात्। एणाङ्कः—चन्द्रः एव हूणः। ग्रासं ग्रासम्—ग्रसित्वा ग्रसित्वा॥ ९६॥

**ग्रावाणं गमयन्नयं भगवतस्त्रैलोक्यमाक्रामतः**
**साधर्म्यं पदपङ्कजस्य विगलत्स्वच्छोदकस्य स्वकम् ।**
**एतामप्युपलालयेत सुभगां कान्तः किमित्यङ्कुर-**
**च्छङ्कापङ्किलचेतसा गिरिजया शप्तः किमासीज्जडः ॥ ९७ ॥**

चन्द्रस्य जडत्वे पार्वतीशापं कारणमुत्प्रेक्षते — **ग्रावाणमिति** । स्वकं ग्रावाणं त्रैलोक्यम् आक्रामतः भगवतः विलसत्स्वच्छोदकस्य पदपङ्कजस्य साधर्म्यं गमयन् अयं, 'सुभगाम् एताम् अपि कान्तः उपलालयेत किम्' इति अङ्कुरच्छङ्कापङ्किलचेतसा शप्तः (सन्) किं जडः आसीत् ॥ स्वकम्—आत्मीयं ग्रावाणम्—चन्द्रकान्तोपलम् । भगवतः—त्रिविक्रमस्य विष्णोः । विगलत् स्वच्छम् उदकम्—गङ्गारूपं यस्मात्, तादृशस्य । साधर्म्यम्—सादृश्यम् । गमयन्—प्रापयन् । चन्द्रकान्तोपलादपि खलु चन्द्रिकास्पर्शे स्वच्छम् उदकं विगलति । तत्र च कारणं चन्द्रः । अयम्—चन्द्रः । सुभगाम्—सौभाग्यवतीम् । एताम्—चन्द्रकान्ताद् जायमानामपि जलस्रुतिं नदीरूपाम्, पूर्वं यथा त्रिविक्रमस्य पदपङ्कजात् जातां गङ्गाम् कान्तः—निजप्रियः शिवः उपलालयेत—रमयेत् । अङ्कुरन्त्या—जायमानया शङ्कया पङ्किलं कलुषं चेतः यस्याः, तादृश्या । गिरिजया—पार्वत्या । जडः—शीतदेहः, मन्दबुद्धिश्च ॥ भगवतस्त्रिविक्रमस्य पादारविन्दात् जातां गङ्गां शिवः उपलालयते । तत् पार्वती न सहते । जलस्रुतिहेतुत्वात् भगवत्पदसादृश्यवतः चन्द्रकान्तोपलात् जातामपि सुभगां शिव उपलालयेत किम् ? इति शङ्कया चन्द्रकान्तजलस्रुतिहेतुभूतं चन्द्रं पार्वती शशाप किम् इति उत्प्रेक्षते ॥ ९७ ॥

**अङ्गेषु पश्य हरिणं हरिणाक्षि धत्ते**
**सर्वेष्वयं न खलु जात्वपि मध्यभागे ।**
**चित्रं तथापि हरिणाङ्कितमेव मध्य-**
**मुद्घोषयन्ति सुधियोऽपि जगत्यमुष्य ॥ ९८ ॥**

विरोधाभासं कञ्चिदुद्भाव्य चन्द्रवर्णनमुपसंहरति—**अङ्गेष्विति** । हरिणाक्षि ! पश्य । अयं सर्वेषु अङ्गेषु हरिणं धत्ते । जातु अपि मध्यभागे (हरिणं) न खलु (धत्ते) । तथा अपि जगति सुधियः अपि अमुष्य मध्यं हरिणाङ्कितम् एव उद्घोषयन्ति । चित्रम् ॥ हरिणाक्षि—मृगलोचने । अङ्गेषु—अवयवेषु । हरिणम्—पाण्डुरवर्णम्, मृगं च । जातु—कदाचित् ।

सुधियः बुद्धिमन्तः। अमुष्य–चन्द्रस्य। हरिणेन—मृगेण, पाण्डुरवर्णेन च अङ्कितम्। चित्रम्–अद्भुतम् ॥ ९८ ॥

इत्थं तन्मुखचन्द्रतो विगलितामास्वाद्य वाक्चन्द्रिकां
श्रोत्रद्वन्द्वपुटेन सा शशिमुखी नेत्रद्वयेनेतराम्।
आनन्दानुभवानुभावमपि यच्चक्रे दृशोर्मीलनं
तद्व्यक्तं निजगाद भेदमनयोर्माधुर्यसम्पद्गतम् ॥ ९९ ॥

इति श्रीगोदवर्मविद्वद्युवराजकृते
श्रीरामचरिते महाकाव्ये
षष्ठः सर्गः

---

रामवाक्यचन्द्रिकायाः चन्द्रिकामपेक्ष्य माधुर्याधिक्यं प्रकाश्य सर्गमुपसंहरति—**इत्थमिति**। सा शशिमुखी इत्थं तन्मुखचन्द्रतः विगलितां वाक्यचन्द्रिकां श्रोत्रद्वन्द्वपुटेन, इतरां नेत्रद्वयेन (च) आस्वाद्य आनन्दानुभवानुभावं दृशोः मीलनम् अपि यत् चक्रे, तत् अनयोः माधुर्यसम्पद्गतं भेदं व्यक्तं निजगाद ॥ वाक्यचन्द्रिकाम्–वाचमेव चन्द्रिकाम्। इतराम्–परमार्थचन्द्रिकाम्। अनुभावम्–कार्यम्। अनयोः–वाक्यचन्द्रिकाचन्द्रिकयोः ॥ ९९ ॥

इति पण्डितरत्नश्रीनारायणपिषारोटिविरचितायां
श्रीरामचरितमहाकाव्यव्याख्यायां अन्वयार्थप्रबोधिन्यां
सन्ध्यावर्णनं नाम षष्ठः सर्गः



# सप्तमः सर्गः

**भर्तुस्तां गिरमथ भावितार्थसारामाकर्ण्य श्रवणमनोज्ञवर्णबन्धाम् ।**
**तामेव श्रियमधिकृत्य शीतभानोः सानन्दं किमपि जगाद सारसाक्षी ॥ १ ॥**

सीतापि चन्द्रवर्णनायोपक्रमते—**भर्तुरिति** । अथ सारसाक्षी भावितार्थसारां श्रवण-मनोज्ञवर्णबन्धां तां भर्तुः गिरम् आकर्ण्य ताम् एव शीतभानोः श्रियम् अधिकृत्य सानन्दं किमपि जगाद ॥ शीतभानोः—चन्द्रस्य । श्रियम्—शोभाम् ॥ १ ॥

**आलोकैरमृतरुचः सुधारसार्द्रैराविष्टं प्रियतम पश्य विष्टपान्तम् ।**
**भावत्कैरिव धवलैर्यशःप्रकाशैः केषां नो जनयति चेतसि प्रमोदम् ॥ २ ॥**

चन्द्रप्रकाशस्य रामचन्द्रकीर्तिप्रकाशसादृश्यं वदति—**आलोकैरिति** । प्रियतम ! भावत्कैः धवलैः यशःप्रकाशैः इव सुधारसार्द्रैः अमृतरुचः आलोकैः आविष्टं विष्टपान्तं पश्य । (एषः) केषां चेतसि प्रमोदं नो जनयति ? ॥ अमृतरुचः—चन्द्रस्य । आलोकैः—प्रकाशैः । विष्टपान्तम्—भुवनतलम् ॥ २ ॥

**आनीताः स्फुरदमृतांशुरश्मिजालैर्धावल्ये भृशतरमुज्ज्वलाः सरस्यः ।**
**श्रीभर्तुः शयनगृहस्य वारिराशेः साधर्म्यादिव विकचोत्पलैः स्मयन्ते ॥ ३ ॥**

जलाशयानां क्षीरसमुद्रसादृश्यं प्रतिपादयति—**आनीता इति** । स्फुरदमृतांशुरश्मिजालैः धावल्यम् आनीताः सरस्यः श्रीभर्तुः शयनगृहस्य वारिराशेः साधर्म्यात् इव विकचोत्पलैः स्मयन्ते ॥ श्रीभर्तुः शयनगृहस्य वारिराशेः—क्षीरसमुद्रस्य । विकचोत्पलैः—विकसितकुमुदैः । स्मयन्ते—ईषद् हसन्ति ॥ ३ ॥

**सावर्ण्यं निजगरुता गतां हिमांशोराभाभिस्सरसिजिनीषु चक्रवाकीम् ।**
**दृष्ट्वाराद्निजवनिताभ्रमेण मन्दं पश्यासौ सरसमुपैति राजहंसः ॥ ४ ॥**

चन्द्रिकायां चक्रवाक्यां हंसीत्वभ्रमं ब्रूते—**सावर्ण्यमिति**। असौ राजहंसः सरसिजिनीषु हिमांशोः आभाभिः निजगरुता सावर्ण्यं गतां चक्रवाकीम् आराद् दृष्ट्वा निजवनिताभ्रमेण मन्दं सरसम् उपैति। पश्य। गरुता—पक्षेण। सावर्ण्यम्—समानवर्णताम्। धावल्यमित्यर्थः। आरात्—समीपे। निजवनिता—राजहंसी। उपैति—उपगच्छति ॥ ४ ॥

**ताटाके तनुतरभङ्गनृत्तरङ्गे सङ्क्रान्तं सितरुचिबिम्बममम्बुपूरे।**
**आलोक्य स्फुरितमृणालखण्डशङ्की स्वे चञ्चू क्षिपति ततो रथाङ्गनामा ॥ ५॥**

तटाकतरङ्गगते चन्द्रप्रतिबिम्बे चक्रवाकस्य मृणालखण्डत्वभ्रान्तिं प्रस्तौति—**ताटाक इति**। तनुतरभङ्गनृत्तरङ्गे ताटाके अम्बुपूरे सङ्क्रान्तं सितरुचिबिम्बम् आलोक्य रथाङ्गनामा स्फुरितमृणालखण्डशङ्की स्वे चञ्चू ततः क्षिपति॥ भङ्गः—तरङ्गः। सितरुचिः—चन्द्रः। रथाङ्गनामा—चक्रवाकः। चञ्चू—त्रोटी। ततः—तत्र ॥ ५ ॥

**संस्पृष्टा रजतरजस्समानकान्त्या कौमुद्या कलितमहेन्द्रनीलहृद्या।**
**बाहीका विलसति कुट्टिमस्थलीयं कापोतं सुललितरूपमुद्वहन्ती ॥ ६ ॥**

इन्द्रनीलकुट्टिमस्य चन्द्रिकया वर्णान्तरप्राप्तिमाह—**संस्पृष्टेति**। रजतरजस्समानकान्त्या कौमुद्या संस्पृष्टा कलितमहेन्द्रनीलहृद्या बाहीका इयं कुट्टिमस्थली कापोतं सुललितरूपम् उद्वहन्ती विलसति॥ कौमुद्या—चन्द्रिकया। बाहीका—बहिर्भवा। कापोतम्—कपोतसम्बन्धि ॥ ६ ॥

**आदर्शप्रतिमविलासधामभित्तिस्थूलाश्मस्फुरदनुबिम्बकैतवेन।**
**एष त्वद्वदनजितः सुधामयूखः सेवार्थं सविधमुपैति तावकीनम् ॥ ७ ॥**

भित्तिप्रतिबिम्बितं चन्द्रं वर्णयति—**आदर्शेति**। आदर्शप्रतिमविलासधामभित्तिस्थूलाश्मस्फुरदनुबिम्बकैतवेन त्वद्वदनजितः एषः सुधामयूखः सेवार्थं तावकीनं सविधम् उपैति॥ आदर्शप्रतिमा—दर्पणतुल्या। विलासधाम—केलीगृम्। सुधामयूखः—चन्द्रः। सविधम्—समीपम् ॥ ७ ॥

**आमूलं विशदसुधाविलेपशुभ्राः प्रासादाः प्रसृमरसान्द्रचन्द्रिकायाम्।**
**भिद्यन्ते किमपि न पश्य जीवनाथ क्षीराब्धेरुदरशया इवोरुशङ्खाः ॥ ८॥**

चन्द्रिकामग्नान् प्रासादान् वर्णयति—**आमूलमिति**। आमूलं विशदसुधाविलेपशुभ्राः प्रासादाः प्रसृमरसान्द्रचन्द्रिकायां क्षीराब्धेः उदरशयाः उरुशङ्खाः इव किमपि न भिद्यन्ते। जीवनाथ ! पश्य॥ आमूलम्—मूलादारभ्य। उदरशयाः—अन्तः स्थिताः। न भिद्यन्ते—भेदं न उपयान्ति ॥ ८ ॥

**वासन्तीकुसुमनिरन्तरालकेशाः सत्क्षौमस्थगिततनूः सरोरुहाक्षीः ।**
**सङ्केतस्थलमुपसेदुषीरिदानीं जानन्ति स्फुटतरसौरभात् पुमांसः ॥ ९ ॥**

क्षौमान्तरिताः प्रियतमाः पुमांसः सौरभेन जानन्तीत्याह—**वासन्तीति**। वासन्तीकुसुमनिरन्तरालकेशाः सत्क्षौमस्थगिततनूः इदानीं सङ्केतस्थलम् उपसेदुषीः सरोरुहाक्षीः पुमांसः स्फुटतरसौरभात् जानन्ति॥ स्थगिता—आच्छादिता तनुः—शरीरं यासाम्, ताः। उपसेदुषीः—उपगच्छन्तीः ॥ ९ ॥

**बभ्राम त्रिजगति या तु यातुनारी ध्वान्तात्मा सति परलोकभाजि मित्रे ।**
**सैव त्वं वशयितुमद्य चन्द्रिकाख्या संभूता ललिततनुः स्फुटीकृताशा ॥ १० ॥**

चन्द्रिकां प्रकारान्तरेण वर्णयति—**बभ्रामेति**। मित्रे परलोकभाजि, सति ध्वान्तात्मा या तु यातुनारी त्रिजगति बभ्राम, सा एव अद्य ललिततनुः स्फुटीकृताशा त्वां वशयितुं चन्द्रिकाख्या सम्भूता॥ मित्रे-सूर्ये। सुहृदि इति च गम्यते। परलोकभाजि—अस्तं गते। मृते इति च गम्यते। ध्वान्तात्मा—अन्धकाररूपा। दुष्टहृदया इति च गम्यते। यातुनारी—राक्षसी। ललिततनुः—सुन्दराकृतिः। स्फुटीकृताशा—दिशः प्रकाशयन्ती। इच्छावतीति च गम्यते। भावी शूर्पणखावृत्तान्तोऽत्र शब्दशक्त्या सूच्यते ॥ १० ॥

**निर्जेतुं निखिलजगत्सुमानुषाणि श्रीपुत्रे चरति पदैव शीतरश्मिः ।**
**सञ्चारे सुखमिव कर्तुमस्य भूमौ कौशेयं किरति सितं स्वभाच्छलेन ॥ ११ ॥**

चन्द्रिकायाः धवलकौशेयत्वं परिकल्प्य वर्णयति—**निर्जेतुमिति**। श्रीपुत्रे निखिलजगत्सुमानुषाणि निर्जेतुं पदा एव चरति (सति) अस्य सञ्चारे सुखं कर्तुम् इव भूमौ स्वभाच्छलेन सितं कौशेयं किरति॥ श्रीपुत्रे—कामे। सुमानुषाणि—दाम्पत्यानि। दम्पतीनित्यर्थः।

पदा–पादेन । अस्य–कामस्य । कौशेयम्–कृमिकोशोत्थम् अम्बरम् । किरति–आस्तृणाति ॥ ११ ॥

**अत्यच्चैरमृतमयूखरश्मिजालैराक्रान्ते क्षितिवियदन्तरालभागे ।**
**कृष्णत्वं न खलु गतं वियोगभाजां वक्त्रेभ्यो विधुविषयक्रुधोऽनुभावः ॥ १२ ॥**

चन्द्रिकायाः सर्वव्याप्तत्वमाह—**अत्यच्चैरिति** । अत्यच्चैः अमृतमयूखरश्मिजालैः क्षितिवियदन्तरालभागे आक्रान्ते विधुविषयक्रुधः अनुभावः कृष्णत्वं वियोगभाजां वक्त्रेभ्यः न खलु गतम् ॥ विधुः–चन्द्रः । क्रुधः–क्रोधस्य । अनुभावः–कार्यम् । कृष्णत्वम्–कालिमा ॥ १२ ॥

**स्वच्छाम्भःप्रसरनिभाभिरिन्दुभाभिस्त्रिस्रोतःश्रियमुपयाति भूतलेऽस्मिन् ।**
**त्रस्यन्तः प्रतितरुमूलमाश्रयन्ति श्यामाम्भोरुहसुषमास्तमिस्रखण्डाः ॥ १३ ॥**

चन्द्रिकायाः गङ्गाप्रवाहसादृश्यं प्रतिपादयति—**स्वच्छेति** । अस्मिन् भूतले स्वच्छाम्भःप्रसरनिभाभिः इन्दुभाभिः त्रिस्रोतश्श्रियं उपयाति श्यामाम्भोरुहसुषमाः तमिस्रखण्डाः त्रस्यन्तः प्रतितरुमूलम् आश्रयन्ति॥ स्वच्छाम्भःप्रसरः–निर्मलजलप्रवाहः । त्रिस्रोताः–गङ्गा । श्यामाम्भोरुहसुषमाः–इन्दीवरतुल्यकान्तयः । तमिस्रखण्डाः–अन्धकारशकलाः । त्रस्यन्तः–भीताः । प्रतितरुमूलम्–सर्वेषु तरुमूलेषु ॥ १३ ॥

**उद्गच्छत्यमृतनिधिः शशाङ्क एष स्वैः पादैर्जगदिदमाप्लुतं वितन्वन् ।**
**इत्यंभोनिधिरपि तादृशैः स्वतोयैराप्लावं जगति विधित्सुरुत्समिन्धे ॥ १४ ॥**

समुद्रस्य वृद्धिं वर्णयति—**उद्गच्छतीति** । अमृतनिधिः एषः शशाङ्कः स्वैः पादैः इदं जगद् आप्लुतं वितन्वन् उद्गच्छति । इति अम्भोनिधिः अपि तादृशैः स्वतोयैः जगति आप्लावं विधित्सुः उत्समिन्धे॥ पादैः–रश्मिभिः । आप्लुतम्–निमग्नम् । अम्भोनिधिः–समुद्रः । आप्लावम्–निमज्जनम् । विधित्सुः–विधातुमिच्छुः । उत्समिन्धे–उज्जृम्भते ॥ १४ ॥

**यो देहं दहति वियोगिनां मयूखैरात्मीयैः समुचितमस्य मित्रभूयम् ।**
**मन्यन्ते शशिनममी तथाप्यजस्रं तच्चित्रं मनसि तनोति नोऽतिमात्रम् ॥ १५॥**

विरहिजनदाहकस्य चन्द्रस्य सूर्यत्वमेवोचितमित्याह—**यः इति** । यः आत्मीयैः मयूखैः वियोगिनां देहं दहति, अस्य मित्रभूयं समुचितम् । तथा अपि अजस्रम् (एनं) शशिनं मन्यन्ते । तत् नः मनसि अतिमात्रं चित्रं तनोति॥ मयूखैः—रश्मिभिः । मित्रभूयम्—सूर्यत्वम् । अमी—वियोगिनः । चित्रम्—अद्भुतम् ॥ १५ ॥

**केषाञ्चित्तुरगवधूमुखानलार्चिः पीयूषद्रवलहरी तथा परेषाम् ।**
**एषासौ सममुभयेषु भाति भिन्ना माहात्म्यं किमु कथयामि चन्द्रिकायाः ॥ १६ ॥**

चन्द्रिकायाः उष्णकरत्वं शीतकरत्वं चास्तीत्याह—**केषाञ्चिदिति** । एषा असौ केषाञ्चित् तुरगवधूमुखानलार्चिः, तथा परेषां पीयूषद्रवलहरी (सती) उभयेषु समं भिन्ना भाति । चन्द्रिकायाः माहात्म्यं किमु कथयामि !॥ तुरगवधूमुखानलार्चिः—वडवाग्निज्वाला । लहरी—तरङ्गः । समम्—एककालम् ॥ १६ ॥

**आकाशे प्रवहवशात् परिभ्रमत्सु ज्योतिष्षु स्फुटमधरोऽयमिन्दुरेव ।**
**यं देवः पिबति दिवस्पतिः सरागं यत्राहुः स्थितममृतञ्च लब्धवर्णाः ॥ १७॥**

चन्द्रस्य अधरत्वं समर्थयति—**आकाशे इति** । दिवस्पतिः देवः सरागं यं पिबति लब्धवर्णाः यत्र च अमृतं स्थितम् आहुः, अयम् इन्दुः एव, आकाशे प्रवहवशात् परिभ्रमत्सु ज्योतिष्षु अधरः स्फुटम् ॥ दिवस्पतिः इन्द्रः । रागः—रक्तिमा, अनुरागश्च । लब्धवर्णाः—पण्डिताः । ज्योतिष्षु—ग्रहनक्षत्रादिषु । अधरः—अधःस्थितः, रदनच्छदश्च । कृष्णपक्षे चन्द्रस्य कलाः देवाः पिबन्ति इति पौराणिकाः । आकाशे सप्त वायुमण्डलानि आवहप्रवहादिनामभिः प्रसिद्धानि, तत्र प्रवहवायुमण्डले ज्योतींषि परिवर्तन्ते इति च ॥ १७ ॥

**मानेन क्षुभितहृदां मनस्विनीनामानीतौ चतुरसखीः प्रियप्रयुक्ताः ।**
**नैष्फल्यं नयति चकोरकामिनीनां हुंकारः सरसनिपीतचन्द्रिकाणाम् ॥ १८ ॥**

चन्द्रिकापायिनां चकोराणां हुङ्कारं वर्णयति—**मानेनेति** । सरसनिपीतचन्द्रिकाणां

चकोरकामिनीनां हुङ्कारः, मानेन क्षुभितहृदां मनस्विनीनाम् आनीतौ प्रियप्रयुक्ताः चतुरसखीः नैष्फल्यं नयति ॥ मानेन—कोपेन। आनीतौ—आनयने। प्रियप्रयुक्ताः—कान्तप्रेषिताः ॥ १८ ॥

**मा भूतं प्रणयरुषा मिथः पराञ्चावित्याज्ञापयति युवां प्रसूनधन्वा ।**
**एवं किं कथयितुमत्र दम्पतिभ्यामायाति प्रतिसदनेषु चन्द्रिकेयम् ॥१९॥**

चन्द्रिकायाः कामाज्ञाकारित्वमाह—**मा भूतमिति**। (युवां) प्रणयरुषा मिथः पराञ्चौ मा भूतम् इति प्रसूनधन्वा युवाम् आज्ञापयति। एवं दम्पतिभ्यां कथयितुं किम् इयं चन्द्रिका अत्र प्रतिसदनेषु आयाति ? ॥ मिथः—अन्योन्यम्। पराञ्चौ—पराङ्मुखौ। प्रसूनधन्वा—कामः। प्रतिसदनेषु—सदनेषु सदनेषु ॥ १९ ॥

**एतस्मिन्नपि समये शशाङ्करोचिस्सङ्कोचीकृततिमिरौघनिर्मलाशे ।**
**अन्धत्वं तरुणजनेषु तीव्रमन्तःसम्मूर्च्छत्कुसुमशरेषु वर्धते हि ॥२०॥**

निर्मलायामपि चन्द्रिकायां कामिनामन्धत्वमाह—**एतस्मिन्निति**। शशाङ्करोचिस्सङ्कोचीकृततिमिरौघनिर्मलाशे एतस्मिन् समये अपि अन्तस्सम्मूर्च्छत्कुसुमशरेषु तीव्रम् अन्धत्वं तरुणजनेषु वर्धते हि ॥ अन्धत्वम्-किङ्कर्तव्यतामूढत्वम्, अन्धकारश्च ॥ २० ॥

**मर्यादामभिगमिते महार्णवेऽपि ज्योत्स्नाभिः क इव पुनः क्षमेत लोकः ।**
**इत्यन्तर्विशदशरीरबोधितेव प्रेयांसं मिषति जनेऽप्युपैति योषा ॥ २१ ॥**

कामोन्मादात् स्त्रीणां निर्लज्जत्वमाह—**मर्यादामिति**। ज्योत्स्नाभिः महार्णवे अपि मर्यादाम् अभिगमिते कः इव लोकः पुनः क्षमेत इति अन्तर्विशदशरीरबोधिता इव योषा जने मिषति अपि प्रेयांसम् उपैति ॥ मर्यादाम् अभिगमिते—उद्वेलतां प्रापिते। अशरीरः—कामः ॥ २१ ॥

**झङ्कारः कुमुदसुधारसान्धभृङ्गीसङ्घानां सरसि निशम्यते मनोज्ञः ।**
**विश्वेषां विजयनकेलिषु स्मरस्य ज्याघातध्वनिरिव जातकौतुकस्य ॥ २२ ॥**

भृङ्गीझङ्कारं वर्णयति—**झङ्कार इति**। सरसि कुमुदसुधारसान्धभृङ्गीसङ्घानां मनोज्ञः झङ्कारः, विश्वेषां विजयनकेलिषु जातकौतुकस्य स्मरस्य ज्याघातध्वनिः इव निशम्यते ॥ २२ ॥

**आहार्यश्रियमवलम्ब्य तारजालैस्तारेशं मकुटपदे च धारयन्तीम् ।**
**नृत्यन्तीमिव रजनीं नटीं प्रतीमो गानश्रीर्विलसति नाथ कालकण्ठी ॥ २३ ॥**

रात्रेः नटीत्वं कपोतरवस्य च गानत्वं कल्पयति—**आहार्येति**। तारजालैः आहार्यश्रियम् अवलम्ब्य तारेशं मुकुटपदे च धारयन्तीं नृत्यन्तीम् इव रजनीं (वयं) नटीं प्रतीमः। नाथ! कालकण्ठी गानश्रीः विलसति ॥ आहार्यश्रियम्—अलङ्कारशोभाम् । तारेशम्—चन्द्रम् । मकुटपदे—किरीटस्थाने। रजनीम्—रात्रिम् । प्रतीमः—जानीमः। कालकण्ठः—कपोतः। तत्सम्बन्धिनी—कालकण्ठी ॥ २३ ॥

**सुन्दर्यामिह सुकुमारचन्द्रपादैः शर्वर्यां शयनगृहाङ्कणेषु योषाः ।**
**प्रालेयव्यतिकरशीतलैः शयानाः प्रेयोभिः सह सुरतश्रमं मृजन्ति ॥ २४ ॥**

युवतीनां कान्तैः सह चन्द्रिकासेवनमाह—**सुन्दर्यामिति**। प्रालेयव्यतिकरशीतलैः सुकुमारचन्द्रपादैः सुन्दर्यां इह शर्वर्यां शयनगृहाङ्कणेषु योषाः प्रेयोभिः सह शयानाः (सत्यः) सुरतश्रमं मृजन्ति॥ प्रालेयव्यतिकरः—हिमसम्बन्धः। चन्द्रपादैः—चन्द्ररश्मिभिः। शर्वर्याम्—रात्रौ। प्रेयोभिः—कान्तैः। मृजन्ति—अपनुदन्ति ॥ २४ ॥

**किं वाचा बहुविधया विभावरीयं वासन्ती भवति नृणां महोत्सवाय ।**
**एकैको गुणमहिमा विभाव्यमानः कन्दर्पज्वलनसमिन्धनं विधत्ते ॥ २५ ॥**

वसन्तरात्रेः कामोद्दीपकतामाह—**किमिति**। बहुविधया वाचा किं? वासन्ती इयं विभावरी नृणां महोत्सवाय भवति। एकैकः गुणमहिमा विभाव्यमानः (सन्) कन्दर्पज्वलनसमिन्धनं विधत्ते॥ वासन्ती—वसन्तसम्बन्धिनी। विभावरी—रात्रिः। विभाव्यमानः—चिन्त्यमानः। कन्दर्पज्वलनसमिन्धनम्—कामाग्निदीपनम्। विधत्ते—करोति ॥ २५ ॥

**इत्यार्द्रस्मितसहचारिणीं गिरं तां सध्रीचीवदनसरोजसारमाध्वीम् ।**
**आस्वाद्य श्रुतियुगलेन जातमोदो धात्रीशस्त्वरितमना बभूव रन्तुम् ॥ २६ ॥**

रामो रन्तुमुत्सुकोऽभवदित्याह—**इतीति**। इति आर्द्रस्मितसहचारिणीं सध्रीचीवदन-सरोजसारमाध्वीं तां गिरं श्रुतियुगलेन आस्वाद्य जातमोदः धात्रीशः रन्तुं त्वरितमनाः बभूव ॥ सध्रीची—सहचरी। सीतेत्यर्थः। धात्रीशः—रामः ॥ २६ ॥

**भूयोऽसौ भुवनपतिस्तदातनं यत् तत् कृत्यं सपदि तया सहैव कृत्वा ।**
**सन्तुष्टः सरससजग्धिकावसाने सङ्क्रीडासमुचितमाविवेश सौधम् ॥ २७ ॥**

सीतारामयोः केलिसौधप्रवेशमाह—**भूय इति**। असौ भुवनपतिः भूयः, यत् (कृत्यं) तदातनम्, तत् कृत्यं तया सह एवं सपदि कृत्वा सरससजग्धिकावसाने सन्तुष्टः संक्रीडा-समुचितं सौधम् आविवेश ॥ तदातनम्—तत्कालोचितम्। सपदि—सत्वरम्। सजग्धिका—सहभोजनम् ॥ २७ ॥

**तत्रायं प्रियतमया तया समेतः सामोदं शयनमलञ्चकार देवः ।**
**जालान्तःप्रसृतसुधाकरांशुजालप्रत्यग्रास्तरणविशेषलोभनीयम् ॥ २८ ॥**

शयनतलप्राप्तिमाह—**तत्रेति**। तत्र अयं देवः तया प्रियतमया समेतः सामोदं जालान्तःप्रसृतसुधाकरांशुजालप्रत्यग्रास्तरणविशेषलोभनीयं शयनम् अलञ्चकार ॥ जालम्—गवाक्षः, तदन्तः प्रसृतं यत् सुधाकरांशुजालम्, तदेव प्रत्यग्रम्—नवम् आस्तरणं तेन विशेष-लोभनीयम् ॥ २८ ॥

**दम्पत्योः कृतपरिरम्भयोस्तदानीमङ्गेषु प्रसृतमभात् सितांशुरोचिः ।**
**एकत्वं परमुभयोः शरीरयष्ट्योरानेतुं विहित इवात्र वज्रलेपः ॥ २९ ॥**

आलिङ्गनमाह—**दम्पत्योरिति**। तदानीं कृतपरिरम्भयोः दम्पत्योः अङ्गेषु प्रसृतं सितांशुरोचिः, अत्र उभयोः शरीरयष्ट्योः परम् एकत्वम् आनेतुं विहितः वज्रलेपः इव अभात् ॥ परिरम्भः—आलिङ्गनम्। प्रसृतम्—व्याप्तम्। रोचिः—प्रकाशः। परम्—गाढम् ॥ २९ ॥

**माधुर्यं दशनदुकूलमिन्दुभासामासङ्गादधिकमिवागमत्तदीयम् ।**
**संस्कारो मधुररसेषु यः सिताभिर्हेतुः स्यादतिशयने स ताः सिता हि ॥ ३० ॥**

चन्द्रिकासंसर्गादधरस्य माधुर्यमधिकमभवदित्याह—**माधुर्यमिति**। तदीयं दशनदुकूलम् इन्दुभासाम् आसङ्गात् अधिकम् इव माधुर्यम् अगमत्। मधुररसेषु सिताभिः यः संस्कारः, सः अतिशयने हेतुः स्यात्। ताः सिताः हि॥ दशनदुकूलम्—अधरः। सिताभिः—शर्कराभिः, धवलाभिश्च। ताः—इन्दुभासः। सिताः—धवलाः, शर्कराश्च ॥ ३० ॥

**कान्तायाः कटितटतः करेण भर्तुः कौशेयं विशदतरं निराकृतं यत् ।**
**न ज्ञातं तदपि तया चिरं विराजच्चन्द्रांशुप्रकरपरिच्छदावृताङ्ग्या ॥ ३१ ॥**

कटितटाद् वस्त्रापसारणमाह—**कान्ताया इति**। भर्तुः करेण कान्तायाः कटितटतः विशदतरं कौशेयं यद् निराकृतम्, तद् अपि विराजच्चन्द्रांशुप्रकरपरिच्छदावृताङ्ग्या तया चिरं न ज्ञातम्॥ कौशेयम्—कृमिकोशोत्थम् अंशुकम्। परिच्छदः—वस्त्रम् ॥ ३१ ॥

**क्रीडित्वा चिरमथ मन्मथानुभावादुन्मत्ताविव महिला महीपतिश्च ।**
**आमर्दश्लथसुकुमारगात्रयष्टी आयासं भृशतरमापतुर्युवानौ ॥ ३२ ॥**

सीतारामौ कामलीलाभिः श्रान्तावित्याह—**क्रीडित्वेति**। अथ युवानौ महिला महीपतिः च मन्मथानुभावाद् उन्मत्तौ इव चिरं क्रीडित्वा आमर्दश्लथसुकुमारगात्रयष्टी भृशतरम् आयासम् आपतुः॥ श्लथा—शिथिला सुकुमारा गात्रयष्टिः—प्रशस्तशरीरं ययोः, तौ। आयासम्—श्रमम् ॥ ३२ ॥

**रत्यन्तश्रमविवशीकृताखिलाङ्गौ शय्यायामिह शयितौ शशिप्रभायाम् ।**
**उन्मीलत्कुमुदसुगन्धसारवाही मन्दाभिर्गतिभिरुभौ मरुत् सिषेवे ॥ ३३ ॥**

मन्दमारुतसेवनमाह—**रत्यन्तेति**। रत्यन्तश्रमविवशीकृताखिलाङ्गौ इह शशिप्रभायां शय्यायां शयितौ उभौ, उन्मीलत्कुमुदसुगन्धसारवाही मरुत् मन्दाभिः गतिभिः सिषेवे ॥ ३३ ॥

**अङ्गेषु स्फुटमभिसारितेन मन्दं पीयूषद्रवशिशिरेण शीतलांशुः ।**
**दम्पत्योः सुरतपरिश्रमेण जातं स्वेदाम्भः सपदि करेण सम्ममार्ज ॥ ३४ ॥**

चन्द्रकरकृतं स्वेदमार्जनं वर्णयति—अङ्गेष्विति । शीतलांशुः अङ्गेषु स्फुटं मन्दम् अभिसारितेन पीयूषद्रवशिशिरेण करेण, दम्पत्योः सुरतपरिश्रमेण जातं स्वेदाम्भः सपदि सम्ममार्ज ॥ अभिसारितेन–संवाहितेन । करेण–रश्मिना एव हस्तेन । सम्ममार्ज–विगतमकरोत् ॥ ३४ ॥

**संसक्ता वपुषि तयोस्तुषारधाम्नः सा कान्तिः स्फुटमनुभूतकामकेल्योः ।**
**आनन्दामृतलहरीनितान्तमन्तःसम्पूर्णा बहिरिव निर्गता चकाशे ॥ ३५ ॥**

कामकेलिमनुभूतवतोस्तयोः कान्तिविशेषं वर्णयति—संसक्तेति । अनुभूतकामकेल्योः तयोः वपुषि स्फुटं संसक्ता तुषारधाम्नः सा कान्तिः, नितान्तम् अन्तः सम्पूर्णा बहिः निर्गता अनन्दामृतलहरी इव चकाशे ॥ वपुषि–शरीरे । तुषारधाम्नः–चन्द्रस्य । लहरी–तरङ्गः । चकाशे–शुशुभे ॥ ३५ ॥

**सल्लापैरतिसरसैरथो मिथस्तावाश्लेषाद्युपजनितान्तरान्तरायैः ।**
**सामोदं कतिषु च न क्षणेषु यातेष्वाविष्टौ मृदुमृदुनिद्रया ह्यभूताम् । ३६ ॥**

सीतारामौ निद्रां गतावित्याह—सल्लापैरिति । अथो तौ अतिसरसैः आश्लेषाद्युपजनितान्तरान्तरायैः मिथः सल्लापैः सामोदं कतिषुचन क्षणेषु यातेषु (सत्सु) मृदुमृदुनिद्रया हि आविष्टौ अभूताम् ॥ अन्तरान्तरायः–मध्यविघ्नः । मिथः–अन्योन्यम् ॥ ३६ ॥

**व्यत्यस्तीकृतभुजकल्पितोपधानं ग्रस्तोष्ठं व्यतिमिलितोरु मीलिताक्षम् ।**
**अत्यन्तस्थिरपरिरम्भगूढभेदं तद्द्वन्द्वं स्वपनरसे चिरं ममज्ज ॥ ३७ ॥**

स्वप्नसुखानुभवमाह—व्यतीति । व्यत्यस्तीकृतभुजकल्पितोपधानं ग्रस्तोष्ठं व्यतिमिलितोरु मीलिताक्षम् अत्यन्तस्थिरपरिरम्भगूढभेदं तद् द्वन्द्वं स्वपनरसे चिरं ममज्ज ॥ व्यत्यस्तीकृताभ्याम्–परस्परन्यस्ताभ्यां भुजाभ्यां कल्पितम् उपधानम्–शिरोनिधानं येन, तत् तथोक्तम् । ग्रस्तौ ओष्ठौ येन, तत् तथोक्तम् । व्यतिमिलितौ–परस्परसंश्लिष्टौ ऊरू यस्य, तत् । मीलिते अक्षिणी येन, तत् । परिरम्भः–आलिङ्गनम् । द्वन्द्वम्–स्त्रीपुंसौ । सीतारामावित्यर्थः । स्वपनरसे–निद्रासुखे । ममज्ज–मग्नम् ॥ ३७ ॥

**एवं तौ परमसुखप्रसूतिहेतौ निद्रायां विहितविगाहनौ विलोक्य ।**
**ईर्ष्यन्ती किमु विषयान्तराय गन्तुं प्रारेभे रजनिरभिस्रवद्धिमाश्रुः ॥ ३८ ॥**

रात्रिरपगन्तुमारेभे इत्याह—**एवमिति** । एवं तौ, परमसुखप्रसूतिहेतौ निद्राय विहितविगाहनौ विलोक्य रजनिः, ईर्ष्यन्ती किमु, अभिस्रवद्धिमाश्रुः विषयान्तराय गन्तुं प्रारेभे ॥ तौ—सीतारामौ । विगाहनम्—मज्जनम् । रजनिः—रात्रिः । ईर्ष्यन्ती—असूयन्ती । अभिस्रवत् हिममेव—अश्रु यस्याः, सा तथोक्ता । विषयान्तराय—देशान्तराय ॥ ३८ ॥

**आशान्तश्रितमसृणेन्दुमण्डलीकस्ताराणां प्रविरलताविधानचुञ्चुः ।**
**आकूजद्द्विजकुलघोषभूषितो यः स ब्राह्मस्तदनु मुहूर्त आससाद ॥ ३९ ॥**

ब्राह्मो मुहूर्तः प्राप्त इत्याह—**आशान्तेति** । यः आशान्तश्रितमसृणेन्दुमण्डलीकः ताराणां प्रविरलताविधानचुञ्चुः आकूजद्द्विजकुलघोषभूषितः (भवति), सः ब्राह्मः मुहूर्तः तदनु आससाद ॥ आशानाम्—दिशाम् अन्तः—अवसानम्, तं श्रिता—प्राप्ता । मसृणा—स्निग्धा । इन्दुमण्डली—चन्द्रबिम्बं यस्मिन्, स तथोक्तः । प्रविरलता—अत्यल्पता, तस्याः विधानेः चुञ्चुः—प्रसिद्धः । द्विजाः—पक्षिणः, ब्राह्मणाश्च । आससाद—प्राप्तः ॥ ३९ ॥

**कालेऽस्मिन् कमलभवस्य वल्लभा सा वाग्देवी सरसममुष्य सेवनार्थम् ।**
**सूतानां नृपसुतबोधनोत्सुकानां जिह्वासु व्यधित जवेन सन्निधानम् ॥ ४० ॥**

सरस्वती रामं सेवितुं स्तुतिपाठकानां रसज्ञासु सान्निध्यं करोति । अस्मिन् काले कमलभवस्य वल्लभा सा वाग्देवी सरसम् अमुष्य सेवनार्थं नृपसुतबोधनोत्सुकानां सूतानां जिह्वासु जवेन सन्निधानं व्यधित ॥ कमलभवस्य—ब्रह्मणः । जिह्वासु—रसज्ञासु । व्यधित—अकरोत् ॥ ४० ॥

**कान्तायाः कुचकलशीयुगान्तराले सानन्दं सुरतपरिश्रमेण सुप्तम् ।**
**नष्टायां निशि नृपतिं प्रबोधयन्ती सूताली तदनु वचस्सुधामसूत ॥ ४१ ॥**

स्तुतिपाठकाः रामं बोधयितुमुपक्रमन्ते । तदनु सूताली निशि नष्टायां (सत्यां) कान्तायाः कुचकलशीयुगान्तराले सानन्दं सुरतपरिश्रमेण सुप्तं नृपतिं प्रबोधयन्ती (सती) वच-

स्सुधाम् असूत॥ सूताली–स्तुतिपाठकवृन्दम्। वचस्सुधाम्–वचनामृतम्। असूत–सृष्टवती ॥ ४१ ॥

**राजेन्द्रप्रवर जय प्रभातवेलामासान्नद्युमणिमयूखदर्शनीयाम् ।**
**साफल्यं नयतु भवान् सरोरुहश्रीचोराभ्यां चटुलविलोचनाञ्चलाभ्याम् ॥४२॥**

प्रभातवेलां पश्य इत्याह—**राजेन्द्रेति** । राजेन्द्रप्रवर ! (त्वं) जय । आसन्नद्युमणि मयूखदर्शनीयां प्रभातवेलां भवान् सरोरुहश्रीचोराभ्यां चटुलविलोचनाञ्चलाभ्यां साफल्यं नयतु॥ जय–सर्वोत्कर्षेण वर्तस्व। द्युमणिमयूखाः–सूर्यरश्मयः ॥ ४२ ॥

**निद्राणं कमलकुलं निशि प्रबोधं प्रापय्य स्फुटसुरभिः प्रभातवायुः ।**
**प्रासादं प्रविशति ते गवाक्षमार्गैस्त्वन्नेत्रद्वयकमलप्रबोधनोत्कः ॥ ४३ ॥**

प्रभातवायुः पद्मानि प्रबोधयतीत्याह—**निद्राणमिति**। स्फुटसुरभिः प्रभातवायुः निशि निद्राणं कमलकुलं प्रबोधं प्रापय्य त्वन्नेत्रद्वयकमलप्रबोधनोत्कः गवाक्षमार्गैः ते प्रासादं प्रविशति॥ सुरभिः–सुगन्धिः। निद्राणम्–मुकुलितम्। प्रबोधम्–विकासम्। उत्कः–उत्सुकः। गवाक्षः–वातायनम्। प्रासादम्–राजगृहम् ॥ ४६ ॥

**निश्शेषं सरसिरुहं मया निशायां निःश्रीकं कृतमवगम्य निश्चिकीर्षुः ।**
**उत्तिष्ठत्ययमिति देव वक्त्रपद्मं दृष्ट्वा ते सभय इवास्तमेति चन्द्रः ॥ ४४ ॥**

चन्द्रास्तमयं वर्णयति—**निश्शेषमिति** । देव! चन्द्रः ते वक्त्रपद्मं दृष्ट्वा, 'मया (चन्द्रेण) निशायां निश्शेषं सरसिरुहं निश्श्रीकं कृतम् अवगम्य अयं (वक्त्रपद्मः) निश्चिकीर्षुः उत्तिष्ठति, इति (मत्वा) सभयः इव अस्तम् एति॥ अवगम्य–ज्ञात्वा। निश्चिकीर्षुः निष्कृतिम्–प्रतिकारं कर्तुमिच्छुः। अस्तम्–अदर्शनम्। एति–गच्छति ॥ ४४ ॥

**अस्ताद्रेर्गतवति गह्वरं गभीरं तारेशद्विरदरिपौ ततो जजृम्भे ।**
**आलीनैरखिलगुहातलेषु पूर्वं ध्वान्तेभैः क इव चरन्ति नावकाशे ॥ ४५ ॥**

चन्द्रास्तमये अन्धकारोद्गममाह—**अस्ताद्रेरिति** । तारेशद्विरदरिपौ अस्ताद्रेः गभीरं गह्वरं गतवति (सति) ततः पूर्वम् अखिलगुहातलेषु आलीनैः ध्वान्तेभैः जजृम्भे। के इव अव-

काशे न चरन्ति ? ॥ तारेशः—चन्द्रः । सः एव द्विरदरिपुः—गजशत्रुः, सिंहः इत्यर्थः । तस्मिन् । गह्वरम्–गुहाम् । आलीनैः–निलीय स्थितैः । ध्वान्तानि–अन्धकाराः, तैः एव इभैः–गजैः । जजृम्भे–उज्जृम्भितम् ॥ ४५ ॥

**प्रालेयद्युतिकिरणैः पयःप्रवाहैःसम्पूर्णं भुवनकटाहमाकलय्य ।**
**अलेढि द्रुतमभितः प्रणेतरीन्दौ दूरस्थे तिमिरमिषाद्विडाललोकः ॥ ४६ ॥**

अन्धकारस्य मार्जारत्वं प्रकल्प्य वर्णयति—**प्रालेयेति** । भुवनकटाहं प्रालेयद्युतिकिरणैः पयःप्रवाहैः सम्पूर्णम् आकलय्य तिमिरमिषाद् विडाललोकः, इन्दौ प्रणेतरि दूरस्थे (सति) द्रुतम् अभितः आलेढि ॥ भुवनकटाहम्–लोकरूपम् पाकपात्रम् । प्रालेयद्युतिः–चन्द्रः । पयः–क्षीरम् । आकलय्य–दृष्ट्वा । विडाललोकः–मार्जारसङ्घः । प्रणेतरि–पाककर्तरि । अभितः–उभयतः । आलेढि–आलेहनं करोति–आस्वादयति ॥ ४६ ॥

**अम्भोधेः सविधमगादयं द्विजेन्द्रः सिष्णासुर्विधृतकरांशुकोऽधुना यत् ।**
**तत्स्नात द्रुतमिति विद्रवि द्रुमाग्राद्वक्तीव द्विजकुलमाकुलं द्विजेभ्यः ॥ ४७ ॥**

पक्षिणां विरावं वर्णयति—**अम्भोधेरिति** । अयं द्विजेन्द्रः सिष्णासुः विधृतकरांशुकः (सन्) अधुना अम्भोधेः सविधं यत् अगात्, तद् (यूयं) द्रुतं स्नात इति, द्रुमाग्राद् द्विजकुलम् आकुलं विद्रवि (सत्) द्विजेभ्यः वक्ति इव ॥ द्विजेन्द्रः–चन्द्रः, ब्राह्मणश्रेष्ठश्च । सिष्णासुः–स्नातुमिच्छुः । विधृतः करः–रश्मिः एव अंशुकः येन सः तथोक्तः । द्विजकुलम्–पक्षिवृन्दम्, बाह्मणवृन्दं च । आकुलम्–सम्भ्रान्तम् । विद्रवि–धावनशीलम् । द्विजेभ्यः–ब्राह्मणेभ्यः ॥ ४७ ॥

**सावित्रं रुचिनिकरं पुरा निजाङ्के निक्षिप्तं प्रतिवितरीतुमागतेन ।**
**आरुण्यं क्षणमधुनानलेन नूनं नीयन्ते निजशिखया दिशां मुखानि ॥४८॥**

दिङ्मुखानां रक्तिमानं वर्णयति—**सावित्रमिति** । पुरा निजाङ्के निक्षिप्तं सावित्रं रुचिनिकरं प्रतिवितरीतुम् आगतेन अनलेन नूनम् अधुना दिशां मुखानि क्षणं निजशिखया आरुण्यं नीयन्ते ॥ निजाङ्के–स्वशरीरे । निक्षिप्तम्–न्यासत्वेन समर्पितम् । सावित्रम्–सूर्यसम्बन्धिनम् । रुचिनिकरम्-तेजस्समूहम् । प्रतिवितरीतुम्-प्रतिदातुम् । अनलेन–

अग्निना। शिखया—ज्वालया। आरुण्यम्—रक्तत्वम्। 'दिनान्ते निहितं तेजः सवित्रेव हुताशनः' (रघु-४.१) इति कालिदासोक्तिरत्र स्मर्तव्या ॥ ४८ ॥

**द्वित्रेषु द्युमणिकरेषु शेखरत्वं प्राप्तेषु प्रथमगिरिः प्रयाति सोऽयम् ।**
**किञ्जल्कप्रतिमकपर्दभूषितानां मूर्तानामगदुहितुस्तुलामसूनाम् ॥४९॥**

उदयपर्वतशिरसि सूर्यरश्मीनामुद्गमं वर्णयति—**द्वित्रेष्विति**। द्वित्रेषु द्युमणिकरेषु शेखरत्वं प्राप्तेषु (सत्सु) सः अयं प्रथमगिरिः किञ्जल्कप्रतिमकपर्दभूषितानां मूर्तानाम् अगदुहितुः असूनां तुलां प्रयाति॥ द्युमणिकरेषु—सूर्यरश्मिषु। शेखरत्वम्—शिरोलङ्कारताम्। प्रथमगिरिः—उदयपर्वतः। कपर्दः—शिवस्य जटाजूटः। मूर्तानाम्—सशरीराणाम्। अगदुहितुः—पार्वत्याः, असूनाम्—प्राणानाम्, शिवस्य इति भावः। तुलाम्—सादृश्यम् ॥ ४९ ॥

**पौरस्त्यक्षितिधरमूर्ध्नि सन्निकर्षात् संशातं करकरवालमंशुमाली ।**
**उद्यम्य च्छितमधुना तमस्तमालं प्रत्यूषच्छविदहनेन्धनीकरोति ॥५०॥**

सूर्यरश्मेः करवालत्वम् अन्धकारस्य तमालवृक्षत्वं च प्रकल्प्य वर्णयति—**पौरस्त्येति**। अंशुमाली पौरस्त्यक्षितिधरमूर्ध्नि सन्निकर्षात् संशातं करकरवालम् उद्यम्य छितं तमस्तमालम् अधुना प्रत्यूषच्छविदहनेन्धनीकरोति ॥ अंशुमाली—सूर्यः। पौरस्त्यक्षितिधरः—उदयपर्वतः। तस्य मूर्ध्नि—मस्तके। सन्निकर्षः—सामीप्यम एव विलेखनं, तस्मात्। संशातम्—सम्यक् निशिततां नीतम्। करः—रश्मिः एव करवालः—आयुधविशेषः, तम्। छितम्—छिन्नम्। प्रत्यूषः—प्रभातम्। इन्धनम्—दारु ॥ ५० ॥

**नृत्यन्त्यामरुणरुचौ तमःपिधानं निर्धूय प्रथमगिरेरधित्यकायाम् ।**
**उद्योतद्द्युमणिमणिप्रदीपिकायामुद्ग्रीवं कमलमुपैति सभ्यकृत्यम् ॥५१॥**

सूर्यकान्तेर्नटीत्वं प्रकल्प्य वर्णयति—**नृत्यन्त्यामिति**। उद्योतद्द्युमणिमणिप्रदीपिकायां प्रथमगिरेः अधित्यकायाम् अरुणरुचौ तमःपिधानं निर्धूय नृत्यन्त्यां (सत्याम्) उद्ग्रीवं कमलं सभ्यकृत्यम् उपैति ॥ द्युमणिः—सूर्यः। प्रथमगिरेः—उदयपर्वतस्य। अधित्यकायाम् ऊर्ध्वभूमौ। अरुणरुचौ—सूर्यकान्तौ। तमः एव पिधानम्—तिरस्करणीम्। निर्धूय—अपसार्य। उद्ग्रीवम्—उन्नमितकण्ठम्। सभ्यकृत्यम्—प्रेक्षकभावम् ॥ ५१ ॥

**क्रीडित्वा चिरममलत्विषा दिशोऽमूस्तारालीकपटतदीयपाणिजाङ्काः ।**
**स्वात्मानं सपदि विधाय शेरते किं प्रत्यूषारुणवसनैरिनात् प्रमीताः ॥ ५२ ॥**

दिशां प्रभातारुणकान्तिव्याप्तत्वं वर्णयति—**क्रीडित्वेति**। अमूः दिशः चिरम् अमलत्विषा क्रीडित्वा तारालीकपटतदीयपाणिजाङ्काः इनात् प्रमीताः सपदि प्रत्यूषारुणवसनैः स्वात्मानं पिधाय शेरते किम् ?॥ अमलत्विषा–चन्द्रेण। ताराली–नक्षत्रपङ्क्तिः इति कपटं यस्य' तादृशः, तदीयः–चन्द्रसम्बन्धी पाणिजाङ्कः–नखचिह्नं यासाम्, तादृश्यः। इनात्–सूर्यात्, पत्युश्च। प्रत्यूषः–प्रभातम्, तत्सम्बन्धिभिः अरुणवसनैः–रक्तवस्त्रैः। पिधाय–आच्छाद्य। शेरते–शयनं कुर्वन्ति। किमिति उत्प्रेक्षा ॥ ५२ ॥

**शीतांशोः शिशिरतरे करप्रवाहे निर्मग्ना निरुपमजाड्यपीड्यमानाः ।**
**एतर्हि द्युमणिमणीमयीं हसन्तीं सेवन्ते किमु ककुभः समुज्ज्वलन्तीम् ॥ ५३ ॥**

सूर्यस्य अङ्गारपात्रत्वमारोप्य वर्णयति—**शीतांशोरिति**। शीतांशोः शिशिरतरे करप्रवाहे निर्मग्नाः निरुपमजाड्यपीड्यमानाः ककुभः, एतर्हि द्युमणिमणीमयीं समुज्ज्वलन्तीं हसन्तीं सेवन्ते किमु ॥ शीतांशोः–चन्द्रस्य। शिशिरतरे–अत्यन्तशीतले। करप्रवाहे–रश्मिपूरे। जाड्यम्–शैत्यकृतम्। ककुभः–दिशः। एतर्हि–इदानीम्। द्युमणिः–सूर्यः, स एव मणी–सूर्यकान्तोपलः, तन्मयीम्। हसन्तीम्–अङ्गारपात्रम् ॥ ५३ ॥

**आलस्यश्वसनविलासवीतनिद्रप्रत्यग्रच्छदनपुटाञ्जलिप्रलीनैः ।**
**आरामद्रुमततयस्तुषारतोयैरायाते किरणवतेऽर्घ्यमाहरन्ति ॥ ५४ ॥**

उद्यानवृक्षाः हिमजलेन सूर्याय अर्घ्यदानं कुर्वन्तीत्याह—**आलस्येति**। आरामद्रुमततयः आलस्यश्वसनविलासवीतनिद्रप्रत्यग्रच्छदनपुटाञ्जलिप्रलीनैः तुषारतोयैः आयाते किरणवते अर्घ्यम् आहरन्ति ॥ आरामद्रुमाः–उद्यानवृक्षाः। आलस्यश्वसनविलासेन–मन्दमारुतसञ्चारेण वीतनिद्राः–विकसिताः ये प्रत्यग्रच्छदनपुटाः–नवदलपुटाः, ते एव अञ्जलयः–संयुतहस्ताः, तत्र प्रलीनैः–गृहीतैः। तुषारतोयैः–हिमजलैः। आयाते–आगच्छते। किरणवते–सूर्याय। अर्घ्यम्–पूजाजलम्। आहरन्ति–प्रयच्छन्ति ॥ ५४ ॥

**उद्गच्छद्दिनमणिशोणितं पुरस्ताद्वर्षीयःशशधरकान्तिपाण्डु पश्चात् ।**
**अन्यत्र प्रचलतमिस्रनीलमेतद्दिक्चक्रं घटितमिवाश्मभिर्विचित्रैः ॥ ५५ ॥**

वर्णत्रयवतो दिक्चक्रस्य त्रिविधरत्नघटितत्वमुत्प्रेक्षते—**उद्गच्छदिति** । पुरस्तात् उद्गच्छद्दिनमणिशोणितम् पश्चात् वर्षीयःशशधरकान्तिपाण्डु, अन्यत्र प्रचलतमिस्रनीलम् एतद् दिक्चक्रं विचित्रैः अश्मभिः घटितम् इव (भवति) ॥ पुरस्तात्–पूर्वभागे । दिनमणिः–सूर्यः शोणितम्–रक्तम् । पश्चात्–पश्चिमभागे । वर्षीयःशशधरः–वृद्धचन्द्रः । तमिस्रम्–अन्धकारः । विचित्रैः–नानावर्णैः । अश्मभिः—उपलैः ॥ ५५ ॥

**दुर्वारस्मरवशतः कृतश्रमाणां पाश्चात्यप्रहरसुखेऽद्य निद्रितानाम् ।**
**श्रूयन्ते श्रवणकटूनि कामुकानां बिभ्राणाः स्फुटरटितानि ताम्रचूडाः ॥ ५६ ॥**

कुक्कुटकूजनं वर्णयति—**दुर्वारेति** । दुर्वारस्मरवशतः कृतश्रमाणां पाश्चात्यप्रहरसुखे अद्य निद्रितानां कामुकानां श्रवणकटूनि स्फुटरटितानि बिभ्राणाः ताम्रचूडाः श्रूयन्ते ॥ पाश्चात्यप्रहरः–अन्त्ययामः । स्फुटरटितानि–घूर्कारान् । ताम्रचूडाः–कुक्कुटाः । कामुकानां घूर्काराः एव कुक्कुटशब्दत्वेन श्रूयन्ते इत्यर्थः ॥ ५२ ॥

**सुत्राम्णो दिशि दिशति स्वपादमर्के तल्लाक्षारसमिलितेव सा नितान्तम् ।**
**लौहित्यं व्रजति विलोक्यतामिदानीं त्वादृक्षा जगति जना न संविशन्ति ॥ ५७ ॥**

सूर्योदयेन प्राची रक्तवर्णा जातेत्याह—**सुत्राम्ण इति** । सुत्राम्णः दिशि अर्के स्वपादं दिशति (सति) सा तल्लाक्षारसमिलिता इव नितान्तं लौहित्यं व्रजति । विलोक्यताम् । त्वादृक्षाः जनाः इदानीं न संविशन्ति ॥ सुत्राम्णः–इन्द्रस्य दिशि । प्राच्यामित्यर्थः । स्वपादम्–निजरश्मिं चरणं च । दिशति–न्यस्यति । तल्लाक्षारसः–पादगतालक्तकरसः । लौहित्यम्–रक्तवर्णम् । त्वादृक्षाः–त्वत्सदृशाः । न संविशन्ति–न स्वपन्ति ॥ ५७ ॥

**लब्ध्वासौ हरिमहिषी हरित् प्रकामं वस्त्रीशाद्वसुनिकरं धृतानुरागा ।**
**चुम्बन्तं मुखमथ तञ्च रञ्जयन्ती वैयात्यं प्रथयति बन्धकीव योषा ॥ ५८ ॥**

प्राच्याः कुलटासादृश्यं प्रकल्प्य वर्णयति—**लब्ध्वेति**। असौ हरिमहिषी हरित् वस्वीशात् प्रकामं वसुनिकरं लब्ध्वा धृतानुरागा, अथ मुखं चुम्बन्तं तं च रञ्जयन्ती वन्धकी योषा इव वैयात्यं प्रथयति ॥ हरेः—इन्द्रस्य महिषी—पत्नी। हरित्—दिक्। प्राची इत्यर्थः। वस्वीशात्—वसूनाम्—रश्मीनाम् ईशात्—पत्युः। सूर्यादित्यर्थः। वसुनिकरम्—रश्मिसमूहम्, धनसमूहं च। धृतः अनुरागः—रक्तवर्णः एव अनुरागः प्रेम यया, तादृशी। तम्—सूर्यम्। वन्धकी—कुलटा। वैयात्यम्—प्रगल्भताम्। प्रथयति—प्रकाशयति ॥ ५८ ॥

**अन्धत्वं यदजनि नैशिकैस्तमोभिः लोकानां द्रुतमपकृष्य तत्कराग्रैः।**
**औलूके नयनपुटे निधाय गाढं गोपायत्ययमधुना जगत्प्रदीपः ॥५९॥**

सूर्यकृतमन्धतादूरीकरणमाह—**अन्धत्वमिति**। लोकानां नैशिकैः तमोभिः यत् अन्धत्वम् अजनि, तत् कराग्रैः द्रुतम् अपकृष्य औलूके नयनपुटे गाढं निधाय अधुना अयं जगत्प्रदीपः गोपायति ॥ नैशिकैः—निशि भवैः। कराग्रैः—रश्म्यग्रैः। अपकृष्य—दूरीकृत्य। औलूके—घूकसम्बन्धिनि। गोपायति—रक्षति ॥ ५९ ॥

**बालोऽयं गिरिशिखरेषु चारयन् गास्त्रैलोक्यं तिमिरभरेण दुष्टमेतत्।**
**नैर्मल्यं नयति रविर्विषप्रवाहैः कालिन्दीजलमिव कालियस्य कृष्णः ॥६०॥**

बालसूर्यस्य कालियमर्दनेन कृष्णेन साम्यं प्रकल्प्य वर्णयति—**बाल इति**। गिरिशिखरेषु गाः चारयन् बालः अयं रविः, तिमिरभरेण दुष्टम् एतत् त्रैलोक्यम्, कालियस्य विषप्रवाहैः दुष्टं कालिन्दीजलं कृष्णः इव नैर्मल्यं नयति॥ गिरिशिखरेषु—पर्वतशृङ्गेषु। गोवर्धन. शृङ्गेष्विति च गम्यते। गाः—रश्मीन्, धेनूश्च ॥ ६० ॥

**काल्याग्नौ द्विजकुलनादमन्त्रवादैरुद्दीप्ते तिमिरतिलाहुतिं विधाय।**
**मूर्च्छालान् विरहपिशाचिकागृहीतानुद्बोधं गमयति भास्करो रथाङ्गान् ॥ ६१ ॥**

सूर्यस्य तिलहोमकर्तृत्वमारोप्य वर्णयति—**काल्याग्नाविति**। भास्करः उद्दीप्ते काल्याग्नौ द्विजकुलनादमन्त्रवादैः तिमिरतिलाहुतिं विधाय विरहपिशाचिकागृहीतान् मूर्च्छालान् रथाङ्गान् उद्बोधं गमयति ॥ काल्यम्—प्रभातकालः, स एव अग्निः, तस्मिन्। द्विजाः—पक्षिणः, ब्राह्मणाश्च। रथाङ्गान्—चक्रवाकान् ॥ ६१ ॥

**आयातं जगति जगत्प्रभो प्रभातं कोकानां मनसि मदश्च रागमिश्रः ।**
**उन्निद्रा अपि च भवन्ति पङ्कजिन्यः सामोदाः प्रियकरसङ्गमात् स्त्रियश्च ॥६२॥**

प्रभातागमनं प्रस्तौति—**आयातमिति**। जगत्प्रभो ! जगति प्रभातम् आयातम् । कोकानां मनसि रागमिश्रः मदः च (आयातः)। अपि च पङ्कजिन्यः प्रियकरसङ्गमाद् उन्निद्राः सामोदाः भवन्ति। स्त्रियः च प्रियकरसङ्गमाद् उन्निद्राः सामोदाः (भवन्ति) ॥ पङ्कजिन्यः—पद्मिन्यः। प्रियस्य—पत्युः सूर्यस्य च कराणाम्—रश्मीनाम्, हस्तानां च सङ्गमात्। सामोदाः—सप्रमोदाः, ससौरभाश्च ॥ ६२ ॥

**सङ्केतान्निजसदनं प्रति प्रयातास्त्रस्यन्ति प्रतिपदमद्य वारनार्यः ।**
**चन्द्रांशुप्रवसनजृम्भितं तमिस्रं भिन्दानेष्वपि किरणेषु तीव्रभानोः ॥६३॥**

वारनारीणां सङ्केतात् प्रत्यागमनं वर्णयति—**सङ्केतादिति**। सङ्केतात् निजसदनं प्रति प्रयाताः वारनार्यः, तीव्रभानोः किरणेषु चन्द्रांशुप्रवसनजृम्भितं तमिस्रं भिन्दानेषु (सत्सु) अपि अद्य प्रतिपदं त्रस्यन्ति ॥ प्रयाताः—यातुं प्रवृत्ताः। तीव्रभानोः—सूर्यस्य। प्रवसनम्—विदेशवासः। भिन्दानेषु—नाशयत्सु। प्रतिपदम्—पदेपदे ॥ ६३ ॥

**दृश्यन्ते बहिरबलाः प्रियाङ्गसङ्गव्यालुप्तस्तनतटबाह्लिकश्रियोऽपि ।**
**आलीढा रविकिरणैर्जपानिकाशैः सर्वाङ्गे पुनरपि तैरिवानुलिप्ताः ॥६४॥**

सूर्यरश्मिप्रसरणं वर्णयति— **दृश्यन्ते इति**। अबलाः प्रियाङ्गसङ्गव्यालुप्तस्तनतटबाह्लिकश्रियः अपि जपानिकाशैः रविकिरणैः आलीढाः सर्वाङ्गे पुनः अपि तैः अनुलिप्ताः इव बहिः दृश्यन्ते ॥ अबलाः—स्त्रियः। बाह्लिकम्—कुङ्कुमम्। आलीढाः—आलिप्ताः। तैः—कुङ्कुमैः ॥ ६४ ॥

**धर्मस्य च्यवनधिया प्रवर्त्यमानः कान्तायाः सजलदृशा निवर्त्यमानः ।**
**निर्यातुं निजरतिमन्दिरादिदानीमारम्भस्तटिदिव हन्त भाति यूनाम् ॥६५॥**

युवजनानां केलीगृहान्निर्गमने सङ्कोचमाह—**धर्मस्येति**। धर्मस्य च्यवनधिया प्रवर्त्यमानः कान्तायाः सजलदृशा निवर्त्यमानः निजरतिमन्दिरात् निर्यातुं यूनाम् आरम्भः तटिद् इव भाति। हन्त ॥ ६५ ॥

**कामिन्यः कलितवियुक्तिखेदजानां वामिन्यः सपदि विलोचनोदकानाम् ।**
**मृज्यन्ते स्फुटमधुना करेण कान्तैर्व्यज्यन्ते तदिह तुलाः सरोजिनीनाम् ॥ ६६ ॥**

कान्तैः क्रियमाणं कामिनीनामश्रुमार्जनमाह—**कामिन्यः इति** । कलितवियुक्तिखेदजानां विलोचनोदकानां वामिन्यः कामिन्यः अधुना कान्तैः करेण सपदि मृज्यन्ते । तद् इह सरोजिनीनां तुलाः व्यज्यन्ते॥ वियुक्तिखेदः—विरहदुःखम् । वामिन्यः--वमनं कुर्वत्यः । अश्रु मुञ्चन्त्यः इत्यर्थः । सरोजिनीनाम्—पद्मिनीनाम् । तुलाः—सादृश्यानि॥ सूर्योऽपि पद्मिनीनां हिमरूपस्य अश्रुणः प्रमार्जनं करोति । कान्ताः कामिनीनां च ॥ ६६ ॥

**उद्भिन्नच्छदनकवाटपद्मवल्लीनिर्गच्छद्भ्रमरनिनादकैतवेन ।**
**सम्भ्रान्ता प्रियसवितुः करेण लब्ध्वा सम्भ्रान्ता मणितवतीव पद्मवाटी ॥ ६७॥**

भृङ्गनिनादं वर्णयति—**उद्भिन्नेति** । पद्मवाटी प्रियसवितुः करेण सम्पर्कं लब्ध्वा सम्भ्रान्ता उद्भिन्नच्छदनकवाटपद्मवल्लीनिर्गच्छद्भ्रमरनिनादकैतवेन मणितवती इव (भवति)॥ सवितुः—सूर्यस्य । करेण—रश्मिना, हस्तेन च । उद्भिन्नम्—विकसितं छदनम्—दलमेव कवाटं यस्याः, तादृश्याः पद्मवल्ल्याः निर्गच्छतां भ्रमराणां निनादस्य कैतवेन। मणितम्—रतिकूजितम्, तद्वती ॥ ६७ ॥

**आलीढं रविरुचिजिह्वया पुरस्तादापीतं मधुकरपोतकेन पश्चात् ।**
**मैरेयं सरसिजिनीमुखाम्बुजस्थं चक्राह्वाः सह गृहिणीभिरापिबन्ति ॥ ६८ ॥**

चक्रवाकाः कमलमकरन्दं पिबन्ति । पुरस्तात् रविरुचिजिह्वया आलीढं पश्चात् मधुकरपोतकेन आपीतं सरसिजिनीमुखाम्बुजस्थं मैरेयं चक्राह्वाः गृहिणीभिः सह आपिबन्ति ॥ रविरुचिः—सूर्यकान्तिः एव जिह्वा—रसज्ञा, तया। मधुकरपोतकेन—भृङ्गशिशुना । मैरेयम्—मद्यम् । चक्राह्वाः—चक्रवाकाः ॥ ६८ ॥

**दिक्चक्रं निशि पिशिताशिभिश्चरद्भिः सम्मर्दात् क्षतमिव मन्महे महीन्द्र !**
**यत् प्रायः क्षतजविलिप्तगात्रमेतत् पश्यामो दिनमुखदीप्तिकैतवेन ॥६९॥**

प्रभातदीप्तिमेव वर्णयति—**दिक्चक्रमिति** । महीन्द्र ! निशि चरद्भिः पिशिताशिभिः सम्मर्दात् दिक्चक्रं क्षतम् इव मन्हहे। यत् एतत् प्रायः दिनमुखदीप्तिकैतवेन क्षतजविलिप्तगात्रं पश्यामः। पिशिताशिभिः–मांसभक्षकैः राक्षसैः। क्षतम्–व्रणितम्। एतत्–दिक्चक्रम्। क्षतजम्–रक्तम् ॥ ६९ ॥

**पूर्वाद्रेस्तटभुवि पूर्वमेव धात्रा खात्वा किं निहितमहर्महीजबीजम् ।**
**उद्भिद्य क्षितिमधुना तदङ्कुरोऽयं निर्गच्छत्यरुणकिशोरपत्रचित्रः ॥७०॥**

बालसूर्ये दिनवृक्षस्य नवपल्लवत्वं परिकल्प्य वर्णयति—**पूर्वाद्रेरिति** । धात्रा पूर्वम् एव पूर्वाद्रेः तटभुवि खात्वा अहर्महीजबीजं किं निहितम्। अधुना अयं तदङ्कुरः क्षितिम् उद्भिद्य अरुणकिशोरपत्रचित्रः निर्गच्छति॥ धात्रा–ब्रह्मणा। पूर्वाद्रेः–उदयपर्वतस्य। खात्वा–खननं कृत्वा। अहः–दिनम् एव महीजः–वृक्षः, तस्य बीजम्। तदङ्कुरः–दिनवृक्षस्य अभिनवोद्भेदः। अरुणकिशोरः–बालसूर्यः एव अरुणकिशोरपत्रम्–रक्तनवपल्लवम्, तेन चित्रः–विचित्ररूपः ॥ ७० ॥

**सिन्दूरद्रवरुचिसुन्दरेण भानोरिन्दूरस्थलशितिमाभिपातुकेन ।**
**किं दूरप्रसरवता करेण गुञ्जासञ्जातद्युतिरिव नाद्य पश्चिमाद्रिः ॥७१॥**

सूर्यरश्मियोगाद् अस्तपर्वतस्य रक्तवर्णत्वं जातमित्याह—**सिन्दूरेति** । सिन्दूरद्रवरुचिसुन्दरेण इन्दूरस्थलशितिमाभिपातुकेन दूरप्रसरवता भानोः करेण अद्य पश्चिमाद्रिः गुञ्जासञ्जातद्युतिः इव किं न (भवति)?॥ इन्दोः उरस्थले यः शितिमा–नीलवर्णः, तम् अभिपतितुं शीलम् अस्येति, तादृशेन। करेण–रश्मिना। पश्चिमाद्रिः–अस्तपर्वतः ॥ ७१ ॥

**उद्भ्राम्यत्परमकरो गिरीन्द्रयोगान्मुक्तानामयमयनं मयूखमाली ।**
**लक्ष्मीं तां सृजति कथं न पद्मसंस्थां यस्यै तु स्पृहयति सन्ततं रथाङ्गी ॥७२॥**

सूर्यस्य लक्ष्मीजन्महेतुत्वं प्रतिपादयति—**उद्भ्राम्यदिति** । गिरीन्द्रयोगात् उद्भ्राम्यत्परमकरः मुक्तानाम् अयनम् अयं मयूखमाली, सन्ततं यस्यै तु रथाङ्गी स्पृहयति, तां पद्मसंस्थां

लक्ष्मीं कथं न सृजति ॥ गिरीन्द्रयोगात्—उदयपर्वतसम्बन्धात्, मन्दरपर्वतसम्बन्धाच्च। उद्भ्राम्यन्तः परमाः कराः—रश्मयः यस्य, तादृशः। उद्भ्राम्यन्तः पराः मकराः—मत्स्यविशेषाः यस्मिन् स तादृशः। मुक्तानाम्—मुक्तिं गतानाम्, मुक्ताफलानां च। अयनम्—प्राप्यस्थानम्, वासस्थानं च। मुक्तिं गताः सूर्यमण्डलं गच्छन्तीति प्रसिद्धिः। समुद्रात् मुक्ताफलानामुत्पत्तिरिति च। मयूखमाली—सूर्यः। रथाङ्गी—चक्रवाकी, रथाङ्गं—चक्रम् अस्यास्तीति रथाङ्गी विष्णुः। प्रभाते लक्ष्मीः पद्मं प्रविशतीति, समुद्रात् लक्ष्मीः जाता इति च प्रसिद्धिः। चक्रवाकी—पद्मस्थां लक्ष्मीं स्पृहयति। यतः प्रभातं चक्रवाक्याः कान्तसंयोगहेतुर्भवति। विष्णुश्च लक्ष्मीं कामयते, तस्य लक्ष्मीवल्लभत्वात् ॥ ७२ ॥

**निष्णातैरिह निजकर्मसु द्विजेन्द्रैः सुस्नातैः करयुगलेन कल्प्यमानैः।**
**अम्भोभिः सह भगवानुदञ्चति द्यामम्भोजस्तबकनिबन्धमोक्षहेतुः ॥७३॥**

ब्राह्मणाः सूर्यायार्घ्यं प्रयच्छन्तीत्याह—**निष्णातैरिति**। इह निजकर्मसु निष्णातैः सुस्नातैः द्विजेन्द्रैः करयुगलेन कल्प्यमानैः अम्भोभिः सह अम्भोजस्तबकनिबन्धमोक्षहेतुः भगवान् द्याम् उदञ्चति ॥ निष्णातैः—कुशलैः। कल्प्यमानैः—प्रक्षिप्यमाणैः। अम्भोजस्तबकनिबन्धमोक्षहेतुः—पद्मविकासहेतुः। द्याम्—आकाशम्। उदञ्चति—उद्गच्छति ॥ ७३ ॥

**आरूढाः प्रथमाद्रिशृङ्गमधिकोत्तुङ्गं रथाङ्गप्रिया-**
**ग्रीवामङ्गलतन्तवः कतिपये भानोरमी भानवः।**
**अञ्चन्तो गगनाञ्चलं चिरवियोगोत्कण्ठितस्वर्णदी-**
**सौवर्णाम्बुजवाटिकानुनयनं कुर्वन्ति खर्वेतरे ॥ ७४ ॥**

सूर्यरश्मीनामाकाशगङ्गाप्राप्तिं वर्णयति—**आरूढा इति**। अधिकोत्तुङ्गं प्रथमाद्रिशृङ्गम् आरूढाः रथाङ्गप्रियाग्रीवामङ्गलतन्तवः कतिपये खर्वेतरे अमी भानोः भानवः गगनाञ्चलम् अञ्चन्तः (सन्तः) चिरवियोगोत्कण्ठितस्वर्णदीसौवर्णाम्बुजवाटिकानुनयनं कुर्वन्ति ॥ रथाङ्गप्रियाग्रीवामङ्गलतन्तवः—चक्रवाकीदाम्पत्यहेतवः। खर्वेतरे—दीर्घाः। भानोः—सूर्यस्य। भानवः—रश्मयः। गगनाञ्चलम्—आकाशाग्रभागम्। अञ्चन्तः—गच्छन्तः। स्वर्णदी—आकाशगङ्गा ॥ ७४ ॥

प्राक्प्रत्यग्धरणीधरेन्द्रशिरसोरुत्तंसतां प्राप्तयोः
सूर्याचन्द्रमसोरतन्द्रमहसोरुच्चैरनुच्चैरपि ।
कोकस्त्रैणसमोदनर्तनकलाकालक्रियामानक्-
त्तालद्वन्द्वमिहोद्वहन्निव विटः कालोऽयमालोक्यते ॥ ७५ ॥

सूर्ये चन्द्रे च तालत्वं परिकल्प्य वर्णयति—**प्रागिति**। अतन्द्रमहसोः उच्चैः अनुच्चैः अपि सूर्याचन्द्रमसोः प्राक्प्रत्यग्धरणीधरेन्द्रशिरसोः उत्तंसतां प्राप्तयोः (सतोः) अयं कालः विटः, इह कोकस्त्रैणसमोदनर्तनकलाकालक्रियामानक्त्तालद्वन्द्वम् उद्वहन् इव आलोक्यते ॥ अतन्द्र-महसोः—महातेजसोः। उच्चैः—उन्नते। अनुच्चैः—अवनते। प्राक्प्रत्यग्धरणीधरेन्द्रशिरसोः—उदयास्तपर्वताग्रयोः। उत्तंसताम्—अलङ्कारत्वम्। कोकस्त्रैणम्—चक्रवाकस्त्रीसमूहः। काल-क्रियामानम्—तालः। तालद्वन्द्वम्—तालवाद्यद्वयम् ॥ ७५ ॥

लौहित्यादुदयत्यपश्चिमदिशस्तर्कोऽयमर्कोदये
सानन्दं बलभेदनस्य वलभीमध्येषु बद्धासिकाः ।
हस्ताम्भोरुहसम्भृतैः सरभसं तन्वन्ति तन्वङ्गिकाः
काश्मीरद्रवमिश्रिताम्बुभिरिनस्यार्घ्यं विहस्येति नः ॥ ७६ ॥

सूर्योदयजातं लौहित्यमुत्प्रेक्षते—लौहित्यादिति। अर्कोदये अपश्चिमदिशः लौहित्यात् नः अयं तर्कः उदयति, (यत्) सानन्दं वलभेदनस्य वलभीमध्येषु बद्धासिकाः तन्वङ्गिकाः हस्ताम्भोरुहसम्भृतैः काश्मीरद्रवमिश्रिताम्बुभिः विहस्य सरभसम् इनस्य अर्घ्यं तन्वन्ति इति ॥ अपश्चिमदिशः—पूर्वदिशः। लौहित्यात्—आरुण्यात्। तर्कः—ऊहः। उदयति—जायते। वलभेदनस्य—इन्द्रस्य। बलभीमध्येषु—कूटागारोदरेषु। वद्धासिकाः—तिष्ठन्त्यः। काश्मीर-द्रवमिश्रिताम्बुभिः—कुङकुमतोयैः। सरभसम्—सवेगम्। इनस्य—सूर्यस्य। अर्घ्यम्—पूजाजल-दानम् ॥७६ ॥

तुल्येऽपि व्यसने वियोगजनिते तुल्येऽपि कान्तापदे
त्यक्त्वान्या हरितः सरोरुहवनीसौरभ्यसौलभ्यदः ।
एकामेव निरङ्कुशोदितरुचिः प्राचीं मरीचीपति-
श्चुम्बत्येष भृशं तथाप्यघृणिता लोके न रूढा रवेः ॥ ७७ ॥

सूर्यस्य दाक्षिण्याभावं प्रकाशयति—**तुल्येऽपीति**। एषः मरीचीपतिः, वियोगजनिते व्यसने तुल्ये (सति) अपि, कान्तापदे तुल्ये (सति) अपि अन्याः हरितः त्यक्त्वा सरोरुहवनी-सौरभ्यसौलभ्यदः एकाम् एव प्राचीं भृशं निरङ्कुशोदितरुचिः चुम्बति। तथा अपि रवेः अघृणिता लोके न रूढा॥ मरीचीपतिः–सूर्यः। हरितः–दिशः। निरङ्कुशम् उदिता रुचिः–दीप्तिः, आस्वादनञ्च यस्य, तादृशः। न घृणिः–रश्मिः यस्य, तस्य भावः अघृणिता। रश्म्यभावः इत्यर्थः। घृणा–दया यस्य, सः घृणी, न घृणी–अघृणी। तस्य भावः–अघृणिता इति च। निर्दयत्वमिति भावः। रूढा–प्रसिद्धा॥ ७७॥

**पद्मामोदं हरिरिव करस्पर्शमात्रेण कुर्वन्**
**वृत्राभावं जगति जनयंस्तद्वदेव प्रकामम्।**
**तादृक्षोऽयं पुनरपि लसत्पुष्करेभं विलुम्प-**
**न्नन्तर्मोदं जनयति नृणां ज्योतिषां चक्रवर्ती॥ ७८॥**

सूर्यस्य चतुर्विधं हरिपदवाच्यत्वं समर्थयति—**पद्मामोदमिति**। हरिः इव करस्पर्श-मात्रेण पद्मामोदं कुर्वन्, तद्वद् एव जगति प्रकामं वृत्राभावं जनयन्, पुनः अपि तादृक्षः लसत्पुष्करेभं विलुम्पन् अयं ज्योतिषां चक्रवर्ती नृणाम् अन्तर्मोदं जनयति॥ हरिः–विष्णुः। करपर्शः–रश्मिस्पर्शः, हस्तस्पर्शश्च। पद्मामोदम्–पद्मस्य आमोदम्–सौरभम्, पद्मायाः मोदम्–हर्षं च। तद्वत्–हरिः–इन्द्रः इव। वृत्रस्य–अन्धकारस्य अभावम्। वृत्रस्य–तदाख्यस्य असुरस्य अभावं च। तादृक्षः–हरिः–सिंहः इव। लसत्पुष्करे भम् इति सूर्यपक्षे पदच्छेदः। लसति पुष्करे–आकाशे भम्–नक्षत्रम्। सिंहपक्षे लसत्पुष्करेभमित्येकं पदम्। लसत् पुष्करम्–करिहस्ताग्रं यस्य, तादृशम् इभम्–गजम्। विलुम्पन्–नाशयन्। विष्णुत्वमिन्द्रत्वं सिंहत्वं सूर्यत्वं च हरिपदवाच्यस्य सूर्यस्यास्तीति भावः॥ ७८॥

**धृत्वा गर्भं दिनकरमयं सर्वलोकोपकारं**
**काष्ठा श्रेष्ठा सकलहरितां वृत्रशत्रोः कलत्रम्।**
**अत्यासन्ने प्रसवसमये रक्तसिक्ताम्बरान्ता**
**हन्तोदञ्चद्विहगविरुतैः क्रन्दतीवातिवेलम्॥ ७९॥**

पक्षिविरावाणां प्रसवसमयाक्रन्दत्वं प्रकल्प्य वर्णयति—**काष्ठेति**। वृत्रशत्रोः कलत्रं सकलहरितां श्रेष्ठा काष्ठा सर्वलोकोपकारं दिनकरमयं गर्भं धृत्वा अत्यासन्ने प्रसवसमये रक्तसिक्ता-

म्बरान्ता उदञ्चद्विहगविरुतैः अतिवेलं क्रन्दति इव। हन्त॥ वृत्रशत्रोः—इन्द्रस्य। कलत्रम्—जाया। हरिताम्—दिशाम्। काष्ठा—दिक्। प्राचीत्यर्थः। अम्बरान्तः—आकाशदेशः, वस्त्राञ्चलं च। विहगविरुतैः—पक्षिशब्दैः ॥ ७९ ॥

अभ्यर्णस्थितिमाप्नुवत्युडुपतौ नश्यद्द्युतिर्निद्रिता
कष्टं कैरविणी तथापि गृहिणीमाहुः सतीमस्य ताम्।
आश्वस्ता नलिनी तुषारकिरणेऽप्याश्वस्त एवात्र नो
विश्वस्तद्गृहिणीगृहित्वविषये विश्वस्त इत्यद्भुतम् ॥ ८० ॥

कुमुदिन्याः पातिव्रत्ये अविश्वासमाविष्करोति—अभ्यर्ण इति। उडुपतौ अभ्यर्णस्थितिम् आप्नुवति (सति) कैरविणी नश्यद्द्युतिः निद्रिता। कष्टम्! तथा अपि ताम् अस्य सतीं गृहिणीम् आहुः। तुषारकिरणे आश्वस्ते अपि नलिनी आश्वस्ता। अत्र तद्गृहिणीगृहित्वविषये विश्वः नो विश्वस्तः इति अद्भुतम्॥ उडुपतौ—चन्द्रे। अभ्यर्णस्थितिम्—अर्णः—जलम् अभिलक्ष्य स्थितिम्, अभ्यर्णे—समीपे स्थितिं च। कैरविणी—कुमुदिनी। नश्यद्द्युतिः—नष्टशोभा। निद्रिता—निद्रां गता। ताम्—कैरविणीम्। अस्य—उडुपतेः। सतीम्—पतिव्रताम्। गृहिणीम्—कुटुम्बिनीम्। प्राहुः—कथयन्ति। तुषारकिरणे—चन्द्रे। आशु—शीघ्रम् अस्ते—क्षिप्ते, आश्वासवति च। आश्वस्ता—आश्वासं प्राप्ता। विश्वः—सर्वः। तयोः—नलिनीतुषारकिरणयोः गृहिणीगृहित्वविषये—भार्याभर्तृविषये। विश्वस्तः—विश्वासवान्। चन्द्रे समीपं प्राप्ते कुमुदिनी नष्टशोभा जातेति विरोधः। चन्द्रे जलं प्रविष्टे सा नष्टशोभेत्यविरोधः। स्वविरुद्धे चन्द्रे आश्वस्ते नलिनी आश्वस्तेति विरोधः। चन्द्रे जवेन क्षिप्ते नलिनी विश्वस्तेत्यविरोधः ॥ ८० ॥

उद्यत्कर्कशकार्कवाकवरवत्रस्यत्कुलायोन्मुख-
ध्वांक्षारातिपतत्रिपत्रजमरुत्सम्भेदमेदस्विना।
स्वावासेऽप्यधुनातनेन पवनेनोद्भिन्नतां प्रापिते
व्यासेधप्रतिषेधतोऽस्ति जगतां धातुर्न धातुक्षयः ॥ ८१ ॥

ब्रह्मवासपद्मस्य विकासमाह—उद्यदिति। उद्यत्कर्कशकार्कवाकवरवत्रस्यत्कुलायोन्मुखध्वाङ्क्षारातिपतत्रिपत्रजमरुत्सम्भेदमेदस्विना अधुनातनेन पवनेन स्वावासे अपि उद्भिन्नतां

प्रापिते व्यासेधप्रतिषेधतः जगतां धातुः धातुक्षयः न ॥ कृकवाकुः—कुक्कुटः, तत्सम्बन्धी कार्कवाकवः, स चासौ रवश्च, तेन त्रस्यन्, कुलायं प्रति उन्मुखः यः ध्वाङ्क्षारातिपतत्री—काकशत्रुपक्षी। पेचक इत्यर्थः, तस्य पत्रजः—पक्षभवः यो मरुत्, तस्य सम्भेदेन संसर्गेण। मेदस्विना—सम्पुष्टेन। स्वावासे—निजवासपद्मे। उद्भिन्नताम्—विकासम्। व्यासेधप्रतिषधतः—निषेधाभावात्। धातुः—ब्रह्मणः। धातुक्षयः—उपादानकारणाभावः। ब्रह्मा सृष्टौ प्रवृत्त इति भावः ॥ ८१ ॥

रम्भादित्रिदशेन्द्रयौवतपरीरम्भाद्रिसंम्भेदन-
क्रीडाविभ्रमविच्युतः कुचतटीकस्तूरिकाकर्दमः।
छायाकैतवतस्ततस्तत इह क्षोणीतले भासते
पूरः कुङ्कुमपङ्कजोऽपि च तथा बालातपच्छद्मना ॥८२॥

छायातपौ वर्णयति—रम्भादीति। रम्भादित्रिदशेन्द्रयौवतपरीरम्भाद्रिसम्भेदनक्रीडा सम्भ्रमविच्युतः कुचतटीकस्तूरिकाकर्दमः छायाकैतवतः ततः ततः इह क्षोणीतले भासते, तथा कुङ्कुमपङ्कजः पूरः अपि च बालातपच्छद्मना (भासते)॥ त्रिदशेन्द्रयौवतम्—देवयुवतीसमूहः। परीरम्भः—आलिङ्गनम्। अद्रिसम्भेदनः—इन्द्रः। कर्दमः—पङ्कः। कुङ्कुमपङ्काद् जातः—कुङ्कुमपङ्कजः। पूरः—प्रवाहः ॥ ८२ ॥

सङ्गं दिवा किमु समीक्ष्य सरोजबन्धोः
सङ्गं दिवैव तनुते बत चक्रवाकः।
एकः करोति यदि कर्म विगर्हितं वा
लोके भवन्ति बहवस्तदनुव्रजन्तः ॥ ८३ ॥

चक्रवाकस्य वासर एव सहचरीसङ्गमे हेतुमुत्प्रेक्षते—सङ्गमिति। सरोजबन्धोः दिवा सङ्गं समीक्ष्य किमु, चक्रवाकः दिवा एव सङ्गं तनुते?। बत! एकः विगर्हितं कर्म यदि वा करोति, (तर्हि) लोके बहवः तद् अनुव्रजन्तः भवन्ति ॥ सरोजबन्धोः—सूर्यस्य। दिवा—आकाशेन। सङ्गम्—सम्बन्धम्। दिवा—वासरे। सङ्गम्—स्त्रीसङ्गमम्। विगर्हितम्—निन्दितम्। अनुव्रजन्तः—अनुकुर्वन्तः ॥ ८३ ॥

क्षुद्बाधाविवशद्विरेफनिवहद्वन्द्वाङ्कणे पङ्कजे
सातङ्का शशलाञ्छने च विमुखी जीर्णे पतत्यर्णवे ।
मुक्ताशङ्कमुपैति चेदपि भवानद्यापि निद्रारसं
स्वस्थानात् पतिताङ्गनेव विवशा लक्ष्मीः कथं वर्तते ॥ ८४ ॥

रामस्य निद्रासुखपरित्यागाभावे लक्ष्मीः निराश्रया भवेदित्याह—**क्षुद्बाधेति** । क्षुद्बाधाविवशद्विरेफनिवहद्वन्द्वाङ्कणे पङ्कजे सातङ्का, जीर्णे अर्णवे पतति शशलाञ्छने च विमुखी लक्ष्मीः, अद्य अपि भवान् अपि मुक्ताशङ्कं निद्रारसम् उपैति चेत्, स्वस्थानात् पतिता अङ्गना इव विवशा कथं वर्तते ?॥ द्विरेफनिवहाः—भृङ्गसमूहाः । तेषां द्वन्द्वाङ्कणे-कलहरङ्गे । सातङ्का—सदुःखा । जीर्णे-वृद्धे । शशलाञ्छने- चन्द्रे । पतिता—भ्रष्टा । अङ्गना—कामिनी ॥ ८४ ॥

प्रातः सम्मार्जतीनां प्रतिपुरमजिरं मुग्धमुग्धेक्षणानां
हन्त स्वान्तभ्रमोऽयं रविरुचिरचितः पश्यतां हासहेतुः ।
सम्मृष्टेऽपि प्रदेशे पुनरपि तरसा रक्तसिक्तत्वबुध्या
सम्मार्गं कुर्वते ताः कथमिह रुधिरं जातमित्यद्भुतिन्यः ॥ ८५ ॥

अङ्गनानामङ्कणसम्मार्जनं वर्णयति—**प्रातरिति** । प्रातः प्रतिपुरम् अजिरं सम्मार्जतीनाम् मुग्धमुग्धेक्षणानां रविरुचिरचितः अयं स्वान्तभ्रमः पश्यतां हासहेतुः । हन्त ! ताः सम्मृष्टे अपि प्रदेशे, इह कथं रुधिरं जातम् इति अद्भुतिन्यः पुनः अपि तरसा रक्तसिक्तत्वबुद्धया सम्मार्गं कुर्वते ॥ प्रतिपुरम्—गृहेगृहे । अजिरम्—अङ्कणम् । सम्मार्जतीनाम्—सम्मार्जनं कुर्वतीनाम् । रविरुचिरचितः—सूर्यकान्तिकृतः । अद्भुतिन्यः—आश्चर्यवत्यः ॥ ८५ ॥

शोभामङ्गलसाधनं दिनमुखे लोकेन यः कीर्यते
सम्मृष्टेषु पुराङ्गणेषु सुमनस्तोमो निकामोज्ज्वलः ।
एतस्मिन् फलपूरबीजनिकरभ्रान्त्या नितान्तारुणे
सम्प्राप्तेषु शुकेषु पञ्जरशुका निर्गन्तुमुद्युञ्जते ॥ ८६ ॥

गृहाङ्कणेषु पुष्पविन्यासं वर्णयति—**शोभेति** । दिनमुखे लोकेन सम्मृष्टेषु पुराङ्गणेषु शोभामङ्गलसाधनं निकामोज्ज्वलः यः सुमनस्तोमः कीर्यते, नितान्तारुणे एतस्मिन् फलपूरबीज-

निकरभ्रान्त्या शुकेषु सम्प्राप्तेषु (सत्सु) पञ्जरशुकाः निर्गन्तुम् उद्युञ्जते ॥ लोकेन-जनेन । पुराङ्गणेषु-गृहाङ्गणेषु । सुमनस्स्तोमः-पुष्पसञ्चयः । कीर्यते-निक्षिप्यते । फलपूरः-मातुलुङ्गकः । उद्युञ्जते-उद्यताः भवन्ति ॥ ८६ ॥

अतिपरुषनिनादैराह्वयन्तः सवर्ग्या-
नुषसि विगतनिद्रा वायसाः सञ्चरन्ति ।
रविकरकरवालैः खण्डयमानस्य खण्डा-
स्तमस इति जनानां बुद्धिमुत्पादयन्तः ॥८७॥

काकसञ्चारं वर्णयति—**अतिपरुषेति** । उषसि विगतनिद्राः अतिपरुषनिनादैः सवर्ग्यान् आह्वयन्तः वायसाः, रविकरकरवालैः खण्डयमानस्य तमसः खण्डाः इति जनानां बुद्धिम् उत्पादयन्तः सञ्चरन्ति ॥ सवर्ग्यान्-समानवर्गभवान् । काकानिति भावः । वायसाः-काकाः । तमसः-अन्धकारस्य ॥ ८७ ॥

पलायत कुलायतः पतगपङ्क्तिरेकापि का
न सम्प्रति बिसं प्रति प्रसरति क्व हंसोऽपि न ।
उदञ्चति सदञ्चिते सकलकोकलोकोत्सवे
हरत्यपि दुरत्ययं तिमिरमत्र हृष्टं जगत् ॥ ८८ ॥

सर्वेषां पक्षिणां नीडान्निर्गमनमाह—**पलायतेति** । एका अपि का पतगपङ्क्तिः सम्प्रति कुलायतः न पलायत । हंसः अपि क्व बिसं प्रति न प्रसरति ? । सदञ्चिते सकलकोक-लोकोत्सवे दुरत्ययम् अपि तिमिरं हरति अत्र उदञ्चति (सति) जगत् हृष्टम् ॥ पतगपङ्क्तिः-पक्षिश्रेणिः । कुलायतः-नीडात् । बिसम्-मृणालम् । सदञ्चिते-सज्जनैः पूजिते । दुर-त्ययम्-दुष्परिहरम् । अत्र-सूर्ये । उदञ्चति-उद्गच्छति ॥ ८८ ॥

समुद्यातः सद्यस्तदिह भवदीयान्वयगुरो-
रुपस्थानं कर्तुं व्रज विजहि निद्रामनुचिताम् ।
ज्वलन्नेष प्रातः शुभशकुनसम्पादनकृते
कृतो द्वारप्रान्ते विलसतितरां दीपनिकरः ॥८९॥

सूर्योपस्थानाय रामं प्रवर्तयति—**समुद्यातः इति**। तद् सद्यः समुद्यातः इह भवदीयान्वयगुरोः उपस्थानं कर्तुं व्रज। अनुचितां निद्रां विजहि। प्रातः शुभशकुनसम्पादनकृते द्वारोपान्ते कृतः ज्वलन् एषः दीपनिकरः विलसतितराम्॥ समुद्यातः—उत्थितः। भवदीयान्वयगुरोः—तव कुलगुरोः सूर्यस्य। उपस्थानम्—पूजाम्। विजहि—त्यज। विलसतितराम्—अतिशयेन शोभते॥ ८९॥

**उदञ्चत्येतस्मिन् शतमखविरिञ्चादिविबुधै-**
**रकिञ्चिन्नयञ्चन्त्या निजमनसि तन्द्र्या परिणुते।**
**विमुञ्च त्वं चैनं कुचकलशमञ्चान्निमिकुल-**
**च्छलक्षीरोदन्वत्प्रभवनवमान्दारकलिके॥ ९०॥**

रामं मोक्तुं सीतां प्रवर्तयति—**उदञ्चतीति**। शतमखविरिञ्चादिविबुधैः अकिञ्चित् न्यञ्चन्त्या तन्द्र्या परिणुते एतस्मिन् उदञ्चति (सति) हे निमिकुलच्छलक्षीरोदन्वत्प्रभवनवमान्दारकलिके! त्वं च एनं कुचकलशमञ्चात् विमुञ्च॥ अकिञ्चित्—अनल्पम्। न्यञ्चन्त्या—अधोगच्छन्त्या। तन्द्र्या—आलस्येन। आलस्येन विनेत्यर्थः। परिणुते-स्तुते। एतस्मिन्—सूर्ये। उदञ्चति—उद्गच्छति। निमेः—तदाख्यस्य राजर्षेः कुलमिति छलं यस्य, तादृशः क्षीरोदन्वान्—क्षीरसमुद्रः प्रभवः—उद्भवस्थानम् यस्याः, तादृशी मन्दारसम्बन्धिनी कलिका—कोरकः। तस्याः सम्बुद्धिः कलिके इति। हे सीते इत्यर्थः॥ ९०॥

**प्रपञ्चे वैरिञ्चे जयतु तव सौभाग्यमहिमा**
**कलङ्कं मा यासीदुरुदुरितमापाद्य कमितुः।**
**क्षणादेनं क्षोणीदुहितरहितध्वान्तमिहिरं**
**जहीहि प्राक्सन्ध्यानियमविधये रूढविरहा॥ ९१॥**

सीतां पुनरपि प्रवर्तयति—**प्रपञ्चे इति**। वैरिञ्चे प्रपञ्चे तव सौभाग्यमहिमा जयतु। कमितुः उरु दुरितम् आपाद्य कलङ्कं मा यासीद्। क्षोणीदुहितः! (त्वं) रूढविरहा प्राक्सन्ध्यानियमविधये अहितध्वान्तमिहिरम् एनं जहीहि॥ वैरिञ्चे—ब्रह्मसम्बन्धिनि। क्षोणीदुहितः—सीते। रूढविरहा—धृतविरहदुःखा। अहितध्वान्तमिहिरम्—शत्रुतिमिरसूर्यम्। एनम्—प्रियम्। जहीहि—विमुञ्च॥ ९१॥

इत्थं सूतप्रसूतां वरगिरमुपकर्ण्यायमर्णोरुहाक्षी-
वक्षोजद्वन्द्वसन्दानितमथ शिथिलीकृत्य गात्रं कथञ्चित् ।
कर्तुं सन्ध्यामवन्ध्यां निजरतिभवनान्निर्गतः स्वर्गवापी-
सारस्यश्रीहरायाः परिसरमसरत् सारवेदी सरय्वाः ॥९२॥

रामः सान्ध्यविनिर्वहणाय सरयूसमीपं गच्छति । अथ सारवेदी अयम् इत्थं सूतप्रसूतां वरगिरम् उपकर्ण्य, अर्णोरुहाक्षीवक्षोजद्वन्द्वसन्दानितं कथञ्चित् शिथिलीकृत्य सन्ध्याम् अवन्ध्यां कर्तुं निजरतिभवनात् निर्गतः स्वर्गवापीसारस्यश्रीहरायाः सरय्वाः परिसरम् असरत् ॥ अयम्–रामः । सन्दानितम्–बद्धम् । अवन्ध्याम्–सफलाम् । स्वर्गवापी–गङ्गा । परिसरम्–समीपम् ॥९२॥

स्नात्वा पुण्येऽथ वारिण्युरुतरलहरीसारवे सारवेऽस्मिन्
नित्यानुष्ठाननिष्ठानियमितहृदयः सादरं मेदुरश्रीः ।
कृत्वा कर्माणि सर्वाण्यथ शुचितमया कान्तया कान्तशोभं
प्रासादं सप्रसादस्मितमधुरमुखः प्राप भूयोऽपि भूपः ॥९३॥

सान्ध्यं कर्म निर्वर्त्य रामः सीतया सह भूयः प्रासादं प्राप्नोति । अथ उरुतरलहरीसारवे पुण्ये सारवे अस्मिन् वारिणि स्नात्वा सादरं नित्यानुष्ठाननिष्ठानियमितहृदयः मेदुरश्रीः भूपः अथ सर्वाणि कर्माणि कृत्वा भूयः अपि शुचितमया कान्तया (सह) सप्रसादस्मितमधुरमुखः कान्तशोभं प्रासादं प्राप ॥ उरुतराभिः–बृहत्तराभिः लहरीभिः–कल्लोलैः सारवे–आरवसहिते । शब्दायमाने इत्यर्थः । सरय्वां भवम्–सारवम्, तस्मिन् । शुचितमया–अत्यन्तशुद्धया ॥९३॥

इति स वनितामेतां जातां कुले निमिजन्मना-
मधिगतगुणश्रेणीमेणीविलोलविलोचनाम् ।
उदितमदनातङ्कः स्वाङ्के सदा परिलालय-
न्नरमत समा वह्वीः प्रह्वीकृताखिलशात्रवः ॥९४॥

इति श्रीगोदवर्मविद्वद्युवराजकृते
श्रीरामचरिते महाकाव्ये
सप्तमः सर्गः

एवं सीतया सह रामः चिरमरमत इत्याह— इतीति। प्रह्वीकृताखिलशात्रवः सः, उदितमदनातङ्कः, निमिजन्मनां कुले जाताम् अधिगतगुणश्रेणीम् एणीविलोलविलोचनाम् एतां वनितां स्वाङ्के सदा परिलालयन् बह्वीः समाः इति अरमत॥ प्रह्वीकृताः—विधेयीकृताः अखिलाः शात्रवाः येन तादृशः। मदनातङ्कः—कामतापः। निमिः—जनकवंशप्रतिष्ठापकः पूर्वो राजा। समाः—वत्सरान् ॥ ९४ ॥

इति पण्डितरत्नश्रीनारायणपिषारोटिविरचितायां
श्रीरामचरितमहाकाव्यव्याख्यायां अन्वयार्थप्रबोधिन्यां
चन्द्रोदयादिवर्णनं नाम सप्तमः सर्गः



# अष्टमः सर्गः

अथ राजा दशरथो जरसा जीर्णतां गतः ।
इयेष तनये रामे निधातुं जगतीभरम् ॥ १ ॥

दशरथः पुत्रे रामे राज्यभारमर्पयितुमिच्छति । अथ जरसा जीर्णतां गतः दशरथः राजा तनये रामे जगतीभरं निधातुम् इयेष । जगतीभरम्–भूभारम् । इयेष–चकमे ॥ १ ॥

पुरोहितं समाहूय वसिष्ठं ब्रह्मनिष्ठितम् ।
उवाच वाचमुत्कृष्टां नृपः करकृताञ्जलिः ॥ २ ॥

वसिष्ठं वक्तुमुपक्रमते । नृपः ब्रह्मनिष्ठितं पुरोहितं वसिष्ठं समाहूय करकृताञ्जलिः (सन्) उत्कृष्टां वाचम् उवाच ॥ ब्रह्मनिष्ठितम्–ब्रह्मणि लीनमानसम् ॥ २ ॥

चिरेण जगतीभारं करेण धृतवानहम् ।
जरया परयेदानीं चलितात्मा न हि क्षमे ॥ ३ ॥

दशरथवचनं विवृणोति षड्भिः श्लोकैः । अहं चिरेण जगतीभारं करेण धृतवान् । इदानीं परया जरया चलितात्मा न हि क्षमे ॥ परया–दूरारूढया । क्षमे–शक्नोमि ॥ ३ ॥

पश्य मां वश्यमाधातुं जरा नारीव निर्जरा ।
शनैराहितमान्निध्या सर्वाङ्गेष्वपि चुम्बति ॥ ४ ॥

जरा निर्जरा नारी इव मां वश्यम् आधातुं शनैः आहितसान्निध्या सर्वाङ्गेषु अपि चुम्बति । पश्य ॥ निर्जरा नारी–युवतिः । देवाङ्गनेति च गम्यते ॥ ४ ॥

वशीकृते मयि मुने जरया जगतीरसः ।
क्रमेण क्षीयते भक्त्या हृदीव दुरितं सताम् ॥ ५ ॥

मुने ! जरया वशीकृते मयि, भक्त्या (वशीकृते) सतां हृदि दुरितम् इव जगतीरसः क्रमेण क्षीयते ॥ दुरितम्–पापम् । रसः–रागः ॥ ५ ॥

चञ्चलेऽतिवयस्त्वेन भुजे मम कृतस्थितिः ।
पातोन्मुखो जगद्भारः प्रत्नस्तंभ इवालयः ॥ ६ ॥

अतिवयस्त्वेन चञ्चले मम भुजे कृतस्थितिः जगद्भारः, प्रत्नस्तम्भे कृतस्थितिः आलयः इव पातोन्मुखः (भवति) । अतिवयस्त्वेन–वृद्धतया । प्रत्नः–पुरातनः । आलयः–गृहम् ॥ ६ ॥

तदहं राज्यमाधाय रामे रमयतां वरे ।
भवादृशानामास्थातुं वृत्तिमिच्छामि सत्तमाम् ॥ ७ ॥

तद् अहं रमयतां वरे रामे राज्यम् आधाय सत्तमां भवादृशानां वृत्तिम् आस्थातुम् इच्छामि ॥ सत्तमाम्–अत्युत्कृष्टाम् । भवादृशानाम्–त्वत्सदृशानां मुनीनाम् । वृत्तिम्–जीवितम् ॥ ७ ॥

राज्याभिषेकं रामस्य प्रजाहर्षप्रवर्धनम् ।
निर्वर्तयितुमर्हन्ति भवन्तः कृत्यवेदिनः ॥ ८ ॥

प्रजाहर्षप्रवर्धनं रामस्य राज्याभिषेकं कृत्यवेदिनः भवन्तः निर्वर्तयितुम् अर्हन्ति ॥ ८ ॥

इत्युक्तवन्तं राजर्षिमृषिर्ब्रह्माङ्गसम्भवः ।
प्रीत्या प्रत्याह मृदुलस्मितांशुस्नपिताधरः ॥ ९ ॥

वसिष्ठः प्रतिवक्ति । इति उक्तवन्तं राजर्षिं ब्रह्माङ्गसम्भवः ऋषिः प्रीत्या मृदुलस्मितांशुस्नपिताधरः प्रत्याह ॥ राजर्षिम्–दशरथम् । ब्रह्माङ्गसम्भवः–ब्रह्मणः पुत्रः । वसिष्ठः इत्यर्थः । प्रत्याह–प्रत्युवाच ॥ ९ ॥

मुदं तनोति मे राजन्निदं तव मनीषितम् ।
पूर्वानुसारिणी वृत्तिः सर्वनिर्वृतिकारिणी ॥ १० ॥

वसिष्ठस्य प्रतिवचनं विवृणोति त्रयोदशभिः श्लोकैः । राजन् ! इदं तव मनीषितं मे मुदं तनोति । पूर्वानुसारिणी वृत्तिः सर्वनिर्वृतिकारिणी (भवति) ॥ मनीषितम्–अभिलाषः । वृत्तिः–व्यापारः । निर्वृतिः–सुखम् ॥ १० ॥

**एतद्वंशप्रसूतानां भूभुजां भुजशालिनाम् ।**
**आर्षी वर्षीयसां वृत्ती राजन्निक्ष्वाकुवीक्षिता ॥ ११ ॥**

राजन् ! एतद्वंशप्रसूतानां भुजशालिनां वर्षीयसां भूभुजाम् आर्षी वृत्तिः इक्ष्वाकुवीक्षिता । भुजशालिनाम्–बाहुबलवताम् । वर्षीयसाम्–अतिवृद्धानाम् । भूभुजाम्–राज्ञाम् । आर्षी–ऋषिसम्बन्धिनी । वृत्तिः–जीवितम् ॥ ११ ॥

**जर्जरोऽपि जगद्भारं भवान् धारयितुं क्षमः ।**
**किं पुनस्ते वयस्त्वेतच्छ्रेयोमार्गश्रमोचितम् ॥ १२ ॥**

भवान् जर्जरः अपि जगद्भारं धारयितुं क्षमः । किंतु पुनः एतत् ते वयः श्रेयोमार्गश्रमोचितम् (भवति) ॥ जर्जरः–वृद्धः । क्षमः–समर्थः । एतद् वयः–वृद्धत्वम् । श्रेयोमार्गः–मोक्षमार्गः ॥ १२ ॥

**किंच बालोऽयमिति ते सुते मा भूदनादरः ।**
**विश्वाधिकेऽप्यविश्वासः प्रायः पित्रोः स्वपुत्रके ॥ १३ ॥**

किञ्च, अयं बालः इति सुते ते अनादरः मा भूत् । पित्रोः प्रायः विश्वाधिके अपि स्वपुत्रके अविश्वासः (भवति) ॥ पित्रोः–मातुः पितुश्च ॥ १३ ॥

**धर्तुं क्षमस्त्रिलोकीं च रामो रामगुणान्वितः ।**
**किं पुनस्तव वीर्येण स्थेयसीं पृथिवीमिमाम् ॥ १४ ॥**

रामगुणान्वितः रामः त्रिलोकीं च धर्तुं क्षमः । तव वीर्येण स्थेयसीम् इमां पृथिवीम् (धर्तुम् क्षमः इति) पुनः किम् (वक्तव्यम्) ॥ रामैः–अभिरामैः गुणैः अन्वितः । त्रिलोकीं च–लोकत्रयमपि । क्षमः–समर्थः । स्थेयसीम्–स्थिरतराम् ॥ १४ ॥

**लोके कस्तादृशो यस्तान् सुबाहुप्रमुखान् बहून् ।**
**हत्वा निशिचरान् दृप्तान् सप्ततन्तुमपालयत् ॥ १५ ॥**

यः सुबाहुप्रमुखान् बहून् दृप्तान् तान् निशिचरान् हत्वा सप्ततन्तुम् अपालयत्, तादृशः लोके कः (अस्ति) । दृप्तान्–अहङ्कृतान् । निशिचरान्–राक्षसान् । सप्ततन्तुम्–यागम् ॥ १५ ॥

**किञ्च स्वपादरजसा मुनेर्दारान् शिलामयान् ।**
**मोचयामास यः शापात् सोऽयं नूनममानुषः ॥ १६ ॥**

किञ्च, यः स्वपादरजसा शिलामयान् मुनेः दारान् शापात् मोचयामास, सः अयम् अमानुषः, नूनम् ॥ मुनेः- गौतमस्य । दारान्–पत्नीमहल्याम् ॥ १६ ॥

**किं वर्णयामस्तद्वीर्यं देवैरपि दुरानमम् ।**
**नमयामास तच्चापं यो बभञ्ज च लीलया ॥ १७ ॥**

देवैः अपि दुरानमं तत् चापं यः लीलया नमयामास, बभञ्ज च; तद्वीर्यं किं वर्णयामः । दुरानमम्–दुःखेन आनमयितुं शक्यम् ॥ १७ ॥

**सर्वलक्षणसंपन्ना लक्ष्मीरिव मधुद्विषः ।**
**स्वयंभवा भुवः कन्या धन्या यस्य सधर्मिणी ॥ १८ ॥**

मधुद्विषः लक्ष्मीः इव, सर्वलक्षणसम्पन्ना धन्या भुवः स्वयम्भवा कन्या यस्य सधर्मिणी (भवति), (तं किं वर्णयामः) ॥ मधुद्विषः–विष्णोः । धन्या–पुण्यवती । भुवः स्वयम्भुवा कन्या–अयोनिजा सीता । सधर्मिणी–सहधर्मचारिणी ॥ १८ ॥

**अर्जुनो निर्जिताशेषरावणद्रावणौषधम् ।**
**हतो येन जितोऽनेन मार्गरोधी स भार्गवः ॥ १९ ॥**

निर्जिताशेषरावणद्रावणौषधम् अर्जुनः येन हतः, स मार्गरोधी भार्गवः अनेन जितः ॥ निर्जिताः अशेषाः येन, तादृशस्य रावणस्य द्रावणे–पलायने औषधम्–कारणभूतः । अर्जुनः–कार्तवीर्यार्जुनः । भार्गवः–परशुरामः । अनेन–रामेण ॥ १९ ॥

**तदस्य वीर्यविक्रीतां वधूमिव वसुन्धराम् ।**
**अवेहि राजन्नखिलां येन त्वमसि सुप्रजाः ॥ २० ॥**

तद्, राजन्! येन त्वं सुप्रजाः असि, अस्य वीर्यविक्रीतां वधूम् इव अखिलां वसुन्धराम् अवेहि । शोभना प्रजा–सन्ततिः यस्य, सः सुप्रजाः । अवेहि–अवगच्छ ॥

**विलम्बनं वृथा सूनोरभिषेकविधौ विभो ।**
**प्रतीक्षन्ते प्रजाः सर्वा यमेव परमोत्सवम् ॥ २१ ॥**

विभो ! सर्वाः प्रजाः यं परमोत्सवम् एव प्रतीक्षन्ते। (तस्मिन्) सूनोः अभिषेकविधौ विलम्बनं वृथा ॥ २१ ॥

**आज्ञापयामि भवतो ह्याज्ञयाद्यैव भूपते ।**
**तत्सम्भारार्जनं कर्तुं सुमन्त्रादीन् सुमन्त्रिणः ॥ २२ ॥**

भूपते ! अद्य एव भवतः आज्ञया हि, तत्सम्भारार्जनं कर्तुं सुमन्त्रादीन् सुमन्त्रिणः आज्ञापयामि ॥ तत्सम्भारार्जनम्–अभिषेकसामग्रीसम्पादनम् ॥ २२ ॥

**इत्युक्त्वा नृपतेराज्ञामधिगम्य मुनीश्वरः ।**
**सम्प्रीतहृदयः सर्वा न्ययुङ्क्त नृपमन्त्रिणः ॥ २३ ॥**

वसिष्ठः तदर्थम् मन्त्रिणः नियुङ्क्ते—मुनीश्वरः इति उक्त्वा नृपतेः आज्ञाम् अधिगम्य सम्प्रीतहृदयः सर्वान् नृपमन्त्रिणः न्ययुङ्क्त ॥ अधिगम्य–लब्ध्वा । न्ययुङ्क्त–नियुक्तवान् ॥ २३ ॥

**ते तु प्रहृष्टमनसः श्रुत्वा राजनियोजनम् ।**
**अभिषेकस्य सम्भारान् सम्पादयितुमुद्यताः ॥ २४ ॥**

मन्त्रिणः सम्भारसम्पादनाय प्रवर्तन्ते । ते तु राजनियोजनं श्रुत्वा प्रहृष्टमनसः अभिषेकस्य सम्भारान् सम्पादयितुम् उद्यताः ॥ ते–मन्त्रिणः ॥ २४ ॥

**विज्ञायोपक्रमं राज्ञः पौरजानपदास्तदा ।**
**माद्यन्ति स्म मुदा सर्वे वारिदस्येव बर्हिणः ॥ २५ ॥**

पौरजानपदाः अभिषेकवृत्तान्तं श्रुत्वा सन्तुष्यन्ति । सर्वे पौरजानपदाः तदा राज्ञः उपक्रमं विज्ञाय, वारिदस्य (उपक्रमं विज्ञाय) बर्हिणः इव मुदा माद्यन्ति स्म ॥ उपक्रमम्–आरम्भम् । वारिदस्य–मेघस्य । बर्हिणः–मयूराः । माद्यन्ति स्म–सन्तुष्टाः ॥ २५ ॥

**ततः सम्भृतसम्भारं जगत्सन्तोषपोषणम् ।**
**उद्घुष्यमाणं सर्वत्र श्रुत्वा तदभिषेचनम् ॥ २६ ॥**

**आसन्ने च मुहूर्तस्य दिने दैवेन चोदिता ।**
**मन्थरा नाम कैकेयीमिदं दासी वचोऽब्रवीत् ॥ २७ ॥**

ज्ञातवृत्तान्ता मन्थरा कैकेयीं वक्तुमुपक्रमते । ततः सम्भृतसम्भारं जगत्सन्तोषपोषणं सर्वत्र उद्घुष्यमाणं तत् अभिषेचनं श्रुत्वा मुहूर्तस्य दिने आसन्ने (सति) च दैवेन चोदिता मन्थरा नाम दासी कैकेयीम् इदं वचः अब्रवीत् ॥ आसन्ने–सन्निहिते । चोदिता–प्रेरिता ॥२६–२७॥

**किमिदं न श्रुतं देवि प्रियस्तव महीपतिः ।**
**सपत्नीतनये रामे श्रियमाधातुमिच्छति ॥ २८ ॥**

दशभिः श्लोकैर्मन्थरावचनं विवृणोति। देवि! इदं किं न श्रुतम् । तव प्रियः महीपतिः सपत्नीतनये रामे श्रियम् आधातुम् इच्छति ॥ सपत्न्याः-कौसल्यायाः तनये पुत्रे । श्रियम्–राज्यलक्ष्मीम् ॥ २८॥

**पश्य सुन्दरि निश्शङ्कं पक्षपातं क्षमापतेः ।**
**किं ते न पुत्रो राज्यार्हः सुतः पितृधने समाः ॥ २९ ॥**

सुन्दरि! निश्शङ्कं क्षमापतेः पक्षपातं पश्यां ते पुत्रः राज्यार्हः न किम्?। सुताः पितृधने समाः (भवन्ति) ॥ क्षमापतेः –राज्ञः । ते–तव ॥ २९ ॥

**रामाधीने क्षमाचक्रे प्रेमापेते च पार्थिवे ।**
**हा कष्टं राजपत्नीति नामशेषा भविष्यसि ॥ ३० ॥**

क्षमाचक्रे रामाधीने (सति) पार्थिवे च प्रेमापेते (सति) (त्वम्) राजपत्नी इति नामशेषा भविष्यसि । हा कष्टम् । क्षमाचक्रे–भूमण्डले । प्रेमापेते–प्रेमरहिते । नाम शेषं यस्याः, तादृशी ॥ ३० ।

**समृद्धं पदमासाद्य प्रजाभिरनुसेवितः ।**
**सपत्नीनयनानन्दं स कर्ता सहसे कथम् ॥ ३१ ॥**

सः समृद्धं पदम् आसाद्य प्रजाभिः अनुसेवितः सपत्नीनयनानन्दं कर्ता । (त्वम्) कथं सहसे ? ॥ पदम्—स्थानम् । कर्ता—करिष्यति ॥ ३१ ॥

**किमिदानीमुदासीना पश्यसि श्रेय आत्मनः ।**
**काले स्वार्थमसम्पाद्य लोकः शोकाय कल्पते ॥ ३२ ॥**

(त्वम्) इदानीम् आत्मनः श्रेयः किम् उदासीना पश्यसि ? । लोकः काले स्वार्त्थम् असम्पाद्य शोकाय कल्पते ॥ लोकः—जनः ॥ ३२ ॥

**किं सुखं भुवि नारीणां पुत्रस्याभ्युदयात् परम् ।**
**तव तद्दुर्लभं मन्ये यस्यां न स्नेहितः पतिः ॥ ३३ ॥**

भुवि नारीणां पुत्रस्य अभ्युदयात् परं सुखं किम् ? । यस्यां पतिः न स्नेहितः, (तस्याः) तव तद् दुर्लभं मन्ये ॥ स्नेहितः—सञ्जातस्नेहः । तद्—पुत्राभ्युदयरूपं सुखम् ॥ ३३ ॥

**मयि प्रेमाधिको राजा मयैव रमतेऽनिशम् ।**
**इति मिथ्यैव मे मुग्धे मिथः कथयसे मुहुः ॥ ३४ ॥**

मुग्धे ! राजा मयि प्रेमाधिकः मया (सह) एव अनिशं रमते । इति मिथः मे मुहुः मिथ्या एव कथयसे । मिथः—रहसि । मिथ्या—असत्यम् ॥ ३४ ॥

**सौभाग्यं यदि तत् प्राहुः कान्तो येन नियन्त्रितः ।**
**अनन्याकृष्टहृदयः प्राप्नोति प्रेम निस्तुलम् ॥ ३५ ॥**

येन कान्तः नियन्त्रितः, (तत्) यदि (अस्ति,) तत् सौभाग्यम् आहुः । अनन्याकृष्ट-हृदयः निस्तुलं प्रेम प्राप्नोति ॥ येन—सौभाग्येन । अन्यया आकृष्टं हृदयं यस्य न भवति, तादृशः ॥ ३५ ॥

**तदिदानीमनुष्ठेयं शृणु सुन्दरि वच्मि ते ।**
**मा शङ्कथा मामीर्ष्यन्ती त्वयि स्नेहोऽत्र कारणम् ॥ ३६ ॥**

तत्, सुन्दरि ! इदानीम् अनुष्ठेयं ते वच्मि । शृणु । ईर्ष्यन्ती मां मा शङ्कथाः । अत्र त्वयि स्नेहः कारणम् ॥ अनुष्ठेयम्–कर्तव्यम् । ते–तुभ्यम् । ईर्ष्यन्ती–असूयन्ती ॥ ३६ ॥

**उभयं साधनीयं ते सुभगा यदि साम्प्रतम् ।**
**वने निवासो रामस्य भरतस्याभिषेचनम् ॥ ३७ ॥**

(त्वम्) यदि सुभगा, (तर्हि) रामस्य वने निवासः, भरतस्य अभिषेचनम् (इति) उभयं साम्प्रतं ते साधनीयम् । सुभगा–प्रिया ॥ ३७ ॥

**इत्यादिभेद[वचनैः समान]*प्रेम पुत्रयोः ।**
**कम्पयामास कैकेय्याः कथञ्चिन्मन्थरा मनः ॥ ३८ ॥**

मन्थराया भेदोक्तिः फलितेत्याह—इत्यादीति । इत्यादिभेदवचनैः मन्थरा, पुत्रयोः समानप्रेम केकेय्याः मनः कथञ्चित् कम्पयामास । पुत्रयोः–रामभरतयोः । अस्मिन् पद्ये "वचनैः समान" इति षड् अक्षराणि तालीपत्रग्रन्थे न लिखितानि । तानि मयैव अत्रयोजितानि ॥ ३८ ॥

**मन्थरामन्त्रमन्थानमथ्यमाने मनोम्बुधौ ।**
**कालकूट इवामर्षः प्रादुरासीन्मृगीदृशः ॥ ३९ ॥**

कैकेय्याः मनसि कोपो जायते । मन्थरामन्त्रमन्थानमथ्यमाने मृगीदृशः मनोम्बुधौ कालकूटः इव अमर्षः प्रादुरासीत् ॥ मन्थारायाः मन्त्रः–गुह्यवादः एव यो मन्थानः–मन्थानदण्डः, तेन मथ्यमाने मृगीदृशः–कैकेय्याः । मनः एव अम्बुधिः, तस्मिन् । अमर्षः–कोपः । प्रादुरासीत्–प्रत्यक्षतां गतः ॥ ३९ ॥

**निष्ठुरे भूमिपृष्ठे सा शयाना शयनालये ।**
**अवेष्टत रुषाविष्टा वातच्छिन्नेव मल्लिका ॥ ४० ॥**

कैकेयी कोपात् भूमौ शयाना वेष्टते । रुषा आविष्टा सा वातच्छिन्ना मल्लिका इव निष्ठुरे भूमिपृष्ठे शयाना अवेष्टत । निष्ठुरे–परुषे । अवेष्टत–विचेष्टितवती ॥ ४० ॥

---

* अक्षरषट्कम् ग्रन्थे नास्ति ।

अथागतो महीपालस्तां विलोक्य तथाविधाम् ।
किमेतदिति सम्भ्रान्तः सान्त्वयामास सामभिः ॥ ४१ ॥

दशरथः तथाविधां तां दृष्ट्वा सम्भ्रान्तः सान्त्वयति । अथ आगतः महीपालः तथाविधां तां विलोक्य "एतत् किम्" इति सम्भ्रान्तः सामभिः सान्त्वयामास ॥ सामभिः—सान्त्ववचनैः । सान्त्वयामास—आश्वासयामास ॥ ४१ ॥

ततः पृष्टा निजेष्टं सा जगाद जगदीश्वरम् ।
आकर्ण्य कर्णवन्तो न सहन्ते यदरुन्तुदम् ॥ ४२ ॥

कैकेयी स्वमभीष्टं कथयति । ततः पृष्टा सा, अरुन्तुदं यद् आकर्ण्य कर्णवन्तो न सहन्ते, (तत्) निजेष्टं जगदीश्वरं जगाद ॥ अरुन्तुदम्—मर्मभेदकम् । जगदीश्वरम्—लोकनाथं दशरथम् ॥ ४२ ॥

पूर्वमुर्वीभृता तेन दत्तं यच्च वरद्वयम् ।
अयाचिष्ट तदप्येषा निराकरणशङ्कया ॥ ४३ ॥

कैकेयी पूर्वदत्तं वरद्वयं याचते । पूर्वम् उर्वीभृता येन यद् च वरद्वयं दत्तम् (आसीत्) तद् अपि निराकरणशङ्कया—एषा अयाचिष्ट ॥ उर्वीभृता—राज्ञा । तेन दशरथेन । निराकरणशङ्कया—प्रत्याख्यानभयात् ॥ ४३ ॥

निशम्य वाञ्छितं तस्यास्तादृशं हरिणीदृशः ।
प्रत्युवाच शनैरेनां सत्यसन्धो महीपतिः ॥ ४४ ॥

दशरथः कैकेयीं प्रतिवक्ति सत्यसन्धः महीपतिः हरिणीदृशः तस्याः तादृशं वाञ्छितं निशम्य शनैः एनां प्रत्युवाच ॥ तस्याः—कैकेय्याः । शनैः—मन्दम् ॥ ४४ ॥

इन्दुसुन्दरमेतत्ते मुखं सुखकरं मम ।
कथमेवंविधां वाणीं प्रसूते शोककारिणीम् ॥ ४५ ॥

अथ अष्टभिः श्लोकैः दशरथस्य प्रतिवचनं विवृणोति—इन्दुसुन्दरमित्यादिभिः । इन्दुसुन्दरं मम सुखकरम् एतत् ते मुखं शोककारिणीम् एवंविधां वाणीं कथं प्रसूते ॥ ४५ ॥

आह्लादिनी मनोवृत्तेश्चन्द्राद्भव्या तु चन्द्रिका ।
असाम्प्रतमिदं मन्ये वदनं ते विषोपमम् ॥ ४६ ॥

चन्द्राद् भव्या तु चन्द्रिका मनोवृत्तेः आह्लादिनी । ते वदनं विषोपमम् । इदम् असाम्प्रतं मन्ये ॥ भव्या–भवन्ती । वदनम्–वचनम् । असाम्प्रतम्–अयुक्तम् ॥ ४६ ॥

जाने सुन्दरि ते रामे वात्सल्यं भरतादपि ।
इदानीमीदृशं जातं मनः केन तवानघे ॥ ४७ ॥

सुन्दरि ! रामे ते वात्सल्यं भरताद् अपि (अधिकं) जाने । अनघे ! इदानीं तव मनः केन ईदृशं जातम् ॥ अनघे–अपापे । ईदृशम् –वात्सल्यहीनम् ॥ ४७ ॥

क्षणं सहे न रामस्य वियोगं गुणवारिधेः ।
भवदाननचन्द्रस्येवातिस्नेहेन यः श्रितः ॥ ४८ ॥

अतिस्नेहेन यः श्रितः, (तस्य) भवदाननचन्द्रस्य इव गुणवारिधेः रामस्य वियोगं क्षणम् (अहं) न सहे ॥ ४८ ॥

प्रार्थये भवतीमेतदेकमेव वरानने ।
अप्रियं सर्वलोकानामस्माकमपि मा कृथाः ॥ ४९ ॥

वरानने ! भवतीम् एतद् एकम् एव प्रार्थये । सर्वलोकानाम् अस्माकम् अपि अप्रियं मा कृथाः ॥ वरानने–सुमुखि । मा कृथाः–मा कुरुष्व ॥ ४९ ॥

प्रियस्तव ममाप्येषः प्रजारञ्जनतत्परः ।
दुष्प्रवेशे महारण्ये हा कथं त्यज्यते सुतः ॥ ५० ॥

तव मम अपि प्रियः प्रजारञ्जनतत्परः एषः सुतः दुष्प्रवेशे महारण्ये कथं त्यज्यते । हा ! ॥ दुष्प्रवेशे–दुःखेन प्रवेष्टुं शक्ये । महारण्ये–घोरवने ॥ ५० ॥

गते वयसि मे दिष्टया लब्धः सूनुर्गुणाधिकः ।
प्रवासे तस्य नः प्राणाः प्रयास्यन्ति न संशयः ॥ ५१ ॥

गते वयसि दिष्ट्या गुणाधिकः सूनुः मे लब्धः । तस्य प्रवासे नः प्राणाः प्रयास्यन्ति । संशयः न ॥ वयसि–यौवने । दिष्ट्या–भाग्येन । प्रवासे–देशान्तरवासे ॥ ५१ ॥

**तत् प्रसीद वरारोहे मां मामज्जय सुन्दरि ।**
**अपारे शोकरूपेऽस्मिन्नकूपारे कृपानिधे ॥ ५२ ॥**

वारारोहे! तत् प्रसीद । सुन्दरि, कृपानिधे! माम् अपारे शोकरूपे अस्मिन् अकूपारे मा आमज्जय ॥ अपारे–अविद्यमानपरतीरे । अकूपारे–समुद्रे ॥ ५२ ॥

**इत्यादि विविधं राजा जल्पन्नप्यतिविह्वलः ।**
**न निवर्तयितुं कान्तां शशाक क्रूरनिश्चयात् ॥ ५३ ॥**

दशरथेन सान्त्विता अपि कैकेयी क्रूरनिश्चयात् न निवर्तते । इत्यादि विविधं जल्पन् अपि अतिविह्वलः राजा कान्तां क्रूरनिश्चयात् निवर्तयितुं न शशाक । अतिविह्वलः–अत्यन्तदुःखितः ॥ ५३ ॥

**निराकर्तुमशक्तस्तद्वचः सत्येन यन्त्रितः ।**
**अशेत व्याकुलो राजा विफलीभूतयाचनः ॥ ५४ ॥**

राजा दशरथो व्याकुलः शेते । सत्येन यन्त्रितः तद्वचः निराकर्तुम् अशक्तः राजा विफलीभूतयाचनः व्याकुलः अशेत ॥ यन्त्रितः–बद्धः । तद्वचः–कैकेय्याः वचनम् ॥ व्याकुलः–दुःखितः । अशेत–शयितवान् ॥ ५४ ॥

**चिन्ताकल्लोलसन्ताने स मग्नः शोकसागरे ।**
**जाग्रदेव त्रियामां तां कल्पकल्पामजीगमत् ॥ ५५ ॥**

दशरथो दुःखेन निर्निद्रः एव रात्रिं नयति । चिन्ताकल्लोलसन्ताने शोकसागरे मग्नः सः जाग्रत् एव (सन्) कल्पकल्पां तां त्रियामाम् अजीगमत् ॥ कल्पकल्पाम्–ब्रह्मदिनसदृशीम् । त्रियामाम्–रात्रिम् ॥ ५५ ॥

प्रभाते राममाहूय कैकेयी क्रूरनिश्चया ।
आदेशमवदद्राज्ञो मौनानुमतिनिश्चितम् ॥ ५६ ॥

प्रभाते कैकेयी रामाय दशरथस्य नियोगं वदति । क्रूरनिश्चया कैकेयी प्रभाते रामम् आहूय मौनानुमतिनिश्चितं राज्ञः आदेशम् अवदत् ॥ आदेशम्–नियोगम् ॥ ५६ ॥

शृणु पुत्र महाभाग पिता तव महीपतिः ।
शास्ति त्वां वनवासाय भरतं राज्यगुप्तये ॥ ५७ ॥

दशरथस्य नियोगं विवृणुते - शृण्विति । महाभाग पुत्र ! शृणु । तव पिता महीपतिः त्वां वनवासाय भरतं राज्यगुप्तये (च) शास्ति ॥ राज्यगुप्तये–राज्यरक्षायै । शास्ति–नियुङ्क्ते ॥ ५७ ॥

इदानीमेव तद्राज्ञः शासनं कुरु माचिरम् ।
शुभोदर्का भविष्यन्ति पितुराज्ञानुवर्तिनः ॥ ५८ ॥

कैकेयी रामं वनवासाय प्रेरयति—इदानीमिति । इदानीम् एव माचिरं तद् राज्ञः शासनं कुरु । पितुः आज्ञानुवर्त्तिनः शुभोदर्काः भविष्यन्ति ॥ माचिरम्–अविलम्बम् । शासनम्–अज्ञाम् । शुभोदर्काः–शोभनभाविफलाः ॥ ५८ ॥

उषित्वा कानने तावन्नव पञ्च च वत्सरान् ।
अधिगच्छ पुना राज्यं गच्छ भद्राणि सन्तु ते ॥ ५९ ॥

चतुर्दशवर्षानन्तरं राज्यप्राप्तिरित्याह—उषित्वेति । कानने तावत् नव पञ्च च वत्सरान् उषित्वा पुनः राज्यम् अधिगच्छ । गच्छ । भद्राणि ते सन्तु ॥ अधिगच्छ–लभस्व । भद्राणि–मङ्गलानि ॥ ५९ ॥

इत्युक्तं पितुरादेशं तया केकयकन्यया ।
अनुग्रहोऽयमिति स प्रीत्या जग्राह राघवः ॥ ६० ॥

रामः पितुर्नियोगमङ्गीकरोति । इति तया केकयकन्यया उक्तं पितुः आदेशम् "अयम् अनुग्रहः" इति प्रीत्या सः राघवः जग्राह ॥ जग्राह–स्वीकृतव[illegible] ॥ ६० ॥

ततः प्रदक्षिणीकृत्य पितरौ प्रीतिसंयुतः ।
नमस्कृत्य मुहुर्धीरो जगाम रघुनन्दनः ॥ ६१ ॥

रामः पितरौ प्रदक्षिणीकृत्य प्रणम्य प्रतिष्ठते । ततः धीरः रघुनन्दनः प्रीतिसंयुतः पितरौ प्रदक्षिणीकृत्य मुहुः नमस्कृत्य जगाम ॥ पितरौ—मातापितरौ ॥ ६१ ॥

व्रजन्तमनुवव्राज साश्रुणा चक्षुषैव तम् ।
इच्छन्नपि स सर्वाङ्गैः शोकवेगालसो नृपः ॥ ६२ ॥

दशरथः चक्षुषा राममनुगच्छति । सः नृपः व्रजन्तं तं सर्वाङ्गैः (अनुव्रजितुम्) इच्छन् अपि शोकवेगालसः (सन्) साश्रुणा चक्षुषा एव अनुवव्राज ॥ अनुवव्राज—अनुगतवान् ॥

विहाय पितरं वृद्धं गच्छसि त्वं कुतः सुत ।
इत्यादि मुहुरुत्कण्ठं विललाप महीपतिः ॥ ६३ ॥

दशरथो विलपति । "सुत ! त्वं वृद्धं पितरं विहाय कुतः गच्छसि" इत्यादि मुहुः महीपतिः उत्कण्ठं विललाप ॥ ६३ ॥

रामो विपिनवासाय जिगांसुश्चापबाणवान् ।
कौसल्यासविधं प्राप्य तस्याः प्राणंस्त पादयोः ॥ ६४ ॥

रामः कौसल्यां प्रणमति । रामः विपिनवासाय जिगांसुः चापबाणवान् कौसल्यासविधं प्राप्य तस्याः पादयोः प्राणंस्त ॥ जिगांसुः—गन्तुमिच्छुः । प्राणंस्त-स्वयं प्रणतवान् ॥ ६४ ॥

[ कुलकम् ]

विज्ञाप्य जनकादेशं सद्यो विधुरमानसाम् ।
मुञ्चन्तीं बाष्पमत्युष्णं रुदन्तीं कुररीमिव ॥ ६५ ॥

विपरीतो विधिर्हा हा किमत्र करवामहै ।
विलपन्तीमिति मुहुर्जिगांसन्तीं सह स्वयम् ॥ ६६ ॥

अनुनीय कथञ्चित्तामनुमान्य च मातरम् ।
आलिङ्गितस्तया गाढमाघ्रातश्च पुनः पुनः ॥ ६७ ॥

कृतस्वस्त्ययनाचारस्तथैव च सुमित्रया ।
स्नापितः प्रणतो वाष्पैर्निर्गलद्भिर्निरर्गलम् ॥ ६८ ॥

निवारितेनापि मुहुर्लक्ष्मणेन च सीतया ।
अन्वीयमानः काकुत्स्थः प्रस्थातुमुपचक्रमे ॥ ६९ ॥

रामस्य प्रस्थानोपक्रमं पञ्चभिः श्लोकैर्वर्णयति—**विज्ञाप्येत्यादिभिः** । काकुत्स्थः जनकादेशं विज्ञाप्य सद्यः विधुरमानसाम् उष्णं बाष्पं मुञ्चन्तीं कुररीम् इव रुदन्तीं 'विधिः विपरीतः, हा हा! अत्र किं करवामहै' इति मुहुः विलपन्तीं स्वयं सह जिगांसन्तीं तां मातरं कथञ्चिद् अनुनीय अनुमान्य च तथा गाढम् आलिङ्गितः पुनः पुनः आघ्रातः च तथा एव सुमित्रया च कृतस्वस्त्ययनाचारः प्रणतः निरर्गलम् निर्गलद्भिः बाष्पैः स्नपितः मुहुः निवारितेन अपि लक्ष्मणेन (निवारितया अपि) सीतया च अन्वीयमानः प्रस्थातुम् उपचक्रमे ॥

काकुत्स्थः—रामः । जनकादेशम्—पितृनियोगम् । विधुरम्—दुःखितं मानसं यस्याः, तादृशीम् । जिगांसन्तीम्—गन्तुमिच्छन्तीम् । अनुनीय—आश्वास्य । अनुमान्य—अनुमतिं दापयित्वा । अन्वीयमानः—अनुगम्यमानः । उपचक्रमे—प्रवृत्तः ॥ ६५, ६६, ६७ ६८, ६९ ॥

सुमन्त्रानीतमारुह्य रथं स रथिनां वरः ।
निर्ययौ सह सर्वेषां बाष्पैः साकेतवासिनाम् ॥ ७० ॥

रामः रथमारुह्य निर्गच्छति । रथिनां वरः सः सुमन्त्रानीतं रथम् आरुह्य सर्वेषां साकेतवासिनां बाष्पैः सह निर्ययौ ॥ साकेतम्—अयोध्या ॥ ७० ॥

हाहाकरेण पौराणां योऽभूत् कोलाहलस्तदा ।
स एव पित्रोर्मूर्च्छायां हालाहल इवाभवत् ॥ ७१ ॥

पौराणां कोलाहलं श्रुत्वा मातापितरौ मूर्च्छां गच्छतः। तथा पौराणां हाहाकारेण यः कोलाहलः अभूत्, सः एव पित्रोः मूर्च्छायां हालाहलः इव अभवत्॥ मूर्च्छायाम्–मोहे। हालाहलः–विषम्॥ ७१॥

**निमीलितमहाराजा पुरी नीरामचन्द्रका।**
**न रेजे सिंहिकापुत्रग्रस्तमित्रमिवाम्बरम्॥ ७२॥**

अयोध्यापुरी तमसि मग्ना भवति। निमीलितमहाराजा नीरामचन्द्रका पुरी सिंहिकापुत्रग्रस्तमित्रं (निश्चन्द्रम्) अम्बरम् इव न रेजे॥ निमीलितः–मूर्छया निमीलितनेत्रः महाराजः–दशरथः यस्यां, तादृशी। निर्गतः रामः चन्द्रः इव यस्याः, तादृशी। सिंहिकापुत्रः–राहुः, तेन ग्रस्तः मित्रः–सूर्यः यस्मिन्, तादृशम्। अम्बरम्–आकाशम्। न रेजे–न बभौ॥ ७२॥

**शपन्तो मन्थरां केचित् केऽपि केकयनन्दिनीम्।**
**दैवमेवापरे पौरास्तमन्वयुरिनान्वयम्॥ ७३॥**

पौराः राममनुगच्छन्ति। पोराः केचित् मन्थरां शपन्तः, केऽपि केकयनन्दिनीं (शपन्तः), अपरे दैवम् एव (शपन्तः) इनान्वयं तम् अन्वयुः॥ शपन्तः–आक्रोशन्तः। इनः–सूर्यः, तस्य अन्वयः–वंशः यस्य; तम्। तम्–रामम्। अन्वयुः–अनुगतवन्तः॥ ७६॥

**राघवस्तु रथेनैव सीतालक्ष्मणसंयुतः।**
**गंगातीरमुपागम्य मुनिवेषमदीधरत्॥ ७४॥**

रामादयो मुनिवेषं गृह्णन्ति। राघवः तु सीतालक्ष्मणसंयुतः (सन्) गङ्गातीरम् उपागम्य मुनिवेषम् अदीधरत्॥ अदीधरत्–अधारयत्॥ ७४॥

**बिभ्रती कृतनिश्वासं कर्कशं वल्कलं वधूः।**
**प्रथमं हृदये भर्तुः सूचीखननमाचरत्॥ ७५॥**

वल्कलं धारयन्ती सीता रामस्य मनसि प्रथमं पीडां जनयति । कृतनिश्वासं कर्कशं वल्कलं बिभ्रती वधूः, प्रथमं भर्तुः हृदये सूचीखननम् आचरत् ॥ वधूः–सीता । भर्तुः–रामस्य । सूचीखननम्–सूचीवेधम् । आचरत्–अकरोत् ॥ ७५ ॥

अनुव्रजन्तीं जनतामतिसन्धाय तत्र सः ।
सुमन्त्रं च निवर्त्यागात् सीतासौमित्रिसंयुतः ॥ ७६ ॥

रामः पौरान् सुमन्त्रं च निवर्तयति । तत्र सः अनुव्रजन्तीं जनताम् अतिसन्धाय सुमन्त्रं च निवर्त्य सीतालक्ष्मणसंयुतः (सन्) अगात् ॥ तत्र–गङ्गातीरे । जनताम्–जनसमूहम् । अतिसन्धाय–वञ्चयित्वा । अगात्–गतवान् ॥ ७६ ॥

गुहमालोक्य दयितं निषादकुलनायकम् ।
नीतया तेन नावा तां ततार सुरनिम्नगाम् ॥ ७७ ॥

रामो गङ्गां तरति । निषादकुलनायकं दयितं गुहम् आलोक्य नावा तां सुरनिम्नगां ततार ॥ निषादः–धीवरः, तत्कुलनायकम् । दयितम्–प्रियम् । नावा–तरण्या । सुरनिम्नगाम्–गङ्गाम् ॥ ७७ ॥

[ कलापकम् ]

कियद्दूरमनुप्राप्तः प्रीतिभाजा गुहेन सः ।
शवरीभिर्गलच्चारुकबरीभिर्विलोकितः ॥ ७८ ॥

आलोक्य सुकुमाराङ्गीं वधूमात्मानुगामिनीम् ।
निःश्वसन् नितरां मार्गे दुर्गमे शर्करादिभिः ॥ ७९ ॥

चिरं चरणचारेण चरंश्चारुकलेवरः ।
करुणारसमध्वन्यैरत्यन्तमनुभावयन् ॥ ८० ॥

आससाद ससादाङ्गः सीतासोदरसंयुतः ।
विचित्रकूटं रत्नौघैश्चित्रकूटं महीधरम् ॥ ८१ ॥

सीतालक्ष्मणसंयुतस्य रामस्य चित्रकूटगमनं वर्णयति—**कियादित्यादिभिश्चतुर्भिः श्लोकैः**। चारुकलेबरः सीतासोदरसंयुतः सः, प्रीतिभाजा गुहेन कियद्दूरम् अनुप्राप्तः, गलच्चारुकबरीभिः शबरीभिः विलोकितः, शर्करादिभिः नितरां दुर्गमे मार्गे आत्मानुगामिनीं सुकुमाराङ्गीं वधूम् आलोक्य निश्श्वसन् चिरं चरणचारेण चरन्, अध्वन्यैः अत्यन्तं करुणारसम् अनुभावयन् ससादाङ्गः रत्नौघैः विचित्रकूटं चित्रकूटं महीधरम् आससाद ॥ सः–रामः। कियद्दूरम्–किञ्चिद्दूरम्। गलच्चारुकबरीभिः–लम्बमानसुन्दरकेशबन्धरचनाभिः। शर्करा–अश्मखण्ड-सङ्कीर्णा मृत्। तदादिभिः। वधूम्–प्रियां सीताम्। अध्वन्यैः–पथिकैः। सादेन–क्लमेन सह वर्तते इति ससादम् अङ्गं यस्य, तादृशः। विचित्राणि कूटानि–शिखराणि यस्य तादृशम्। महीधरम्–पर्वतम्। आससाद–प्राप ॥ ७८, ७९, ८०, ८१ ॥

**भरद्वाजमृषिं तत्र दृष्ट्वा तेन सुसत्कृतः।**
**उवास शासनादस्य सुखं सभ्रातृवल्लभः ॥ ८२ ॥**

रामश्चित्रकूटे ससुखं वसति। तत्र (रामः) भरद्वाजम् ऋषिम् दृष्ट्वा तेन सुसत्कृतः अस्य शासनात् सभ्रातृवल्लभः सुखम् उवास ॥ तत्र–चित्रकूटे ॥ ८२ ॥

**नानाविधाद्भुतालोककौतुकोत्फुल्लचेतसा।**
**रेमे स रामया रामः सादरं सोदरार्चितः ॥ ८३ ॥**

रामस्य ससुखवासमेवाह—**नानेति**। सः रामः सादरं सोदरार्चितः नानाविधाद्भुता-लोककौतुकोत्फुल्लचेतसा रामया (सह) रेमे ॥ अद्भुतालोकः–आश्चर्यदर्शनम्। रामया–रमण्या सीतया ॥८३ ॥

**ततो राजा गते रामे सुतापायसुतापितः।**
**आसन्नं मुनिशापानुभूतिकालममन्यत ॥ ८४ ॥**

दशरथो मुनिशापमनुस्मरति। ततः रामे गते सुतापायसुतापिताः राजा मुनिशापानु-भूतिकालम् आसन्नम् अमन्यत॥ पुरा दशरथशरपातेन मृतपुत्रो मुनिः, त्वमपि अहमिव पुत्रदुःखेन मृतिं प्राप्स्यसीति तं शप्तवान्। स शापो दशरथस्य स्मृतिविषयतां गतः इति भावः ॥ ८४ ॥

**हा राम राम क्वासीति विलपन्विह्वलेन्द्रियः ।**
**मिमील नयनं राजा पुनरुन्मेषवर्जितम् ॥ ८५ ॥**

दशरथस्य चरमगतिमाह—**हा रामेति**। राजा, "हा राम ! क्व असि" इति विलपन् विह्वलेन्द्रियः नयनं पुनरुन्मेषवर्जितं मिमील ॥ मृतः इति भावः ॥ ८५ ॥

**वर्णितेन सुधर्मायामप्सरोभिरनारतम् ।**
**यशसा निजपुत्रस्य मुमुदे स सवासवः ॥ ८६ ॥**

दशरथः स्वर्गं गत इत्याह—**वर्णितेनेति**। सः सवासवः, सुधर्मायाम् अप्सरोभिः अनारतं वर्णितेन निजपुत्रस्य यशसा मुमुदे ॥ सः—दशरथः। सवासवः—इन्द्रसहितः। सुधर्मायाम्—देवसभायाम्। अप्सरोभिः—उर्वशीमुखाभिः स्वर्वेश्याभिः। यशसा—कीर्त्या। मुमुदे—प्रीतः ॥ ८६ ॥

**दिदृक्षयेव देवानां पत्युः सख्युर्दिवं गते ।**
**राज्ञी संज्ञाविहीनासीत् क्षणं सुप्तेव सा पुरी ॥ ८७ ॥**

अयोध्यायाः शोकमूकतामाह—**दिदृक्षयेवेति**। राज्ञि ! सख्युः देवानां पत्युः दिदृक्षया इव दिवं गते (सति) सा पुरी क्षणं सुप्ता इव संज्ञाविहिना आसीत् ॥ सख्युः—सुहृदः। इन्द्रो दशरथस्य सुहृदिति प्रसिद्धम्। देवानां पत्युः—इन्द्रस्य। दिदृक्षया—द्रष्टुमिच्छया। दिवम्—स्वर्गम्। सा पुरी—अयोध्या। संज्ञाविहिना—बोधरहिता ॥ ८७ ॥

**हाहाकारविनाभूतो न कश्चिदपि तत्पदे ।**
**शोकान्धकूपे पतितो निर्वाणे नृपदीपके ॥ ८८ ॥**

तत्र सर्वेऽपि आक्रन्दितुमारभन्तेत्याह—**हाहेति**। नृपदीपके निर्वाणे (सति) तत्पदे शोकान्धकूपे पतितः कश्चित् अपि हाहाकारविनाभूतः न (आसीत्) ॥ नृप एव दीपकः—प्रशस्तदीपः, तस्मिन्। निर्वाणे—अस्तं गते। तत्पदे—तस्य स्थाने। अयोध्यायामिति भावः ॥ ८८ ॥

ततो वसिष्ठप्रमुखा मुनयो मन्त्रिभिः सह ।
आनिन्युर्मातुलकुलाद् भरतं पुरतो गतम् ॥ ८९ ॥

वसिष्ठादयः भरतं मातुलकुलादानयन्ति। ततः वसिष्ठप्रमुखाः मुनयः मन्त्रिभिः सह, मातुलकुलात् पुरतः गतं भरतम् आनिन्युः॥ पुरतः–पूर्वम्। आनिन्युः–आनीतवन्तः ॥ ८९ ॥

कारयित्वा च राज्ञस्तं शेषकृत्यान्यशेषतः ।
शासितुं जगतीचक्रं चोदयामासुरञ्जसा ॥ ९० ॥

ते राज्यभरणे भरतं चोदयन्ति। (ते) अञ्जसा राज्ञः शेषकृत्यानि अशेषतः कारयित्वा जगतीचक्रं शासितुं तं चोदयामासुः॥ अञ्जसा–द्रुतम्। शेषकर्माणि–और्ध्वदैहिकानि। जगतीचक्रम्–भूमण्डलम्। तम्–भरतम्। चोदयामासुः–प्रेरयामासुः ॥ ९० ॥

अनिच्छन् सोऽपि राज्याय शत्रुघ्नेन समन्वितः ।
आनेतुमुत्सुको रामं दीनः काननमन्वगात् ॥ ९१ ॥

भारतस्य वनगमनमाह—**अनिच्छन्निति**। राज्याय अनिच्छन् दीनः सः अपि शत्रुघ्नेन समन्वितः रामम् आनेतुम् उत्सुकः काननम् अन्वगात्॥ सः–भरतः ॥ ९१ ॥

[ विशेषकम् ]

मुनिभिर्ब्रह्मपुत्राद्यैः सुमन्त्राद्यैश्च मन्त्रिभिः ।
द्विविधैरपि सम्पूर्णः पौरैर्जानपदैर्जनैः ॥ ९२ ॥

वैधव्यमात्रफलदां सर्वसन्तापकारिणीम् ।
मातुश्चेष्टामनुस्मृत्य क्रोधशोकविदीर्णधीः ॥ ९३ ॥

चतुरङ्गबलोपेतस्तीर्त्वा सुरनदीं जवात् ।
चित्रकूटमनुप्राप्य ददर्श भरतोऽग्रजम् ॥ ९४ ॥

भरतस्य रामसमीपप्राप्तिमाह त्रिभिः श्लोकैः। भरतः, ब्रह्मपुत्राद्यैः मुनिभिः च (सह) पौरैः जानपदैः द्विविधैः अपि जनैः सम्पूर्णः वैधव्यमात्रफलदां सर्वसन्तापकारिणीं मातुः चेष्टाम

अनुस्मृत्य क्रोधशोकविदीर्णधीः चतुरङ्गबलोपेतः सुरनदीं तीर्त्वा जवात् चित्रकूटम् अनुप्राप्य अग्रजं ददर्श ॥ ब्रह्मपुत्राद्यैः–वसिष्ठाद्यैः । मातुः–कैकेय्याः । सुरनदीम्–गङ्गाम् । अग्रजम्–ज्येष्ठं रामम् ॥ ९२, ९३, ९४ ॥

**नमस्कृत्य पदे तस्य लक्ष्मणेनाभिवन्दितः ।**
**वार्तां व्यजिज्ञपत् पैत्रीं गद्गदस्खलिताक्षरम् ॥ ९५ ॥**

भरतो रामाय पितुर्निर्याणं निवेदयति । (भरतः) तस्य पदे नमस्कृत्य लक्ष्मणेन अभिवन्दितः गद्गदस्खलिताक्षरं पैत्रीं वार्तां व्यजिज्ञपत् ॥ तस्य–रामस्य । पदे–पादे । पैत्रीम्–पितृसम्बन्धिनीम् । व्यजिज्ञपत्–विज्ञापयामास ॥ ९५ ॥

**आकर्ण्य रामः शोकार्तो मुञ्चन्नश्रु सलक्ष्मणः ।**
**जलदानादिकं तस्य सश्रद्धमकरोत् पितुः ॥ ९६ ॥**

रामः पितुरुदकदानादिकं कर्म करोति । सलक्ष्मणः रामः (पैत्रीं वार्ताम्) आकर्ण्य शोकार्तः अश्रु मुञ्चन् तस्य पितुः जलदानादिकं सश्रद्धम् अकरोत् ॥ ९६ ॥

**आर्यो बिभर्तु भूभारं शाधि नो राज्यमागतः ।**
**सर्वे वयं तु भवतः प्रत्यावर्तनकाङ्क्षिणः ॥ ९७ ॥**

भरतो राममाह । आर्यः आगतः भूभारं बिभर्तु । (त्वं) नः राज्यं शाधि । सर्वे वयं तु भवतः प्रत्यावर्तनकाङ्क्षिणः (स्मः) ॥ शाधि–रक्ष । प्रत्यावर्तनम्–प्रतिनिवर्तनं काङ्क्षन्तः ॥ ९७ ॥

**अनुमन्ये न तां चेष्टां मातुरातुरिताखिलाम् ।**
**यया रोषः समुत्पन्नो दहत्यन्तर्विषं यथा ॥ ९८ ॥**

मातुश्चेष्टायां स्वस्य विमतिं प्रकाशयति—**अनुमन्ये इति** । यया समुत्पन्नः रोषः विषं यथा अन्तः दहति, ताम् आतुरिताखिलां मातुः चेष्टाम् (अहं) न अनुमन्ये ॥ आतुरिताः अखिलाः यया, ताम् ॥ ९८ ॥

**साकेतं साकमेवाहं भवता गन्तुमुत्सहे ।**
**अन्यथा लक्ष्मणस्येव वृत्तिं कल्पय नः प्रभो ॥ ९९ ॥**

रामेण सहैव स्वस्य अयोध्यागमनमित्याह—**साकेतमिति** । अहं भवता साकमेव साकेतं गन्तुम् उत्सहे । अन्यथा, प्रभो ! (त्वं) लक्ष्मणस्य इव नः वृत्तिं कल्पय ॥ साकम्—सह । साकेतम्—अयोध्याम् । वृत्तिम्—व्यापारम् । त्वत्पादशुश्रूषामिति भावः ॥ ९९ ॥

**इत्युदीर्य मुहुः पादे पतन्तं सहजं नृपः ।**
**बोधयामास विविधैर्वचनैर्वदतां वरः ॥ १०० ॥**

रामो भरतमुपदेष्टुमुपक्रमते । इति उदीर्य मुहुः पादे पतन्तं सहजं, वदतां वरः नृपः विविधैः वचनैः बोधयामास ॥ वदताम्—वाग्मिनाम् ॥ १०० ॥

**कर्तव्यः पितुरादेशस्त्वया वत्स मयापि च ।**
**एतत् कुलव्रतं नः स्यादेष धर्मो हि शाश्वतः ॥ १०१ ॥**

रामस्य भरतबोधनप्रकारमाह त्रिभिः श्लोकैः । वत्स ! त्वया मया अपि च पितुः आदेशः कर्तव्यः । एतत् नः कुलव्रतं स्यात् । एषः हि शाश्वतः धर्मः ॥ शाश्वतः—नित्यः ॥ १०१ ॥

**न मन्ये दूषणं मातुर्विधेरिच्छैव तादृशी ।**
**समखेदामिदानीं तु पश्य तां जननीजनैः ॥ १०२ ॥**

(अहम्) मातुः दूषणं न मन्ये । विधेः इच्छा एव तादृशी । इदानीं तु जननीजनैः समखेदां तां पश्य ॥ दूषणम्—दोषम् । विधेः—दैवस्य । समः खेदो यस्याः, तादृशीम ॥ १०२ ॥

**तद्गच्छ सत्यमाधातुं पितुर्वाचमव प्रजाः ।**
**करिष्यामि तव प्रीतिमहं च समयावधौ ॥ १०३ ॥**

तत् पितुः वाचं सत्यम् आधातुं गच्छ। प्रजाः अव। अहं च समयावधौ तव प्रीतिं करिष्यामि॥ आधातुम्—कर्तुम्। अव—रक्ष। समयावधौ—चतुर्दश-वत्सरान्ते ॥१०३॥

**इत्युक्तः कथमप्येष रामेणानुमतिं गतः।**
**ययाचे पादुके चास्य प्रमाणं राज्यपालने ॥१०४॥**

भरतो रामपादुके याचते। इति रामेण उक्तः एषः कथमपि अनुमतिं गतः, राज्य-पालने प्रमाणम् अस्य पादुके ययाचे च॥ एषः—भरतः। प्रमाणम्—मुख्योपाधिम्॥

**रामोऽपि प्रीतये तस्य प्रदायोपानहौ निजे**
**प्रेम्णा गाढमुपाश्लिष्य विससर्ज सहोदरम् ॥१०५॥**

रामः पादुके दत्त्वा भरतं विसृजति। रामः अपि तस्य प्रीतये निजे उपानहौ प्रदाय सहोदरं प्रेम्णा गाढम् उपाश्लिष्य विससर्ज। उपानहौ—पादुके। उपाश्लिष्य—आलिङ्ग्य। विससर्ज—विसृष्टवान्॥१०५॥

**अभिवन्द्य वसिष्ठादीन् मातॄरपि शुचातुरः।**
**अनुनीय च तान् मन्दं न्यवर्तयत राघवः ॥१०६॥**

रामो वसिष्ठादीनभिवन्द्य निवर्तयति। शुचा आतुरः राघवः वसिष्ठादीन्, मातॄः अपि अभिवन्द्य तान् अनुनीय च मन्दं न्यवर्तयत ॥१०६॥

**भरतोऽपि शिरस्येव निधायाग्रजपादुके।**
**सानुजः सानुगो मन्दं साश्रुनेत्रो न्यवर्तत ॥१०७॥**

भरतः सर्वैः सह निवर्तते। भरतः अपि अग्रजपादुके शिरसि एव निधाय सानुजः सानुगः साश्रुनेत्रः मन्दं न्यवर्तत॥ सानुजः—अनुजेन शत्रुघ्नेन सहितः। सानुगः—अनुगैः वसिष्ठाद्यैः सहितः। साश्रुनेत्रः—सबाष्पनयनः ॥१०७॥

**न जगाम पुनर्धीमानयोध्यां सत्यसंगरः ।**
**नन्दिग्रामे वसन् भ्रातुः प्रत्यैक्षत समागमम् ॥ १०८ ॥**

भरतो नन्दिग्रामे वसति । धीमान् सत्यसङ्गरः (भरतः) पुनः अयोध्यां न जगाम । नन्दिग्रामे वसन् भ्रातुः समागमं प्रत्यैक्षत ॥ सत्यः सङ्गरः–प्रतिज्ञा यस्य तादृशः । प्रत्यैक्षत–प्रतीक्षितवान् ॥ १०८ ॥

**मुनिवेषधरस्तत्र यथारामस्तथैव सः ।**
**शशास पृथिवीं कृत्स्नां प्रमाणीकृत्य पादुके ॥ १०९ ॥**

भरतः तत्र स्थित्वा राज्यपालनं करोति । सः तत्र, यथा रामः तथा एव मुनिवेषधरः, पादुके प्रमाणीकृत्य कृत्स्नां पृथिवीं शशास ॥ कृत्स्नाम्–सर्वाम् ॥ १०९ ॥

**भारतं वीर्यमालम्ब्य स्थिरे साकेतमन्दिरे ।**
**ऊषुर्नरेन्द्रपत्न्यस्ताः कोसलेन्द्रसुतादयः ॥ ११० ॥**

कौसल्यादयः अयोध्यायामेव वसन्ति । भारतं वीर्यम् आलम्ब्य स्थिरे साकेतमन्दिरे कोसलेन्द्रसुतादयः ताः नरेन्द्रपत्न्यः ऊषुः ॥ भारतम्–भरतसम्बन्धि । वीर्यम्–पराक्रमम् । साकेतमन्दिरे–अयोध्यापुरे । कोसलेन्द्रसुता–कौसल्या । ऊषुः–वासं चक्रुः ॥ ११० ॥

**रघुपतिरपि तावत् सोदरे सन्निवृत्ते**
**सह सहजवधूभ्यां कानिचिद्वासराणि ।**
**पुनरपि च जनानामागतिं शङ्कमानो-**
**ऽप्यतिरुचिरतरेऽस्मिंश्चित्रकूटे न्यवात्सीत् ॥ १११ ॥**

**इति श्रीगोदवर्मविद्वद्युवराजकृते**
**श्रीरामचरिते महाकाव्ये**
**अष्टमः सर्गः**

रामश्चित्रकूट एव कञ्चित् कालं वसति । सोदरे सन्निवृत्ते (सति) रघुपतिः तावत् सहजवधूभ्यां सह कतिचिद् वासराणि, पुनः अपि च जनानाम् आगतिं शङ्कमानः अपि, अतिरुचिरतरे अस्मिन् चित्रकूटे न्यवात्सीत् ॥ सोदरे–भरते । सहजवधूभ्याम्–सीता-लक्ष्मणाभ्याम् । न्यवात्सीत्–निवासं कृतवान् ॥ १११ ॥

इति पण्डितरत्नश्रीनारायणपिषारोटिविरचितायां
श्रीरामचरितमहाकाव्यव्याख्यायां अन्वयार्थप्रबोधिन्यां
रामादिवनगमनं नाम अष्टमः सर्गः



# नवमः सर्गः

**चित्रतां तदनु चित्रकूटगां दर्शयन् मधुरदर्शनो नृपः ।**
**कान्तया मृदुपदान्तया चिरं सञ्चचार जितपञ्चसायकः ॥ १ ॥**

रामः सीतया सह चित्रकूटे सञ्चरति । तदनु मधुरदर्शनः जितपञ्चसाथकः नृपः मृदुपदान्तया कान्तया (सह) चित्रकूटगां चित्रतां दर्शयन् चिरं सञ्चचार ॥ जितः पञ्चसायकः— कामः येन, तादृशः । मृदू पदान्तौ यस्याः, तया । चित्रताम्—मनोहारिताम् ॥ १ ॥

**सानुषु स्थगितभानुषु द्रुमैरुच्चपल्लवसमुच्चयाञ्चितैः ।**
**राघवः स गतलाघवश्चरन्नूचिवानमृतमोचिवाक् प्रियाम् ॥ २ ॥**

रामः सीतां वक्तुमुपक्रमते—**सानुष्विति** । गतलाघवः सः राघवः, उच्चपल्लवसमुच्चयाञ्चितैः द्रुमैः स्थगितभानुषु सानुषु चरन् अमृतमोचिवाक् (सन्) प्रियाम् ऊचिवान् ॥ गतं लाघवं यस्य सः गतलाघवः । गौरवयुक्त इत्यर्थः । उच्चाः—उन्नताः च पल्लवानां समुच्चयैः अञ्चिताः च तथा, तैः । स्थगितः—आच्छादितः भानुः—सूर्यः यैः तादृशेषु । सानुषु—प्रस्थेषु । अमृतं मोक्तुं शीलमस्याः इति अमृतमोचिनी, तादृशी वाक् यस्य, तादृशः । ऊचिवान्— उक्तवान् ॥ २ ॥

**मैथिलि क्षपितशैथिलि क्षणं पर्वतं कलय सर्वतः शुभम् ।**
**तुङ्गभावगतशृङ्गभासुरं सुन्दराङ्गि जितमन्दराचलम् ॥ ३ ॥**

रामवचनमेव चत्वारिंशत् श्लोकैर्विवृणोति । चित्रकूटपर्वतं पश्य इत्याह । सुन्दराङ्गि मैथिलि ! (त्वं) सर्वतः शुभं तुङ्गभावगतशृङ्गभासुरं जितमन्दराचलं पर्वतं, क्षपितशैथिलि क्षणम् कलय ॥ मैथिलि सीते । सर्वतः—सर्वत्र । शुभम्—शोभमनम् । तुङ्गभावम्—उन्नतत्वं गतैः शृङ्गैः भासुरम्—भासमानम् । जितो मन्दराचलो येन तम् । मन्दरसदृशमित्यर्थः ।

क्षपिता–क्षयं नीता शैथिली–शैथिल्यम् यस्मिन् कर्मणि तद्यथा तथा। शैथिल्यम्–मान्द्यं परित्यज्येत्यर्थः। कलय–पश्य ॥ ३ ॥

**दूरवाहिझरहारवानसौ भाति भूकुच इवातिभूषितः।**
**छद्मना विमलपद्मरागभूरोचिषामधिकरोचिकुङ्कुमैः ॥ ४ ॥**

चित्रकूटस्य भूकुचसादृश्यमाह—**दूरेति**। दूरवाहिझरहारवान् विमलपद्मरागभूरोचिषां छद्मना अधिकरोचिकुङ्कुमैः अतिभूषितः असौ भूकुचः इव भाति॥ दूरात् प्रवहन् झरः–वारिप्रवाहः एव हारः अस्यास्तीति, तादृशः। पद्मरागभूरोचिषाम्–पद्मरागाख्यरत्नभूमिप्रभाणाम्। अधिकरोचिकुङ्कुमैः–अधिकं रोचमानैः–शोभमानैः कुङ्कुमैः। असौ–चित्रकूटः ॥ ४ ॥

**अत्र देवशतपत्रलोचनाश्चित्रधातुकृतचित्रकाञ्चिताः।**
**पल्लवैरमृतपल्लवैः कृते शेरते हि शयने रतेच्छया ॥ ५ ॥**

देवाङ्गनानां कामकेलिरङ्गश्चित्रकूट इत्याह—**अत्रेति**। अत्र हि देवशतपत्रलोचनाः चित्रधातुकृतचित्रकाञ्चिताः (सत्यः) पल्लवैः कृते शयने अमृतपल्लवैः (सह) रतेच्छया शेरते॥ अत्र–चित्रकूटे। देवशतपत्रलोचनाः–देवाङ्गनाः। चित्रैः–नानावर्णैः धातुभिः–मनश्शिलादिभिः कृतेन चित्रकेन–तिलकेन अञ्चिताः–अलङ्कृताः। अमृतपल्लवैः–देवैः। आदर्शग्रन्थेषु त्रिषु पल्लवैरित्येव पाठो दृश्यते। लेखकप्रमादः शङ्क्यते। अमृतवल्लभैरिति अमरतल्लजैरिति वा पाठेन भवितव्यम्। अमृतप्रियैः इति प्रशस्तदेवैः इति वा अर्थः स्यात्। शेरते–शयनं कुर्वन्ति ॥ ५ ॥

**कन्दराशयितसुन्दराननामञ्जुगानरसपानमन्दितम्।**
**स्तब्धकर्णमिह लब्धकण्टकं हारिणं कलय हारिणं गणम् ॥ ६ ॥**

मृगवृन्दं पश्येत्याह—**कन्दरेति**। इह कन्दराशयितसुन्दराननामञ्जुगानरसपानमन्दितं स्तब्धकर्णं लब्धकण्टकं हारिणं हारिणं गणं कलय॥ सुन्दराननाः–सुमुख्यः।

मन्दितम्–मोहितम् । स्तब्धौ–निश्चलौ कर्णौ यस्य, तादृशम् । लब्धः कण्टकः–रोमाञ्चः यस्य, तादृशम् । हारिणम्–मनोहरम् । हरिणाः–मृगाः, तत्सम्बन्धिनम्–हारिणम् । कलय–पश्य ॥ अत्र गानमञ्जुरसेति प्रासानुकूलेन पाठेन भवितव्यम् ॥ ६ ॥

**सिद्धवृन्दमिह बद्धविभ्रमं यौवतेन सह दिव्यतेजसा ।**
**क्रीडनान्यतनुपीडनान्मुहुर्विह्वलं भजति बह्वलङ्कृतम् ॥ ७ ॥**

सिद्धवृन्दस्य कामलीलाः आह—**सिद्धेति** । इह दिव्यतेजसा यौवतेन सह बद्धविभ्रमं बह्वलङ्कृतं सिद्धवृन्दम् अतनुपीडनात् विह्वलं मुहुः क्रीडनानि भजति ॥ यौवतेन–युवतिसमूहेन । अतनुपीडनात्–कामबाधया । विह्वलम्–विक्लबम् । भजति–सेवते ॥ ७ ॥

**अत्र भानुमणिचित्रभानुभिः सुग्रहं विपिनमुग्रहेतिभिः ।**
**रक्षति क्वचिदपि क्षतिं विना पुष्पवद्विटपिनिष्पतद्रसः ॥ ८ ॥**

सूर्यकान्तबाहुल्यं पुष्परसवर्षं च वर्णयति—**अत्रेति** । अत्र उग्रहेतिभिः भानुमणिचित्रभानुभिः सुग्रहं विपिनं पुष्पवद्विटपिनिष्पतद्रसः, क्वचित् अपि क्षतिं विना रक्षति ॥ उग्राः हेतयः-ज्वालाः येषां, तैः । भानुमणयः–सूर्यकान्तोपलाः, तज्जनितैः चित्रभानुभिः–अग्निभिः । सुग्रहम्–सुखेन ग्रहीतुं शक्यम् । विपिनम्–वनम् । पुष्पवन्तः–समृद्धकुसुमाः ये विटपिनः–वृक्षाः, तेभ्यो निष्पतन्–निर्गलन् रसः–मकरन्दः । क्षतिम्–हानिम् ॥ ८ ॥

**नीलवेणि घनजालवेष्टनादञ्जनाभमिह कञ्जनाभवत् ।**
**कूटमेतदपकूटमेक्ष्यतामश्रमं विबुधविश्रमप्रदम् ॥ ९ ॥**

नीलवर्णं किञ्चिच्छिखरं दर्शयति—**नीलवेणीति** । नीलवेणि ! इह घनजालवेष्टनात् अञ्जनाभं कञ्जनाभवत् विबुधविश्रमप्रदम् अश्रमम् एतत् कूटम् अपकूटम् एक्ष्यताम् ॥ घनजालवेष्टनात्–मेघवृन्दावरणात् । अञ्जनाभम्–अञ्जनवर्णम् । कञ्जम्–पद्मम् नाभौ यस्य, तेन विष्णुना तुल्यम् । विबुधानाम्–देवानां विश्रमप्रदम् । अश्रमम्–श्रमरहितम् । कूटम्–शिखरम् । अपकूटम्–निर्व्याजम् । सावधानमित्यर्थः । एक्ष्यताम्–विलोक्यताम् ॥ ९ ॥

**सौरभारचितसौरभाञ्चितैः सारसैर्मुदितसारसैरिह ।**
**कुर्वते सुमुखि कुर्वते सुखं वापि का न वनवापिका दृशम् ॥१०॥**

वनवापिकानां सुखावहत्वं दर्शयति—**सौरभेति** । सुमुखि! इह का: वा वनवापिका:, सौरभारचितसौरभाञ्चितैः मुदितसारसैः सारसैः दृशं कुर्वते अपि सुखं न कुर्वते ॥ सौरीभिः-सूर्यसम्बन्धिनीभिः भाभिः-प्रभाभिः आरचितेन सौरभेण अञ्चितैः-पूजितैः । मुदिताः सारसाः तदाख्यपक्षिविशेषाः येषु, तैः । सारसैः—कमलैः । दृशं कुर्वते-दृष्टिं कुर्वाणाय । पश्यते इत्यर्थः । जनाय इति शेषः । न कुर्वते-न कुर्वन्ति । सर्वाः अपि वनवापिकाः प्रेक्षकजनेषु सुखं कुर्वन्तीति भावः ॥ १० ॥

**मानसं युवतिमानसम्पदा दूषितं विबुधयोषितामिह ।**
**सानुतापमथ सानुमारुतास्तन्वते कुसुमधन्वतेजनाः ॥ ११ ॥**

सानुमारुतानां कामोद्दीपकतामाह—**मानसमिति** । इह युवतिमानसम्पदा दूषितं विबुधयोषितां मानसम्, अथ कुसुमधन्वतेजनाः सानुमारुताः सानुतापं तन्वते ॥ युवतीनां यो मानः-कोपः, तस्य सम्पदा-समृद्ध्या । विबुधयोषिताम्-देवाङ्गनानाम् । मानसम्- मनः । कुसुमधन्वा-कामः, तस्य तेजनाः-उद्दीपकाः । सानवः-प्रस्थाः, तद्गताः मारुताः । सानुतापम्-पश्चात्तापसहितम् । तन्वते-कुर्वन्ति ॥ ११ ॥

**हेलया हृतदुकूलया रते लोलया महितशीलया प्रियैः ।**
**बालयापि बहुलीलयात्र न ह्रीयते परमधीयते प्रियैः ॥ १२ ॥**

कामोद्दीपकत्वमेवाह—**हेलयेति** । अत्र हेलया प्रियैः हृतदुकूलया रते लोलया महितशीलया बालया, बहुलीलया अपि न ह्रीयते । प्रियैः परम् अधीयते ॥ हेलया-लीलया । हृतं दुकूलम्-वस्त्रं यस्याः, तया । रते-कामलीलायाम् । लोलया-सतृष्णया । ह्रीयते-लज्जितया भूयते । परम्-केवलम् । अधीयते-अधिगम्यते ॥ १२ ॥

**अग्रपाणिभिरुदग्रपाटनाद्विप्रयोगिभिरिह प्रयोगिताः ।**
**वारिदाः शिशिरवारिदायिनो व्यापयन्ति परितापमन्ततः ॥ १३ ॥**

मेघानां विरहिजनसन्तापहेतुत्वमाह—**अग्रपाणिभिरिति** । इह अग्रपाणिभिः उदग्रपाटनात् विप्रयोगिभिः प्रयोगिताः शिशिरवारिदायिनः वारिदाः अन्ततः परितापं व्यापयन्ति ॥ अग्रपाणिभिः—हस्ताग्रैः । उदग्रपाटनात्—तीव्रघट्टनात् । विप्रयोगिभिः—विरहिभिः । प्रयोगिताः—कृतप्रयोगाः । शिशिरं शीतलं वारि—जलं दातुं शीलमेषामिति, तादृशाः । अन्ततः—अन्ते—अवसाने । परितापम्—ज्वरम् । व्यापयन्ति—वर्धयन्ति ॥ १३ ॥

**कामिनीवदनयामिनीकरैर्मेखलासु कृतशेखरास्विह ।**
**आगतः प्रवहवेगतः शशी लक्षणेन यदि लक्ष्यते जनैः ॥ १४ ॥**

चित्रकूटस्य अम्बरचुम्बित्वमाह—**कामिनीति** । कामिनीवदनयामिनीकरैः कृतशेखरासु मेखलासु प्रवहवेगतः आगतः शशी जनैः यदि लक्ष्यते, (तर्हि) लक्षणेन (लक्ष्यते) ॥ कामिनीनां वदनानि—मुखानि एव यामिनीकराः—चन्द्राः, तैः । कृतः शेखरः—शिरोलङ्कारो यासाम्, तादृशीषु । मेखलासु—पर्वतनितम्बेषु । प्रवहवेगतः—प्रवहाख्यवायुवेगेन । प्रवहाख्यो वायुः ज्योतिश्चक्रं परिवर्तयतीति पौराणिकाः । शशी—चन्द्रः । लक्ष्यते—निर्धार्यते । लक्षणेन—कलङ्केन ॥ कामिनीमुखेषु कलङ्काभावात् ॥ १४ ॥

**अत्र जीर्णतरुपत्रजीविनस्तापसाः शमितपापसञ्चयाः ।**
**दुष्टजन्तुमपि दृष्टमन्तिके नन्दयन्ति करमन्दमर्शनैः ॥ १५ ॥**

चित्रकूटस्य तापसावासतां वर्णयति—**अत्रेति** । अत्र जीर्णतरुपत्रजीविनः शमितपापसञ्चयाः तापसाः अन्तिके दृष्टं दुष्टजन्तुम् अपि करमन्दमर्शनैः नन्दयन्ति ॥ करमन्दमर्शनैः—कण्डूयनैः । नन्दयन्ति-आनन्दयन्ति ॥ १५ ॥

**सर्वदा मदनगर्वदाइदं वस्तु सारमृतवस्तु सादरम् ।**
**नन्दनं विबुधनन्दनं यथा वासयन्ति च विलासयन्ति च ॥ १६ ॥**

चित्रकूटे सर्वदा ऋतूनां सन्निधानं वदति—**सर्वदेति** । मदनगर्वदाः ऋतवः तु सारम् इदंवस्तु, सर्वदा सादरं विबुधनन्दनम् नन्दनम् यथा वासयन्ति च विलासयन्ति च ॥ मदनगर्वदाः—कामोद्दीपकाः । ऋतवः—वसन्तादयः । सारम्-उत्कृष्टम् । इदंवस्तु—अस्मिन्

विद्यमानं पदार्थम् । विबुधानां देवानां नन्दनम्–आनन्दजनकम् । नन्दनम्–तदाख्यम् इन्द्रोद्यानम् । वासयन्ति–सुरभिलं कुर्वन्ति । विलासयन्ति–भासयन्ति ॥ १६ ॥

**नक्तमोषधिनिषिक्तमेष यद्रोचिराऽवहति रोचिताम्बरम् ।**
**तत्तनोति सुरपत्तनोदरे सत्प्रदीप इव सत्प्रकाशताम् ॥ १७ ॥**

रात्रावोषधीनां प्रकाशं वर्णयति—**नक्तमिति** । एषः नक्तम् ओषधिनिषिक्तं रोचिताम्बरं यद् रोचिः आवहति, तत् सुरपत्तनोदरे सत्प्रदीदः इव सत्प्रकाशतां तनोति ॥ एषः–चित्रकूटः । नक्तम्–रात्रौ । ओषधिभिः–लताविशेषैः निषिक्तम्–प्रस्नावितम् । रोचिः–प्रकाशः । सुरपत्तनोदरे–स्वर्गाभ्यन्तरे । सन्–प्रशस्तः प्रदीपः । सन्–विद्यमानः प्रकाशः यस्य, तस्य भावम्–सत्प्रकाशताम् । तनोति–विस्तारयति ॥ १७ ॥

**भीरु पश्य धृतचारुविद्रुमो वारिराशिरिव भूरिभङ्गवान् ।**
**सञ्चरत्कमलसञ्चयः श्रयत्येष भूमिपरिवेषतां गिरिः ॥ १८ ॥**

चित्रकूटस्य समुद्रसादृश्यं श्लेषभङ्ग्या प्रकाशयति—**भीर्विति** । भीरु ! धृतचारुविद्रुमः भूरिभङ्गवान् सञ्चरत्कमलसञ्चयः एषः गिरिः वारिराशिः इव भूमिपरिवेषताम् श्रयति ॥ भीरु–भयशीले । धृताः चारवः–रुचिराः वयः–पक्षिणः यैः, तादृशाः द्रुमाः यस्मिन्, सः तथोक्तः । समुद्रपक्षे धृताः चारवः विद्रुमाः–प्रवालाः येन सः । भूरयः–भूयांसः भङ्गाः–कोविल्यानि, तरङ्गाश्च यस्मिन् सः। सञ्चरन्तः कमलानाम्–कुरङ्गाणाम्, जलानां च सञ्चयो यस्मिन्, तादृशः । वारिराशिः–समुद्रः। भूमेः परिवेषताम्–अलङ्कारत्वम्, मेखलात्वं च। श्रयति–प्राप्नोति ॥ १८ ॥

**भिन्नकान्तिरगभिन्नवाश्मभिर्गण्डशैल इव मण्डलं विधोः ।**
**अङ्करोपितकलङ्कशोभितं कोऽप्ययं हसति रूप्यनिर्मितः ॥ १९ ॥**

इन्द्रनीलरत्नयुक्तस्य रजतमयस्य गण्डशैलस्य चन्द्रमण्डलसादृश्यं वक्ति—**भिन्नेति** । अगभिन्नवाश्मभिः भिन्नकान्तिः रूप्यनिर्मितः अयं कोऽपि गण्डशैलः, अङ्करोपितकलङ्कशोभितं विधोः मण्डलं हसति इव ॥ अगान्–पर्वतान् भेत्तीति अगभित्–इन्द्रः, तस्य नवाश्मभिः–

नूतनरत्नैः। इन्द्रनीलरत्नैरित्यर्थः। भिन्ना कान्तिः यस्य, तादृशः। रूप्यम्–रजतम्, तेन निर्मितः। गण्डशैलः–गिरिच्युतस्थूलोपलः। अङ्के–उत्सङ्गे रोपितेन–अधिरोपितेन कलङ्केन शोभितम्। विधोः–चन्द्रस्य। मण्डलम्–बिम्बम्। हसतीव–परिहसतीव ॥ १९ ॥

स्यन्दमानमिह मन्दमम्भसां बिन्दुजालमिदमिन्दुकान्ततः।
कामदेवसितचामरश्रियं काममुद्वहति वामलोचने ॥ २० ॥

चन्द्रकान्तजलबिन्दुजालं वर्णयति—स्यन्दमानमिति। वामलोचने! इह इन्दुकान्ततः मन्दं स्यन्दमानम् इदम् अम्भसां बिन्दुजालं, कामदेवसितचामरश्रियं कामम् उद्वहति ॥ वामलोचने–सुन्दरनयने। अम्भसाम्–जलानाम्। कामम्–पर्याप्तम् ॥ २० ॥

अन्यपुष्टकुलकन्यकाश्रिते वन्यभूमिरुहि विन्यसेक्षणे।
धन्यता च लघु जन्यतां तयोर्मन्यसे न पुनरन्यसेवनम् ॥ २१ ॥

कोकिलाश्रितं वृक्षं दर्शयति—अन्येति। अन्यपुष्टकुलकन्यकाश्रिते वन्यभूमिरुहि (त्वम्) ईक्षणे विन्यस। तयोः च, लघु धन्यता जन्यताम्। पुनः अन्यसेवनं (कार्यं) न मन्यसे ॥ अन्यपुष्टाः–कोकिलाः, तेषां कुले याः कन्यकाः–बालिकाः ताभिः आश्रिते। वने भवो वन्यः, स चासौ भूमिरुट्–वृक्षः च, तस्मिन्। ईक्षणे–नयने। विन्यस–अर्पय। तयोः ईक्षणयोः। धन्यता–कृतार्थता। लघु–शीघ्रम् ॥ २१ ॥

मध्यचारिणमशुद्धवार्मुचां मत्तवारणमधित्यकास्विह।
षट्पदा विगतपुष्पलालसा जानते सुमुखि दानसौरभात् ॥ २२ ॥

मेघमध्यगतं गजं वर्णयति—मध्येति। सुमुखि! इह अधित्यकासु अशुद्धवार्मुचां मध्यचारिणं मत्तवारणं विगतपुष्पलालसाः षट्पदाः दानसौरभात् जानते ॥ अधित्यकासु–गिरेः आसन्नोर्ध्वभूमिषु। अशुद्धवार्मुचाम्–असितमेघानाम्। मत्तवारणम्–मत्तगजम्। लालसा–महाभिलाषः। षट्पदाः–भृङ्गाः। दानसौरभात्–मदजलगन्धात्। जानते–विदन्ति ॥ २२ ॥

**भूरिकोकपरिवारितश्चलत्पुण्डरीकततिरण्डजाश्रितः ।**
**अद्रिरात्मगुणमुद्रिता नदीर्नित्यमेष जनयत्यनेकशः ॥ २३ ॥**

चित्रकूटस्य नदीजनकत्वमाह—**भूरीति**। भूरिकोकपरिवारितः चलत्पुण्डरीकततिः अण्डजाश्रितः एषः अद्रिः, आत्मगुणमुद्रिताः नदीः अनेकशः नित्यं जनयति ॥ भूरयः—भूयांसः कोकाः वृकाः, चक्रवाकाश्च, तैः परिवारितः। चलन्ती पुण्डरीकाणाम्—व्याघ्राणाम्, सिताम्भोजानाम् च ततिः यस्मिन्, तादृशः। अण्डजैः—पक्षिभिः, सर्पैश्च आश्रितः। आत्मगुणमुद्रिताः—आत्मनः कोकपरिवारितत्वादिभिः गुणैः अङ्किताः ॥ २३ ॥

**जानकीह लसमानकीचकात् काननेषु पवमानपूरितात् ।**
**मानयस्व मृदु गानमुद्गतं येन यौवतममानमानसम् ॥ २४ ॥**

कीचकोद्गतं गानं वर्णयति—**जानकीति**। जानकि ! इह काननेषु पवमानपूरितात् लसमानकीचकात् उद्गतं मृदुगानं मानयस्व। येन यौवतम् अमानमानसं (भवति) ॥ कीचकात्—वेणोः। मानयस्व—शृणु। येन—गानेन। यौवतम्—युवतिसमूहः। मानः—चित्तसमुन्नतिः, सः न विद्यते यस्य, तद् अमानम्; तादृशं मानसं यस्य तत्—अमानमानसम् ॥ २४ ॥

**अस्य सानुषु निरस्य विग्रहं स्वर्गताः सपदि निर्गताः पुनः ।**
**अप्सरोभिरिह लिप्सवो रतिं योगिनो दधति भोगिनो व्रतम् ॥ २५ ॥**

योगिनां योगस्थानं भोगस्थानं च चित्रकूटः इत्याह—**अस्येति**। योगिनः अस्य सानुषु विग्रहं निरस्य सपदि स्वर्गताः, पुनः अप्सरोभिः निर्गताः इह रतिं लिप्सवः भोगिनः (सन्तः) व्रतं दधति ॥ अस्य—चित्रकूटस्य। सानुषु—प्रस्थेषु। विग्रहम्—शरीरम्। निरस्य—योगेन त्यक्त्वा। स्वः—स्वर्गम् गताः। रतिम्—रतिसुखम्। लिप्सवः—लब्धुमिच्छवः। भोगः—सुखम्, तद्वन्तः—भोगिनः। व्रतम्—उपवासादिकं पुण्यंकर्म। दधति—धारयन्ति ॥ २५ ॥

**निर्मलस्फटिकनिर्मितस्थलेष्वस्य मूर्ध्नि मिहिरस्य वाजिनः ।**
**अभ्रमादनिशमभ्रगाः स्वयं प्रह्वया लिहति जिह्वया मुहुः ॥ २६ ॥**

स्फटिकस्थलानि वर्णयति—**निर्मलेति**। अनिशम् अभ्रगाः मिहिरस्य वाजिनः अस्य मूर्ध्नि निर्मलस्फटिकनिर्मितस्थलेषु अब्भ्रमात् स्वयं प्रह्वया जिह्वया मुहुः लिहति॥ अभ्रगाः–आकाशगामिनः। मिहिरस्य–सूर्यस्य। वाजिनः–अश्वाः। अस्य–चित्रकूटस्य। मूर्ध्नि–शिरसि। अब्भ्रमात्–जलभ्रान्त्या। प्रह्वया–अधः प्रसारितया। जिह्वया–रसज्ञया। लिहति–आस्वादयति ॥ २६ ॥

**सिन्धुराजभवसिन्धुरावलीदन्तघातकिणदन्तुराकृतिः।**
**रोचमानबहुलोचनं गिरिर्वासवं नयति हासकर्मताम् ॥ २७ ॥**

ऐरावतादीनां गजानामुत्खातकेलिमनुभवति चित्रकूटः इत्याह—**सिन्ध्विति**। सिन्धुराजभवसिन्धुरावलीदन्तघातकिणदन्तुराकृतिः गिरिः रोचमानबहुलोचनं वासवं हासकर्मतां नयति॥ सिन्धुराजभवाः–महासमुद्रजन्मानः ये सिन्धुराः–गजाः ऐरावतादयः, तेषाम् आवली–पङ्क्तिः, तस्याः दन्तैः घातेन–प्रहारेण। जातैः किणैः–व्रणजचिह्नैः दन्तुरा–उन्नतानता आकृतिः यस्य, तादृशः। रोचमानानि–शोभमानानि बहूनि लोचनानि यस्य तम्। वासवम्–इन्द्रम्। हासकर्मताम्–हास्यत्वम्। नयति–प्रापयति। हसतीत्यर्थः। इन्द्रेण सदृशो भवतीति भावः ॥ २७ ॥

**अस्य शृङ्गमचलस्य सङ्गता कान्तमङ्गजनितान्तमन्दिता।**
**सापराधमपि वा पराङ्मुखी कोपलम्भयति कोपलाञ्छनम् ॥ २८ ॥**

चित्रकूटशृङ्गस्य कामलीलारङ्गत्वमाह—**अस्येति**। अस्य अचलस्य शृङ्गं सङ्गता अङ्गजनितान्तमन्दिता का वा, सापराधम् अपि कान्तं, पराङ्मुखी (सती) कोपलाञ्छनम् उपलम्भयति ?॥ सङ्गता–सम्प्राप्ता। अङ्गजेन–कामेन नितान्तं मन्दिता–मोहिता। कोपलाञ्छनम्–कोपचिह्नम्। उपलम्भयति–प्रापयति ॥ २८ ॥

**अग्रभूषु निरवग्रहोदिता भूरुहस्तु करभोरु निस्तुलाः।**
**स्पष्टमेव सुरविष्टपेषु ये सन्ति तानधरयन्ति पादपान् ॥ २९ ॥**

चित्रकूटगतानां वृक्षाणां कल्पवृक्षापेक्षया श्रेष्ठतां वक्ति—**अग्रभूष्विति**। करभोरु! अग्रभूषु निरवग्रहोदिताः निस्तुलाः भूरुहः तु, सुरविष्टपेषु ये सन्ति, तान् पादपान् स्पष्टम् एव

अधरयन्ति ॥ निरवग्रहम्—निष्प्रतिबन्धम् उदिताः—उत्पन्नाः । भूरुहः—वृक्षाः । सुरविष्टपेषु—देवलोकेषु । अधरयन्ति—अधः कुर्वन्ति ॥ २९ ॥

**उल्लसत्प्रचुरपल्लवच्छदिःपुञ्जसंवृतनिकुञ्जवासिनः ।**
**सन्निधावपि लसन्निहांशुभिर्न क्षिणोति पशुपक्षिणो रविः ॥ ३० ॥**

सान्द्रच्छायासम्पन्नत्वं चित्रकूटस्याह—**उल्लसदिति**। इह सन्निधौ लसन् अपि रविः उल्लसत्प्रचुरपल्लवच्छदिःपुञ्जसंवृतनिकुञ्जवासिनः पशुपक्षिणः अंशुभिः न क्षिणोति ॥ उल्लसन्तः प्रचुराः—बहुलाः ये पल्लवाः, ते एव छर्दींषि—छादनानि, तेषां पुञ्जैः संवृतेषु—आच्छादितेषु निकुञ्जेषु—लतागृहेषु वसन्तीति, तादृशाः । अंशुभिः—रश्मिभिः । न क्षिणोति—न पीडयति॥ आतपपीडा नास्तीति भावः ॥ ३० ॥

**सायमिन्दुमणितोयनिम्नगाशीतलं शिखरभूतलं गिरेः।**
**वृष्टिहीनमपि घृष्टिभी रवेः शुष्टिमेति न हि पुष्टिमद्वनम् ॥ ३१ ॥**

शिखरभूतलेपि जलसम्पत्तिमाह—**सायमिति**। सायम् इन्दुमणितोयनिम्नगाशीतलं पुष्टिमद्वनं गिरेः शिखरभूतलं, वृष्टिहीनम् अपि रवेः घृष्टिभिः शुष्टिं न हि एति॥ सायम्—रात्रौ । इन्दुमणितोयनिम्नगाभिः—चन्द्रकान्तजलनदीभिः शीतलम् । पुष्टिमत्—समृद्धियुक्तं वनमस्मिन्नस्तीति तथा। घृष्टिभिः—रश्मिभिः । शुष्टिम्—शुष्कताम् । एति—गच्छति॥ ३१ ॥

**वज्रपाणिरिव वज्रतेजसा वृत्रमाशु निजसत्ररोधिनम् ।**
**एष भूभृदधिदोपमुच्चकैरुद्भिनत्ति सुमरुद्भिराश्रितः ॥ ३२ ॥**

चित्रकूटस्य हीररत्नसम्पन्नतामाह—**वज्रेति**। सुमरुद्भिः आश्रितः एषः भूभृत् वज्रपाणिः इव वज्रतेजसा अधिदोषं निजसत्ररोधिनम् उच्चकैः वृत्तम् आशु उद्भिनत्ति ॥ सुमरुद्भिः—शोभनैर्वायुभिः, देवैश्च । भूभृत्—पर्वतः । वज्रपाणिः—इन्द्रः । वज्रतेजसा—हीरकप्रकाशेन, कुलिशवीर्येण च । पा—रात्रिः । अधिदोषम्-रात्रौ, अधिकदोषवन्तम् च ।

निजसत्ररोधिनम्–निजं वनमवरुन्धन्तम्, निजं यज्ञं निरुन्धन्तं च। वृत्रम्–अन्धकारम्, वृत्रासुरं च। उद्भिनत्ति–नाशयति ॥ ३२ ॥

कुञ्जलीनबहुकुञ्जरीकुलं मञ्जरीनिकरपिञ्जरीकृतम्।
लोकरम्यमवलोकयादरात् गोत्रमम्बुजसगोत्रया दृशा ॥ ३३ ॥

पुष्पसमृद्धिं दर्शयति—कुञ्जेति। कुञ्जलीनबहुकुञ्जरीकुलं मञ्जरीनिकरपिञ्जरीकृतं लोकरम्यं गोत्रम् अम्बुजसगोत्रया दृशा आदरात् (त्वम्) अवलोकय॥ कुञ्जेषु–लतागृहेषु लीनानि बहूनि कुञ्जरीकुलानि–करिणीवृन्दानि यस्मिन्, तादृशम्। मञ्जरीनिकरैः–पुष्पस्तबकसञ्चयैः पिञ्जरीकृतम्–पिशङ्गीकृतम्। गोत्रम्–पर्वतम्। अम्बुजसगोत्रया–पद्मतुल्यया ॥ ३३ ॥

सूरवाजिकुलदूरजृम्भितहेषितश्रवणरोषिता मुहुः।
वासरेषु सविकासनिस्स्वनाः स्वैरितां जहति सैरिभा इह ॥ ३४ ॥

महिषान् वर्णयति—सूरेति। इह सूरवाजिकुलदूरजृम्भितहेषितश्रवणरोषिताः मुहुः सविकास-निस्स्वनाः सैरिभाः वासरेषु स्वैरितां जहति॥ सूरवाजिकुलस्य–सूर्याश्ववृन्दस्य दूरजृम्भित हेषितानाम्–अत्युच्चनिस्स्वनानां श्रवणेन रोषिताः। सविकासनिस्स्वनाः–उदीर्णशब्दाः।सैरिभाः–महिषाः। वासरेषु–दिनेषु। स्वैरिताम्–स्वच्छन्दताम्। जहति–त्यजन्ति॥ धावन्तीति भावः ॥ ३४ ॥

अङ्कगावनिरपङ्कसत्त्ववान् वक्रवेणि धृतचक्रवारिजः।
एष साधयति शेषशायितां लोलया च वनमालयाञ्चितः ॥ ३५ ॥

चित्रकूटस्य विष्णुसादृश्यं श्लेषभङ्ग्या साधयति—अङ्केति। वक्रवेणि! अङ्कगावनिः अपङ्कसत्त्ववान् धृतचक्रवारिजः लोलया वनमालया च अञ्चितः एषः शेषशायितां साधयति॥ वक्रवेणि–कुटिलकुन्तले। अङ्कगा–उत्सङ्गगता अवनिः भूमिः, भूदेवी च यस्य सः। अपङ्काः–अपापाः सत्त्वाः–जन्तवः अत्र सन्तीति अपङ्कसत्त्ववान्। अपङ्कम्–शुद्धम् सत्त्वम्–

सत्त्वगुणः अस्यास्तीति च। धृताः चक्राः—चक्रवाकाः यैः, तादृशानि वारिजानि यस्मिन्, सः धृतचक्रवारिजः। धृते चक्रवारिजे—सुदर्शनपद्मे येन सः इति च। लोलया—चञ्चलया। वनमालया—वनपङ्क्त्या, तदाख्यमालयेन च। एषः—चित्रकूटः। शेषशायिताम्—अनन्तशयनत्वम्। विष्णुत्वमित्यर्थः। साधयति—सम्पादयति ॥ ३५ ॥

**ग्रस्तपश्चिमपदस्तरस्विना वाहसेन बहुसाहसो द्विपः।**
**अग्रभागचरदुग्रकेसरी स्पष्टमेष बत कष्टमश्नुते ॥ ३६ ॥**

अजगरकबलितपादं सिंहेनाक्रम्यमाणं गजं वर्णयति—**ग्रस्तेति**। तरस्विना वाहसेन ग्रस्तपश्चिमपदः बहुसाहसः अग्रभागचरदुग्रकेसरी एषः द्विपः स्पष्टं कष्टम् अश्नुते। बत! ॥ तरस्विना—बलवेगवता। वाहसेन—अजगरेण। ग्रस्तं पश्चिमपदम्—पश्चाद्भागगतपादः यस्य सः। अग्रभागे चरन् उग्रः केसरी—सिंहः यस्य, सः। द्विपः—गजः। स्पष्टम्—महत्। कष्टम्—क्लेशम्। अश्नुते—अनुभवति ॥ ३६ ॥

**मत्तभृङ्गकुलमत्तकाशिनीनृत्तरङ्गसुमहत्तरद्रुमः।**
**उत्तमाङ्गि मम चित्तकौतुकं दत्त एष गिरिसत्तमो भृशम् ॥ ३७ ॥**

चित्रकूटस्य महावृक्षैः प्रेक्षणीयत्वं विवृणोति—**मत्तेति**। उत्तमाङ्गि! मत्तभृङ्गकुलमत्तकाशिनीनृत्तरङ्गसुमहत्तरद्रुमः एषः गिरिसत्तमः मम भृशं चित्तकौतुकं दत्ते ॥ मत्तानां भृङ्गाणां यत् कुलम्, तत्र विद्यमानाः मत्तकाशिन्यः सुन्दर्यः, भ्रमर्यः इति भावः, तासां नृत्तरङ्गाः सुमहत्तरद्रुमाः यस्मिन्, तादृशः। दत्ते—जनयति ॥ ३७ ॥

**वल्लिकापिहितपल्लिकाजुषां झिल्लिकाकुलमतल्लिकारवैः।**
**चित्रमन्तरितमत्र सुभ्रुवां नर्मसीमपरिकर्मसीत्कृतम् ॥ ३८ ॥**

झिल्लिकाकोलाहलं वर्णयति—**वल्लिकेति**। अत्र वल्लिकापिहितपल्लिकाजुषां सुभ्रुवां नर्मसीमपरिकर्मसीत्कृतं झिल्लिकाकुलमतल्लिकारवैः अन्तरितम्; चित्रम् ॥ वल्लिकाभिः पिहिताः—आच्छादिताः पल्लिकाः—कुटीः जुषन्ते इति, तादृशीनाम्। सुभ्रुवाम्—सुन्दरीणाम्। नर्मणः—क्रीडायाः सीम्नि यत् परिकर्म—अङ्गसंस्कारः। सीत्कृतम्—सीत्कारः। अन्तरितम्—अव्यक्ततां नीतम्। चित्रम्—आश्चर्यम् ॥ ३८ ॥

**यश्चकोरनिचयश्चलेक्षणे नित्यवासकृदधित्यकासु सः ।**
**दृष्टमेघमपि दिष्टमेत्य न क्लान्तिमेति शशिकान्तिलोपजाम् ॥ ३९ ॥**

चित्रकूटस्य मेघमण्डलादुन्नततरत्वं चकोरवर्णनप्रसङ्गेनाह—य इति । चलेक्षणे ! यः चकोरनिचयः अधित्यकासु नित्यवासकृत् , सः दृष्टमेघं दिष्टं एत्य अपि शशिकान्तिलोपजां क्लान्तिं न एति ॥ निचयः-समूहः । अधित्यकासु-ऊर्ध्वभूमिषु । दृष्टाः मेघाः यस्मिन् , तं दृष्टमेघं कालम् । प्रावृषमित्यर्थः । दिष्टम्—कालम , प्रावृषमित्यर्थः । एत्य—प्राप्य । शशिकान्तिः—चन्द्रिका, तल्लोपजाम् । क्लान्तिम्—दैन्यम् । चन्द्रिकापायिनश्चकोराः । मेघकालेऽपि अधित्यकासु चन्द्रिका प्रसरति । तासां मेघमण्डलादुन्नततरत्वात् । चन्द्रस्य मेघैर्निरोधाभावात् ॥ ३९ ॥

**या सरोषमुदवासयत् प्रियं दूरनिस्स्वनमयूरकैरियम् ।**
**तर्जिता तमथ वर्जिता रुषा मानिनी सविधमानिनीषति ॥ ४० ॥**

मयूरनिस्स्वनमुपवर्णयति—येति । या सरोषं (यथा तथा) प्रियम् उदवासयत्, इयं मानिनी अथ दूरनिस्स्वनमयूरकैः तर्जिता रुषा वर्जिता तं सविधम् आनिनीषति ॥ उदवासयत्—दूरीकृतवती । दूरनिस्स्वनाः—तारं नदन्तः ये मयूरकाः, तैः । आनिनीषति—आनेतुमिच्छति ॥ ४० ॥

**सर्वथा कनकपर्वतादयं निर्विशेष इति निर्विवादकम् ।**
**उर्वशीमुखसुपर्वयोषितः शर्वरीशमुखि निर्विशन्त्यमुम् ॥ ४१ ॥**

महामेरोरन्यूनश्चित्रकूट इति वदति—सर्वथेति । शर्वरीशमुखि ! सर्वथा अयं कनकपर्वतात् निर्विशेषः इति निर्विवादकम् । उर्वशीमुखसुपर्वयोषितः अमुं निर्विशन्ति ॥ शर्वरीशमुखि—चन्द्रमुखि । कनकपर्वतात्—महामेरोः । निर्विशेषः—भेदरहितः । तेन तुल्य इत्यर्थः । सुपर्वयोषितः—देवाङ्गनाः । अमुम्—चित्रकूटम् । निर्विशन्ति—भुञ्जते ॥ ४१ ॥

**रम्यमेनमुपगम्य मे न हृत् प्राज्यभोगमपि राज्यमिच्छति ।**
**केकयान्वयपताकया तया केवलं कुशलमेव लम्भितम् ॥ ४२ ॥**

चित्रकूटो राज्यादपि सुखप्रद इत्याह—**रम्यमिति**। रम्यम् एनम् उपगम्य मे हृत् प्राज्यभोगं राज्यम् अपि न इच्छति। तया केकयान्वयपताकया केवलं कुशलम् एव लम्भितम् ॥ रम्यम्—सुखकरम्। एनम्—चित्रकूटम्। प्राज्याः—प्रचुराः भोगाः—सुखानि यस्मिन्, तादृशम्। केकयान्वयपताकया—कैकेय्या। कुशलम्—क्षेमम्। लम्भितम्—प्रापितम् ॥ ४२ ॥

**एवमत्र नरदेवनन्दने वाचमुद्वमति सा च मुद्वती।**
**तद्गिरौ सततवल्गिरौहिषे रन्तुमैहत चिरन्तु मैथिली ॥ ४३ ॥**

सीता च चित्रकूटे रन्तुमिच्छति। एवम् अत्र नरदेवनन्दने वाचम् उद्वमति (सति) सा च मैथिली मुद्वती सततवल्गिरौहिषे तद्गिरौ चिरं तु रन्तुम् ऐहत ॥ नरदेवनन्दने—राजपुत्रे रामे। उद्वमति—वदति। मुद्वती—सन्तोषवती। सततं वल्गिनः—प्लवमानाः रौहिषाः—मृगविशेषाः यस्मिन्, तादृशे। ऐहत—ऐच्छत् ॥ ४३ ॥

**शान्तसञ्ज्वरमुपान्तसद्द्रुमच्छायया तदनु जायया समम्।**
**शीतलं बहु शिलातलं गतः सादरं स निषसाद राघवः ॥ ४४ ॥**

रामः सीतया सह क्वचित् शीतलशिलातले निषीदति। तदनु सः राघवः जायया समम्, उपान्तसद्द्रुमच्छायया शान्तसञ्ज्वरं बहु शीतलं शिलातलं गतः सादरं निषसाद ॥ उपान्ते ये सद्द्रुमाः—उत्तमवृक्षाः, तेषां छायया। शान्तसञ्ज्वरम्—उपशान्तसन्तापम्। निषसाद—निषण्णः ॥ ४४ ॥

**तत्र निर्गतविचित्रभारतीगुम्भया सपरिरंभया चिरम्।**
**रामया परिरराम पार्थिवः कामकेलिरसधामचेतसा ॥ ४५ ॥**

रामः सीतया चिरं तत्र रमते। तत्र पार्थिवः, निर्गतविचित्रभारतीगुम्भया सपरिरम्भया कामकेलिरसधामचेतसा रामया (सह) चिरं परिरराम ॥ निर्गतो विचित्रो भारतीगुम्भः—वाक्य-

रचना यस्याः, तथा। सह परिरम्भेण—आलिङ्गनेन वर्तते, तादृश्या। कामकेलिरसस्य धाम—स्थानं चेतः यस्याः, तथा। रामया—सीतया। परिरराम—क्रीडितवान् ॥ ४५ ॥

**अङ्कसीमनि विशङ्कमीश्वरः सङ्गमय्य पुनरङ्गमात्मनः ।**
**स क्षमादुहितुरक्षमश्रमात् सस्विदश्चिरमसिस्वदत् सुखम् ॥ ४६ ॥**

रामः सीतायाः उत्सङ्गे शयानः सुखमनुभवति। स ईश्वरः: पुनः अक्षमश्रमात् सस्विदः क्षमादुहितुः अङ्कसीमनि विशङ्कम् आत्मनः अङ्गं सङ्गमय्य चिरं सुखम् असिस्वदत् ॥ ईश्वरः—पतिः। अक्षमश्रमात्—दुस्सहग्लानिवशात्। सस्विदः—स्वेदयुक्तः। क्षमादुहितुः—सीतायाः। अङ्कसीमनि—उत्सङ्गतले। अङ्गम्—उत्तमाङ्गम्। शिरः इति भावः। सङ्गमय्य-निधाय। असिस्वदत्—आस्वादितवान् ॥ ४६ ॥

**निद्रया विहितमुद्रया दृशोः स्पष्टमत्र यति नष्टसंज्ञताम् ।**
**काकरूपमथ पाकशासनिः प्राप्य तत्सविधमाप्य तस्थिवान् ॥ ४७ ॥**

रामे निद्रां गते काकरूपधरः इन्द्रपुत्रः आगच्छति। अथ दृशोः विहितमुद्रया निद्रया अत्र स्पष्टं नष्टसंज्ञतां यति (सति) पाकशासनिः काकरूपं प्राप्य तत्सविधम् आप्य तस्थिवान् ॥ विहिता—कृता मुद्रा—निमीलनम् यया, तथा। अत्र—अस्मिन् रामे। नष्टसंज्ञताम्—अबोधावस्थाम्। यति—गच्छति। पाकशासनिः—इन्द्रपुत्रः। तत्सविधम्—रामसमीपम्। तस्थिवान्—स्थितः ॥ ४७ ॥

**देहवत्तमिव मोहबन्धनं चक्षुषः सकलदिक्षु सञ्चरन् ।**
**सा विलोक्य तरसा विदेहजा भीषणं शकुनमीषदत्रसत् ॥ ४८ ॥**

काकं तं विलोक्य सीता बिभेति। सकलदिक्षु सञ्चरत् देहवत् चक्षुषः मोहबन्धनम् इव भीषणं तं शकुनं विलोक्य सा विदेहजा तरसा ईषद् अत्रसत् ॥ देहवत्—मूर्तम्। चक्षुषः—नेत्रस्य। मोहबन्धनम्—वैवश्यकारणम्। भीषणम्—भयानकम्। शकुनम्—पक्षिणम्। काकमिति भावः। विदेहजा—सीता। अत्रसत्—भीता ॥ ४८ ॥

शक्रजः स खलु वक्रतुण्डवद्विग्रहो व्यलिखदुग्रमुत्प्लुतः ।
तत्पयोधरमनल्पपीनतावाहिनं वृष इवाहिपञ्जरम् ॥ ४९ ॥

काकः सीतायाः स्तनमुल्लिखति । वक्रतुण्डवद्विग्रहः सः खलु शक्रजः, उत्प्लुतः (सन्), अनल्पपीनतावाहिनं तत्पयोधरं, वृषः अहिपञ्जरम् इव उग्रं (यथा तथा) व्यलिखत् ॥ वक्रं तुण्डं चञ्चुः अस्यास्तीति वक्रतुण्डवान् । तादृशो विग्रहो यस्य, तादृशः । शक्रजः- इन्द्रपुत्रः । अनल्पपीनतावाहिनम्—अतिस्थूलम् । तत्पयोधरम्—तस्याः सीतायाः स्तनम् । वृषः—बलीवर्दः । अहिपञ्जरम्—वल्मीकम् । व्यलिखत्—विदारितवान् ॥ ४९ ॥

तेन दारुणतमेन दारिता सा रुरोद मृगचारुलोचना ।
नैव तत्र पतिदेवता पतिं प्रत्यबोधयत कृत्यवेदिनी ॥ ५० ॥

सीता रोदिति । दारुणतमेन तेन दारिता सा मृगचारुलोचना रुरोद । कृत्यवेदिनी पतिदेवता तत्र पतिं न एव प्रत्यबोधयत ॥ तेन—काकेन । पतिदेवता—पतिव्रता सीता । प्रत्यबोधयत—प्रतिबोधितवती ॥ ५० ॥

अश्रु तद्गलितमश्रुतस्वनं सुप्तमात्मभुजगुप्तविष्टपम् ।
सन्निपत्य हृदि तं निरर्गलं नष्टनिद्रमतनिष्ट भूपतिम् ॥ ५१ ॥

सीतायाः अश्रुपातेन रामः प्रतिबुध्यते । अश्रुतस्वनं (यथा तथा) तद्गलितम् अश्रु, हृदि निरर्गलं सन्निपत्य, सुप्तम् आत्मभुजगुप्तविष्टपं तं भूपतिं नष्टनिद्रम् अतनिष्ट ॥ न श्रुतः स्वनः—शब्दः यस्मिन् कर्मणि तद् । तद्गलितम्—तस्याः—सीतायाः गलितम् । आत्मनो भुजाभ्यां गुप्तम्—रक्षितं विष्टपम्—जगत् येन तम् । नष्टनिद्रम्—प्रबुद्धम् । अतिनिष्ट—अकरोत् ॥ ५१ ॥

ईदृशीमथ मृगीदृशो दशामाकलय्य बत काकनिर्मिताम् ।
भूपतिः सपदि कोपतीव्रतामागतः प्रकटरागदृक्तटः ॥ ५२ ॥

रामः कुप्यति । अथ भूपतिः, काकनिर्मिताम् ईदृशीं बत मृगीदृशः दशाम् आकलय्य सपदि कोपतीव्रताम् आगतः प्रकटरागदृक्तटः (अभवत्) ॥ बत—शोचनीयाम् । दशाम्—

अवस्थाम्। आकलय्य–दृष्ट्वा। प्रकटः–स्पष्टः रागः–शोणिमा ययोः, तादृशौ दृक्तटौ यस्य, तादृशः ॥ ५२ ॥

**पार्श्वतः स तृणमाश्वथ स्वयं सम्प्रगृह्य धृतकम्प्रताधरः।**
**मन्त्रयन् विशिखमन्त्रमादराल्लक्षितं तमनु चिक्षिपे नृपः ॥ ५३ ॥**

अस्त्रमन्त्रं मन्त्रयन् रामस्तृणं क्षिपति। अथ सः नृपः आशु पार्श्वतः तृणं स्वयं सम्प्रगृह्य धृतकम्प्रताधरः विशिखमन्त्रम् आदरात् मन्त्रयन् लक्षितं तम् अनु चिक्षिपे॥ पार्श्वतः–समीपात्। धृता कम्प्रता–चलनं येन, तादृशः अधरः यस्य सः। विशिखमन्त्रम्–अस्त्रमन्त्रम्। लक्षितम्–कृतलक्ष्यम्। तम्–काकम्। अनु–लक्ष्यीकृत्य। चिक्षिपे–प्रायुङ्क्त ॥ ५३ ॥

**दृष्ट्वा शरं ज्वलितमाशु समापतन्तं भीतः सुतः सुरपतेस्तरसा दधावे।**
**बाणोऽपि तं चपलमेव पलायमानं सौकेतवीसुतमिवानुजगाम पूर्वम् ॥ ५४ ॥**

सः बाणः काकमनुधावति। सुरपतेः सुतः ज्वलितम् आशु समापतन्तं शरं दृष्ट्वा भीतः तरसा दधावे। बाणः अपि चपलम् एव पलायमानं तं, पूर्वं सौकेतवीसुतम् इव अनुजगाम ॥ सुरपतेः–इन्द्रस्य। दधावे–पलायितवान्। चपलम्–शीघ्रम्। पूर्वम्–विश्वामित्रयाग-रक्षाकाले। सुकेतोः (यक्षस्य), अपत्यं स्त्री सौकेतवी–ताटका, तस्याः सुतम्–मारीचम् ॥ ५४ ॥

**ब्रह्मेन्द्रशङ्करमुखानखिलानमर्त्यान्**
**गत्वाप्यलब्धशरणः पुनरेष काकः।**
**आशिश्रिये प्रणतपालकमेनमेव**
**प्रागम्बरीषमिव चक्रभयान्महर्षिः ॥ ५५ ॥**

काकः शरणालाभात् राममेवाश्रयति। ब्रह्मेन्द्रशङ्करमुखान् अखिलान् अमर्त्यान् गत्वा अपि अलब्धशरणः एषः काकः, पुनः प्रणतपालकम् एनम् एव, प्राक् महर्षिः चक्रभयात् अम्ब-रीषम् इव आशिश्रिये॥ अमर्त्यान्–देवान्। न लब्धं शरणम्–रक्षिता येन सः।

प्रणतपालकम्—आश्रितरक्षकम्। एनम्—रामम्। महर्षिः—दुर्वासाः। अशिश्रियेआश्रितवान् ॥ ५५ ॥

तस्यैकलोचनविलोपनकर्मणैव
स्वं सायकं सफलतामनयन्नरेन्द्रः ।
प्रीतश्च तं व्यसृजदङ्घ्रियुगावनम्रं
पादश्रयेण महतां प्रतिघात् प्रशान्तिः ॥ ५६ ॥

रामस्तं प्राणभयाद्रक्षति । नरेन्द्रः तस्य एकलोचनविलोपनकर्मणा एव स्वं सायकं सफलताम् अनयत् । अङ्घ्रियुगावनम्रं तं प्रीतः व्यसृजत् च। महतां पादश्रयेण प्रतिघात् प्रश । तस्य—काकस्य। सायकम्—शरम्। अङ्घ्रियुगावनम्रम्—पादद्वयपतितम् । व्यसृजत्—विसृष्टवान्। प्रतिघात्—कोपात् ॥ ५६ ॥

तस्मिन् गते प्रियतमां परिरभ्य गाढ-
माशिश्वसत् खगदुराक्रमजातपीडाम् ।
सोपद्रवोऽयमिति रम्यमपि प्रदेशं
देवस्तमुज्झितुमचीकमत द्रुतं च ॥ ५७ ॥

रामस्तस्मात् प्रदेशात् गन्तुमिच्छति । देवः तस्मिन् गते खगदुराक्रमजातपीडां प्रियतमां गाढं परिरभ्य आशिश्वसत् । अयं सोपद्रवः इति रम्यम् अपि तं प्रदेशं द्रुतम् उज्झितुम् अचीकमत च ॥ खगस्य—पक्षिणः काकस्य दुराक्रमेण जाता पीडा यस्याः, ताम्। परिरभ्य—आलिङ्ग्य । अशिश्वसत्—आश्वासयामास। उज्झितुम्—त्यक्तुम्। अचीकमत—ऐच्छत् ॥ ५७॥

भूयो भूपालमौलिः सह सहजनुषा दक्षिणो दक्षिणस्या-
माशायां प्रस्थितोऽभून्निजहृदयवशस्वान्तया कान्तया च ।
मध्ये मध्ये महर्षीन् महितगुणगणानातिथेयानुपास्य
प्राविक्षत् पर्णशालां बहुमुनिसहितां सम्भृतामोदमत्रेः ॥ ५८ ॥

अत्रेराश्रमं प्रविशति रामः। दक्षिणः भूपालमौलिः सहजनुषा निजहृदयवशस्वान्तया कान्तया च सह भूयः दक्षिणस्याम आशायां प्रस्थितः अभूत्। मध्येमध्ये महितगुणगणान् आतिथेयान् महर्षीन् उपास्य सम्भृतामोदं (यथा तथा) बहुमुनिसहिताम् अत्रेः पर्णशालां प्राविक्षत्॥ दक्षिणः–सरलः। भूपालमौलिः–राजश्रेष्ठो रामः। सहजनुषा–अनुजेन। निजहृदयस्य वशम् अधीनं स्वान्तम्–हृदयं यस्याः, तया। आशायाम्–दिशि। आतिथेयान्–अतिथिषु साधून्। उपास्य–सेवित्वा। सम्भृतामोदम्–ससन्तोषम्। प्राविक्षत्–प्रविष्टवान्॥ ५८॥

नत्वा तत्पादपद्मं चिरतरममुना सत्कृतः प्रेमपूर्वं
तत्पत्नीप्रीतिदत्ताभरणभरितया जायया जातमोदः।
तत्रोषित्वा त्रियामामुषसि पुनरगाद्दुर्गमं दण्डकाख्यं
कान्तारं कान्तमूर्तिर्मुनिजननयनैरन्वितो रामचन्द्रः॥ ५९॥

अत्रेः सत्कारं स्वीकृत्य अन्येद्युर्दण्डकारण्यं गच्छति रामः। कान्तमूर्तिः रामचन्द्रः तत्पादपद्मं नत्वा चिरतरम् अमुना प्रेमपूर्वं सत्कृतः तत्पत्नीप्रीतिदत्ताभरणभरितया जायया (सह) जातमोदः तत्र त्रियामाम् उषित्वा उषसि पुनः मुनिजननयनैः अन्वितः दुर्गमं दण्डकाख्यं कान्तारम् अगात्॥ कान्तमूर्तिः–सुन्दररूपः। तस्य–अत्रेः पादपद्मम्। तत्पत्न्या–अत्रिपत्न्या अनसूयया प्रीत्या दत्तैः आभरणैः भरितया। त्रियामाम्–रात्रिम्। कान्तारम्–अतिदुर्गमं वनम्। अगात्–अगच्छत्॥ ५९॥

प्रविशति ततः सत्त्वश्रेणीशरण्यमरण्यकं
नरपतिसुते कश्चित् क्रव्यात् कठोरतराकृतिः।
गिरिरिव खे विन्ध्यः सन्ध्यापयोधरधूम्ररुक्-
त्वरितमदसीयाध्वानं तं निरुध्य वितस्थिवान्॥ ६०॥

विराधो नाम राक्षसो रामादीनां मार्गं निरुणद्धि। ततः नरपतिसुते सत्त्वश्रेणीशरण्यम् अरण्यकं प्रविशति (सति) कठोरतराकृतिः सन्ध्यापयोधरधूम्ररुक् कश्चित् क्रव्यात्, रवेः

(अध्वानम) विन्ध्यः गिरिः इव तम् अदसीयाध्वानं त्वरितं निरुध्य वितस्थिवान् ॥ सत्त्व-श्रेणीशरण्यम्—जन्तुसङ्घवासोचितम्। सन्ध्यायां यः पयोधरः मेघः, सः इव धूम्ररुक्—कृष्णलोहितवर्णः। क्रव्यात् (विराधो नाम) राक्षसः। रवेः—सूर्यस्य। अध्वानम्—मार्गम्। अदसीयम्—रामसम्बन्धिनम् अध्वानम्। वितस्थिवान्—स्थितः ॥ ६० ॥

सोऽभिद्रुत्य विदेहराजतनयामङ्केन कृत्वा हठा-
दुत्पित्सुर्गगनं प्ररुष्टमनसा ताभ्यां निरुद्धः शरैः ।
त्यक्त्वा तामथ तौ प्रगृह्य तरसा दोर्भ्यां वहन् स्कन्धयो-
र्गन्तुं प्राक्रमत क्षणेन नृवरौ चिच्छेदतुस्तद्भुजौ ॥ ६१ ॥

विराधो रामलक्ष्मणौ प्रगृह्य गन्तुमुद्युङ्क्ते। सः अभिद्रुत्य विदेहराजतनयां हठाद् अङ्केन कृत्वा गगनम् उत्पित्सुः प्ररुष्टमनसा ताभ्यां शरैः निरुद्धः। अथ तां त्यक्त्वा तौ तरसा दोर्भ्यां प्रगृह्य स्कन्धयोः वहन् गन्तुं प्राक्रमत। नृवरौ क्षणेन तद्भुजौ चिच्छेदतुः ॥ सः—विराधः। अभिद्रुत्य—अभिधावनं कृत्वा। विदेहराजतनयाम्—सीताम्। हठाद्—बलाद्। अङ्केन—उत्सङ्गेन। कृत्वा—धृत्वा। उत्पित्सुः—उत्पतितुमिच्छुः। प्ररुष्टमनसा—अत्यन्तं क्रुद्धचेतसा। ताभ्याम्—रामलक्ष्मणाभ्याम्। ताम्—सीताम्। तौ—रामलक्ष्मणौ। तरसा—बलेन वेगेन च। दोर्भ्याम्—हस्ताभ्याम्। स्कन्धयोः—अंसयोः। प्राक्रमत—प्रारभत। तद्भुजौ—विराधहस्तौ। चिच्छेदतुः—द्विधा चक्रतुः ॥ ६१ ॥

बाहुच्छेदेन बाहूद्भवतिलककृतेनास्तसारः क्षपाटः
क्षोणीपृष्ठे पपात क्षुभितवनतरुः कृत्तपक्षाद्रितुल्यः ।
तौ चैनं तत्र गर्ते गदितनिजपुरावृत्तमस्यैव वाचा
प्रक्षिप्य च्छादयामासतुरयमपि च स्वर्गतो दिव्यमूर्तिः ॥ ६२ ॥

विराधः स्वर्गं गच्छति। बाहूद्भवतिलककृतेन बाहुच्छेदेन अस्तसारः कृत्तपक्षाद्रितुल्यः क्षपाटः क्षपितवनतरुः क्षोणीपृष्ठे पपात। तौ गदितनिजपुरावृत्तम् एनम्, अस्य एव वाचा तत्र गर्ते प्रक्षिप्य छादयामासतुः च। अयम् अपि च दिव्यमूर्तिः (सन्) स्वः गतः ॥ बाहूद्भवाः—

क्षत्रियाः, तेषां तिलकौ—रामलक्ष्मणौ, ताभ्यां कृतेन। अस्तसारः—नष्टबलः। कृत्तपक्षेण—छिन्नपक्षेण अद्रिणा तुल्यः। क्षपाटः—राक्षसः। क्षपिताः—नाशिताः बनतरवः—अरण्यवृक्षाः येन सः। तौ—रामलक्ष्मणौ। गदितं निजं पुरावृत्तं—वैश्रवणशापात् स्वस्य राक्षसत्वप्राप्तिरूपं येन, तम्। एनम्—विराधम्। अस्य—विराधस्य। गर्ते—भूश्वभ्रे। अयम्—विराधः। दिव्यमूर्तिः—तुम्बुरुनामकगन्धर्वरूपः। स्वः—स्वर्गम् ॥ ६२ ॥

**तदनु जनकपुत्र्या संहितः सैंहिकेया-**
**दुदितमिव शशाङ्कं वक्त्रपद्मं वहन्त्या।**
**उटजमभिजगाम प्रीतिमानेष रामः**
**कलितदुरितभङ्गं सानुजः शारभङ्गम् ॥ ६३ ॥**

रामः शरभङ्गाश्रमं प्राप्नोति। तदनु सैंहिकेयात् उदितं शशाङ्कम् इव वक्त्रपद्मं वहन्त्या जनकपुत्र्या संहितः प्रीतिमान् एषः रामः सानुजः, कलितदुरितभङ्गं शारभङ्गम् उटजम् अभिजगाम॥ सैंहिकेयात्—राहोः। संहितः—संयुतः। कलितः—कृतः दुरितभङ्गः—पापनाशः येन, तम्। शरभङ्गस्य महर्षेरिदम्—शारभङ्गम्। उटजम्—पर्णशालाम् ॥ ६३ ॥

**कुलपतिरथ दृष्ट्वा राघवं मोदशाली**
**जननफलमयासीत् सोऽपि तं तापसेन्द्रम्।**
**जगति खलु जनानां पुण्यपूरैकधाम्नां**
**पृथगिह पुरुषार्थः कोपि नान्योन्ययोगात् ॥ ६४ ॥**

शरभङ्गो रामश्च कृतार्थौ भवतः। अथ कुलपतिः राघवं दृष्ट्वा मोदशाली जननफलम् अयासीत्। सः अपि तं तापसेन्द्रं (दृष्ट्वा जननफलम् अयासीत्)। पुण्यपूरैकधाम्नां जनानां खलु जगति अन्योन्ययोगात् पृथक् इह कोपि पुरुषार्थः न॥ कुलपतिः—शरभङ्गः। जननफलम्—जन्मसाफल्यम्। अयासीत्—प्राप्तवान्। सः—रामः। पुण्यपूरैकधाम्नाम्—सुकृतिनाम्। पृथक्—भिन्नः ॥ ६४ ॥

तदनु स मुनिवर्यः सिद्धयोगप्रभावः
परमपदमयासीत् स्वेच्छयोत्सृज्य देहम् ।
अपि विषयविरक्तो यः पुरासीदनीदृ-
ग्रघुतनयनिरीक्षामात्रकाङ्क्षानिरुद्धः ॥ ६५ ॥

शरभङ्गः परमपदं प्राप्नोति। तदनु सिद्धयोगप्रभावः सः मुनिवर्यः स्वेच्छया देहम् उत्सृज्य परमपदम् अयासीत्। यः पुरा विषयविरक्तः अपि रघुतनयनिरिक्षामात्रकाङ्क्षानिरुद्धः अनीदृक् आसीत् ॥ सिद्धः योगप्रभावः–योगसिद्धिः यस्य सः। मुनिवर्यः–शरभङ्गः। अयासीत्–प्राप्तवान्। इदृक्–परमपदगामी न भवति, इत्यनीदृक् ॥ ६५ ॥

अतिशयबहुमानाश्चर्यवैवश्यधुर्यं
हृदयमथ दधानस्तद्दिशो निर्जिहानः ।
निशिचरकृतपीडां बोधितस्तापसेन्द्रै-
रवनिपतिरमीषां तद्वधं प्रत्यजानात् ॥ ६६ ॥

रामस्तापसेभ्यो राक्षसवधं प्रतिजानीते। अथ अतिशयबहुमानाश्चर्यवैवश्यधुर्यं हृदयं दधानः तद्दिशः निर्जिहानः अवनिपतिः तापसेन्द्रैः निशिचरकृतपीडां बोधितः (सन) अमीषां तद्वधं प्रत्यजानात ॥ तद्दिशः–तस्मात् प्रदेशात्। निर्जिहानः–निर्गच्छन्। अमीषाम्–तापसानाम्। तद्वधम्–राक्षसवधम्। प्रत्यजानात्–प्रतिज्ञातवान् ॥ ६६ ॥

अगमदथ महर्षेराश्रमं पीतसिन्धो-
रनुसवनमृषीणां पूरितं वेदघोषैः ।
अजिरचरकुरङ्गीबालकोत्पातलीला-
विहसितवटुलोकं विश्वरम्यं नरेन्द्रः ॥ ६७ ॥

रामोऽगस्त्याश्रमं प्रविशति। अथ नरेन्द्रः अनुसवनम् ऋषीणां वेदघोषैः पूरितम् अजिरचरकुरङ्गीबालकोत्पातलीलाविहसितवटुलोकं विश्वरम्यं, पीतसिन्धोः महर्षेः आश्रमम् अगमत् ॥ अनुसवनम्–सवने सवने। प्रातःसवने माध्यन्दिनसवने तृतीयसवने चेत्यर्थः। अजिरे–अङ्गणे चरन्तो ये कुरङ्गीबालकाः–मृगपोताः, तेषां उत्पातलीलाभिः विहसितं वटुलोकः–

ब्रह्मचारिजनः यस्मिन्, तादृशम्। पीतः सिन्धुः—समुद्रः येन, तस्य महर्षेः। अगस्त्यस्येत्यर्थः ॥ ६७ ॥

पदकमलमनंसीत्तापसेन्द्रस्य तस्य
क्षितितलगमितेन स्वेन मूर्ध्ना महीशः ।
उदयति दिवि गच्छत्यच्छतामम्बु यस्मिन्
प्रकृतिमगमदद्रिर्यन्नियोगेन विन्ध्यः ॥ ६८ ॥

अगस्त्यं रामः प्रणमति। महीशः क्षितितलगमितेन स्वेन मूर्ध्ना तस्य तापसेन्द्रस्य पदकमलम् अनंसीत्। यस्मिन् दिवि उदयति (सति) अम्बु अच्छतां गच्छति। यन्नियोगेन विन्ध्यः अद्रिः प्रकृतिम् अगमत् ॥ क्षितितलगमितेन—दूरानमितेन। मूर्ध्ना—शिरसा। तस्य तापसेन्द्रस्य-अगस्त्यस्य। अनंसीत्—प्रणतवान्। यस्मिन्-अगस्त्ये। दिवि—आकाशे। अम्बु—जलम्। प्रकृतिम्—पूर्वस्थितिम् ॥ ६८ ॥

शिरसि च करपद्मं हस्तयोः शस्त्रजालं
रिपुजनविजयाय प्रादितास्मै मुनीन्द्रः ।
पतिरपि मनुजानां पाकसंशासनीयान्
शरशरधिशरासानाप्य देदीप्यते स्म ॥ ६९ ॥

अगस्त्यो रामाय शरचापादीन् दत्त्वानुगृह्णाति। मुनीन्द्रः रिपुजनविजयाय अस्मै शिरसि करपद्मं हस्तयोः शस्त्रजालं च प्रादित। मनुजानाम् पतिः अपि पाकसंशासनीयान् शरशरधिशरासान् आप्य देदीप्यते स्म ॥ मुनीन्द्रः—अगस्त्यः। अस्मै—रामाय। प्रादित—दत्तवान्। मनुजानां पतिः—रामः। पाकसंशासनः—इन्द्रः, तत्सम्बन्धिनः—पाकसंशासनीयान्। शरधिः—तूणीरः। शरासः—चापः। देदीप्यते स्म—पुनः पुनरतिशयेन दीप्तवान् ॥ ६९ ॥

गोदावर्याः सभार्यस्तदनु तटभुवि प्राप्य तस्यैव वाचा
रम्यायां पञ्चवट्यां रचितनिलयनः सोदरेणादरेण ।
रेमे तत्रावनीन्द्रश्चिरममितसुखं विस्मरन्नप्ययोध्यां
पुष्पां निष्पाववल्लीदलनसुरभिभिर्मारुतैः सेव्यमानः ॥ ७० ॥

रामः पञ्चवटीं प्रविश्य चिरं सुखं निवसति। तदनु अवनीन्द्रः तस्य एव वाचा सभार्यः गोदावर्याः तटभुवि प्राप्य रम्यायां पञ्चवट्यां सोदरेण आदरेण रचितनिलयनः तत्र पुष्पां अयोध्याम् अपि विस्मरन् निष्पाववल्लीदलनसुरभिभिः मारुतैः सेव्यमानः चिरम् अमितसुखं रेमे॥ तस्य–अगस्त्यस्य। सोदरेण–लक्ष्मणेन। रचितनिलयनः–निर्मितपर्णशालः। पुष्पाम्–विशालाम्। निष्पावः–फलवल्लीविशेषः॥ ७०॥

कुञ्जेषु गुञ्जदलिनीकुलमञ्जुलेषु
ज्योत्स्नावितानसरसेषु च सैकतेषु।
उन्निद्रपङ्कजवनेषु च पल्वलेषु
स्वैरं नृपश्चिरमरंस्त समं महिष्या॥ ७१॥

रामो विविधेषु प्रदेशेषु रमते। नृपः गुञ्जदलिनीकुलमञ्जुलेषु कुञ्जेषु, ज्योत्स्नावितान-सरसेषु च सैकतेषु, उन्निद्रपङ्कजवनेषु च पल्वलेषु महिष्या समं स्वैरं चिरम् अरंस्त॥ गुञ्जन्तीनाम्–शब्दायमानानाम् अलिनीनाम् भृङ्गीणां कुलेन मञ्जुलेषु–मनोहरेषु। ज्योत्स्ना-वितानेन–चन्द्रिकाप्रसरेण सरसेषु–सुखकरेषु। सैकतेषु–सिकतामयप्रदेशेषु। उन्निद्राणि विकसितानि पङ्कजवनानि–कमलवृन्दानि येषु, तेषु। पल्वलेषु–अल्पसरस्सु। महिष्या–पत्न्या सीतया। स्वैरम्–स्वच्छन्दम्। अरंस्त–अरमत॥ ७१॥

वने तस्मिन्नेवं खलु विहरतस्तस्य नृपतेः
ऋषीन्द्राणामन्तः प्रमदमनिशं कन्दलयतः।
अविज्ञातप्रायाः प्रययुरधिकद्वादशसमाः
मनोवृत्तिः कालं ह्रसयति परं द्राघयति च॥ ७२॥

इति श्रीगोदवर्मविद्वद्युवराजकृते
श्रीरामचरिते महाकाव्ये
नवमः सर्गः

रामस्य एवं ससुखं द्वादशसंवत्सराः गच्छन्ति। तस्मिन् वने एवं खलु विहरतः ऋषीन्द्राणाम् अन्तः प्रमदम् अनिशं कन्दलयतः तस्य नृपतेः अधिकद्वादशसमाः अविज्ञातप्रायाः प्रययुः। मनोवृत्तिः कालं परं ह्रसयति, द्राघयति च॥ विहरतः–रममाणस्य। अन्तः-प्रमदम्–हृदयानन्दम्। अनिशम्–सर्वदा। कन्दलयतः-संवर्धयतः। तस्य नृपतेः–रामस्य। अधिकद्वादशसमाः–द्वादशाधिकाः संवत्सराः। परम्–अत्यर्थम्। ह्रसयति–ह्रस्वं करोति। द्राघयति–दीर्घं करोति ॥ ७२ ॥

इति पण्डितरत्नश्रीनारायणपिषारोटिविरचितायां
श्रीरामचरितमहाकाव्यव्याख्यायां अन्वयार्थप्रबोधिन्यां
शैलवर्णनं नाम नवमः सर्गः



# दशमः सर्गः

अथैकदा तत्र वने यदृच्छया समागता शूर्पणखेति विश्रुता ।
निशाचरी निस्तुलरूपसम्पदं ददर्श रामं दयितासमन्वितम् ॥ १ ॥

शूर्पणखा रामं पश्यति । अथ एकदा तत्र वने यदृच्छया समागता शूर्पणखा इति विश्रुता निशाचरी निस्तुलरूपसम्पदं दयितासमन्वितं रामं ददर्श ॥ निशाचरी–राक्षसी । निस्तुला–असदृशी रूपसम्पत् यस्य तम् ॥ १ ॥

विलोकयन्ती वपुरस्य सुन्दरं विकस्वराम्भोरुहकोमलाननम् ।
कुतूहलावेशविलोलमानसा विचिन्तयामास चिरं तदाशरी ॥ २ ॥

शूर्पणखा चिन्तयति । विकस्वराम्भोरुहकोमलाननं सुन्दरं अस्य वपुः विलोकयन्ती कुतूहलावेशविलोलमानसा आशरी तदा चिरं विचिन्तयामास ॥ अस्य–रामस्य । आशरी–राक्षसी शूर्पणखा ॥ २ ॥

क एष धन्यः कमनीयतानिधिर्वनं प्रविष्टो वनितासमन्वितः ।
अदृष्टपूर्वं खलु रूपमीदृशं दृशोः सुधां सिञ्चति मामकीनयोः ॥ ३ ॥

शूर्पणखायाश्चिन्ताप्रकारमेवाह चत्वारिंशताश्लोकैः । रामरूपस्य दर्शनीयत्वं चिन्तयति । कमनीयतानिधिः वनितासमन्वितः वनं प्रविष्टः एषः धन्यः कः । अदृष्टपूर्वं खलु ईदृशं रूपं मामकीनयोः दृशोः सुधां सिञ्चति ॥ सुधाम्–अमृतम् ॥ ६ ॥

न सृष्टिरेषा द्रुहिणस्य निश्चितं न तादृशी तस्य विधाननैपुणी ।
विरिञ्चिसर्गेषु विशिष्टमङ्गजं वदन्ति सर्वे स च दृष्ट एव मे ॥ ४ ॥

कामाधिकसुन्दरो रामो न ब्रह्मणा सृष्ट इति चिन्तयति । एषा न द्रुहिणस्य सृष्टिः । निश्चितम् । तस्य तादृशी विधाननैपुणी न । सर्वे विरिञ्चिसर्गेषु अङ्गजं विशिष्टं वदन्ति ।

सः च मे दृष्टः एव ॥ द्रुहिणस्य—ब्रह्मणः। तस्य—ब्रह्मणः। विधाननैपुणी—सृष्टिकौशलम्। विरिञ्चिसर्गेषु—ब्रह्मसृष्टिषु। अङ्गजम्—कामम्। सः—कामः ॥ ४ ॥

अथेश्वरः स्रष्टुमदःकलेबरं कदाचिदासीत् कमलासनो यदि ।
अतर्कितोपानतमेव तद्भवेन्न तावता तं बहुमन्महे वयम् ॥ ५ ॥

यदि रामो ब्रह्मणा सृष्टस्तर्हि स यादृच्छिकसम्भव इति चिन्तयति। अथ कमलासनः कदाचित् अदःकलेबरं स्रष्टुं यदि ईश्वरः स्यात्, तर्हि तत् अतर्कितोपानतम् एव भवेत्। तावता तं वयं न बहुमन्महे ॥ कमलासनः—ब्रह्मा। अमुष्य—रामस्य कलेबरं—शरीरम्, अदःकलेबरम्। ईश्वरः—शक्तः। अतर्कितोपानतम्—अविचारितापतितम्। तावता—तावन्मात्रेण। तम्—ब्रह्माणम् ॥ यादृच्छिकसम्भवे बहुमानस्य कोऽवकाश इति भावः ॥ ५ ॥

निपीय पीयूषरसं नृभिर्यथा विरज्यते स्वादुषु चान्यवस्तुषु ।
तथैव कामादिकलेबरस्मृतौ ममाधुना दृष्टिरुपैति निःस्पृहाम् ॥ ६ ॥

कामादीन् द्रष्टुं न वाञ्छामीति चिन्तयति। नृभिः च पीयूषरसं निपीय स्वादुषु अन्यवस्तुषु विरज्यते, तथा एव कामादिकलेबरस्मृतौ मम दृष्टिः अधुना निस्स्पृहाम् उपैति ॥ विरज्यते—विरक्तिरनुभूयते। निस्स्पृहाम्—अनिच्छाम्। उपैति—उपगच्छति ॥ ६ ॥

अनुत्तमश्चित्तज एव सुन्दरेष्विति श्रुतिः संप्रति नैव साम्प्रतम् ।
समासभेदादथवा प्रवर्ततामयं हि जागर्तितरां तदुत्तमः ॥ ७ ॥

कामः सुन्दरेषु नोत्तमः इति चिन्तयति। चित्तजः एव सुन्दरेषु अनुत्तमः इति श्रुतिः सम्प्रति न एव साम्प्रतम्। अथवा समासभेदात् (सा श्रुतिः) प्रवर्तताम्। अयं हि तदुत्तमः जागर्तितराम् ॥ चित्तजः—कामः। अस्मादुत्तमो—नास्तीत्यनुत्तमः। सर्वोत्तमः इत्यर्थः। समासभेदाद्—न उत्तमः इति नञ्समासाश्रयणात्। तस्मात्—कामाद् उत्तमः—तदुत्तमः। जागर्तितराम्—अतिशयेन भासते ॥ ७ ॥

वपुः किमेतस्य वपुः किमाननं तदाननं लोचनमस्य लोचनम् ।
इति क्रमादङ्गविचारणाविधावुदाहृतिः सर्वममुष्य केवलम् ॥ ८ ॥

रामस्य शरीरं मुखं नयनं च सर्वोत्तममिति चिन्तयति । वपुः किम् ? एतस्य वपुः । आननं किम् ? तदाननं । लोचनं (किम् ?) अस्य लोचनम् । इति क्रमाद् अङ्गविचारणाविधौ केवलं अमुष्य सर्वम् उदाहृतिः (भवति) ॥ वपुः–शरीरम् । अङ्गविचारणाविधौ–अङ्गानां विचारणायां क्रियमाणायाम् सर्वम्–सकलम् अङ्गम् । उदाहृतिः–उदाहरणम् । वपुः किम् इति प्रश्नस्य सर्वोत्तमं वपुः कतमदित्यर्थः । एवमुत्तरत्रापि ॥ ८ ॥

अदःप्रतीकेषु वसन्ति ये गुणाः पृथग्यथावत् कथयामि तान् कथम् ।
इति ह्रिया दुर्मुखमप्यहो मुहुः प्रवर्तयन्ते हृदयं त एव मे ॥ ९ ॥

रामस्याङ्गानां गुणांश्चिन्तयितुमुपक्रमते । अदःप्रतीकेषु ये गुणाः वसन्ति, तान् कथं यथावत् कथयामि ? । इति ह्रिया दुर्मुखम् अपि मे हृदयं, ते एव मुहुः प्रवर्तयन्ते ॥ अदःप्रतीकेषु–अमुष्य अवयवेषु । यथावत्–यथायोग्यम् । ह्रिया–लज्जया । दुर्मुखम्–पराङ्मुखम् । ते–गुणाः । प्रवर्तयन्ते–प्रेरयन्ति ॥ ९ ॥

तमांसि मूर्तानि तमालमञ्जरीरजांसि वास्तोष्पतिरत्नजानि च ।
विलोकयन्त्याः कचभारमस्य मे यथार्थबुद्धिं प्रतिरोद्धुमीशते ॥ १० ॥

रामस्य केशादिपादान्तानामङ्गानां वर्णनं द्वाविंशतौ श्लोकेषु क्रियते । प्रथमं केशकलापस्य नीलिमानमधिकृत्य चिन्तयति शूर्पणखा । मूर्तानि तमांसि, तमालमञ्जरीरजांसि, वास्तोष्पतिरत्नजानि रजांसि च, अस्य कचभारं विलोकयन्त्याः मे यथार्थबुद्धिं प्रतिरोद्धुम् ईशते ॥ तमांसि–अन्धकाराणि । तमालमञ्जरीरजांसि–तापिञ्छपुष्पस्तबकपरागाः । वास्तोष्पतिः–इन्द्रः । वास्तोष्पतिरत्नजानि–इन्द्रनीलरत्नसम्भवानि । रजांसि–चूर्णानि । कचभारं–केशकलापम् । ईशते–शक्नुवन्ति । केशकलापे अन्धकारादिभ्रमो जायते इति भावः ॥ १० ॥

अगाधशृङ्गाररसप्रवाहिनीमजस्रविभ्रान्तसुवृत्ततारकाम् ।
विचित्रमेतद्दृशमेव दीर्घिकां विगाह्य चेतो मम मज्जति स्फुटम् ॥ ११ ॥

दृष्टेर्हृदयवशीकरणशक्तिमुन्नयति । अगाधशृङ्गाररसप्रवाहिनीम् अजस्रविभ्रान्तसुवृत्त-तारकाम् एतद्दृशम् एव दीर्घिकां विगाह्य मम चेतः स्फुटं मज्जति । विचित्रम् ॥ अगाधः शृङ्गाररसः एव रसः–जलम्, तस्य प्रवाहः अस्याः–अस्तीति, तादृशीम् । अजस्रविभ्रान्ता–सन्ततभ्रमणशीला सुवृत्ता–शोभनवर्तुलाकृतिः तारका–कनीनिका यस्यास्ताम् । दीर्घिकापक्षे–सन्ततभ्रमणशीलः सुवृत्तः शोभनचरित्रवान् तारकः–परतीरप्रापकः यस्यास्ताम् । एतद्दृशम्–एतस्य दृष्टिम् । दीर्घिकां–वापीम् । दृक्पक्षे दीर्घामिति च गम्यते । विगाह्य–विलोड्य । मज्जति–मग्नं भवति । विचित्रम्–अद्भुतम् ॥ ११ ॥

**गुणीकृता येन शिलीमुखावलिः सरोजधन्वा स हि साम्प्रतम् पुनः ।**
**धनुर्गुणीकृत्य गुणं च धन्वयन्नमुष्य नेत्रभ्रुमिषेण जृम्भते ॥ १२ ॥**

नेत्रभ्रुणः कामचापत्वमुद्भावयति । येन शिलीमुखावलिः गुणीकृता, सः हि सरोज-धन्वा, साम्प्रतं पुनः अमुष्य नेत्रभ्रुमिषेण धनुः गुणीकृत्य गुणान् च धन्वयन् जृम्भते ॥ येन–कामेन । शिलीमुखावलिः–भृङ्गपङ्क्तिः, शरपङ्क्तिश्च । गुणीकृता–मौर्वीत्वं प्रापिता । सरोजम्–अरविन्दं धनुः–चापो यस्य सः–सरोजधन्वा–कामः । नेत्रभ्रुमिषेण–नेत्रयोः भ्रुवोश्च व्याजेन । धनुः–चापं सरोजम् । गुणीकृत्य–मौर्वीं कृत्वा । गुणम्–मौर्वीं भृङ्गपङ्क्तिम् । धन्वयन्–धनुः–चापं कुर्वन् । जृम्भते–वीर्याधिको भवति ॥ १२ ॥

**अमुष्य किं दर्शनमात्रसङ्क्रमी रदच्छदे राजति रक्तिमा भृशम् ।**
**यदेनमालोक्य मदीयमानसं सरागभावं सहसैव गच्छति ॥ १३ ॥**

अधरस्य रागजनकत्वं प्रकाशयति । अमुष्य रदच्छदे (यः) रक्तिमा भृशं राजति, (सः) दर्शनमात्रसङ्क्रमी किम् ? । यत् एनम् आलोक्य मदीयमानसं सहसा एव सरागभावं गच्छति ॥ रदच्छदे–अधरे । रक्तिमा–शोणवर्णः, अनुरागश्च । दर्शनमात्रसङ्क्रमी–दर्शनमात्रेण सङ्क्रमण-शीलः । यत्–यस्मात् कारणात् । एनम्–अधरम् । सरागभावम्–अनुरागवत्त्वम्, शोण-वर्णवत्त्वं च ॥ १३ ॥

**प्रवाललक्ष्मीमधरेण बिभ्रता रदावलिच्छादितमूर्तिरस्य या ।**
**अवैमि तामाननगुच्छसम्भृताममन्दकुन्दोद्भवकुड्मलावलिम् ॥ १४ ॥**

अधरस्य पल्लवत्वं दन्तानां कुन्दकुड्मलत्वं चोत्प्रेक्षते। अस्य या रदावलिः. प्रवाल-लक्ष्मीं बिभ्रता अधरेण छादितमूर्तिः (भ ति), ताम् आननगुच्छसम्भृताम् अमन्दकुन्दोद्भव कुड्मलावलिम् अवैमि॥ रदावलिः–दन्तपङ्क्तेः। प्रवाललक्ष्मीम्–पल्लवशोभाम्। छादित-मूर्तिः–आच्छादितस्वरूपा। आननम्–मुखम् एव गुच्छः–स्तबकः, तेन सम्भृताम्। अमन्दकुन्दोद्भवकुड्मलावलिम्–अनल्पकुन्दमुकुलपङ्क्तिम्। अवैमि–जाने॥ १४॥

**प्रवर्तते चुम्बितुमस्य या वधूः कपोलयोर्निर्मलदर्पणश्रियोः।**
**अवज्ञया स्त्रीमुखचुम्बने मुहुर्निवर्तयेताननमञ्जसैव सा॥ १५॥**

कपोलयोर्दर्पणतुल्यतामाविष्करोति। या वधूः निर्मलदर्पणश्रियोः अस्य कपोलयोः चुम्बितुं प्रवर्तते, सा स्त्रीमुखचुम्बने अवज्ञया मुहुः अञ्जसा एव आननं निवर्तयेत॥ स्त्रीमुख-चुम्बने–प्रतिबिम्बितस्वमुखचुम्बने। अवज्ञया–अनादरेण। अञ्जसा–द्रुतम्। निवर्तयेत–पराङ्मुखं कुर्यात्॥ १५॥

**मृदुस्मयश्रीमयभस्मरूषितं मुखं चलद्भ्रूयुगनागभूषितम्।**
**कथं न यच्छत्यमृतं स्वसेविनां कथं न गच्छत्यनिशं च सोमताम्॥ १६॥**

राममुखस्य शिवात्मकत्वं परिकल्पयति। मृदुस्मयश्रीमयभस्मरूषितं चलद्भ्रूयुगनाग-भूषितं मुखं, स्वसेविनाम् अमृतं कथं न यच्छति? अनिशं सोमतां च कथं न गच्छति?॥ मृदुस्मयश्रीः–मन्दहासशोभा, तन्मयेन भस्मना रूषितम्–लिप्तम्। भ्रूयुगेनैव नागेन–सर्पेण भूषितम्। स्वसेविनाम्–आत्मानं सेवमानानाम्। अमृतम्–अधररसम्, मोक्षं च। यच्छति–ददाति। सोमताम्–चन्द्रत्वम्, उमासहितत्वं च॥ १६॥

**अमुष्य मा भूदतुलत्वगर्वितं मुखस्य यद्भाति शशाङ्क ईदृशः।**
**इदं यदि स्यादधरश्रियाञ्चितं तदा शशाङ्कोऽप्यधरश्रियाञ्चितः॥ १७॥**

मुखस्य चन्द्रसादृश्यमुपपादयति। अमुष्य मुखस्य अतुलत्वगर्वितं मा भूत्। यत् शशाङ्कः ईदृशः भाति। इदम् अधरश्रिया अञ्चितं यदि स्यात्, तदा शशाङ्कः अपि अधर-श्रिया अञ्चितः॥ अतुलत्वगर्वितम्–असादृश्यगर्वः। शशाङ्कः–चन्द्रः। ईदृशः–एतन्मुख-

सदृशः । इदम्–मुखम् । अधरश्रिया–अधरस्य शोभया। अङ्कितम्–युक्तम् । अधर-श्रिया–अधरया–न्यूनया श्रिया–शोभया ॥ १७ ॥

इयं विशाला ललितास्य कन्धरा विलासिनीबाहुलतार्पणोचिता ।
विना विभूषाभिरनूनशोभया विनोदयत्येव मनो ममाधिकम् ॥ १८॥

कण्ठसौन्दर्यं चिन्तयति। विलासिनीबाहुलतार्पणोचिता विशाला ललिता अस्य कन्धरा विभूषाभिः विना अनूनशोभया मम मनः अधिकं विनोदयति एव॥ कन्धरा–कण्ठः। अनूनशोभया–अनल्पकान्त्या। विनोदयति–सुखयति ॥ १८ ॥

निधाय सारस्यमयार्थसञ्चयं हृदालये तत्परिगुप्तये पुनः ।
कपाटमिन्द्रोपलनिर्मितं महच्चकार वक्षस्थलकैतवाद्विधिः ॥ १९ ॥

वक्षसो हृदयकपाटत्वं परिकल्पयति । विधिः हृदालये सारस्यमयार्थसञ्चयं निधाय पुनः तत्परिगुप्तये वक्षस्थलकैतवाद् इन्द्रोपलनिर्मितं महत् कपाटं चकार॥ विधिः–ब्रह्मा । हृद् एव आलयः–गृहम् , तस्मिन् । सारस्यमयम्–सरसतारूपम् अर्थसञ्चयम्–धनसमूहम् । निधाय – निक्षिप्य । तत्परिगुप्तये – तत्संरक्षणाय । इन्द्रोपलनिर्मितम् – इन्द्रनीलरत्न-चितम् ॥ १९ ॥

अमुष्य या वक्षसि लब्धसङ्गमा कुचद्वयी सैव कुचद्वयी मता ।
अनीदृशी सा भर एव योषितामधन्यभावः सकलेषु दुस्सहः ॥ २० ॥

एतदालिङ्गने एव स्तनद्वयस्य साफल्यं मन्यते। अमुष्य वक्षसि लब्धसङ्गमा या कुच-द्वयी सा एव कुचद्वयी मता। अनीदृशी सा, योषितां भरः एव। अधन्यभावः सकलेषु दुस्सहः॥ अनीदृशी–अमुष्य वक्षसि अलब्धसङ्गमा। सा–कुचद्वयी। अधन्यभावः-अकृतार्थता ॥ २० ॥

अमुष्य बाहू अतिदीर्घपीवरौ लसद्दशाधाङ्गुलिहस्तशेखरौ ।
अधोमुखौ पञ्चमुखाविवोरगौ विराजतो विश्ववधूमनोहरौ ॥ २१ ॥

बाह्वोर्मनोहारितां परामृशति। अतिदीर्घपीवरौ लसद्दशार्धाङ्गुलिहस्तशेखरौ विश्ववधूमनोहरौ अमुष्य बाहू पञ्चमुखौ उरगौ इव विराजतः॥ पीवरौ–स्थूलौ। लसन्त्यः दशार्धम्–पञ्च अगुलयः यस्य, सः हस्तः–पाणिः शेखरः–अलङ्कारः ययोः तौ। विश्ववधूमनोहरौ–सर्वाङ्गना-हृदयाकर्षकौ। उरगौ–सर्पौ। विराजतः–शोभेते ॥ २१ ॥

**उभौ फणीन्द्रौ मुखचन्द्रमण्डलं ग्रहीतुकामावभितः समुद्गतौ।**
**सुपर्णतुण्डोपमनासिकाभिया निवर्तितौ किं भुजतामवापतुः ॥ २२ ॥**

भुजयोः सर्पत्वमेवोत्प्रेक्षते। उभौ फणीन्द्रौ (अस्य) मुखचन्द्रमण्डलं ग्रहीतुकामौ अभितः समुद्गतौ सुपर्णतुण्डोपमनासिकाभिया निवर्तितौ भुजताम् अवापतुः किम्॥ फणीन्द्रौ–सर्पश्रेष्ठौ। अभितः–उभयतः। समुद्गतौ–ऊर्ध्वं गतौ। सुपर्णस्य–गरुडस्य तुण्डम्–चञ्चुः उपमा यस्याः, तादृश्याः नासिकाया भिया–भयेन। निवर्तितौ–पराङ्मुखीकृतौ। भुजताम्–बाहुत्वम्। अवापतुः–प्राप्तौ ॥ २२ ॥

**अगण्यलावण्यमयी विनिर्गता मुखेन्दुबिम्बादपरा कलिन्दजा।**
**अधः स्रवन्ती क्रमशः कृशा नु सा विलोक्यते रोमलतापदेशतः ॥ २३ ॥**

रोमलतायाः कालिन्दीत्वमुत्प्रेक्षते। मुखेन्दुबिम्बात् अगण्यलावण्यमयी अपरा कलिन्दजा विनिर्गता। सा अधः स्रवन्ती क्रमशः कृशा रोमलतापदेशतः विलोक्यते नु॥ अपरा–सूर्यतनयायाः प्रसिद्धायाः कालिन्द्याः भिन्ना। कलिन्दजा–कालिन्दी। रोमलतापदेशतः–रोमावलिव्याजेन। विलोक्यते नु–दृश्यते किम् ॥ २३ ॥

**विभाति बोधिद्रुमपत्रमित्रतां वहन्नमुष्योदर एष सुन्दरः।**
**ककुद्मती चास्य कुरङ्गराजवद्विशालरूपा सुतरां विराजते ॥ २४ ॥**

उदरं श्रोणिं चावलोक्य चिन्तयति। बोधिद्रुमपत्रमित्रतां वहन् सुन्दरः एषः अमुष्य उदरः विभाति। अस्य ककुद्मती च कुरङ्गराजवत् विशालरूपा सुतरां विराजते॥ बोधिद्रुमपत्रमित्रताम्–अश्वत्थपत्रतुल्यत्वम्। ककुद्मती–श्रोणिः। कुरङ्गराजवत्–सिंहस्येव ॥ २४ ॥

कटिप्रदेशस्थितमस्य वल्कलं न वल्कलत्वादवहेलनास्पदम् ।
स्वभावतश्चारुषु वस्तुषु स्थितं निकृष्टमप्युज्ज्वलभावमश्नुते ॥ २५ ॥

वल्कलस्यापि श्रेष्ठतां कल्पयति । कटिप्रदेशस्थितम् अस्य वल्कलं वल्कलत्वाद् अवहेलनास्पदं न (भवति) । स्वभावतः चारुषु वस्तुषु स्थितं निकृष्टम् अपि उज्ज्वलभावम् अश्नुते ॥ अवहेलनास्पदम्—अनादरस्थानम् । चारुषु—सुन्दरेषु । उज्ज्वलभावम्—उत्कृष्टत्वम् । अश्नुते-प्राप्नोति ॥ २५ ॥

अहो अमुष्योरुयुगं मनोहरं समाश्रयन्ती पुरुषायितेषु यत् ।
सुधाभिषेकादिव निर्वृतिं परामुपैति योषिद्बहुपुण्यपूरणी ॥ २६ ॥

ऊरुद्वयस्य निर्वृतिकरत्वं भावयति । पुरुषायितेषु यत् समाश्रयन्ती बहुपुण्यपूरणी योषित् सुधाभिषेकाद् इव परां निर्वृतिम् उपैति, (तद्) अमुष्य ऊरुयुगं मनोहरम् । अहो ! ॥ पुरुषायितेषु—उपरिसुरतेषु । यद्—ऊरुयुगम् । पराम्—सर्वाधिकाम् । निर्वृतिम्—सौख्यम् । उपैति—प्राप्नोति । युगम्—युग्मम् । अहो—आश्चर्यम् ॥ २६ ॥

अमोचि मोचारुचिरञ्जसामुना न्यवारि वा वारणचारुहस्तता ।
अकारि भूयः करभस्य गर्हणं व्यतारि मोहश्च वधूजने मुहुः ॥ २७ ॥

ऊरुद्वयस्य उपमानान्यधिकृत्य चिन्तयति । अमुना अञ्जसा मोचारुचिः अमोचि । वारणचारुहस्तता वा न्यवारि । भूयः करभस्य गर्हणम् अकारि । वधूजने मुहुः मोहः च व्यतारि ॥ अमुना—ऊरुयुगेन । मोचारुचिः—कदलीप्रीतिः । अमोचि—मोचिता । वारणानां—गजानाम् चारुहस्तता—रुचिरकरत्वम् । न्यवारि—निवारिता । करभस्य—करबहिर्भागस्य । गर्हणम्—निन्दा । अकारि—कृतम् । वधूजने—स्त्रीलोके । मोहः—मूर्च्छा । व्यतारि—दत्तः ॥ २७ ॥

अजस्रमूर्वोरनयोः सुवृत्तता चकास्ति सर्वत्र विलोमतापि च ।
विरुद्धमेतत् कथमस्य सङ्गतं मनो ममैवं वितनोति विस्मयम् ॥ २८ ॥

ऊरुद्वयस्य वर्तुलाकारतां रोमरहितत्वं च निरूपयति। अनयोः ऊर्वोः सुवृत्तता, सर्वत्र विलोमता अपि च अजस्रं चकास्ति। विरुद्धम् एतत् अस्य कथं सङ्गतम्। एवं मम मनः विस्मयं वितनोति ॥ सुवृत्तता–वर्तुलाकारता, सच्चरित्रता च। विलोमता–रोमहीनता, विपरीतता च। अस्य–रामस्य। वितनोति–विस्तारयति ॥ २८ ॥

**सुराधिपग्रावसमुद्गवल्गुनी न फल्गुनी कान्तिभिरस्य जानुनी।**
**श्रिया कृतानङ्गनिषङ्गशङ्किके न जङ्घिके किं सकलातिलङ्घिके ॥ २९ ॥**

जानू जङ्घे च निर्वर्णयति। सुराधिपग्रावसमुद्गवल्गुनी अस्य जानुनी कान्तिभिः न फल्गुनी। श्रिया कृतानङ्गनिषङ्गशङ्किके जङ्घिके किं न सकसातिलङ्घिके ॥ सुरधिपग्रावा–इन्द्रनीलरत्नम्, तत्कृतौ समुद्गौ–सम्पुटकौ इव वल्गुनी–सुन्दरे। न फल्गुनी न निस्सारे। कृता अनङ्गनिषङ्गशङ्का–कामतूणीरशङ्का याभ्यां, तादृश्यौ। सकलान् अतिलङ्घयतः इति तादृश्यौ ॥ २९ ॥

**इदम्पदं तामरसस्य गर्हणं वधूजने कामरसस्य वर्षणम्।**
**स्वभावसिद्धारुणभावभासुरं विभाति बद्धाखिललोकमानसम् ॥ ३० ॥**

पादगुणान् विवेचयति। इदम्पदं तामरसस्य गर्हणं वधूजने कामरसस्य वर्षणं स्वभावसिद्धारुणभावभासुरं वद्धाखिललोकमानसं (सत्) विभाति ॥ इदम्पदम्–अस्य पादः। गर्हणम्–निन्दाकारि। स्वभावसिद्धेन अरुणभावेन–शोणिम्ना भासुरम्। बद्धम् अखिललोकानाम्–सर्वजनानां मानसं येन, तादृशम् ॥ ३० ॥

**चिराय कृत्वा समरं सरोरुहैरमुष्य पादौ विजयित्वमापतुः।**
**नखेन्दुखण्डावलिकैतवस्फुरज्जयोत्थकीर्तिव्रजभूषिताविमौ ॥ ३१ ॥**

पादनखान् वर्णयति। अमुष्य पादौ चिराय सरोरुहैः समरं कृत्वा विजयित्वम् आपतुः। इमौ नखेन्दुखण्डावलिकैतवस्फुरज्जयोत्थकीर्तिव्रजभूषितौ (बभूवतुः) ॥ नखाः एव इन्दुखण्डाः–चन्द्रशकलाः, कर्पूरखण्डाश्च, तेषाम् आवलेः कैतवेन स्फुरन्तीनां जयोत्थ-कीर्तीनां व्रजेन–समूहेन भूषितौ–अलङ्कृतौ ॥ ३१ ॥

कचादुपारभ्य पदान्तमीदृशं न दोषलेशस्पृगदःकलेवरम् ।
गुणैश्च तैस्तैः परिपूर्णमुज्ज्वलं विभाति विश्वातिशयं विशेषतः ॥ ३२ ॥

केशादिपादान्तवर्णनमुपसंहरति । ईदृशम् अदःकलेबरं कचादुपारभ्य पदान्तं न दोषलेशस्पृक् । विशेषतः तैः तैः गुणैः परिपूर्णम् उज्ज्वलं (सत्) विश्वातिशयं विभाति ॥ अदःकलेबरम्—अमुष्य शरीरम् । कचाद्—केशाद् । न दोषलेशस्पृक्—दोषस्य लेशमपि न स्पृशति । विश्वातिशयम्—सर्वातिशायि ॥ ३२ ॥

विलोकयन्तीममुमत्र कानने यदृच्छया कल्पितसन्निधिं नरम् ।
मनोभवस्त्यक्तदयं दुनोति मां बलादविज्ञातकुलादिकामपि ॥ ३३ ॥

स्वस्य कामपारवश्यं निरूपयति । अत्र कानने यदृच्छया कल्पितसन्निधिम् अमुं नरं विलोकयन्तीम् अविज्ञातकुलादिकाम् अपि मां मनोभवः त्यक्तदयं बलाद् दुनोति । अविज्ञातं कुलादिकं यया, तादृशीम् ॥ मनोभवः-कामः । दुनोति—दुःखयति ॥ ३३ ॥

विजेतुमेनं सुमनोभिराशुगैरशक्नुवन्मां सुमनोनिवारिणीम् ।
अहो जिगीषत्यमुनाधुनात्मभूरिहेति मन्ये सुमनस्समावृते ॥ ३४ ॥

कामः आत्मानं जेतुमिच्छतीति चिन्तयति । आत्मभूः सुमनस्समावृते इह सुमनोभिः आशुगैः एनं विजेतुम् अशक्नुवन् (सन्) अधुना सुमनोनिवारिणीं माम् अमुना जिगीषति । अहो ! इति मन्ये ॥ आत्मभूः—कामः । सुमनोभिः—पुष्पैः समावृते—समाच्छादिते । इह—अस्मिन् प्रदेशे । सुमनोभिः—पुष्पैः । आशुगैः—शरैः । एनम्—अमुं पुरुषम् । अशक्नुवन्—असमर्थः सन् । अधुना—संप्रति । सुमनसः—देवान् निवारयितुं—निरोद्धुं शीलमस्याः इति, तादृशीम् पुष्पनिवारिणीमिति च गम्यते । अमुना—अनेन पुरुषेण । सुमनसा इति गम्यते । शोभनमनसा इति भावः । जिगीषति—जेतुमिच्छति ॥ ३४ ॥

इयं वधूरस्य समीपवर्तिनी कृतातिपुण्या कमनीषु मन्महे ।
यदस्य रागास्पदतामुपेयुषी सुदुर्लभामृच्छति जन्मनः फलम् ॥ ३५ ॥

सीतां धन्यां मन्यते। अस्य समीपवर्तिनी इयं वधूः कमनीषु कृतातिपुण्या (इति) मन्महे। यत् सुदुर्ल्लभाम् अस्य रागास्पदताम् उपेयुषी जन्मनः फलम् ऋच्छति॥ कमनीषु-कामिनीषु। कृतम् अतिपुण्यं यया, तादृशीम्। रागास्पदताम्-प्रेमपात्रताम्। उपेयुषी-प्राप्ता। ऋच्छति-गच्छति॥ ३५॥

**अमुष्य वक्षोभुवि मीलितेक्षणा चिरं शयाना पुरुषायितेष्वसौ।**
**निरङ्कुशानन्दमुपैति मूर्च्छनामहो विधातुर्मयि दारुणं मनः॥ ३६॥**

सीतां प्रति असूयां दर्शयति। असौ पुरुषायितेषु अमुष्य वक्षसि मीलितेक्षणा निरङ्कुशानन्दं चिरं शयाना मूर्च्छनाम् उपैति। विधातुः मनः मयि दारुणम्। अहो!॥ असौ-इयं बधूः। पुरुषायितेषु-उपरिसुरतेषु। मीलिते ईक्षणे यस्याः, तादृशी। निरङ्कुशः-निर्विघ्नः आनन्दः यस्मिन् कर्मणि, तथा। मूर्च्छनाम्-मोहावस्थाम्। उपैति-उपगच्छति। विधातुः-दैवस्य। दारुणम्-क्रूरम्। अहो-कष्टम्॥ ३६॥

**ममैष कार्यः पतिरेव सर्वथा भवत्वमुष्याश्च पतिर्ममाग्रजः।**
**स्थिता यदस्मास्वधि विष्टपत्रयी यतो नृणां रत्नविशेषभाजिता॥ ३७॥**

अयं मम पतिः कर्तव्य इति चिन्तयति। सर्वथा एषः मम पतिः एव कार्यः। मम अग्रजः अमुष्याः पतिः च भवतु। यत् विष्टपत्रयी अस्मासु अधिस्थिता। यतः नृणां रत्नविशेषभाजिता (भवति)॥ मम अग्रजः-रावणः। यत्-यस्मात्। विष्टपत्रयी-लोकत्रयम्। अस्मासु अधि-अस्माकमधीना। रत्नविशेषं भजन्तीति-रत्नविशेषभाजिनः। तेषां भावस्तत्ता। इमौ नरौ, आवां च रत्नविशेषभूतौ इति भावः॥ ३७॥

**पतिः पुरा मे परलोकमेयिवानय च दिष्टादिह दृष्टिगोचरः।**
**मनोनुकूलं दयितं विचिन्वती भवामि को वा पुनरत्र संशयः॥ ३८॥**

भर्तृमरणादिकं सर्वं मम भाग्यादेवेति चिन्तयति। पुरा मे पतिः परलोकम् एयिवान्। अयं च (मे) दिष्टाद् इह दृष्टिगोचरः। (अहं) मनोनुकूलं दयितं विचिन्वती भवामि। अत्र कः वा संशयः॥ पतिः-भर्ता विद्युज्जिह्वः। एयिवान्-गतः। दिष्टाद्-भाग्यात्। दयितम्-प्रियम्। विचिन्वती-अन्विष्यन्ती। अत्र-पूर्वोक्तविषये॥ ३८॥

**नरेषु नागेषु सुरेषु वा भवत्वसौ प्रसूतः प्रमदाजनोत्सवः ।**
**प्रसह्य सम्पादितकामचारिणां न रक्षसां जातिविचारणाविधिः ॥ ३९ ॥**

अस्य जातिः न विचारणीया इति चिन्तयति । प्रमदाजनोत्सवः असौ नरेषु सुरेषु वा प्रसूतः भवतु । प्रसह्य सम्पादितकामचारिणां रक्षसां जातिविचारणाविधिः न (भवति) ॥ प्रमदाजनानाम्—स्त्रीजनानाम् उत्सवः—परमानन्दप्रदः । नरेषु—मनुष्येषु । नागेषु—सर्पेषु । सुरेषु—देवेषु । प्रसह्य—अभिभूय । सम्पादितैः कामैः चरन्तीति, तादृशानाम् । रक्षसां—राक्षसानाम् ॥ ३९ ॥

**असौ मनुष्यो यदि मामकीमिमां निरिक्ष्य मूर्तिं नृषु भीतिकारीणीम् ।**
**भयातिरेकादपि पञ्चतां व्रजेदहो ममैवं विफलो मनोरथः ॥४० ॥**

यद्यसौ मनुष्यस्तर्हि मम राक्षसरूपं दृष्ट्वा मृतो भवेदिति चिन्तयति । असौ यदि मनुष्यः, (तर्हि) नृषु भीतिकारीणीम् इमां मामकीं मूर्तिं निरीक्ष्य भयातिरेकात् पञ्चताम् अपि व्रजेत् । एवं मम मनोरथः विफलः (भवेत्) । अहो !॥ मूर्तिम्—शरीरम् । पञ्चताम्—मरणम् । मनोरथः—अभिलाषः । अहो—कष्टम् ॥ ४० ॥

**तदस्य सामीप्यमनेन वर्ष्मणा सहोपगम्यं न हि कामिताप्तये ।**
**हठोऽपि कार्यः पुनरत्र सान्त्वनैरसाधनीये सति कार्यवस्तुनि ॥ ४१ ॥**

राक्षसरूपेण समीपगमनं न युक्तमिति चिन्तयति । तत् कामिताप्तये अनेन वर्ष्मणा सह अस्य सामीप्यं न हि उपगम्यम् । पुनः अत्र कार्यवस्तुनि सान्त्वनैः असाधनीये सति हठः अपि कार्यः ॥ तत् —तस्मात् । कामिताप्तये—इष्टसिद्धये । वर्ष्मणा—शरीरेण । उपगम्यम्—लब्धुं शक्यम् । सान्त्वनैः—सामवचनैः । असाधनीये-असाध्ये । हठः—बलात्कारः ॥ ४१ ॥

**तनुं तनूकृत्य मनुष्यमानिनीसमानमेतस्य समेत्य सन्निधिम् ।**
**वचोभिराहृत्य मुहुर्मनोहरैरवैमि तत्त्वं हृदयं च तत्त्वतः ॥ ४२ ॥**

मनुष्यस्त्रीरूपं गृह्णामीति निश्चिनोति । तनुं मनुष्यमानिनीसमानं (यथा तथा) तनूकृत्य एतस्य सन्निधिं समेत्य मुहुः आहृत्य मनोहरैः वचोभिः तत्त्वं हृदयं च तत्त्वतः अवैमि ॥

तनुम्–शरीरम् । तनूकृत्य–अल्पीकृत्य । सन्निधिम्–समीपम् । समेत्य–प्राप्य । तत्त्वम्–कुलादिविषयकं वास्तवम् । अवैमि–जानामि ॥ ४२ ॥

**अथैवमन्तः कृतनिश्चया सती निजं महावर्ष्म विहाय वर्ष्म सा ।**
**मनुष्यनारीसदृशं कलेबरं समाददाना ललिताकृतिर्बभौ ॥ ४३ ॥**

शूर्पणखा ललिताकृतिं गृह्णाति । अथ सा एवम् अन्तः कृतनिश्चया सती महावर्ष्म निजं वर्ष्म विहाय मनुष्यनारीसदृशं कलेबरं समाददाना ललिताकृतिः बभौः ॥ सा–शूर्पणखा । एवं–उक्तरीत्या । अन्तः–मनसि । महावर्ष्म–महाप्रमाणम् । वर्ष्म–शरीरम् । विहाय–परित्यज्व । कलेबरम्–शरीरम । समाददाना–गृह्णती । ललिताकृतिः–रमणीयशरीरा । बभौ–अशोभत ॥ ४३ ॥

**[ विशेषकम् ]**

**मुखेन पूर्णामृतदीधितिद्युतिः कुचेन सौवर्णघटोपमच्छविः ।**
**विशालरूपा जघनेन चारुणा विडम्बयन्ती करिहस्तमूरुणा ॥ ४४ ॥**

**पदद्वयेन स्फुटपङ्कजश्रियं तटित्प्रभां चाङ्गगुणेन बिभ्रती ।**
**विलासवीक्षासमकालकन्दलत्स्मितप्रकाशस्नपितास्यमञ्जरी ॥ ४५ ॥**

**मुहुर्मुहुर्ह्रीरसमग्नजृम्भिता शनैः शनैरर्पितपादपङ्कजा ।**
**प्रियासमेतस्य विशामधीशितुः समीपमेषा वनिता समासदत् ॥ ४६ ॥**

ललिताकृतेः शूर्पणखायाः रामसमीपगमनं त्रिभिः श्लोकैर्वर्णयति । मुखेन पूर्णामृतदीधिति-तिः कुचेन सौवर्णघटोपमच्छविः चारुणा जघनेन विशालरूपा ऊरुणा करिहस्तं विडम्बयन्ती पदद्वयेन स्फुटपङ्कजश्रियम् अङ्गगुणेन तटित्प्रभां च बिभ्रती विलासवीक्षासमकालकन्दलत्स्मित-प्रकाशस्नपितास्यमञ्जरी मुहुर्महुः ह्रीरसमग्नजृम्भिता शनैश्शनैः अर्पितपादपङ्कजा एषा वनिता प्रियासमेतस्य विशाम् अधीशितुः समीपं समासदत ॥ अमृतदीधितिः–चन्द्रः । विडम्बयन्ती–अनुकुर्वाणा । आस्यम्–मुखं मञ्जरीव–आस्यमञ्जरी । ह्रीरसे लज्जाभावे मग्नं जृम्भितम्–

आस्यविकासः यस्याः साः। अर्पितं–न्यस्तं पादपङ्कजं यया, सा। प्रियासमेतस्य–सीतासहितस्य। विशाम्–मनुष्याणाम्। अधीशितुः–प्रभोः। रामस्येत्यर्थः। समासदत्–प्राप॥ ४४, ४५, ४६॥

विलोक्य तामेष महीपतिर्वने सुदुर्गमे त्वत्र समागतां वधूम्।
सविस्मयद्वापरकृष्टमानसः स्मयन्नथैनामवदन्महामतिः॥ ४७॥

रामस्तां पृच्छति। अथ महामतिः एषः महीपतिः तु, अत्र सुदुर्गमे वने समागतां तां वधूं विलोक्य सविस्मयद्वापरकृष्टमानसः स्मयन् एनाम् अवदत्॥ महीपतिः–राजा रामः। सुदुर्गमे–सुतरां दुस्सञ्चरे। सविस्मयेन अद्भुतसहितेन द्वापरेण–सन्देहेन कृष्टं मानसं यस्य सः। स्मयन्–स्मितं कुर्वन्। एनाम्–ललितां शूर्पणखाम्। अवदत्–उक्तवान्॥ ४७॥

जगत्त्रयीयौवतमौलिमालिके विलासिनि त्वं कतमासि बालिके।
मनस्त्वदालोकनतो ममाचिरादभूतपूर्वां मुदमुद्वहत्यहो॥ ४८॥

प्रश्नप्रकारमाह द्वाभ्यां श्लोकाभ्याम्। जगत्त्रयीयौवतमौलिमालिके विलासिनि बालिके! त्वं कतमा असि?। त्वदालोकनतः मम मनः अचिरात् अभूतपूर्वां मुदम् उद्वहति। अहो!॥ यौवतम्–युवतिसमूहः। त्वदालोकनतः–तव दर्शनात्। अहो–आश्चर्यम्॥ ४८॥

त्वमिन्दिरा किं किमु नन्दिनी गिरेः किमुर्वशी सर्वसुराङ्गनामणिः।
इहागतिस्ते बहुकण्टके वने कुतो मम ब्रूहि कुतूहलात्मनः॥ ४९॥

त्वम् इन्दिरा किम्? गिरेः नन्दिनी किमु? सर्वसुराङ्गनामणिः उर्वशी किम्? बहुकण्टके इह वने तव आगतिः कुतः? कुतूहलात्मनः मम ब्रूहि॥ इन्दिरा–लक्ष्मीः। गिरेः नन्दिनी–पार्वती। बहुकण्टके–अनेककण्टकाकीर्णे। कुतः–कस्मात् कारणात्, कस्माद्वा देशात्। कुतूहलमात्मनि यस्य तस्य–कुतूहलात्मनः॥ ४९॥

निशम्य वाणीममृतस्य वर्षिणीं नृपस्य वक्त्राम्बुजसौरभीमिव।
अवारणीयस्फुटकामवैकृता जगाद लुप्ताक्षरमन्तरान्तरा॥ ५०॥

ललिता रामं प्रतिवदति । नृपस्य वक्त्राम्बुजसौरभीम् इव अमृतस्य वर्षिणीं वाणीं निशम्य अवारणीयस्फुटकामवैकृता (सा) अन्तरा लुप्ताक्षरं जगाद ॥ अवारणीयं स्फुटं काम-वैकृतं यस्याः सा । अन्तरा–मध्ये । लुप्तानि अक्षराणि यस्मिन्, तद्यथा तथा ॥ ५० ॥

**अहं महाभाग निशाचरान्वये प्रसूतिभाग्विश्रवसस्तपोनिधेः ।**
**अवेहि मे भ्रातरमग्रजं जगत्त्रयप्रतीतोरुबलं दशाननम् ॥ ५१ ॥**

प्रतिवचनप्रकारमाह त्रिभिः श्लोकैः । महाभाग ! अहं निशाचरान्वये विश्रवसः तपोनिधेः प्रसूतिभाक् । जगत्त्रयप्रतीतोरुबलं दशाननं मे अग्रजं भ्रातरम् अवेहि ॥ निशाचरान्वये–राक्षसवंशे । तपोनिधेः–तापसात् । प्रसूतिभाक्–जाता । जगत्त्रये प्रतीतं–प्रसिद्धम् उरुबलम्–महाबलं यस्य, तम् । दशाननम्–रावणम् । अग्रजम्–ज्येष्ठम् । अवेहि–बुध्यस्व ॥ ५१ ॥

**दृशोः किरन्तीममृतस्य कन्दलान् विलोकयन्ती तव रूपसम्पदम् ।**
**अनायिषि त्वत्सविधं मनोभुवा प्रसह्य कौतूहलसाह्यवाहिना ॥ ५२ ॥**

अमृतस्य कन्दलान् दृशोः किरन्तीं तव रूपसम्पदं विलोकयन्ती (अहम्), कौतूहल-साह्यवाहिना मनोभुवा प्रसह्य त्वत्सविधम् अनायिषि ॥ कन्दलान्–नवाङ्कुरान् । दृशोः–नयनयोः । किरन्तीम्–प्रक्षिपन्तीम् । रूपसम्पदं–सौन्दर्यसमृद्धिम् । कौतूहलस्य साह्यं–साहाय्यं वहति इति, तादृशेन । मनोभुवा–कामेन । प्रसह्य–बलात् । त्वत्सविधम्–भवतः समीपम् । अनायिषि–प्रापिता ॥ ५२ ॥

**भवानविज्ञातकुलादिको मया यदेतदेव प्रथमं दुनोति माम् ।**
**इहोदिता चेत् करुणा तवाधुना पुनश्च मे तृप्यतु नाभसेन्द्रियम् ॥ ५३ ॥**

भवान् मया अविज्ञातकुलादिकः (इति) यत्, एतद् एव प्रथमं मां दुनोति । इह तव करुणा उदिता चेद्, अधुना पुनः च मे नाभसेन्द्रियं तृप्यतु ॥ दुनोति–उपतापयति । इह–अस्यां मयि । पुनः च–भूयः अपि । नाभसेन्द्रियम्–श्रोत्रम् । तृप्यतु–तृप्तिं गच्छतु ॥ ५३ ॥

**इतीरयित्वा विरतां निशाचरीमबूबुधत्तां नृपतिर्निजां कथाम् ।**
**कुलं च नामापि च सर्वमात्मनो वने निवासस्य च कारणं तथा ॥५४॥**

रामः स्वचरितं सर्वं निवेदयति । नृपतिः इति ईरयित्वा विरतां तां निशाचरीं, कथाम् आत्मनः कुलं च नाम अपि च, तथा वने निवासस्य कारणं च, सर्वम् अबूबुधत् ॥ नृपतिः—राजा रामः । निशाचरीम्—ललितां शूर्पणखाम् । अबूबुधत्—बोधयामास ॥५४॥

**अवोचदेनं वनिता प्रसन्नधीरहो विधिस्ते प्रतिकूलतां जहौ ।**
**यदत्र नौ सङ्गतिरीदृशश्च मे मनोविकारो भवति स्म साम्प्रतम् ॥५५॥**

ललिता तत् श्रुत्वा रामाय स्वानुरागं प्रकाशयति । वनिता प्रसन्नधीः एनम् अवोचत् । अहो विधिः ते प्रतिकूलतां जहौ । तत्, साम्प्रतम् अत्र नौ सङ्गतिः, ईदृशः मे मनोविकारः च भवति स्म ॥ वनिता—ललिता । एनम्—रामम् । विधिः—दैवम् । जहौ—त्यक्तवान् । नौ—आवयोः । सङ्गतिः—समागमः ॥५५॥

**परेतभावं गतवान् पुरैव मे पतिर्नियत्या प्रतिकूलचारया ।**
**तदादि खिन्ना विचरामि सर्वतः पतिंवरा भ्रातुरनुज्ञया समम् ॥५६॥**

विधवाहं भर्तारं वरीतुमन्विष्य चरामीत्याह— **परेतेति** । पुरा एव प्रतिकूलचारया नियत्या मेपतिः परेतभावं गतवान् । तदादि खिन्ना (अहं) भ्रातुः अनुज्ञया समं पतिंवरा सर्वतः विचरामि ॥ नियत्या—दैवेन । परेतभावम्—मरणम् । भ्रातुः—ज्येष्ठस्य रावणस्य । अनुज्ञया—अनुमत्या । पतिंवरा—पतिं वृण्वती ॥५६॥

**गवेषमाणा त्रिषु विष्टपेष्वपि स्वयं परिभ्राम्य पतिं मनःप्रियम् ।**
**अलब्धविश्रान्तिरिहाधुना पुनर्भवन्तमासाद्य भजामि विश्रमम् ॥५७॥**

भवान् मे मनःप्रियः पतिरित्याह। मनःप्रियं पतिं स्वयं गवेषमाणा त्रिषु विष्टपेषु अपि परिभ्राम्य अलब्धविश्रान्तिः (अहम्) पुनः अधुना इह भवन्तम् आसाद्य विश्रमं भजामि ॥

गवेषमाणा–अन्विष्यन्ती । विष्टपेषु–लोकेषु । न लब्धा विश्रान्तिः यया, सा । आसाद्य–प्राप्य । भजामि–लभे ॥ ५७ ॥

**भवन्ति भूमौ प्रतिदेशमापगाः सरांसि कूपाश्च सदम्बुपूरिताः ।**
**तथापि कालाम्बुदमेव केवलं प्रपद्य हि प्रीतिमुपैति चातकी ॥ ५८ ॥**

भवन्तं प्राप्य प्रीतास्मीत्याह—**भवन्तीति** । भूमौ प्रतिदेशं सदम्बुपूरिताः आपगाः सरांसि कूपाः च भवन्ति । तथा अपि चातकी केवलं कालाम्बुदम् एव प्रपद्य हि प्रीतिम् उपैति ॥ देशेदेशे–प्रतिदेशम् । सद्भिः अम्बुभिः–जलैः पूरिताः । आपगाः–नद्यः । सरांसि–कासाराः । कालाम्बुदम्–कालमेघम् । प्रपद्य–प्राप्य । उपैति–प्राप्नोति ॥ ५८ ॥

**यथा गिरीशो गिरिराजकन्यया यथा पुलोम्नः सुतया पुरन्दरः ।**
**यथा च रत्या मदनस्तथा भवान् पतिर्भवन्मे रमतां मया समम् ॥ ५९ ॥**

आवामेवानुरूपौ इत्याह—**यथेति** । भवान् मे पतिः भवन्, गिरीशः गिरिराजकन्यया (समं) यथा, पुरन्दरः पुलोम्नः सुतया (समं) यथा, मदनः च रत्या (समं) यथा, तथा मया समं रमताम् ॥ गिरीशः–शिवः । गिरिराजकन्यया–पार्वत्या । पुरन्दरः–इन्द्रः । पुलोम्नः सुतया–इन्द्राण्या । मदनः–कामः ॥ ५९ ॥

**वृथा किमर्थं विपिने मुनेर्व्रतं प्रपद्यमानो भृशमद्य खिद्यसे ।**
**सहायमस्मानवलम्ब्य सङ्गरे विजित्य शत्रूनुपभुङ्क्ष्व मेदिनीम् ॥ ६० ॥**

अस्मत्साहाय्येन राजपदं सम्पादयेत्याह—**वृथेति** । विपिने मुनेः व्रतं प्रपद्यमानः अद्य वृथा किमर्थं भृशं खिद्यसे । अस्मान् सहायम् अवलम्ब्य सङ्गरे शत्रून् विजित्य मेदिनीम् उपभुङ्क्ष्व ॥ विपिने–वने । प्रपद्यमानः–आश्रयन् । सङ्गरे–युद्धे । मेदिनीम्–भूमिम् ॥ ६० ॥

**सहोदरो मे जगदेकनायकः स ते सहायत्वमुपैति सर्वतः ।**
**वदन्ति लोकोत्तरलोकबन्धुतां नृणां हि सद्यःफलदां मनीषिणः ॥ ६१ ॥**

मम भ्राता रावणस्ते साहाय्यं करिष्यतीत्याह—**सहोदरः** इति। जगदेकनायकः सः सहोदरः सर्वतः ते सहायत्वम् उपैति। मनीषिणः लोकोत्तरलोकबन्धुतां हि नृणां सद्यः फलदां वदन्ति ॥ मनीषिणः—पण्डिताः। लोकोत्तराः ये लोकाः-जनाः, तेषां बन्धुताम्—स्वजनताम् ॥ ६१ ॥

**न केवलं शर्म तवैहिकं मम प्रतिग्रहे स्यादपि पारलौकिकम् ।**
**प्रपन्नदीनावनजातमुच्चकैः प्रचक्षते पुण्यममुत्र शर्मदम् ॥ ६२ ॥**

मां स्वीकुर्वतस्तव पुण्यमपि भवेदित्याह—**नेति**। मम प्रतिग्रहे तव न केवलम् ऐहिकं शर्म स्यात्, पारलौकिकम् अपि (शर्म स्यात्)। प्रपन्नदीनावनजातं पुण्यम् अमुत्र उच्चकैः शर्मदं प्रचक्षते ॥ प्रतिग्रहे—स्वीकारे। ऐहिकम्—इहलोके भवम्। शर्म—सुखम्। पारलौकिकम्—परलोके भवम्। प्रपन्नाः—आश्रिताः ये दीनाः, तेषाम् अवनेन—रक्षणेन जातम्। उच्चकैः—भृशम्। शर्मदम्—सुखकरम्। प्रचक्षते—वदन्ति ॥ ६२ ॥

**अदर्शयन्मह्यमिहैक आत्मभूर्भवन्तमीदृग्रमणीयविग्रहम् ।**
**परस्तु निर्धूतदयं दुनोति मां मधुच्छलक्ष्वेलमुखैः शिलीमुखैः ॥ ६३ ॥**

कामो मह्यं द्रुह्यतीत्याह—**अदर्शयदिति**। एकः आत्मभूः इह ईदृग्रमणीयविग्रहं भवन्तं मह्यम् अदर्शयत्। परः (आत्मभूः) तु मधुच्छलक्ष्वेलमुखैः शिलीमुखैः निर्धूतदयम् (यथा तथा) मां दुनोति ॥ आत्मभूः—विधिः। ईदृग्रमणीयविग्रहम्—ईदृशसुन्दरशरीरम्। आत्मभूः—कामः। मधुनः—पुष्परसस्य छद्म—कैतवं यस्य, तादृशं क्ष्वेलं मुखे येषां, तादृशैः। शिलीमुखैः—शरैः। निर्धूतदयम्—निर्दयम्। दुनोति—उपतापयति ॥ ६३ ॥

**गिरः किरन्त्यामिति यातुयोषिति क्षमातनूजा क्षमया विवर्जिता ।**
**निरीक्ष्य भर्तुर्निभृतस्मया मुखं जहास दन्तांशुविभूषिताधरा ॥ ६४ ॥**

ललितायाः वचनं श्रुत्वा सीता स्मितं करोति। यातुयोषिति इति गिरः किरन्त्यां (सत्याम्) क्षमातनूजा क्षमया विवर्जिता भर्तुः मुखं निरीक्ष्य निभृतस्मया दन्तांशुविभूषिताधरा जहास ॥ यातुयोषिति—राक्षस्यां शूर्पणखायाम्। गिरः—वाचः। किरन्त्याम्—वर्षन्त्याम्।

क्षमातनूजा-भूपुत्री सीता। क्षमया-क्षान्त्या। निभृतस्मया-गूढगर्वा। दन्तांशुना-स्मितेन विभूषितोऽधरो यस्याः, तादृशी। जहास-स्मितं कृतवती ॥ ६४ ॥

**स्मितं तदस्या दुहितुर्महीभृतो निशाचरीचेतसि दृष्टिमार्गतः।**
**चकार गत्वा धमनं मुहुर्मुहुः प्रकृष्टकोपानलकीलबोधने ॥ ६५ ॥**

तत् सीतास्मितं शूर्पणखां कोपयति। अस्याः महीभृतः दुहितुः तत् स्मितं निशाचरीचेतसि दृष्टिमार्गतः गत्वा प्रकृष्टकोपानलकीलबोधने मुहुः धमनं चकार ॥ महीभृतः दुहितुः—राजपुत्र्याः सीतायाः। निशाचरीचेतसि—शूर्पणखाहृदये। दृष्टिमार्गतः—नेत्रमार्गेण। प्रकृष्टस्य—प्रवृद्धस्य कोपानलस्य—क्रोधाग्नेः कीलानाम्—ज्वालानां बोधने—उत्तेजने। धमनम्—प्रचोदनम् ॥ ६५ ॥

**ज्वलन्तमन्तः क्रुधमेव पावकं नृपस्य वक्त्रेन्दुविलोकजृम्भितैः।**
**नियम्यमानं प्रियतारसोदयैः स वाचमूचे दधतीं निशाचरीम् ॥ ६६ ॥**

रामो ललितां प्रतिवदति। अन्तः ज्वलन्तं नृपस्य वक्त्रेन्दुविलोकजृम्भितैः प्रियतारसोदयैः नियम्यमानं क्रुधम् एव पावकं दधतीं निशाचरीं सः वाचम् ऊचे ॥ नृपस्य—रामस्य। वक्त्रेन्दुविलोकजृम्भितैः मुखचन्द्रदर्शनविकसितैः। प्रियता—प्रेम। नियम्यमानम्—नियन्त्र्यमाणम्। क्रुधम्—क्रोधम्। पावकम्— अग्निम। सः—रामः ॥ ६६ ॥

**अयि त्रिलोकीवनिताजनोत्तमे त्वयोदितं यत् स्पृहणीयमेव तत्।**
**उपेक्षते कः स्वयमेव संगतं जगत्त्रये बान्धवरत्नमीदृशम् ॥ ६७ ॥**

रामस्य प्रतिवचनप्रकारमेवाह चतुर्भिः श्लोकैः। त्वया कथितं स्पृहणीयमेव इत्याह—अयीति। अयि त्रिलोकीवनिताजनोत्तमे! त्वया यद् उदितम्, तत् स्पृहणीयम् एव। स्वयम् एव सङ्गतम् ईदृशं बान्धवरत्नं जगत्त्रये कः उपेक्षते? ॥ उदितम्—उक्तम्। स्पृहणीयम्—काम्यम् ॥ ६७ ॥

**अहं पुनः सुन्दरि शासनाद्गुरोर्व्रतं चरामि स्फुटमत्र कानने ।**
**सुखानुभूतेः खलु काल एष नो व्रतं हि सर्वेन्द्रियतापनं विदुः ॥ ६८ ॥**

अहं पितुः शासनाद् व्रतं चरामि इत्याह—**अहमिति** । सुन्दरि ! अहं पुनः गुरोः शासनाद् अत्र कानने व्रतं स्फुटं चरामि । एषः खलु सुखानुभूतेः नो कालः । व्रतं हि सर्वेन्द्रियतापनं विदुः ॥ गुरोः–पितुः । सर्वेन्द्रियाणि–तापयतीति तथा । विदुः–जानन्ति ॥ ६८ ॥

**सधर्मिणीयं मम नित्यसङ्गता वनेऽपि शुश्रूषितुमागता सती ।**
**कथं नु वा कार्यमिदं तितिक्षते स्त्रियः सपत्नी खलु कर्णिसायकः ॥ ६९ ॥**

इयं पत्नी सापत्न्यं न सहेतेत्याह—**सधर्मिणीति** । सती वने अपि शुश्रूषितुम् आगता नित्यसङ्गता इयं मम सधर्मिणी इदं कार्यं कथं नु तितिक्षते ? । स्त्रियः सपत्नी कर्णिसायकः खलु ॥ सधर्मिणी–पत्नी । इदं कार्यम्–मया भवत्याः परिग्रहः । तितिक्षते–सहते । स्त्रियः–नार्याः । कर्णिसायकः–शरविशेषः ॥ ६९ ॥

**अशक्यमस्माभिरतस्त्वदीप्सितं विधातुमेतद्विधुकोमलानने ।**
**निरीक्षितव्या नृभिरात्मनो दशा यथेष्टवृत्तिर्न हि शस्यते जनैः ॥ ७० ॥**

भवतीं परिग्रहीतुं न शक्नोमीत्यह—**अशक्यमिति** । विधुकोमलानने ! अतः अस्माभिः एतत् त्वदीप्सितं विधातुम् अशक्यम् । नृभिः आत्मनः दशा निरीक्षितव्या । जनैः यथेष्टवृत्तिः न हि शस्यते ॥ विधुः–चन्द्रः । त्वदीप्सितम्–तव अभिलाषम् । दशा–अवस्था । शस्यते–स्तूयते ॥ ७० ॥

**इति ब्रुवाणं रजनीचराङ्गना जगाद भूयोपि नृपं निजेप्सितम् ।**
**अहं भवन्तं शरणं गता भवानिमामिवैनां वितनोतु मामिति ॥ ७१ ॥**

ललिता भूयो रामं शरणं व्रजति । इति ब्रुवाणं नृपं भूयः अपि रजनीचराङ्गना निजेप्सितं जगाद । अहं भवन्तं शरणं गता । भवान् इमाम् इव एनां मां वितनोतु इति ॥ ब्रुवाणम्–कथयन्तम् । नृपम्–रामम् । निजेप्सितम्–स्वाभिलाषम् । वितनोतु–करोतु ॥

उवाच तामेष विचिन्त्य भूपतिः पुनश्च निर्बन्धवतीं निशाचरीम् ।
शृणु त्वमम्भोरुहचारुलोचने वदाम्युपायं तव कामिताप्तये ॥ ७२ ॥

तां रामः पुनरपि प्रतिवदति । एषः भूपतिः निर्बन्धवतीं तां निशाचरीं पुनः च विचिन्त्य उवाच । अम्भोरुहचारुलोचने ! त्वं शृणु । तव कामिताप्तये उपायं वदामि ॥ ७२ ॥

ममानुरूपः सहजोऽस्ति कश्चन श्रिया कदर्थीकृतमत्स्यकेतनः ।
इतोऽविदूरे विपिने स वर्तते ममैव नित्यं वरिवस्ययोत्सुकः ॥ ७३ ॥

कामलाभार्थं ललितामुपायान्तरमुपदिशति चतुर्भिः श्लोकैः । मत्सदृशः कश्चिदनुजः समीपे वने वर्तते इत्याह—**ममेति** । श्रिया कदर्थीकृतमत्स्यकेतनः अनुरूपः कश्चन मम सहजः अस्ति । नित्यं मम एव वरिवस्यया उत्सुकः सः इतः अविदूरे विपिने वर्तते ॥ श्रिया—कान्त्या । कदर्थीकृतः—निन्दितः मत्स्यकेतनः—कामः येन, तादृशः । सहजः—अनुजः । वरिवस्यया—शुश्रूषाया । अविदूरे—समीपे । विपिने—वने ॥ ७३ ॥

उपेहि तं लोकहितं समीहितं स ते महासुन्दरि संविधास्यति ।
प्रियावियोगव्यथितोऽधुना ह्ययं बुभुक्षितो नोज्झति लब्धमोदनम् ॥ ७४ ॥

तमुपगच्छेत्याह—**उपेहीति** । महासुन्दरि ! लोकहितं तम् उपेहि । सः ते समीहितं संविधास्यति । अधुना हि अयं प्रियावियोगव्यथितः । बुभुक्षितः लब्धम् ओदनं न उज्झति ॥ लोकहितम्—लोकेभ्यः—जनेभ्यः हितम् । संविधास्यति—करिष्यति । ओदनम्—अन्नम् ॥ ७४ ॥

यथा मयेयं रमते यथासुखं तथामुना त्वं च रमस्व सन्ततम् ।
तथा च सापत्न्यमसह्यवेदनं प्रपत्स्यसे सुन्दरि नान्यया समम् ॥ ७५ ॥

ममानुजेन सह रमस्व इत्याह—**यथेति** । इयं यथा मया रमते, तथा त्वं च यथासुखं सन्ततम् अमुना रमस्व । तथा च सुन्दरि ! अन्यया समम् असह्यवेदनं सापत्न्यं न प्रपत्स्यसे ॥ सापत्न्यम्—सपत्नीभावम् ॥ ७५ ॥

**शरीरभेदः परमावयोस्तथाप्यहो जनः पश्यति नैव तद्भिदाम् ।**
**कथं मयि स्यान्न च तत्र ते रतिः समप्रतीतिः समरागकारिणी ॥७६॥**

अभिन्नावेव आवामित्याह—**शरीरेति** । आवयोः परं शरीरभेदः । तथा अपि जनः तद्भिदां न एव पश्यति । अहो ! मयि (एव) तत्र ते रतिः कथं च न स्यात् ? । समप्रतीतिः समरागकारिणी ॥ परम्–केवलम् । तद्भिदाम्–शरीरभेदम् । मयि तत्र–मद्भिन्ने तस्मिन् अनुजे । समप्रतीतिः–समबुद्धिः ॥ ७६ ॥

**इति क्षितीशे वचनस्रजं सृजत्यरोचतास्यै स च मागधीसुतः ।**
**ययौ च तस्यन्तिकमन्तरुत्सुका मनीषिताप्तिर्वचसैव वाग्मिनाम् ॥७७॥**

ललिता लक्ष्मणान्तिकं गच्छति । क्षितीशे इति वचनस्रजं सृजति (सति), सः मागधीसुतः च अस्यै अरोचत । (सा) अन्तः उत्सुका तस्य अन्तिकं ययौ च । वाग्मिनां वचसा एव मनीषिताप्तिः (भवति) ॥ वचनस्रजम्–मालासदृशीं वाचम् । सृजति–रचयति । मागधीसुतः–सुमित्रापुत्रो लक्ष्मणः । अस्यै–ललितायै । अरोचत–रुचितः । उत्सुका–उत्कण्ठिता । तस्य–लक्ष्मणस्य । मनीषिताप्तिः–इष्टसिद्धिः ॥ ७७ ॥

**उपेत्य सा लक्ष्मणमेक्ष्य भामिनी समानरूपादिकमग्रजेन तम् ।**
**नितान्तहृष्टा निजमिष्टमङ्गजप्रचोदिता प्रार्थयते स्म पार्थिवम् ॥७८॥**

ललिता लक्ष्मणं स्वाभीष्टं प्रार्थयते । सा भामिनी लक्ष्मणम् उपेत्य, तम् अग्रजेन समानरूपादिकम् एक्ष्य नितान्तहृष्टा अङ्गजप्रचोदिता (सती), पार्थिवं निजम् इष्टं प्रार्थयते स्म ॥ समानरूपादिकम्–रूपादिना समानम् । एक्ष्य–विलोक्य । अङ्गजप्रचोदिता–कामप्रेरिता । पार्थिवम्–राजपुत्रं लक्ष्मणम् ॥ ७८ ॥

**अहो महाकष्टमिदं ममाधुनागतस्य शुश्रूषितुमग्रजं वने ।**
**इति स्वयं तेन निरासि मानिनी पुनश्च रामान्तिकमेव सागमत् ॥ ७९ ॥**

लक्ष्मणेन निरस्ता ललिता रामान्तिकमेव गच्छति। वने अग्रजं शुश्रूषितुं आगतस्य मम अधुना इदं महाकष्टम्। इति मानिनी तेन स्वयं निरासि। सा पुनः च रामान्तिकम् एव अगमत्॥ निरासि–प्रत्याख्याता ॥ ७९ ॥

**न मां प्रगृह्णाति शठस्तवानुजस्त्वमेव भर्ता भव मे गुणाम्बुधे ।**
**इति ब्रुवाणां नृपतिः पुनश्च तामुवाच मन्दस्मितसुन्दराननः ॥ ८० ॥**

पुनरपि स्वपरिग्रहार्थं प्रार्थयमानां ललितां रामो वदति। शठः तव अनुजः मां न प्रगृह्णाति। गुणाम्बुधे! त्वम् एव मे भर्ता भव। इति ब्रुवाणां तां नृपतिः पुनः च मन्दस्मितसुन्दराननः उवाच॥ शठः–दुर्बुद्धिः ॥ ८० ॥

**धिगस्य तां बुद्धिमसारवेदिनीमुपेक्षते यो भवतीमुपागताम् ।**
**अहो नृणां दुर्ग्रहमेव मानसं न चानुमेयं गुणतोऽपि नाकृतेः ॥ ८१ ॥**

रामो लक्ष्मणस्याल्पबुद्धितां निन्दन्नाह—**धिगिति**। यः उपागतां भवतीं उपेक्षते, अस्य ताम् असारवेदिनीं बुद्धिं धिक्। अहो! नृणां मानसं दुर्ग्रहम् एव। गुणतः न च अनुमेयम्, आकृतेः अपि न (अनुमेयम्)॥ सारम्–श्रेष्ठं न वेत्तीत्यसारवेदिनी, तादृशीम्। धिक्–निन्दामि। गुणतः–गुणैः। अनुमेयम्–अनुमातुम् ऊहितुं शक्यम्। आकृतेः–आकृतिविशेषात् ॥ ८१ ॥

**इदं पुनः श्रावय साधु मद्वचस्तवाग्रजः शास्ति भवन्तमीदृशम् ।**
**न कामुकीमर्हति हातुमङ्गनामनन्यनाथां शरणागतामिति ॥ ८२ ॥**

लक्ष्मणं वक्तुं सन्देशं ददाति– **इदमिति**। इदं मद्वचः पुनः साधु श्रावय। तव अग्रजः भवन्तम् ईदृशं शास्ति। अनन्यनाथां शरणागतां कामुकीम् अङ्गनां हातुं न अर्हति इति॥ मद्वचः पुनः–मद्वचस्तु। साधु–सम्यक्। शास्ति नियुङ्क्तेहातुम्–त्यक्तुम् ॥ ८२ ॥

**निवेदितायामिति मद्गिरि त्वया स नूनमिष्टं तव पूरयिष्यति ।**
**अवश्यकर्तव्यमुदीरितं गुरोः प्रयाहि तत् सत्वरमस्तु चिन्तितम् ॥ ८३ ॥**

मद्वचनं श्रुत्वा लक्ष्मणस्त्वदभीष्टं पूरयिष्यतीत्याह—**निवेदितायामिति** । इति मद्गिरि त्वया निवेदितायां, सः नूनं तव इष्टं पूरयिष्यति । गुरोः उदीरितम् अवश्यकर्तव्यम् । तत् सत्वरं प्रयाहि । चिन्तितम् अस्तु ॥ मद्गिरि—मम वाचि । नूनम्—निश्चितम् । गुरोः—ज्येष्ठस्य । उदीरितम्—वचनम् । अवश्यकर्तव्यम्—निश्चयेन क्रियेत ॥ ८३ ॥

**इतीरिता सा पुनरेत्य लक्ष्मणं बभाण वाणीमुदितां महीभृता ।**
**निशम्य सोऽप्याह नृपस्य चित्तवित् किमप्यधिक्षिप्य कुलं पलाशिनाम् ॥**

ललितावचनं श्रुत्वा लक्ष्मणो राक्षसकुलं निन्दन् वदति । इति ईरिता सा पुनः लक्ष्मणम् एत्य, महीभृता उदितां वाणीं बभाण । (तत्) निशम्य नृपस्य चित्तवित् सः अपि पलाशिनां कुलं किमपि अधिक्षिप्य आह ॥ ईरिता—उक्ता । सा—ललिता । महीभृता—राज्ञा रामेण । उदिताम्—उक्ताम् । बभाण—उवाच । सः—लक्ष्मणः । पलाशिनाम्—राक्षसानाम् । आह—उवाच ॥ ८४ ॥

**श्रुतेरतिक्रम्य नियोगमुत्तमं निशाचरीजातिरियं प्रवर्तते ।**
**सदैव रूक्षाचरणैकचेतसो न शुद्धिरस्या मनसोऽपि विद्यते ॥ ८५ ॥**

राक्षसीनां कर्मशुद्धिर्मनश्शुद्धिरपि नास्तीत्याह—**श्रुतेरिति** । इयं निशाचरीजातिः श्रुतेः उत्तमं नियोगम् अतिक्रम्य प्रवर्तते । सदा एव रूक्षाचरणैकचेतसः अस्याः मनसः अपि शुद्धिः न विद्यते ॥ श्रुतेः—वेदस्य । नियोगम्—विधिम् । रूक्षाचरणम्-क्रूरकर्म । अस्याः—राक्षसीजातेः ॥ ८५ ॥

**विवाहयोग्या न हि जातिरीदृशी सदा सदाचारवतां शरीरिणाम् ।**
**महाजनैर्मानुषराक्षसीकृतं विशिष्य दाम्पत्यमहो विगर्हितम् ॥ ८६ ॥**

सज्जनानामेषा जातिर्न विवाहयोग्येत्याह—**विवाहेति** । सदा सदाचारवतां शरीरिणाम् ईदृशी जातिः न हि विवाहयोग्या । मानुषराक्षसीकृतं दाम्पत्यं महाजनैः विशिष्य विगर्हितम् । अहो ! विगर्हितम्—निन्दितम् । ज्योतिश्शास्त्रे विवाहचिन्तायां नक्षत्रगणेषु मानुषराक्षस-गणयोगो मरणदः इत्युक्तमिति भावः ॥ ८६ ॥

**त्वमङ्गने तत्र च नष्टभर्तृका पुमांसमन्यं प्रतिपत्तुमिच्छसि ।**
**अहो चरित्रं तव धिग्धि गीदृशं विदन्निदं त्वां कतमो ग्रहीष्यति ॥ ८७ ॥**

विधवां त्वां न कोपि ग्रहीष्यतीत्याह—**त्वमिति** । अङ्गने ! तत्र च नष्टभर्तृका त्वम् अन्यं पुमांसं प्रतिपत्तुम् इच्छसि । तव ईदृशं चरित्रं धिक् धिक् । अहो ! इदं विदन् कतमः त्वां ग्रहीष्यति ॥ प्रतिपत्तुम्–प्राप्तुम् । विदन्–जानन् ॥ ८७ ॥

**यदग्रजः शास्ति नधर्मसंहितं तदग्रहीतव्यमसंशयं मम ।**
**अये दुराचारिणि न ग्रहोचिता त्वकं मम प्रत्युत निग्रहोचिता ॥ ८८ ॥**

धर्मविरुद्धमग्रजशासनं नानुसरामीत्याह—**यदिति** । अग्रजः नधर्मसंहितं यत् शास्ति तद् मम अग्रहीतव्यम् । असंशयम् । अये दुराचारिणि ! त्वकं मम न ग्रहोचिता, प्रत्युत, निग्रहोचिता ॥ धर्मसंहितं–धर्मयुक्तं न भवतीति नधर्मसंहितम् । नञर्थस्य नशब्दस्य समासः । अग्रहीतव्यम्–न स्वीकर्तव्यम् । त्वकम्–त्वम् । अकच्प्रत्ययान्तः । ग्रहोचिता–स्वीकारोचिता ॥ ८८ ॥

**इतीदमाकर्ण्य वचस्तदीरितं सुदुःश्रवं विश्रवसस्तनूजया ।**
**स सत्वरोदित्वरकोपपावकस्फुलिंङ्गशङ्काकरवर्णमीरितः ॥ ८९ ॥**

ललिता कुपिता लक्ष्मणं वदति । इति सुदुश्श्रवं तदीरितम् इदं वचः आकर्ण्य विश्रवसः तनूजया सः सत्वरोदित्वरकोपपावकस्फुलिङ्गशङ्काकरवर्णम् ईरितः ॥ विश्रवसः तनूजया–शूर्पणखया । सः–लक्ष्मणः । सत्वरम् उदित्वरः–ज्वलितः कोप एव पावकः–अग्निः, तस्य स्फुलिङ्गानाम्–अग्निकणानां शङ्कां कुर्वन्तीति–शङ्काकराः–वर्णाः–अक्षराणि यस्मिन् कर्मणि, तद्यथा तथा । ईरितः–उक्तः ॥ ८९ ॥

**किमात्थ रे बालक कालचोदितस्त्वमस्मदग्रे वदसीदृशं वचः ।**
**समस्तमर्त्यामरमृत्युकारिणं न रावणं वेत्सि किमग्रजं मम ॥ ९० ॥**

रावणं किं न वेत्सीति लक्ष्मणं पृच्छति । रे बालक ! कालचोदितः त्वं किम् आत्थ ? । अस्मदग्रे ईदृशं वदसि ? समस्तमर्त्यामरमृत्युकारिणं रावणं मम अग्रजं किं न वेत्सि ?

कालेन मृत्युना चोदितः-प्रेरितः। समस्तानां मर्त्यानां-मनुष्याणाम् अमराणाम्-देवानां च मृत्युं करोतीति, तादृशम् ॥ किं न वेत्सि-किं न जानासि ॥ ९० ॥

**दशामशेषामनरण्यभूपतेर्न किं विजानासि कुलोद्भवस्य ते ।**
**अनात्मवेदित्वमहो दुरात्मनस्तवेदमाधित्ससि नो यदप्रियम् ॥ ९१ ॥**

अनात्मज्ञत्वात् त्वमस्मदप्रियं चिकीर्षसीत्याह—**दशामिति** । ते कुलोद्भवस्य अनरण्यभूपतेः अशेषां दशां किं न विजानासि ?। दुरात्मनः तव अनात्मवेदित्वम् अहो ! यत् नः इदम् अप्रियम् आधित्ससि ॥ कुलोद्भवस्य-वंशजातस्य । दशाम्-अवस्थाम्। अहो-अद्भुतावहम् । यत्-यस्मात्। आधित्ससि-कर्तुमिच्छसि ॥ ९१ ॥

**मदीहितन्यक्करणस्य कर्मणः फलं पुनर्नैव विलम्ब्य भोक्ष्यसे ।**
**इतीरयन्ती रजनीचराङ्गना क्रुधा ज्वलन्ती निजरूपमाददे ॥ ९२ ॥**

ममावहेलनस्य फलमचिरादनुभविष्यसीत्युक्त्वा शूर्पणखा स्वं राक्षसीरूपं गृह्णाति । मदी-हितन्यक्करणस्य कर्मणः फलं पुनः न एव विलम्ब्य भोक्ष्यसे । इति ईरयन्ती रजनीचराङ्गन-क्रुधा ज्वलन्ती निजरूपम् आददे ॥ मम ईहितस्य-इष्टस्य यद् न्यक्करणम्-तिरस्करणम्, तस्य। न एव विलम्ब्य-अविलम्बेनैव। भोक्ष्यसे-अनुभविष्यसि। रजनीचराङ्गना-शूर्पणखा। आददे-गृहीतवती ॥ ९२ ॥

**मूर्तिं मूर्तिमतीमिव क्रुधमसावादाय नैसर्गिकीं**
**मर्त्यामर्त्यमनोविकारजननीमुत्तुङ्गशैलोपमाम् ।**
**तस्थौ तस्य कुमारकस्य पुरतो व्यादाय च स्वं मुखं**
**वज्राकारनितान्तघोरविलसद्दन्तावलीदन्तुरम् ॥ ९३ ॥**

शूर्पणखा मुखं व्यादाय लक्ष्मणस्य पुरस्तात् तिष्ठति । असौ मर्त्यामर्त्यमनोविकार-जननीम् उत्तुङ्गशैलोपमां मूर्तिमतीं क्रुधम् इव (स्थितां) नैसर्गिकीं मूर्तिम् आदाय वज्राकारनिता-न्तघोरविलसद्दन्तावलीदन्तुरं स्वं मुखं च व्यादाय तस्य कुमारकस्य पुरतः तस्थौ ॥ असौ-शूर्पणखा । मर्त्यानाम्-नराणां अमर्त्यानाम्-देवानां च मनोविकारस्य-भयस्य जननीम् ।

मूर्तिमतीम्–सशरीराम् । क्रुधम्–क्रोधम् । नैसर्गिकीम्–स्वाभाविकीम् । राक्षसस्वभावोचितामिति भावः । मूर्तिम–शरीरम् । आदाय–गृहीत्वा । वज्राकाराणां नितान्तघोरं विलसतां दन्तानाम् आवल्या–पङ्क्त्या । दन्तुरम्–विकृतम् । व्यादाय–उद्घाट्य ॥९३॥

तामालोक्य क्षितिपतिसुतस्तादृशीमग्रदेशे
कालाम्भोदप्रतिमवपुषं कालरात्रीमिवोच्चैः ।
पूर्वन्यस्ताच्चरणयुगलान्नैव किञ्चिच्चकम्पे
भीतिं दत्ते किमिव भुवने तादृशां धैर्यभाजाम् ॥ ९४ ॥

इति श्रीगोदवर्मविद्वद्युवराजकृते
श्रीरामचरिते महाकाव्ये
दशमः सर्गः

---

शूर्पणखायाः घोरं रूपं दृष्ट्वापि लक्ष्मणः पदात् पदं न चलति । क्षितिपतिसुतः अग्रदेशे कालाम्भोदप्रतिमवपुषम् उच्चैः कालरात्रीम् इव (स्थिताम ) तादृशीं ताम् आलोक्य पूर्वन्यस्तात् चरणयुगलात् किञ्चित् न एव चकम्पे । भुवने तादृशां धैर्यभाजां किम् इव भीतिं दत्ते? ॥ क्षितिपतिसुतः लक्ष्मणः । अग्रदेशे पुरस्तात् । कालाम्भोदप्रतिमवपुषम्–काल मेघतुल्यशरीराम । उच्चैः–उन्नताम् । कालरात्रीम–मरणदिवसपूर्वरात्रिम् ॥ ९४ ॥

इति पण्डितरत्नश्रीनारायणपिषारोटिविरचितायां
श्रीरामचरितमहाकाव्यव्याख्यायां अन्वयार्थप्रबोधिन्यां
शूर्पणखाक्षोभो नाम दशमः सर्गः



# एकादशस्सर्गः

अथ सा तरसा नरदेवसुतं परिगृह्य करेण करालमुखी ।
कृतघोरतरस्वनिता वनिता दिवमाशु जगाम निकामरुषा ॥ १ ॥

शूर्पणखा लक्ष्मणं परिगृह्य गगनमुत्पतति । अथ करालमुखी सा वनिता कृतघोरतरस्वनिता निकामरुषा तरसा नरदेवसुतं करेण परिगृह्य आशु दिवं जगाम ॥ करालम्–भयङ्करं मुखं यस्याः, तादृशी। सा वनिता–शूर्पणखा । कृतं घोरतरं स्वनितं–शब्दो यया, तादृशी। निकामरुषा–अतिकोपेन । तरसा–बलेन । नरदेवसुतम्–लक्ष्मणम् । दिवम्–आकाशम् ॥ १ ॥

अनया चपलं प्रपलायितया धृतलक्ष्मणया पलभक्षणया ।
मरुदीरितनूतनकालिकया सतटिद्गुणयेव रराज नभः ॥ २ ॥

धृतलक्ष्मणा शूर्पणखा सविद्युता मेघपङ्क्त्योपमीयते। धृतलक्ष्मणया चपलं प्रपलायितया अनया पलभक्षणया, सतटिद्गुणया मरुदीरितनूतनकालिकया इव नभः रराज ॥ चपलम्–सत्वरम् । पलभक्षणया–राक्षस्या । तटिद्गुणेन–विद्युद्दाम्ना सहितया–सतटिद्गुणया । मरुदीरिता–वाताहता नूतना या कालिका–मेघपङ्क्तिः तया । नभः–आकाशम् । रराज–बभौ ॥ २ ॥

अवहेलित एव मनीषिजनैर्वनितावध इत्युचितज्ञमतिः ।
असिना निचकर्त निरस्यदयं स्वयमुच्छितत्तच्छ्रुतिनासमयम् ॥ ३ ॥

लक्ष्मणः शूर्पणखायाः कर्णं नासिकां च कृन्तति । वनितावधः मनीषिजनैः अवहेलितः एवइ ति उचितज्ञमतिः अयं स्वयम् असिना उच्छितततच्छ्रुतिनासं निरस्तदयं निचकर्त ॥ वनितावधः–स्त्रीवधः । मनीषिजनैः–पण्डितैः । अवहेलितः–निन्दितः । उचितं–योग्यं जानातीति उचितज्ञा, तादृशी मतिः यस्य, तादृशः । अयम्–लक्ष्मणः । असिना–खड्गेन ।

उच्छिततच्छुतिनासम्–उच्छ्रिताम्–उन्नतां तस्याः श्रुतिम्–कर्णं नासां च। निरस्तदयम्–निर्दयम्। निचकर्त–चिच्छेद ॥ ३ ॥

निशितासिहता पिशिताशिहता भृशवेदनया विससर्ज नृपम् ।
मुहुरुच्चतरं रुदती च ततो गगनाद्गिरिशृङ्गमिव न्यपतत् ॥ ४ ॥

शूर्पणखा लक्ष्मणं विसृज्य गगनात् पतति। निशितासिहता पिशिताशिहता भृशवेदनया नृपं विससर्ज। मुहुः उच्चतरं रुदती च ततः गगनाद् गिरिशृङ्गम् इव न्यपतत्॥ निशितेन असिना–खड्गेन हता–निकृत्तकर्णनासिका। पिशिताशिहता–निकृष्टा राक्षसी। नृपम्–लक्ष्मणम्। विससर्ज–परित्यक्तवती। न्यपतद्–निपतिता ॥ ४ ॥

परितः स्रवदस्रविमिश्रतनुर्दिवसान्तपयोधरपालिनिभम् ।
मुखमुन्मुखचेतनभीतिकरं दधती भुवि सा लुठति स्म चिरम् ॥ ५ ॥

सा भूमौ लुठति। स्रवदस्रविमिश्रतनुः सा दिवसान्तपयोधरपालिनिभम् उन्मुखचेतनभतिकरम् मुखं दधती चिरं भुवि लुठति स्म ॥ स्रवता अस्रेण–रक्तेन विमिश्रा तनुः–शरीरं यस्याः, तादृशी। सा- शूर्पणखा। दिवसान्ते–सन्ध्यायां या पयोधरपालिः–मेघपङ्क्तिः, तया सदृशम्। उन्मुखानाम्–अभिमुखानां चेतनानाम्–प्राणिनां भीतिकरम्। लुठति स्म–विचेष्टितवती ॥ ५ ॥

उपकर्ण्य तदीयमथोच्चरवं किमिति भ्रमति क्षितिपे प्रियया ।
सहसा स ससार सहासिरमुं मगधाधिपतेर्दुहितुस्तनयः ॥ ६ ॥

लक्ष्मणः सखड्गो राममुपसर्पति। अथ तदीयम् उच्चरवम् उपकर्ण्य क्षितिपे प्रियया सह 'किम्' इति भ्रमति (सति) सहसा सः मगधाधिपतेः दुहितुः तनयः सहासिः अमुं ससार॥ क्षितिपे–रामे। प्रियया–सीतया। भ्रमति–परिभ्रमति। सः–लक्ष्मणः। सहासिः–सखड्गः। अमुम्–रामम्। ससार–उपसृतवान् ॥ ६ ॥

इतरेतरमुद्गृणतोरुभयोरदसीयविचेष्टितमेव तयोः ।
ददृशे पुरतः पिशिताशिपतेः सहजा धृतविग्रहयोरग्रमुखी ॥ ७ ॥

रामलक्ष्मणौ लुठन्तीं शूर्पणखां पश्यतः। उभयोः तयोः इतरेतरम् अदसीयविचेष्टितम् एव उद्गृणतोः (सतोः) पुरतः धृतविग्रहयोग्रमुखी पिशिताशिपतेः सहजा ददृशे॥ तयोः– रामलक्ष्मणयोः। इतरेतरम्–अन्योन्यम्। अमुष्याः इदम्–अदसीयम्, तच्च तद् विचेष्टितं कर्म च। उद्गृणतोः–वदतोः। धृतं विग्रम्–विगतनासिकं, हयस्येव–अश्वस्येव उग्रं, मुखं यथा, तादृशी। पिशिताशिपतेः सहजा–शूर्पणखा। ददृशे–दृष्टा॥ ७॥

**विकृताकृतिभीषितसत्वकुलामथ तामवलोक्य नितान्तभिया।**
**अपि देवरि पश्यति सम्भ्रमिणी जगृहे रमणं जनकस्य सुता॥ ८॥**

तां राक्षसीं विलोक्य भीता सीता रामं गृह्णाति। अथ विकृताकृतिभीषितसत्त्वकुलां ताम् अवलोक्य नितान्तभिया सम्भ्रमिणी जनकस्य सुता देवरि पश्यति (सति) अपि रमणं जगृहे॥ विकृताकृत्या भीषितानि सत्त्वकुलानि–जन्तुवृन्दानि यया, तादृशीम्। ताम्–शूर्पणखाम्। जनकस्य सुता–सीता। देवरि–भर्तुरनुजे लक्ष्मणे। रमणम्–भर्तारं रामम्। जगृहे– गृहीतवती॥ ८॥

**अयि राम विलोकय दुर्विनयं सहजस्य तवातितरां कुमतेः।**
**अचिरेण लभध्वममुष्य विधेः फलमप्रतिकार्यमनात्मविदः॥ ९॥**

शूर्पणखा रामादींस्तर्जयति। अयि राम! अतितरां कुमतेः अनात्मविदः तव सहजस्य दुर्विनयं विलोकय। अमुष्य विधेः अप्रतिकार्यं फलम् अचिरेण लभध्वम्॥ कुमतेः– दुर्बुद्धेः। अनात्मविदः–आत्मानमजानतः। विधेः–कर्मणः। अप्रतिकार्यम्–प्रतिकर्तुम- शक्यम्॥ ९॥

**खरदूषणमुख्यनराशकुलं सविधे वसतीह ममानुचरम्।**
**न हि तत् सहते परिभूतिमिमां यदशेषमिदं ग्रसितुं क्षमते॥ १०॥**

खरदूषणादयो अनुचराः मम परिभवमिमं न सहन्ते इत्याह। मम अनुचरं खरदूषणमुख्य- नराशकुलम् इह सविधे वसति। तद् इमां परिभूतिं न हि सहते। यद् इदम् अशेष ग्रसितुं

क्षमते ॥ नराशकुलम्–राक्षससङ्घः । सविधे–समीपे । तत्–राक्षसकुलम् । परिभूतिम्–परिभवम् । यद्–राक्षसकुलम् । क्षमते–शक्तं भवति ॥ १० ॥

**इति घोरतरं प्रणिगद्य मुहुः क्षणतः क्षणदाचरयोषिदसौ ।**
**प्रजगाम ततः खचरारिजनैः सह यत्र खरः खरमूर्तिधरः ॥ ११ ॥**

शूर्पणखा खरसमीपं गच्छति । इति घोरतरं मुहुः प्रणिगद्य क्षणतः असौ क्षणदाचरयोषित्, ततः, यत्र खरमूर्तिधरः खरः खचरारिजनैः सह (अस्ति, तत्र) प्रजगाम ॥ प्रणिगद्य–उक्त्वा । क्षणदाचरयोषित्–राक्षसस्त्री शूर्पणखा । खरमूर्तिधरः–उग्रशरीरवान् । खचराः–देवाः, तेषाम् अरिजनैः–शत्रुसङ्घैः । राक्षसैरित्यर्थः ॥ ११ ॥

**उपसृत्य तदीयसमीपमसौ निजवृत्तमशेषमथाकथयत् ।**
**पुरतः करुणस्वनितध्वनितं परतः प्रसमीक्षणसामिगतम् ॥ १२ ॥**

खरं स्ववृत्तान्तं कथयति । अथ असौ तदीयसमीपम् उपसृत्य, पुरतः करुणस्वनितध्वनितं परतः प्रसमीक्षणसामिगतं स्ववृत्तम् अशेषम् अकथयत् ॥ असौ–शूर्पणखा । तदीयसमीपम्–खरान्तिकम् । पुरतः–प्रथमम् । करुणेन–दीनेन स्वनितेन–शब्देन ध्वनितम्–व्यञ्जितम् । परतः–पश्चात् । प्रसमीक्षणेन–प्रत्यक्षदर्शनेन सामि–अर्धं, गतम्–ज्ञातम् । अशेषम्–सकलम् ॥ १२ ॥

**तदनु क्षुभितं निशिचारबलं जलधिप्रतिमं चलति स्म भृशम् ।**
**दधदुग्रतरां क्रुधमुज्ज्वलितां हृदि बाडवपावकहेतिमिव ॥ १३ ॥**

राक्षससैन्यं क्षुभितं चलति । तदनु क्षुभितं जलधिप्रतिमं निशिचारबलं, बाडवपावकहेतिम् इव उग्रतराम् उज्ज्वलितां क्रुधं भृशं हृदि दधत् चलति स्म ॥ निशिचारबलम्–राक्षससैन्यम् । बाडवपावकहेतिम्–बडवाग्निज्वालाम् । क्रुधम्–क्रोधम् । दधत्–धारयत् । चलति स्म–प्रतस्थे ॥ १३ ॥

[ युग्मकम् ]

करशृङ्गलसत्करवालिकया गतिवेगपतत्पतगालिकया ।
निजविग्रहनिर्जितकालिकया रजनीचरपामरपालिकया ॥ १४ ॥

अहमित्यहमित्यवलिप्तधिया मनुजः स इति व्यतिलुप्तधिया ।
अभिराममधावि मृधाय तया पृथुलारवतर्जितगर्जितया ॥ १५ ॥

राक्षससैन्यं रामाभिमुखं युद्धाय धावति । करशृङ्गलसत्करवालिकया गतिवेगपतत्पतगालिकया निजविग्रहनिर्जितकालिकया अहम् इति अहम् इति अवलिप्तधिया, सः मनुजः इति व्यतिलुप्तधिया पृथुलारवतर्जितगर्जितया तया रजनीचरपामरपालिकया रामम् अभि मृधाय अधावि ॥ करशृङ्गेषु—कराग्रेषु लसन्त्यः करवालिकाः—खड्गविशेषाः यस्याः, तादृश्या । गतिवेगेन पतन्ती पतगालिः—पक्षिपङ्क्तिः यया, तादृश्या । निजेन विग्रहेण—शरीरेण—निर्जिता कालिका—मेघपङ्क्तिः यया, तादृश्या । मेघपङ्क्तितुल्यशरीरयेत्यर्थः । अवलिप्ता—गर्विता धीः यस्याः, तादृश्या । व्यतिलुप्ता—निन्दायुक्ता धीः यस्याः, तादृश्या । रजनीचरपामरपालिकया—राक्षसहतकसङ्घेन । मृधाय—युद्धाय । अधावि—धावनं कृतम् ॥ १४, १५ ॥

अवलोक्य ततः खलिनीं बलिनीमभियाभियतीमभिकोऽथ भुवः ।
अनुजार्पितदारभरः स्वकरे सशरं स शरासमधिज्यमधात् ॥ १६ ॥

रामः सशरं चापं गृह्णाति । अथ सः भुवः अभिकः बलिनीं खलिनीं ततः अभिया अभियतीम् अवलोक्य अनुजार्पितदारभरः अधिज्यं शरासं सशरं स्वकरे अधात् ॥ भुवः अभिकः—भूमेः कामुकः । राजेत्यर्थः, रामः इति भावः । बलिनीम्—सैन्यसमेताम् । खलिनीम्—क्रूरसमूहम् । ततः—तत्र । अभिया—भयेन विना । अभियतीम्—अभिगच्छन्तीम् । अनुजे—लक्ष्मणे अर्पितः दारभरः—पत्नीसंरक्षणभारः येन, तादृशः । अधिज्यम्—अधिरोपितमौर्वीकम् । शरासम्—चापम् । सशरम्-शरसहितम् । अधात्—गृहीतवान् ॥ १६ ॥

उपरुध्य ततो रघुनाथममी तरसा तरसाशनपाशजनाः ।
गिरिशृङ्गशिलातरुभिर्गुरुभिर्युयुधुर्विविधैरपि शस्त्रगणैः ॥ १७ ॥

राक्षसाः राममुपरुध्य युध्यन्ति। ततः अमी तरसाशनपाशजनाः तरसा रघुनाथम् उपरुध्य गुरुभिः गिरिशृङ्गशिलातरुभिः विविधैः शस्त्रगणैः अपि युयुधुः॥ तरसम्—मांसम्। तरसाशनाः—राक्षसाः। कुत्सिताः राक्षसाः—तरसाशनपाशाः। तेषां समहाः—तरसाशनपाशजनाः। तरसा—बलेन वेगेन च। रघुनाथम्—रामम्। युयुधुः—युद्धं चक्रुः॥ १७॥

**स हि तत्प्रहितानि च तानि शरैरवमर्द्य धनुर्गलितैर्नृपतिः।**
**अमरारिकुलान्यमरातिपटुर्यमराजपुरीमनयत् क्षणतः॥ १८॥**

रामस्तान् क्षणान्निघ्नन्ति। अमरातिपटुः सः हि नृपतिः तत्प्रहितानि तानि च धनुर्गलितैः शरैः अवमर्द्य अमरारिकुलानि क्षणतः यमराजपुरीम् अनयत्॥ अमरेभ्योऽपि अति पटुः—अतिसमर्थः। नृपतिः—रामः। तत्प्रहितानि—तैः राक्षसैः प्रयुक्तानि। तानि—गिरिशृङ्गादीनि। अवमर्द्य—विनाश्य। अमरारिकुलानि—राक्षससमूहान्। यमराजपुरीम् अनयत्—निहतवान्॥ १८॥

**अधिकोपवशादथ चापधरास्त्रिशिरःखरदूषणरात्रिचराः।**
**अभिजग्मुरमुं बलदृप्तधियः समदद्विरदा इव केसरिणम्॥ १९॥**

खरदूषणत्रिशिरसो राममभिगच्छन्ति। अथ बलदृप्तधियः त्रिशिरः खरदूषणरात्रिचराः अधिकोपवशात् चापधराः, समदद्विरदाः केसरिणम् इव अमुम् अभिजग्मुः॥ बलेन—वीर्येण दृप्ता, अहङ्कृता धीः येषाम्, तादृशाः। त्रिशिराः खरः दूषणः इत्येते रात्रिचराः राक्षसाः। अधिकोपवशात्—क्रोधाधिक्येन। समदाः—मत्ताः द्विरदाः—गजाः। केसरिणम्—सिंहम्। अमुम्—रामम्। अभिजग्मुः—अभिगताः॥ १९॥

**अयि तिष्ठ नराधम दुष्टमते क्षणमत्र पुरोभुवि नः समरे।**
**अविचार्य यदाचरितं भवता फलमाप्नुहि तस्य विधेरधुना॥ २०॥**

खरादयो वीरवादान् प्रलपन्ति । अयि नराधम दुष्टमते! समरे अत्र नः पुरोभुवि क्षणं तिष्ठ। भवता अविचार्य यद् आचरितम्, तस्य विधेः फलम् अधुना आप्नुहि ॥ विधेः–कर्मणः। आप्नुहि–लभस्व ॥ २० ॥

**इति वीरवचः प्रलपन्त इमे श्रुतिदुस्सहनिस्स्वनभिन्नदिशः ।**
**विषदिग्धमुखान् शतकोटिसखान् ववृषुर्विशिखानतिशातशिखान् ॥ २१ ॥**

खरादयः शरान् वर्षन्ति । इति वीरवचः प्रलपन्तः श्रुतिदुस्सहनिस्स्वनभिन्नदिशः इमे विषदिग्धमुखान् शतकोटिसखान् अतिशातशिखान् विशिखान् ववृषुः ॥ श्रुतिदुस्सहैः निस्स्वनैः भिन्नाः दिशः यैः, तादृशाः । इमे–खरादयः । विषेण दिग्धानि मुखानि येषां, तान्। शतकोटिसखान्–वज्रसदृशान् । अतिशातशिखान्–अतिमात्रनिशिताग्रान् । विशिखान्–शरान् ॥ २१ ॥

**अवलोक्य निशाचरयूथपतीनवनीपतिरप्यतिरुष्टमतिः ।**
**अवगन्तुमदःकरवीर्यमसौ सुचिरं समयुध्यदमीभिरमा ॥ २२ ॥**

रामः खरादिभिरभिः युध्यति । असौ अवनीपतिः अपि निशाचरयूथपतीन् अवलोक्य अतिरुष्टमतिः, अदःकरवीर्यम् अवगन्तुम् अमीभिः अमा सुचिरं समयुध्यत् ॥ अवनीपतिः–रामः। निशाचरयूथपतीन्–राक्षसकुलेश्वरान् खरादीन्। अदःकरवीर्यम्–अमीषां बाहुबलम् । अवगन्तुम्–ज्ञातुम् । अमा–सह । समयुध्यत्–युद्धं कृतवान् ॥ २२ ॥

**रणमूर्धनि तेन नृपेण ततो दृढमाशुगसन्ततिरुन्मुमुचे ।**
**स्थिरबन्धनमप्यपरे मुमुचुर्निजहृद्गतमाशुगमाशु तदा ॥ २३ ॥**

खरादयो मृत्युं प्राप्नुवन्ति। ततः तेन नृपेण रणमूर्द्धनि दृढम् आशुगसन्ततिः उन्मुमुचे। तदा अपरे अपि स्थिरबन्धनं निजहृद्गतम् आशुगम् आशु मुमुचुः ॥ रणमूर्धनि–युद्धमध्ये। अशुगसन्ततिः–शरपङ्क्तिः । उन्मुमुचे–विसृष्टा । अपरे–खरादयः । स्थिरबन्धनम्–दृढबद्धम् । आशुगम्–प्राणवायुम् । आशु–शीघ्रम्। मुमुचुः–त्यक्तवन्तः ॥ २३ ॥

**विनिहत्य निशाचरसङ्घमिमं स निवृत्य निजाश्रममाप नृपः ।**
**अकरोच्च हृदि व्यसनाकुलिते प्रमदं प्रमदाकुलमौलिमणेः ॥ २४ ॥**

राम आश्रमं प्रति निवृत्य सीतां समाश्वासयति । सः नृपः इमं निशाचरसङ्घं विनिहत्य निवृत्य निजाश्रमम् आप। व्यसनाकुलिते प्रमदाकुलमौलिमणेः हृदि प्रमदम् अकरोत् च ॥ विनिहत्य—हत्वा । व्यसनाकुलिते—दुःखकलुषिते । प्रमदाकुलमौलिमणेः—सीतायाः। प्रमदम्—आनन्दम् ॥ २४ ॥

**विजयश्रियमाप्य नृपः शुशुभे विपिनं च तदा गतकण्टकताम् ।**
**मुनयः प्रशशंसुरमुष्य यशो विहगाश्च पलाशिकुलस्य पलम् ॥ २५ ॥**

मुनयो रामं प्रशंसन्ति । नृपः विजयश्रियम् आप्य शुशुभे । तदा विपिनं च गत-कण्टकताम् (आप्य शुशुभे)। मुनयः अमुष्य यशः प्रशशंसुः । विहगाः च पलाशिकुलस्य पलं (प्रशशंसुः) ॥ विपिनम्—वनम् । गताः कण्टकाः—क्षुद्रशत्रवः यस्मात् , तस्य भाव-स्तत्ता, ताम् | अमुष्य—रामस्य । विहगाः—पक्षिणः । पलाशिकुलस्य—राक्षसवर्गस्य । पलम्—मांसम् ॥ २५ ॥

**दिवि देवगणा दधुरुन्मदतां निहतः परिपन्थिजनो न इति ।**
**भुवि फेरुगणा ययुरुन्नदतां बहु नः प्रतिपन्नमिहान्नमिति ॥ २६ ॥**

खरादिवधाद् देवास्तुष्यन्ति । दिवि देवगणाः, 'नः परिपन्थिजनः निहतः' इति उन्मदतां दधुः। भुवि फेरुगणाः, 'इह नः बहु अन्नं प्रतिपन्नम्' इति उन्नदतां ययुः॥ परिपन्थिजनः—शत्रुसमूहः । उन्मदताम्—आनन्दम् । फेरुगणाः—क्रोष्टारः । प्रतिपन्नम्—लब्धम । उन्नदताम्— उच्चनादवत्त्वम् ॥ २६ ॥

**नृपतिः स यथापुरमत्र वने वसति स्म सहोदरदारयुतः ।**
**भुवनत्रयविप्लवशान्तिविधेर्विहितं सुखमित्युदितप्रमदः ॥ २७॥**

रामो यथापूर्वं तत्र वसति । सहोदरदारयुतः सः नृपतिः, भुवनत्रयविप्लवशान्ति-विधेः मुखं विदितम् इति उदितप्रमदः यथापुरम् अत्र वने वसति स्म ॥ भुवनत्रयस्य यो विप्लवः–द्रोहः, तस्य शान्तिविधेः–शमनविधानस्य । मुखम्–आरम्भः । विहितम्–कृतम् । प्रमदः–सन्तोषः । यथापुरम्–पूर्वमिव । वसति स्म–उषितवान् ॥ २७ ॥

**अथ शूर्पणखा हतबन्धुजना व्यथमानमना विजगाम ततः ।**
**सहजाय निजाय निवेदयितुं दशवक्त्रभृते खलु वृत्तमिदम् ॥ २८ ॥**

शूर्पणखा रावणान्तिकं गच्छति । अथ हतबन्धुजना शूर्पणखा व्यथमानमनाः, निजाय सहजाय दशवक्त्रभृते इदं खलु वृत्तं निवेदयितुं ततः विजगाम ॥ हताः बन्धुजनाः यस्याः तादृशी । व्यथमानं मनो यस्याः, तादृशी । दशवक्त्रभृते–रावणाय । ततः–तस्माद्वनात् ॥ २८ ॥

**लवणाम्बुधिपूरमहापरिखां परिखेलदखर्वसुपर्वरिपुम् ।**
**मखति स्म मुखेन पुरीमनुजा मनुजाशकुलाधिपतेर्विकृता ॥ २९ ॥**

शूर्पणखा लङ्कापुरीं प्राप्नोति । मनुजाशकुलाधिपतेः अनुजा, मुखेन विकृता लवणा-म्बुधिपूरमहापरिखां परिखेलदखर्वसुपर्वरिपुं पुरीं मखति स्म ॥ मनुजाशकुलाधिपतेः–राक्षसे-श्वरस्य रावणस्य । लवणाम्बुधिपूर एव महापरिखा यस्याः, तादृशीम् । परिखेलन्तः–क्रीडन्तः । अखर्वाः–महाकायाः सुपर्वरिपवः–राक्षसाः यस्याम्, तादृशीम् । पुरीम्–लङ्काम् । मखति स्म–जगाम ॥ २९ ॥

**सदसि स्थितमग्रजमग्रगतस्ववधूजननर्मकथारसिकम् ।**
**समुपेत्य दशास्यमशास्यमसावपरैरपशङ्कमुवाच वचः ॥ ३० ॥**

शूर्पणखा रावणं वदति । असौ, सदसि स्थितम् अग्रगतस्ववधूजननर्मकथारसिकम् अपरैः अशास्यम् अग्रजं दशास्यं समुपेत्य अपशङ्कं वचः उवाच ॥ सदसि–सभायाम् ।

अग्रगतैः–पुरःस्थितैः स्ववधूजनैः–निजप्रेयसीजनैः सह नर्मकथारसिकम्। अपरैः–अन्यैः। अशास्यम्–शासितुमशक्यम्। अग्रजम्–ज्येष्ठम्, रावणम् ॥ ३० ॥

**अवलोकय राक्षसराज विभो जनमीदृशमेनमसह्यदशम्।**
**न हि वेत्ति भवानपचारबलो व्यसनं महदागतमप्यधुना ॥ ३१ ॥**

शूर्पणखायाः वचनप्रकारमेवाह अष्टभिः श्लोकैः। विभो राक्षसराज! ईदृशम् असह्यदशम् एनं जनम् अवलोकय। अपचारबलः भवान् अधुना आगतम् अपि महद् व्यसनं न हि वेत्ति ॥ असह्या दशा–अवस्था यस्य तम्, तादृशम्। एनं जनम्–माम्। अपचारः–द्रोहः एव बलं यस्य, तादृशः ॥ ३१ ॥

**निहतः स खरः सबलः समरे मनुजेन दुरासदवीर्यभृता।**
**अवशेषितमेनमवेहि जनं वसतां वचनात्तव तत्र वने ॥ ३२ ॥**

खरादयो निहताः इत्याह—**निहत इति**। दुरासदवीर्यभृता मनुजेन समरे सः खरः सबलः निहतः। तव वचनात् तत्र वने वसतां (मध्ये) एनं जनम् अवशेषितम् अवेहि ॥ दुरासदम्–दुष्प्रापम् वीर्यं बिभर्तीति, तादृशेन। समरे–युद्धे। सबलः–ससैन्यः। एनं जनम्–माम्। अवेहि–विद्धि ॥ ३२ ॥

**रघुराजकुलप्रभवो नृपतिः पितृशासनतस्तदुपेत्य वनम्।**
**प्रियया सहितः सहजानुसृतः स हि तत्र वसत्यृषिवृत्तिधरः ॥ ३३ ॥**

खरादीनां हन्ता रघुवंशभवो राजा प्रियया सहितः तत्र वने वसतीत्याह। रघुराजकुलप्रभवः सः हि नृपतिः पितृशासनतः तद् वनम् उपेत्य प्रियया सहितः सहजानुसृतः ऋषिवृत्तिधरः तत्र वसति ॥ पितृशासनतः–जनकनियोगात्। सहजेन–अनुजेन अनुसृतः। ऋषिवृत्तिधरः–मुनिव्रतधारी। तत्र–तस्मिन् वने ॥ ३३ ॥

**भुवनत्रयमोहनमूर्तिमिमामबलामपहर्तुमना भवतः।**
**अहमभ्यसरं बत तत्सविधं प्रतिपन्नमतः सकलं व्यसनम् ॥ ३४ ॥**

त्वदर्थं तस्य प्रियाम् अपहर्तुमुपगता अहम् एतामवस्थां प्राप्तेत्याह। भुवनत्रयमोहन-मूर्तिम् इमाम् अबलां भवतः अपहर्तुमनाः अहं तत्सविधम् अभ्यसरम्। अतः सकलं व्यसनं प्रतिपन्नम् ॥ भुवनत्रयमोहनमूर्तिम्–लोकैकसुन्दरीम्। अबलाम्–नारीम्। भवतः–भवदर्थम्। अभ्यसरम्–उपगतवती। प्रतिपन्नम्–प्राप्तम् ॥ ३४ ॥

**यदि रक्षितुरस्ति विचारवलं न हि शत्रुरुदञ्चति कुत्रचन ।**
**सति दूरतरेऽपि दिनाधिपतौ जगतो न तमिस्रभराभिभवः ॥३५॥**

रक्षितुः विचाराभाव एव शत्रोरुदये कारणमित्याह। रक्षितुः विचारवलं यदि अस्ति, (तर्हि) कुत्रचन शत्रुः न हि उदञ्चति। दिनाधिपतौ दूरतरे अपि सति जगतः तमिस्रभराभिभवः न॥ उदञ्चति–उदेति। दिनाधिपतौ–सूर्ये। दूरतरे–अतिदूरस्थे। तमिस्रभराभिवः–अन्धकारबाधा ॥ ३५ ॥

**परिपीय मुहुर्वरुणस्य सुतां वनिताजनमध्यगतः सततम् ।**
**न हि पश्यसि मूर्धगतं विमतं ह ह ह प्रभुता तव किंफलिनी ॥ ३६ ॥**

सुखभोगमग्नस्त्वं शत्रुं मूर्धानमारूढं न पश्यसीत्याह। सततं वरुणस्य सुतां मुहुः परिपीय वनिताजनमध्यगतः विमतं मर्धगतं न हि पश्यसि। तव प्रभुता किंफलिनी ? ह ह ह॥ वरुणस्य सुताम्–मद्यम्। विमतम्–शत्रुम्। मूर्धगतम्–शिरः आरूढम्। किंफलिनी–किम्प्रयोजना॥ ह ह ह–कष्टम् कष्टम्॥ ३६ ॥

**किममीभिरहो तव बाहुभरैर्न बिभेति यतः प्रतिपक्षजनः ।**
**क्व नु सम्प्रति मत्प्रियनाशकरः करवालवरः स करालतरः ॥३७॥**

एते भुजाः निष्प्रयोजनाः इत्याह। यतः प्रतिपक्षजनः न बिभेति, अमीभिः तव बाहुभरैः किम् ? अहो। मत्प्रियनाशकरः करालतरः सः करवालवरः सम्प्रति क्व नु ? ॥ यतः–येभ्यः। प्रतिपक्षजनः–शत्रुजनः। बाहुभरैः–केवलं भारभूतैः बाहुभिः। मम प्रियस्य–विद्युज्जिह्वस्य नाशकरः। अन्धकारमये पाताले युध्यति रावणस्यैव खड्गेन

विद्युज्जिह्वो मृत इति पूर्वकथात्रानुसन्धेया। करालतरः—अतिभीषणः। करवालवरः—उत्तमखड्गः ॥ ३७ ॥

प्रतिकर्तुममुष्य यदि क्षमसे ननु तद्गृहीणीकुचकुड्मलयोः।
तरसा करदत्वमुपेहि न चेत् क्रमतो नृपतेश्चरणाम्बुजयोः ॥३८॥

तस्य प्रिया अपहर्तव्येति सूचयति। अमुष्य प्रतिकर्तुं यदि क्षमसे, (तर्हि) तरसा ननु तद्गृहिणीकुचकुड्मलयोः करदत्वम् उपेहि। न चेत् क्रमतः नृपतेः चरणाम्बुजयोः (करदत्वम् उपेहि)॥ क्षमसे—शक्नोषि। करदत्वम्—हस्तदातृत्वम्॥ तस्य प्रियां वा अपहर, तस्य पादौ वा गृहाण इति भावः ॥ ३८ ॥

इति तद्वचनं निशमय्य ततः परुषं पुरुषादवरस्य हृदि।
नृपतिं प्रति कोपरसो ववृधे वनितां प्रति कामरसश्च समम् ॥ ३९ ॥

रावणस्य हृदि रामं प्रति कोपः सीतां प्रति कामश्च वर्धते। इति ततः परुषं तद् वचनं निशमय्य पुरुषादवरस्य हृदि, नृपतिं प्रति कोपरसः, वनितां प्रति कामरसः च समं ववृधे॥ ततः—तस्याः शूर्पणखायाः। पुरुषादवरस्य—रावणस्य। नृपतिम्—रामम्। वनिताम्—सीताम्। समम्—युगपद् ॥ ३९ ॥

भ्रमयन्नथ रूक्षतराक्षिकुलं भ्रुकुटीविकटं विदधच्च मुखम्।
उपकर्णयति त्रिदशारिजने स गभीरमुवाच नराशपतिः ॥४०॥

कुपितो रावणो वदति। अथ रूक्षतराक्षिकुलं भ्रमयन् भ्रुकुटीविकटं च मुखं विदधत् सः नराशपतिः त्रिदशारिजने उपकर्णयति गभीरम् उवाच॥ नराशपतिः—रावणः। त्रिदशारिजने—राक्षसजने। उपकर्णयति—शृण्वति ॥ ४० ॥

अवगम्य समस्तजगत्यधिपं दशकण्ठमकुण्ठमरातिषु यः।
विकृतामकृतैवमहो भगिनीं क्व स जीवति धूर्तमतिर्मनुजः ॥४१॥

क्वासौ धूर्त इति पृच्छति। समस्तजगत्यधिपं दशकण्ठम् अवगम्य यः एवं भगिनीं विकृताम् अकृत, सः धूर्तमतिः मनुजः क? अहो॥ समस्तायाः जगत्याः—भूमेः अधिपम्। दशकण्ठम्—रावणम्। अरातिषु—शत्रुषु। अकुण्ठम्—निर्दयम्। अवगम्य—ज्ञात्वा। अकृत—कृतवान्। धूर्तमतिः—दुर्बुद्धिः। मनुजः—मनुष्यः॥ ४१॥

अधुनैव खरादिपदप्रहतां पदवीमनुसार्य च तौ मनुजौ।
विदधामि तदीयवधूहरणं विधिरेष खलु प्रतिकार इह॥४२॥

सत्वरं रामलक्ष्मणौ हत्वा सीतां हरामीत्याह। अधुना एव तौ मनुजौ खरादिपदप्रहतां पदवीम् अनुसार्य तदीयवधूहरणं च विदधामि। एषः विधिः खलु इह प्रतिकारः॥ खरादीनां पदैः प्रहताम्—मृदिताम्। पदवीम्—मार्गम्। अनुसार्य—गमयित्वा। हत्वेत्यर्थः। विदधामि—करोमि। विधिः—कर्म॥ ४२॥

इत्युक्तो रथमास्थितो दशमुखः प्रस्थातुमैच्छद्द्रुतं
हस्तान्दोलितचन्द्रहासलतया विभ्राजमानो भृशम्।
द्रक्ष्यामि त्रिजगन्मनोहरगुणस्रङ्मण्डनामङ्गना-
मित्यन्तः परिजृम्भमाणवपुषा कामेन कामं हतः॥४३॥

रावणः खड्गहस्तः प्रस्थातुमिच्छति। इति उक्त्वा दशमुखः रथम् आस्थितः हस्तान्दोलितचन्द्रहासलतया भृशं विभ्राजमानः त्रिजगन्मनोहरगुणस्रङ्मण्डनाम् अङ्गनां द्रक्ष्यामि इति अन्तः परिजृम्भमाणवपुषा कामेन कामं हतः द्रुतं प्रस्थातुम् ऐच्छत्॥ हस्ते आन्दोलितया—आकम्पितया चन्द्रहासलतया—खड्गेन। विभ्राजमानः—शोभमानः। गुणानां स्रक्—माला। समूह इत्यर्थः, सैव मण्डनम्—अलङ्कारः यस्याः, ताम्। परिजृम्भमाणवपुषा—वर्धमानेन। कामम्—पर्याप्तम्। हतः—प्रहृतः॥ ४३॥

साटोपं निहते निजप्रियतमे सङ्ग्रामभूमौ मया
सा शोकेन यथाकथञ्चन किमु प्राणान् परित्यक्ष्यति।
तेनात्र च्छलनीतिरेव फलिनीत्यालोच्य सार्कं कृत-
प्रस्थानान् स निषिध्य राक्षसभटानेको रथेनागमत्॥४४॥

युद्धे यदि रामो हतः, तदा कदाचित् सीता म्रियेत इति शङ्कमानो रावणः कपटेन सीतां हर्तुकामः एकाकी प्रतिष्ठते। मया सङ्ग्रामभूमौ निजप्रियतमे साटोपं निहते (सति) सा शोकेन यथाकथञ्चन प्राणान् किमु परित्यक्ष्यति ?। तेन अत्र छलनीतिः एव फलिनी (भवति) इति आलोच्य, सः, (आत्मना) साकं कृतप्रस्थानान् राक्षसभटान् निषिध्य एकः (सन्) रथेन अगमत् ॥ सङ्ग्रामभूमौ –युद्धभूमौ । निजप्रियतमे–सीतावल्लभे रामे । सा–सीता । छलनीतिः–कपटतन्त्रम् । फलिनी–फलवती । साकम्–सह ॥ ४४ ॥

मारीचं मुनिवृत्तिधारिणमसावासाद्य मायाविनं
कार्ये तत्र सहायतां कलयितुं सञ्चोदयामास तम् ।
सोपि ज्ञातपराक्रमो रघुपतेः प्राक्कौशिकीये मखे
भीतस्तत्प्रतिकूलकर्मणि भृशं वाचं समाचष्ट तम् ॥ ४५ ॥

सीताहरणे मायया साहाय्यकरणे रावणेन प्रचोदितो मारीचः प्रतिवदति । असौ मुनिवृत्तिधारिणं मायाविनं मारिचम् आसाद्य तत्र कार्ये सहायतां कलयितुं तं सञ्चोदयामास। प्राक् कौशिकीये मखे रघुपतेः ज्ञातपराक्रमः सः अपि तत्प्रतिकूलकर्मणि भृशं भीतः तं वाचं समाचष्ट ॥ तत्र कार्ये–सीताहरणकर्मणि । कलयितुम्–कर्तुम । तम्–मारीचम् । कौशिकीये–विश्वामित्रसम्बन्धिनि मखे–यागे । सः–मारीचः । तत्प्रतिकूलकर्मणि–रामविरुद्धाचरणे । तम्-रावणम | समाचष्ट–उक्तवान् ॥ ४५ ॥

अश्रान्तं रमते त्रयी भगवती यत्कण्ठनालीगृहे
स ब्रह्मा प्रपितामहः स च पिता विज्ञानभूर्विश्रवाः ।
हा कष्टं मतिरीदृशस्य भवतो जातेयमेतादृशी
दृष्टं देहभृतामदूरविपदां प्रज्ञा विपर्येति यत् ॥ ४६ ॥

मारीचवचनप्रकारमेवाह पञ्चभिः श्लोकैः । तत्र प्रथमं पितृपितामहादिविरुद्धेयमधर्मबुद्धिरिति कथयति । भगवती त्रयी यत्कण्ठनालीगृहे अश्रान्तं रमते, सः ब्रह्मा (तव) प्रपितामहः, विज्ञानभूः सः विश्रवाः पिता च । ईदृशस्य भवतः एतादृशी इयं मतिः जाता। हा कष्टम् । अदूरविपदां देहभृतां प्रज्ञा विपर्येति (इति) यत्, (तत्) दृष्टम् ॥ त्रयी–वेदत्रयम् । यस्य (ब्रह्मणः) कण्ठनाली एव गृहम्, तस्मिन् । अश्रान्तम्–सर्वदा । प्रपितामहः–

पितामहस्य पुलस्त्यमहर्षेः पिता। विज्ञानस्य भूः–प्रभवस्थानम्। महाविज्ञानवानित्यर्थः। एतादृशी–अधर्माभिमुखी। अदूरे–समीपे विपद्–आपद् येषां, तादृशानाम्। देहभृताम् –प्राणिनाम्। प्रज्ञा–बुद्धिः। विपर्येति–विपरीता भवति। दृष्टम्–प्रत्यक्षतां गतम्। 'विनाशकाले विपरीतबुद्धिः' इति भावः ॥ ४६ ॥

यच्चेतश्चलति स्वयं सदसतोः साधारणे कर्मणो-
विज्ञानं पुरुषस्य तत्र परतो व्यावृत्तिसम्पादकम्।
किञ्चैषा सरणिर्विगर्हिततमा वीर्योष्मभाजां नृणां
ये प्रत्यक्षमरीन् निहत्य समरे गृह्णन्ति तत्सम्पदः ॥ ४७ ॥

विज्ञानमेवाधर्मान्मनो निवर्तयति, वीर्यवतां कपटमार्गानुसरणं निन्दितं चेत्याह। पुरुषस्य यत् चेतः सदसतोः कर्मणोः साधारणं स्वयं चलति, तत्र विज्ञानं परतः व्यावृत्तिसम्पादकं (भवति)। किञ्च, ये प्रत्यक्षम् अरीन् समरे निहत्य तत्सम्पदः गृह्णन्ति, तेषां वीर्योष्मभाजां नृणाम् एषा सरणिः विगर्हिततमा (भवति)॥ साधारणम्–समानम्। चलति–गच्छति। तत्र–चेतसि। परतः–असत्कर्मणः। अरीन्–शत्रून्। वीर्योष्मभाजाम्–प्रतापशालिनाम्। एषा सरणिः–कपटनीतिः। विगर्हिततमा–अत्यन्तनिन्दिता ॥ ४७ ॥

संसर्गादसतां विनश्यति नृपः स्वार्थैकनिष्ठात्मनां
तत्कालश्रवणामृताक्षरमुचः पथ्यं न पश्यन्ति ये।
हन्त त्वत्सचिवेषु कोपि न जनस्त्वामीदृशे कर्मणि
व्यासक्तं विरुणद्धि यन्त्रितमतिः स्नेहाभिधानैर्गुणैः ॥ ४८ ॥

स्वार्थिनः प्रियवादिनो दुर्मन्त्रिणः एव प्रभुं नाशयन्तीत्याह। तत्कालश्रवणामृताक्षरमुचः ये पथ्यं न पश्यन्ति, (तेषां) स्वार्थैकनिष्ठात्मनाम् असतां संसर्गाद् नृपः विनश्यति। त्वत्सचिवेषु स्नेहाभिधानैः गुणैः यन्त्रितमतिः कोपि जनः ईदृशे कर्मणि व्यासक्तं त्वां न विरुणद्धि! हन्त! ॥ तत्कालश्रवणामृताक्षरमुचः–प्रियवादिनः। पथ्यम्–हितम्।

असताम्–दुर्जनानाम्। ईदृशे कर्मणि–धर्मविरुद्धे कर्मणि। विरुणद्धि–निवारयति ॥ हन्त–कष्टम् ॥ ४८ ॥

**जानीते न भवानमुष्य नृपतेरस्त्रस्य वीर्यं मह-**
**द्विश्वामित्रमखोपघातसमये व्यक्तं यदासीन्मम ।**
**रामो नूनममानुषस्तदमुना वीरेण वैरं तव**
**श्रेयः पुष्यति नैव किन्तु नियतं नाशाय कल्पिष्यते ॥ ४९ ॥**

वीर्योत्तरेण रामेण विरोधो नाशाय कल्पिष्यते इत्याह। विश्वामित्रमखोपघातसमये मम यत् व्यक्तम् आसीत्, (तद्) अमुष्य नृपतेः अस्त्रस्य महद् वीर्यं भवान् न जानीते। रामः नूनम् अमानुषः। तद् अमुना वीरेण तव वैरं श्रेयः न एव पुष्यति। किन्तु नाशाय कल्पिष्यते। नियतम् ॥ विश्वामित्रस्य मखस्य यागस्य उपघातसमये–विघ्नाचरणकाले। अमुष्य नृपतेः–रामस्य। नियतम्–निश्चितम् ॥ ४९ ॥

**येनाराध्य गिरीशमुग्रतपसा जित्वा समस्तं जग-**
**च्चक्रे श्रीर्निजबाहुसञ्चयमहासौधाग्रसंचारिणी ।**
**स त्वं मोहवशेन साहसपरश्चन्द्रांशुकल्पं यशः**
**कर्तुं नार्हसि दुष्कलङ्कमलिनं विज्ञोऽसि किं कथ्यते ॥ ५० ॥**

वीराग्रगामी भवान् विमलां कीर्तिं न दूषयत्वित्याह। येन (त्वया) उग्रतपसा गिरीशम् आराध्य समस्तं जगद् जित्वा श्रीः निजबाहुसञ्चयहासौधाग्रसञ्चारिणी चक्रे, सः त्वम् मोहवशेन साहसपरः (सन्) चन्द्रांशुकल्पं यशः दुष्कलङ्कमलिनं कर्तुं न अर्हसि। (त्वम्) विज्ञः असि। किं कथ्यते ॥ निजबाहुसञ्चयः एव महासौधः, तस्याग्रे सञ्चरणशीला ॥ ५० ॥

**इत्थं पथ्यमुदीरितं दशमुखः सौकेतवीरूनुना-**
**नो जग्राह मुमूर्षुरातुर इव श्रेयस्करं भेषजम् ।**
**किन्तु क्रोधवशंवदेन मनसा जग्राह स ग्राहकम्**
**तं सद्यस्त्रिदशेन्द्रकुञ्जरशिरोमर्माविधं सायकम् ॥ ५१ ॥**

रावणः क्रोधाविष्टः खड्गं गृह्णाति । इत्थं सौकेतवीसूनुना उदीरितं पथ्यं दशमुखः, श्रेयस्करं भेषजं मुमूर्षुः आतुरः इव नो जग्राह । किन्तु, ग्राहकः सः सद्यः क्रोधवशंवदेन मनसा त्रिदशेन्द्रकुञ्जरशिरोमर्माविधं तं सायकं जग्राह ॥ सौकेतवी–सुकेतुतनया ताटका, तस्याः सूनुना–पुत्रेण मारीचेन । भेषजम्–औषधम् । मुमूर्षुः–आसन्नमरणः । आतुरः–रोगी । जग्राह–अङ्गीकृतवान् । ग्राहकः–ग्रहणकर्ता । त्रिदशेन्द्रकुञ्जरस्य–ऐरावतस्य शिरोमर्माविधम्–मस्तकमर्मभेदिनम् । सायकम्–खड्गम् । जग्राह–गृहीतवान् ॥ ५१ ॥

**को मां शास्ति जगत्त्रयीपरिवृढं स्थित्वाग्रतो निर्भयं**
**यस्यादेशमशेषदैवतगणा वाञ्छन्ति कर्तुं मुदा ।**
**त्वामेवं प्रतिकूलभाषिणमिहच्छित्त्वासिना निर्दयं**
**पत्रिभ्यो विभजामि सत्वरमिति प्रत्याह चैनं पुनः ॥ ५२ ॥**

रावणो मारीचं कथयति च । अशेषदैवतगणाः यस्य (मम) आदेशं मुदा कर्तुं वाञ्छन्ति, (तं) जगत्त्रयीपरिवृढं मां, निर्भयम् अग्रतः स्थित्वा कः शास्ति ? । एवं प्रतिकूलभाषिणं त्वाम् इह निर्दयम् असिना छित्त्वा सत्वरं पत्रिभ्यः विभजामि इति एनं पुनः प्रत्याह च ॥ शास्ति–उपदिशति । असिना–खड्गेन । पत्रिभ्यः–पक्षिभ्यः । विभजामि–विभाज्य ददामि ॥ एनम्–मारीचम् ॥ ५२ ॥

**दृष्ट्वा तं दशकण्ठमात्मनिधनप्रारम्भसंरम्भिणं**
**मारीचो मृतिभीतिकम्पितमतिश्चिन्तापरोऽभूत् क्षणम् ।**
**सद्यस्तस्य विधेयतामुपगतश्चैनं वचः प्रोचिवान्**
**कर्तव्यं किमिह प्रभो ननु मया तत्तावदादिश्यताम् ॥ ५३ ॥**

मारीचो भीतो रावणविधेयो भवति । तं दशकण्ठः आत्मनिधनप्रारम्भसंरम्भिणं दृष्ट्वा मृतिभीतिकम्पितमतिः मारीचः क्षणं चिन्तापरः अभूत् । सद्यः तस्य विधेयताम् उपगतः, एनं वचः प्रोचिवान् च । प्रभो ! मया ननु इह किं कर्तव्यं । तत् तावद् आदिश्यताम्.

(इति)॥ आत्मनो निधनप्रारम्भाय—नाशविधानाय संरम्भिणम्—कुपितम्। विधेयताम्—अधीनताम्। एनम्—रावणम्। आदिश्यताम्—आज्ञाप्यताम् ॥ ५३ ॥

मायावैभवमाश्रितेन भवता तौ दम्पती सम्प्रति
व्यामोह्य प्रसभं प्रियापरिसराद्दूरापवाह्यो नृपः।
यावद्गूढमुपेत्य तत्रभवतीं हत्वा गमिष्यामि ता-
मित्यादिश्य सहैव तेन सहसा सम्प्रस्थितो रावणः ॥ ५४ ॥

मारीचं कर्तव्यमुक्त्वा तेन सह रावणः प्रतिष्ठते। 'मायावैभवम् आश्रितेन भवता सम्प्रति तौ दम्पती व्यामोह्य प्रसभं नृपः प्रियापरिसराद् दूरापवाह्यः। यावद् (अहम्) गूढम् उपेत्य तां तत्रभवतीं हत्वा गमिष्यामि' इति आदिश्य तेन सह एव सहसा रावणः सम्प्रस्थितः॥ मायावैभवम्—मायाबलम्। प्रसभम्—बलात्। दूरापवाह्यः—दूरं नेतव्यः। तत्रभवतीम्—महानुभावाम् ॥ ५४ ॥

मारीचस्तु परप्रतारणकलादक्षः स रक्षःपतौ
पश्यत्येव दधार काञ्चनमयीं काञ्चित् कुरङ्गाकृतिम्।
राजद्राजतबिन्दुभिर्विलसितां वैदूर्यभास्वत्खुरां
माहेन्द्रोपलजालमञ्जुलगलां माणिक्यखण्डेक्षणाम् ॥ ५५ ॥

मारीचः काञ्चनमृगाकृतिं गृह्णाति। परप्रतारणकलादक्षः सः मारीचः तु रक्षःपतौ पश्यति एव (सति) राजद्राजतबिन्दुभिः विलसितां वैदूर्यभास्वत्खुरां माहेन्द्रोपलजालमञ्जुलगलां माणिक्यखण्डेक्षणां काञ्चनमयीं काञ्चित् कुरङ्गाकृतिं दधार॥ परेषां प्रतारणम्—वञ्चनमेव या कला, तस्यां दक्षः—चतुरः। रक्षःपतौ—रावणे। राजन्तः—शोभमानाः राजताः—रजतमयाः ये बिन्दवः, तैः। वैदूर्येण—रत्नविशेषेण भास्वन्तः खुराः यस्याः, तादृशीम्। माहेन्द्रोपलजालैः इन्द्रनीलरत्नसमूहैः मञ्जुलः—मनोहरः गलः यस्याः, तादृशीम्॥ माणिक्यखण्डे एव ईक्षणे यस्याः, तादृशीम्। काञ्चनमयीम्—स्वर्णविकारभूताम्। काञ्चित्—अनिर्वचनीयाम्। कुरङ्गाकृतिम्—मृगरूपम्। दधार—धृतवान् ॥ ५५ ॥

तं दृष्ट्वा कमनीयकान्तिसुभगं वातायुमत्यद्भुतं
हस्तप्राप्तममंस्त राक्षसपतिः सङ्कल्पमन्तः स्थितम् ।
सोऽपि स्वैरमितस्ततश्च विचरन् वन्यैर्मृगैरन्वितः
सीताराघवयोः पुरोभुवि गतश्चिक्रीड चित्राकृतिः ॥ ५६ ॥

तं काञ्चनमृगं दृष्ट्वा रावणः सन्तुष्यति । मारीचोऽपि सीतारामयोः पुरोभागं गत्वा क्रीडति । कमनीयकान्तिसुभगं अत्यद्भुतं तं वातायुं दृष्ट्वा राक्षसपतिः अन्तः स्थितं सङ्कल्पं हस्तप्राप्तम् अमंस्त । चित्राकृतिः सः अपि स्वैरम् इतः ततः च विचरन् वन्यैः मृगैः अन्वितः सीताराघवयोः पुरोभुवि गतः चिक्रीड ॥ वातायुम्–मृगम् । राक्षसपतिः–रावणः । अमंस्त–मेने । अन्वितः–सहितः । चिक्रीड–क्रीडितवात् ॥ ५६ ॥

तिष्ठन् कुत्रचिदुत्पतन् कुहचन स्वैरं क्वचित् सञ्चरन्
लीनः क्वापि लतासु कुत्रचिदथ प्राप्तः प्रकाशात्मताम् ।
आजिघ्रन् कुहचित्तृणानि शयितः कुत्रापि धावन् क्वचित्
प्रत्यक्षं स तयोरखेलदखिलव्यामोहिभिर्विभ्रमैः ॥ ५७ ॥

कनकमृगस्य क्रीडाप्रकारं वर्णयति । कुत्रचित् तिष्ठन्, कुहचन उत्पतन्, क्वचित् स्वैरं सञ्चरन् क्वापि लतासु लीनः, अथ कुत्रचित् प्रकाशात्मतां प्राप्तः, कुहचिन् तृणानि आजिघ्रन्, कुत्रापि शयितः, क्वचिद् धावन् सः अखिलव्यामोहिभिः विभ्रमैः तयोः प्रत्यक्षम् अखेलत् ॥ आजिघ्रन्–आघ्राणं कुर्वन् । विभ्रमैः–विलासैः । तयोः–सीतारामयोः । अखेलत्–क्रीडितवान् ॥ ५७ ॥

उन्मीलत्कलधौतबिन्दुसुषमाकल्माषकायत्विषं
तं गाङ्गेयमयं विलोक्य हरिणं वैदेहराजात्मजा ।
निर्मर्यादविजृम्भमाणकुतुकस्रोतस्तरङ्गाकुल-
स्वान्ता कान्तमिदं जगाद मृदुलस्मेराननाम्भोरुहा ॥ ५८ ॥

कनकमृगं दृष्ट्वा जातकौतुका सीता रामं वदति। उन्मीलत्कलधौतबिन्दुसुषमाकल्माष-कायत्विषं गाङ्गेयमयं तं हरिणं विलोक्य वैदेहराजात्मजा, निर्मर्यादविजृम्भमाणकुतुकस्रोतस्तरङ्गा-कुलस्वान्ता मृदुलस्मेराननाम्भोरुहा (सती) कान्तम् इदं जगाद॥ उन्मीलन्ती या कलधौत-बिन्दुसुषमा—रजतबिन्दुशोभा, तया कल्माषा—शबला कायत्विट्—देहकान्तिः यस्य, तादृशम्। गाङ्गेयमयम्—स्वर्णमयम्। हरिणम्—मृगम्। वैदेहराजात्मजा—सीता। निर्मर्यादम्—निस्सीमं विजृम्भमाणस्य कुतुकस्रोतसः—कौतुकप्रवाहस्य तरङ्गैः आकुलं स्वान्तम्—चित्तं यस्याः, तादृशी॥ ५८॥

**पश्य त्वं प्रिय कश्चिदेष हरिणः प्रत्यक्षमक्ष्णोः फलं**
**बिभ्राणस्तनुमुद्भ्रमन्निव पुरश्चित्राभिधानो रसः।**
**कान्तारं निजकान्तिभिर्वितनुते विद्युल्लताभास्वरं**
**यस्येदं कमनीयकाञ्चनमयं गात्रं दरीदृश्यते॥ ५९॥**

सीतावचनप्रकारमेवाह द्वाभ्यां श्लोकाभ्याम्। प्रथमं सीता तस्य मृगस्य अद्भुतदर्शनत्वं प्रस्तौति। प्रिय! त्वं पश्य। प्रत्यक्षम् अक्ष्णोः फलम् एषः कश्चित् हरिणः, तनुं बिभ्राणः पुरः उद्भ्रमन् चित्राभिधानः रसः इव कान्तारं निजकान्तिभिः विद्युल्लताभास्वरं वितनुते। यस्य इदं गात्रं कमनीयकाञ्चनमयं दरीदृश्यते॥ हरिणः—मृगः। तनुम्—शरीरम्। बिभ्राणः—वहन्। उद्भ्रमन्—उत्पत्य भ्रमणं कुर्वन्। चित्राभिधानः—अद्भुताख्यः। कान्तारम्—वनम्। वितनुते—करोति। यस्य—हरिणस्य। गात्रम्—शरीरम्। दरीदृश्यते—पुनः पुनः अतिशयेन दृश्यते॥ ५९॥

**इच्छापादपदोहदं नयनयोराकर्षमन्त्राक्षरं**
**पश्यन्त्याः पुरतश्चरन्तमतुलं वातायुमेतादृशम्।**
**हस्ताम्भोरुहकल्पितैर्नवतृणग्रासैः स्वयं पोषिता-**
**नप्येणानपहाय केवलममुं वाञ्छत्यहो मे मनः॥ ६०॥**

सीता तस्मिन् कनकमृगे वाञ्छां दर्शयति। इच्छापादपदोहदं नयनयोः आकर्ष-मन्त्राक्षरं पुरतः चरन्तम् अतुलम् एतादृशं वातायुं पश्यन्त्याः मे मनः, हस्ताम्भोरुह-

कल्पितैः नवतृणग्रासैः स्वयं पोषितान् एणान् अपि अपहाय केवलम् अमुं वाञ्छति। अहो॥ इच्छा एव यः पादपः, तस्य दोहदम्—पुष्टिकरम्। आकर्षमन्त्राक्षरम्—मन्त्राक्षरवदाकर्षकम्। वातायुम्—मृगम्। एणान्—मृगान्। अपहाय—परित्यज्य। अमुम्—कनकमृगम् ॥ ६० ॥

> इत्युक्ते प्रियया प्रियस्तु तदभिप्रायं विदित्वाब्रवीत्
> सारङ्गः किमसौ सरोजनयने पुष्णाति कौतूहलम्।
> तद्गृह्णामि सजीवमेनमधुना लीलार्थमेष त्वया
> हस्ताम्भोरुहलालनादहमिव प्राप्नोतु धन्यां दशाम् ॥ ६१ ॥

सजीवमेनं गृह्णामीति रामः सीतामाह। प्रियया इति उक्ते प्रियः तु तदभिप्रायं विदित्वा अब्रवीत्। सरोजनयने ! असौ सारङ्गः कौतूहलं किं पुष्णाति ? तद् अधुना लीलार्थम् एनं सजीवं गृह्णामि। एषः, अहम् इव त्वया हस्ताम्भोरुहलालनात् धन्यां दशां प्राप्नोतु॥ सारङ्गः—मृगः ॥ ६१ ॥

> इत्यादाय शरासनं रघुपती रक्षार्थमस्याः पुन-
> स्तत्रादिश्य च लक्ष्मणं निरगमद्द्राक् पर्णशालाङ्गणात्।
> मार्गं मार्गमथोपगम्य च वने तद्ग्राहबद्धोद्यमो
> बभ्राम क्षणदृष्टनष्टहरिणो व्यामुह्यमानश्चिरम् ॥ ६२ ॥

रामश्चापहस्तो मायामृगमनुसरति। इति (उक्त्वा) रघुपतिः शरासनम् आदाय, पुनः अस्याः रक्षार्थं तत्र लक्ष्मणम् आदिश्य च द्राक् पर्णशालाङ्गणात् निरगमत्। अथ वने तद्ग्राहबद्धोद्यमः मार्गं मार्गम् उपगम्य च क्षणदृष्टनष्टहरिणः व्यामुह्यमानः चिरं बभ्राम॥ शरासनम्—चापम्। अस्याः—सीतायाः। निरगमत्—निर्गतवात्। तद्ग्राहे—मृगग्रहणे बद्धोद्यमः—उद्यतः। मार्गं मार्गम्—अन्विष्यान्विष्य। क्षणं दृष्टो नष्टश्च हरिणो येन, तादृशः। बभ्राम—भ्रमणं कृतवान् ॥ ६२ ॥

आकृष्टो नृपतिर्विदूरममुना मायामृगेण स्वयं
श्रान्तस्तस्य स वीक्ष्य दाक्ष्यमतुलं रक्षच्छलाशङ्कया ।
अन्तःक्रोधवशादधिज्यमकरोत् कोदण्डदण्डं निजं
सन्धायैकमथाशुगं शितशिखं चिक्षेप चैनं प्रति ॥ ६३ ॥

रामो मायामृगशङ्कया शरं प्रयुङ्क्ते । अमुना मायामृगेण विदूरम् आकृष्टः सः नृपतिः स्वयं श्रान्तः (सन्) तस्य अतुलं दाक्ष्यं वीक्ष्य रक्षच्छलाशङ्कया अन्तः क्रोधवशाद् निजं कोदण्डदण्डम् अधिज्यम् अकरोत् । अथ शितशिखम् एकम् आशुगं सन्धाय एनं प्रति चिक्षेप च ॥ दाक्ष्यम्–चतुरताम् । रक्षच्छलाशङ्कया–राक्षसमायाशङ्कया । अधिज्यम्–अधिरोपितमौर्वीकम् । आशुगम्-शरम् ॥ ६३ ॥

विद्धो मूर्धनि सायकेन स खलु त्यक्त्वा तनुं हारिणीं
द्रष्टुर्मानसहारिणीं पलभुजामुत्सर्गसिद्धां दधौ ।
हा हा लक्ष्मण पाहि मां निशिचराः खादन्ति हा जानकी-
त्याक्रन्दन्नथ राघवस्वरसमं दुष्टः स नष्टोऽभवत् ॥ ६४ ॥

बाणविद्धो मारीचो मायामृगरूपं त्यक्त्वा लक्ष्मणं सीतां चाहूय विलपन् मरणं गच्छति । सायकेन मूर्धनि विद्धः सः खलु, द्रष्टुः मानसहारिणीं हारिणीं तनुं त्यक्त्वा पलभुजाम् उत्सर्गसिद्धां (तनुं) दधौ । 'हा हा लक्ष्मण ! मां पाहि । निशिचराः खादन्ति । हा जानकि !' इति राघवस्वरसमम् आक्रन्दन् (सन्) अथ सः दुष्टः नष्टः अभवत् ॥ सः–मारीचः । हरिणः–मृगः, तत्सम्बन्धिनीम्–हारिणीम् । तनुम्–शरीरम् । पलभुजाम्–राक्षसानाम् । उत्सर्गसिद्धाम्–साधारणीम् । नष्टः–मृतः ॥ ६४ ॥

श्रुत्वा तद्रुदितं विदेहदुहिता रक्षोभिरुत्पादितं
भर्तुः सङ्कटमेव शङ्कितवती सम्भ्रान्तचित्ता भृशम् ।
गच्छ त्वं द्रुतमेव लक्ष्मण धनुष्पाणिः सकाशं गुरो-
रेकाकी स हि सीदतीह गहने रक्षोभिरित्याह तम् ॥ ६५ ॥

रुदितं श्रुत्वा सम्भ्रान्ता सीता रामसमीपं गन्तु लक्ष्मणं प्रेरयति । विदेहदुहिता तद्रुदितं श्रुत्वा रक्षोभिः उत्पादितं भर्तुः सङ्कटम् एव शङ्कितवती भृशं सम्भ्रान्तचित्ता, 'लक्ष्मण !

त्वं धनुष्पाणिः गुरोः सकाशं द्रुतम् एव गच्छ, एकाकी सः हि इह गहने रक्षोभिः सीदति' इति तम् आह ॥ सङ्कटम्–सम्बाधनम्। गुरोः–ज्येष्ठस्य। गहने–वने। सीदति–क्लिश्नाति ॥ ६५ ॥

**मा भूत्ते हृदि संभ्रमः कृतमिदं मायाविभिर्यातुभि-**
**र्न ह्यार्यस्य मुखात् कदाचिदुदयत्येतादृशार्तस्वरः।**
**यद्बाणावलिबाडवानलशिखा शक्नोति विश्वं जग-**
**द्दग्धुं तस्य पराभवः कथमिति प्रत्यादिशल्लक्ष्मणः ॥ ६६ ॥**

लक्ष्मणः सीतां समाधत्ते। हृदि ते सम्भ्रमः मा भूत्। इदं मायाविभिः कृतम्। आर्यस्य मुखात् कदाचिद् एतादृशार्तस्वरः न हि उदयति। यद्बाणावलिबाडवानलशिखा विश्वं जगद् दग्धुं शक्नोति, तस्य कथं पराभवः इति लक्ष्मणः प्रत्यादिशत् ॥ यातुभिः–राक्षसैः। आर्यस्य–ज्येष्ठस्य। यस्य–आर्यस्य बाणावलिः एव बाडवानलः–बडवाग्निः, तस्य शिखा–ज्वाला। विश्वम्–निखिलम्। प्रत्यादिशत्–निराकृतवान् ॥ ६६ ॥

**भूयोऽपि व्यथमानमानसतया तं प्रेरयन्ती मुहुः**
**प्रत्याख्यातिमुपेयुषी च किमपि क्रोधाविला मैथिली।**
**प्रोवाच श्रुतिदुस्सहं शठ तव क्रूरं मनः केवलं**
**यन्न भ्रातुरिदं निशम्य रुदितं कारुण्यमालम्बते ॥ ६७ ॥**

प्रत्याख्यानात् क्रोधाविष्टा सीता लक्ष्मणे परुषं वदति। भूयः अपि व्यथमानमानसतया तं प्रेरयन्ती मुहुः प्रत्याख्यातिम् उपेयुषी च क्रोधाविला मैथिली श्रुतिदुस्सहं किमपि प्रोवाच–शठ! केवलं क्रूरं तव मनः, यद् इदं भ्रातुः निशम्य कारुण्यं न आलम्बते ॥ व्यथमान-मानसतया–दूयमानचित्ततया। तम्–लक्ष्मणम्। प्रत्याख्यातिम्–निराकरणम्। उपेयुषी–प्राप्ता ॥ ६७ ॥

**व्यापन्ने विपिनेऽत्र राक्षसगणैस्तस्मिन्नरेन्द्रात्मजे**
**रन्तुं वाञ्छसि किं मया शठमते दुष्प्रापमेतत्त्वया।**
**सद्यस्ते पुरतो यथाकथमपि त्यक्ष्यामि वै जीवितं**
**किं प्राणैर्मम तं विना प्रियतमं किं वा सुखैश्चापरैः ॥ ६८ ॥**

37

नाहं तव सुलभा इत्याह। अत्र विपने राक्षसगणैः तस्मिन् नरेन्द्रात्मजे व्यापन्ने (सति) शठमते! मया रन्तुं किं वाञ्छसि? एतद् त्वया दुष्प्रापम्। सद्यः ते पुरतः यथाकथमपि जीवितं वै त्यक्ष्यामि! तं प्रियतमं विना मम प्राणैः किम्? अपरैः सुखैः च किं वा॥ विपिने–वने। व्यापन्ने–व्यापत्तिं प्राप्ते ॥ ६८ ॥

इत्थं वाणीं कृपाणीमिव परुषतरामेष शृण्वन्नमुष्याः
स्थातुं तत्रासमर्थः क्षणमपि सहजस्याज्ञया यन्त्रितोऽपि।
दुर्वारो दैवयोगः खलु बहुभिरलं भाषितैरत्र देवाः
पान्तु त्वामित्युदीर्य द्रुततरमगमल्लक्ष्मणो रामपार्श्वम् ॥ ६९ ॥

इति श्रीगोदवर्मविद्वद्युवराजकृते
श्रीरामचरिते महाकाव्ये
एकादशस्सर्गः

---

लक्ष्मणः सीतायाः परुषवचनं श्रुत्वा रामपार्श्वं गच्छति। इत्थं कृपाणीम् इव परुषतराम् अमुष्याः वाणीं शृण्वन् एषः लक्ष्मणः, सहजस्य आज्ञाया यन्त्रितः अपि तत्र स्थातुम् असमर्थः, 'दैवयोगः दुर्वारः खलु। बहुभिः भाषितैः अलम्। अत्र देवाः त्वां पान्तु' इति उदीर्य द्रुततरं रामपार्श्वम् अगमत् ॥ कृपाणीम्–खड्गलताम्। अमुष्याः–सीतायाः। सहजस्य–ज्येष्ठभ्रातुः। यन्त्रितः–बद्धः। पान्तु–रक्षन्तु ॥ ६९ ॥

इति पण्डितरत्नश्रीनारायणपिषारोटिविरचितायां
श्रीरामचरितमहाकाव्यव्याख्यायां अन्वयार्थप्रबोधिन्यां
रामलक्ष्मणापवाहनं नाम एकादशस्सर्गः



# द्वादशः सर्गः

नीतेऽथ रामे हरिणेन दूरं निर्यापिते गोप्तरि लक्ष्मणे च ।
रामासमेतं रजनीचरेन्द्रो रामाश्रमं सत्वरमाससाद ॥ १ ॥

रावणो रामाश्रमं प्राप्नोति। अथ हरिणेन रामे दूरं नीते, गोप्तरि लक्ष्मणे च निर्यापिते रामासमेतं रामाश्रमं रजनीचरेन्द्रः सत्वरम् आससाद॥ हरिणेन–मायामृगेण। गोप्तरि–रक्षके। निर्यापिते–निर्गमिते। रामासमेतम्–सुन्दरीसहितम्। रजनीचरेन्द्रः–रावणः। अससाद–प्राप्तवान् ॥ १ ॥

इदं मदीयं वपुरुग्रमग्रे विलोक्य सा भीतिमुपैति बाला ।
इत्यन्तरालोच्य दधार सद्यः स भिक्षुवेषं सितभस्मभूषम् ॥ २ ॥

रावणो भिक्षुवेषं धारयति। उग्रं मदीयम् इदं वपुः अग्रे विलोक्य सा बाला भीतिम् उपैति। इति अन्तः आलोच्य सः सद्यः सितभस्मभूषं भिक्षुवेषं दधार ॥ उग्रम्–भयानकम्। वपुः–शरीरम्। सः–रावणः। सितं भस्म, भूषा यस्य तादृशम्। दधार–धृतवान् ॥ २ ॥

कमण्डलुं दण्डमपि त्रिपुण्ड्रं दधद्दुकूलं च कषायरक्तम् ।
रराज रुद्राक्षमयाक्षमालाविभूषितस्तस्करमस्करी सः ॥ ३ ॥

भिक्षुरूपं रावणं वर्णयति। कमण्डलुं दण्डम् अपि त्रिपुण्ड्रं कषायरक्तं दुकूलं च दधत् रुद्राक्षमयाक्षमालाविभूषितः सः तस्करमस्करी रराज ॥ कषायरक्तं दुकूलम्–काषायवस्त्रम्। तस्करमस्करी–कपटभिक्षुः। रराज–शुशुभे ॥ ३ ॥

विदेहकन्याचरणारविन्दविन्यासधन्याङ्गणरेणुजालाम् ।
पदे पदे पल्लवितानुरागः स पर्णशालामविशद्दशास्यः ॥ ४ ॥

रावणः पर्णशालां प्रविशति। सः दशास्यः विदेहकन्याचरणारविन्दविन्यासधन्याङ्कण-रेणुजालाम् पर्णशालां, पदे पदे पल्लवितानुरागः (सन्) अविशत् ॥ दशास्यः–रावणः। विदेहकन्यायाः–सीतायाः चरणारविन्दयोः विन्यासेन धन्यम् अङ्कणरेणुजालं यस्याः, तादृशीम्। पल्लवितः–प्रवृद्धः अनुरागो यस्य, तादृशः। अविशत्–प्रविष्टवान् ॥ ४ ॥

परस्य दारा इति साधु जातः पतिव्रतामौलिरिति प्रवृद्धः।
मनोभवस्तस्य बभूव तस्यां दुरात्मनामेष खलु स्वभावः ॥ ५ ॥

अनुरागवृद्धिमाह। परस्य दाराः इति साधु जातः तस्यां तस्य मनोभवः, पतिव्रतामौलिः इति प्रवृद्धः बभूव। एषः खलु दुरात्मनां स्वभावः ॥ परस्य–अन्यस्य। दाराः–कलत्रम्। साधु–सम्यक्। तस्याम्–सीतायाम्। तस्य–रावणस्य। मनोभवः–कामः ॥ ५ ॥

अनार्यकार्याचरणप्रवृत्तः परोक्षवीर्यो रघुनन्दनस्य।
दधौ पतङ्गस्य दशां दशास्यः कृशानुकीलाकलिकां लिलिक्षोः ॥ ६ ॥

रावणस्य अग्निं प्रवेक्ष्यता शलभेन सादृश्यं वक्ति। अनार्याचरणप्रवृत्तः रघुनन्दनस्य परोक्षवीर्यः दशास्यः, कृशानुकीलाकलिकां लिलिक्षोः पतङ्गस्य दशां दधौ ॥ अनार्यस्य–असतः कार्यस्य आचरणे प्रवृत्तः। परोक्षम्–अप्रत्यक्षं वीर्यं यस्य, तादृशः। कृशानुः–अग्निः, तस्य कीला–ज्वाला, कलिका–कोरकः इव, ताम्। लिलिक्षोः–लेढुमिच्छोः। पतङ्गस्य–शलभस्य। दशाम्–अवस्थाम् ॥ ६ ॥

तत्राश्रमे तामथ विस्फुरन्तीं स कान्तिभारं मुहुरुत्किरन्तीम्।
प्राणेशवार्तानुपलम्भनार्तामेकाकिनीमाकलयाञ्चकार ॥ ७ ॥

रावणः सीतां पश्यति। अथ सः तत्र आश्रमे विस्फुरन्तीं कान्तिभारं मुहुः उत्किरन्तीं प्राणेशवार्तानुपलम्भनार्ताम् एकाकिनीं ताम् आकलयाञ्चकार ॥ सः–रावणः। प्राणेशस्य वार्तायाः अनुपलम्भनेन–अलाभेन। आर्ताम्–दुःखिताम्, सीताम्। आकलयाञ्चकार–ददर्श ॥ ७ ॥

**नेत्राणि रात्रिश्चरनायकस्य प्रतीक्षमाणानि पुरैव तस्याः ।**
**अङ्गेष्वहम्पूर्विकया निपेतुर्भृङ्गा लताया इव पुष्पितायाः ॥ ८ ॥**

रावणस्य नेत्राणि सीतायाः अङ्गेषु निपतन्ति । पुरा एव प्रतीक्षमाणानि रात्रिश्चर-नायकस्य नेत्राणि तस्याः (अङ्गेषु) भृङ्गाः इव अहम्पूर्विकया निपेतुः ॥ तस्याः–सीतायाः । अङ्गेषु–अवयवेषु । अहम्पूर्विकया–अहं पूर्वम् अहं पूर्वम् इति भावेन । निपेतुः–निपतितानि ॥ ८ ॥

**वेणीषु तस्यास्तपनात्मजातावेणीषु मग्नः प्रथमं दृशस्ताः ।**
**प्रसह्य ताभिः किल नीयमानाः प्रमोदसिन्धोरुदरं प्रविष्टाः ॥ ९ ॥**

रावणदृष्टयः प्रथमं सीतायाः केशेषु निपतन्ति । प्रथमं तस्याः वेणीषु तपनात्मजाता-वेणीषु मग्नाः ताः दृशः प्रसह्य ताभिः किल नीयमानाः प्रमोदसिन्धोः उदरं प्रविष्टाः ॥ वेणीषु–केशरूपेषु । तपनात्मजातावेणीषु–कालिन्दीप्रवाहेषु । दृशः–रावणदृष्टयः । ताभिः–कालिन्दीवेणीभिः । उदरम्–अन्तर्भागम् ॥ ९ ॥

**बद्धेव तत्केशगुणेन गाढं दृष्टिस्तदीया न चिरं चचाल ।**
**तां चन्द्रहासि प्रसभं तदास्यं छित्त्वेव तद्बन्धमथाचकर्ष ॥ १० ॥**

अनन्तरं रावणदृष्टिः सीतामुखे निपतति । तत्केशगुणेन गाढं बद्धा इव तदीया दृष्टिः चिरं न चचाल । अथ चन्द्रहासि तदास्यं तद्बन्धं प्रसभं छित्वा इव ताम् आचकर्ष ॥ तत्केशगुणेन–तस्याः–सीतायाः केशानां गुणः–सौकुमार्यादिः, सः एव गुणः–रज्जुः; तेन । चन्द्रहासि–चन्द्रः इव हासो यस्य तत्, चन्द्रहासः–खड्गः अस्यास्तीति च । तदास्यम्–सीतामुखम् । तद्बन्धम्–केशगुणबन्धम् । ताम्–दृष्टिम् । आचकर्ष–आकृष्टां चकार ॥ १० ॥

**यास्तारकास्तस्य जये सुराणां न तारकेशं गणयाम्बभूवुः ।**
**आगस्तदुन्मार्ष्टुमिवालिलिङ्गुस्ताः सादरं तन्मुखतारकेशम् ॥ ११ ॥**

रावणः सीतामुखचन्द्रं निर्वर्णयति। याः तस्य तारकाः सुराणां जये तारकेशं न गणयाम्बभूवुः, ताः, तद् आगः उन्मार्ष्टुम् इव सादरं तन्मुखतारकेशम् आलिलिङ्गुः॥ तस्य–रावणस्य। तारकाः–कनीनिकाः, नक्षत्राणि च, तारकेशम्–चन्द्रम्, कनीनिकाधिपतिं च। ताः–तारकाः। आगः–अपराधम्। उन्मार्ष्टुम्–परिहर्तुम्। तस्याः–सीतायाः मुखमेव तारकेशः–चन्द्रः, तम्, कनीनिकाधिपतिं च। आलिलिङ्गुः–आलिङ्गितवत्यः॥ ११॥

**आबाल्यतः शीलित एव तस्य विलोचनानामधरेण सङ्गः।**
**अतः किमासीदधरे मृगाक्ष्यास्तेषामसाधारण एव योगः॥ १२॥**

रावणनेत्राणि सीतायाः अधरे निपतन्ति। तस्य विलोचनानाम् अधरेण सङ्गः आबाल्यतः शीलितः एव। अतः किम्, तेषां मृगाक्ष्याः अधरे असाधारणः एव योगः आसीत्। तस्य–रावणस्य। अधरेण–हीनेन। सङ्गः–संसर्गः। तेषाम्–रावणनेत्राणाम्। मृगाक्ष्याः–सीतायाः। अधरे–ओष्ठे॥ १२॥

**निपीय पीयूषरसप्रवाहं तदास्यनाम्नः किल शीतधाम्नः।**
**स्वस्था इव स्वर्णगिरौ विहर्तुं तद्दृष्टयस्तत्कुचयुग्ममापुः॥ १३॥**

रावणदृष्टयः सीतास्तनयोर्निपतन्ति। तदास्यनाम्नः किल शीतधाम्नः पीयूषरसप्रवाहं निपीय स्वस्थाः इव तद्दृष्टयः स्वर्णगिरौ विहर्तुं तत्कुचयुग्मम आपुः॥ तदास्यनाम्नः–सीतामुखाख्यस्य। शीतधाम्नः–चन्द्रस्य। स्वस्थाः–तृप्ताः। स्वर्गस्थाः इति च गम्यते। देवा इत्यर्थः। स्वर्णगिरौ–सुमेरुपर्वते। विहर्तुम्–क्रीडितुम्॥ १३॥

**अगण्यलावण्यमयापगायां तस्यां परिभ्रम्य तदीयदृष्टिः।**
**भृङ्गीव तुङ्गं कुचपद्मकोशमाशिश्रिये कोमलपत्रचित्रम्॥ १४॥**

रावणदृष्टेः सीतास्तनप्राप्तिमेव वर्णयति। तदीयदृष्टिः, अगण्यलावण्यमयापगायां तस्यां परिभ्रम्य भृङ्गी इव कोमलपत्रचित्रं तुङ्गं कुचपद्मकोशं आशिश्रिये॥ अगण्यलावण्यमयापगायाम्–अमेयलावण्यनद्याम्। तस्याम्–सीतायाम्। कोमलैः पत्रैः–दलैः चित्रम्–अद्भुतम्। कोमलेन पत्रेण–पत्रलेखया चित्रम्–नानावर्णं च। कुचपद्मकोशम्–कमलमुकुलसदृशंस्तनम्। आशिश्रिये–आश्रितवती॥ १४॥

स्थित्वा चिरं तत्कुचकुड्मलाग्रे नलब्धमाध्वीकरसेव तस्मात् ।
उत्पत्य भूयोऽपि मुखारविन्दं जगाम सा नित्यविकासशीलम् ।। १५ ।।

रावणदृष्टिः पुनरपि सीतामुखमेव उत्पतति। सा चिरं तत्कुचकुड्मलाग्रे स्थित्वा नलब्ध-माध्वीकरसा इव तस्माद् उत्पत्य भूयः अपि नित्यविकासशीलं मुखारविन्दं जगाम ॥ सा–रावणदृष्टिः। नलब्धो माध्वीकस्य–मधुनो रसो यया, तादृशी। तस्मात्–कुचकुड्मला-ग्रात्। उत्पत्य–ऊर्ध्वं गत्वा ॥ १५ ॥

निकृष्यमाणाथ बलात् कुचाभ्यामाकृष्यमाणा वदनेन्दुना च ।
मुहुः पतन्ती मुहुरुत्पतन्ती चक्रे चिरं कन्दुकविभ्रमं सा ।। १६ ।।

रावणदृष्टिर्मुहुः स्तने मुखे च पतनमुत्पतनं च करोति। अथ सा कुचाभ्यां बलाद् निकृष्यमाणा वदनेन्दुना च आकृष्यमाणा मुहुः पतन्ती मुहुः उत्पतन्ती चिरं कन्दुकविभ्रमं चक्रे ॥ सा–रावणदृष्टिः ॥ १६ ॥

मृदौ मुखेऽस्याः प्रसभं निपातात् पीडाविधेरार्जितमात्मपापम् ।
दृक् तस्य निष्कर्तुमिवातितुङ्गात् पपात तस्याः कुचशैलशृङ्गात् ।। १७ ।।

रावणदृष्टिः कुचशृङ्गादधः पतति। तस्य दृक् अस्याः मृदौ कुचे प्रसभं निपातात् पीडाविधेः आर्जितम् आत्मपापं निष्कर्तुम् इव अतितुङ्गात् तस्याः कुचशैलशृङ्गात् पपात ॥ तस्य–रावणस्य। अस्याः–सीतायाः। पीडाविधेः–व्यथाजननात्। आर्जितम्–सम्पा-दितम्। निष्कर्तुम्–प्रायश्चित्तं कर्तुम् ॥ १७ ॥

अगोचरीभूतचरीममुष्या मध्यस्थलीमेत्य वलित्रिमार्गाम् ।
चिरं परिभ्रम्य किमु श्रमार्ता सा नाभिकूपं पुनराससाद ।। १८ ।।

सा दृष्टिः मध्यं प्राप्नोति। अगोचरीभूतचरीं वलित्रिमार्गाम् अमुष्याः मध्यस्थलीम् एत्य चिरं परिभ्रम्य श्रमार्ता (सती) किमु, सा पुनः नाभिकूपम् आससाद ॥ अगोचरीभूत-

चरीम्–अदृष्टपूर्वाम् । वलित्रिमार्गाम्–वलिभिः मार्गत्रयवतीम् । अमुष्याः–सीतायाः । एत्य–गत्वा । सा–रावणदृष्टिः । नाभिकूपम्–कूपवदगाधं नाभिम् । आससाद–प्राप ॥ १८ ॥

**कान्तिच्छटाकैतवपूरपूर्णे नाभिह्रदे तत्र चिरं विहृत्य ।**
**बाला इव स्वं परिमार्ष्टुकामा वासस्तदीयं जगृहुर्दृशस्ताः ॥ १९ ॥**

रावणदृष्टयः सीतायाः वस्त्रं गृह्णन्ति । ताः दृशः कान्तिच्छटाकैतवपूरपूर्णे तत्र नाभिह्रदे चिरं विहृत्य स्वं परिमार्ष्टुकामाः बालाः इव तदीयं वासः जगृहुः ॥ कान्तिच्छटाकैतवपूरपूर्णे–कान्तिपङ्क्तिव्याजेन जलपूरेण पूर्णे । नाभिः एव ह्रदः–अगाधजलाशयः, तस्मिन् । विहृत्य–क्रीडित्वा । बालाः–बालिकाः । स्वम्–आत्मानम् । परिमार्ष्टुकामाः–शोधयितुमिच्छन्त्यः । तदीयम्–सीतासम्बन्धि । वासः–वस्त्रम् ॥ १९ ॥

**तस्या नितम्बोरुयुगे नितान्तच्छन्ने दुकूलैः स्फुटलब्धियोगम् ।**
**अन्वेषमन्वेषमचारिषुः किं बहिर्दुकूलं बहुकालमेताः ॥ २० ॥**

ताः दृष्टयः वस्त्रस्य बहिः चरन्ति । एताः दुकूलैः नितान्तं छन्ने तस्याः नितम्बोरुयुगे स्फुटलब्धियोगम् अन्वेषम् अन्वेषं किम्, बहिर्दुकूलं बहुकालम् अचारिषुः ॥ एताः–रावणदृष्टयः । दुकूलैः–वस्त्रैः । स्फुटलब्धियोगम्–व्यक्तसंयोगम् । अन्वेषम् अन्वेषम्–अन्विष्यान्विष्य । बहिर्दुकूलम्–दुकूलाद् बहिः । अचारिषुः–सञ्चारं कृतवत्यः ॥ २० ॥

**मन्ये न धन्यास्मि यदेतदस्या न लभ्यते व्यक्तमितीव खेदात् ।**
**दृशां ततिर्दाशमुखी पतन्ती जगाम तत्पादयुगेन योगम् ॥ २१ ॥**

रावणदृष्टयः सीतापादयोः पतन्ति । 'अस्याः एतद् व्यक्तं न लभ्यते (इति) यत्, तद् (अहम्) न धन्या अस्मि (इति) मन्ये' इति खेदाद् इव पतन्ती दाशमुखी दृशां ततिः तत्पादयुगेन योगं जगाम ॥ अस्याः–सीतायाः । एतद्–नितम्बोरुयुगम् । धन्या–भाग्यवती । दशमुखस्य इयम्–दाशमुखी–रावणसम्बन्धिनी । ततिः–पङ्क्तिः ॥ २१ ॥

**आकेशमापादमनेकशेषं तस्याः प्रतीकं परिपीय दृग्भिः ।**
**मुहुर्मुहुर्मूर्च्छितमन्मथोऽसौ निशाचरेन्द्रो मनसेदमाह ॥ २२ ॥**

एवं सीतायाः केशादि पादान्तं निर्वर्ण्य रावणः स्वगतरूपेण वदति। असौ निशाचरेन्द्रः आकेशम् आपादम् अनेकशेषम् अस्याः प्रतीकं मुहुर्मुहुः दृग्भिः परिपीय मूर्च्छितमन्मथः (सन्) मनसा इदम् आह ॥ अनेकशेषम्–अशेषम्। प्रतीकम्–अवयवम्। मूर्च्छितमन्मथः–प्रवृद्धकामः ॥ २२ ॥

**अहोतरां मानुषपोतकस्य लोकोत्तरः कश्चन पुण्यपूरः ।**
**एतादृशीमेणकिशोरनेत्रामेनामसौ येन किलानुभुङ्क्ते ॥ २३ ॥**

अथ त्र्यधिकेन श्लोकानां शतेन सीताविषयां रावणस्य चिन्तामेव वर्णयति। प्रथमं रामस्य भाग्यमेव चिन्तयति। मानुषपोतकस्य लोकोत्तरः कश्चन पुण्यपूरः अहोतराम्! येन किल असौ एतादृशीम् एनाम् एणकिशोरनेत्राम् अनुभुङ्क्ते ॥ मानुषपोतकस्य–मनुष्यबालस्य रामस्य। अहोतराम्–अत्यद्भुतः। येन–पुण्यपूरेण। असौ–रामः ॥ २३ ॥

**या कान्तिरस्या वपुषीह दृष्टा सा दुर्लभा स्वर्ल्ललनाकुलेऽपि ।**
**बहुप्रयासार्जितमात्मपुण्यं क्षिण्वन्ति येनैव फलेन सन्तः ॥ २४ ॥**

स्वर्गस्त्रीष्वपि दुर्लभा सीतायाः कान्तिरित्याह। इह अस्याः वपुषि या कान्तिः दृष्टा, सा स्वर्ल्ललनाकुले अपि दुर्ल्लभा। येन एव फलेन सन्तः बहुप्रयासार्जितम् आत्मपुण्यं क्षिण्वन्ति ॥ अस्याः–सीतायाः। स्वर्ल्ललनाकुले–स्वर्गस्त्रीवर्गे। येन–स्वर्गस्त्रीवर्गरूपेण। क्षिण्वन्ति–क्षयं नयन्ति ॥ २४ ॥

**आस्ते पुरा कुत्र नु वासनैषा दुग्धाम्बुधौ शिल्पयतो विधातुः ।**
**दारेषु वा हैमवतेषु वा स्वे सृष्टावमुष्याः स्वयमस्फुरद्या ॥ २५ ॥**

लक्ष्मीपार्वतीसरस्वतीभ्योऽधिका सीतेति द्योतयति। दुग्धाम्बुधौ, हैमवतेषु दारेषु वा, स्वे वा शिल्पयतः विधातुः, अमुष्याः सृष्टौ या स्वयम् अस्फुरत्, एषा वासना कुत्र नु

पुरा आस्ते ? ॥ दुग्धाम्बुधौ–क्षीरसमुद्रे। हैमवतेषु–हिमवत्सम्बन्धिषु। दारेषु–जायायाम्। मेनायामित्यर्थः। स्वे–आत्मनि। शिल्पयतः–सृष्टिं कुर्वतः। विधातुः–ब्रह्मणः। अमुष्याः–सीतायाः। अस्फुरत्–प्रकाशतां प्राप्ता। वासना-प्रतिभाविशेषः। पुरा दुग्धाम्बुधौ लक्ष्म्याः सृष्टौ, हिमवतः पत्न्यां मेनायां पार्वत्याः सृष्टौ, आत्मनि सरस्वत्याः सृष्टौ वा ब्रह्मणो मनसि यः प्रतिभाविशेषो न प्रकाशतां गतः, तादृशः कश्चन प्रतिभाविशेषः, सीतायाः सृष्टौ स्वयं प्रकाशतां गतः इत्यर्थः। आस्ते इति पुराशब्दयोगाद् भूतार्थे लट् ॥ अनन्यसाधारणमस्याः सीतायाः सौन्दर्यमिति भावः ॥ २४ ॥

**वेणीयमेणीनयनोत्तमाया माया स्वयं मूर्तिमतीव भाति ।**
**सदा समाश्रित्य तमोगुणं या व्यामोहयत्येव समस्तलोकान् ॥ २६ ॥**

अथाष्टाशीत्या श्लोकैः सीतायाः केशादिपादनखान्तान्यङ्गानि रावणः स्वगतरूपेण मनसा वर्णयति। तत्र केशवर्णनं पञ्चभिः श्लोकैः। प्रथमे केशानामखिलव्यामोहकत्वं दर्शयति–**वेणीति**। एणीनयनोत्तमायाः इयं वेणी, स्वयं मूर्तिमती माया इव भाति। या सदा तमोगुणं समाश्रित्य समस्तलोकान् व्यामोहयति एव ॥ वेणी–केशबन्धः। या–वेणी। तमसः–अन्धकारस्य। गुणम्–नीलवर्णम्। तमः–अज्ञानमेव गुणं च। व्यामोहयति–भ्रमयति ॥ २६ ॥

**मोहान्धकारो मिहिरेन्दुभीतः स्थित्वा तपस्यन् गिरिगह्वरेषु ।**
**केशावलीभूय कुशेशयाक्ष्याः प्रायोऽखिलाशाविषयत्वमेति ॥ २७ ॥**

अन्धकारः एव तपसा सीताकेशत्वं प्राप्तः इत्याह—**मोहेति**। मिहिरेन्दुभीतः मोहान्धकारः गिरिगह्वरेषु स्थित्वा तपस्यन् कुशेशयाक्ष्याः केशावलीभूय प्रायः अखिलाशाविषयत्वम् एति ॥ मिहिरः–सूर्यः। मोहः एव अन्धकारः। गह्वरेषु–गुहासु। कुशेशयम्–पद्मम्। केशावलीभूय–केशकलापत्वं प्राप्य। अखिलाशाविषयत्वम्–सर्वदिग्व्याप्तत्वम्। सर्वेषामिच्छाविषयत्वं च। एति–गच्छति ॥ २७ ॥

**तमोगुणत्वं भजतीति युक्तं व्यक्तं हि तत् केशतमस्यमुष्याः ।**
**असत्त्वमित्येव भवत्यसत्यं यदत्र वक्रत्वमुखो गुणौघः ॥ २८ ॥**

सीताकेशाख्यं तमो गुणरूपं द्रव्यरूपं च, नाभावरूपमित्याह—**तमं इति**। तमः गुणत्वं भजति इति युक्तम्। तद् अमुष्याः केशतमसि व्यक्तं हि। असत्त्वम् इति असत्यम् एव भवति। यद् अत्र वक्रत्वमुखः गुणौघः (अस्ति)॥ तमः—अन्धकारः। गुणत्वम्—तन्तुत्वम्, द्रव्याश्रयत्वं च। तत्—तन्तुरूपत्वम्। केशतमसि—केशाख्येऽन्धकारे। असत्त्वम्—अभावरूपत्वम्। अत्र—केशतमसि। वक्रत्वमुखः—कौटिल्यादिः। सद्द्रव्येष्वेव खलु गुणाः भवन्ति ॥ २८ ॥

**सूते पुरा पुष्पवतोः स्रवन्तीं सूर्यो लसत्कृष्णतयैव भव्याम्।**
**मानादिवेन्दुर्म्मुखमीदृशीं तां सूतेऽधुना केशमिषादमुष्याः ॥ २९ ॥**

सीतायाः मुखस्य चन्द्रत्वं केशस्य कालिन्दीत्वं च सम्पादयति—**सूते इति**। पुष्पवतोः (मध्ये) सूर्यः लसत्कृष्णतया एव भव्यां स्रवन्तीं पुरा सूते। मुखम् इन्दुः मानाद् इव अमुष्याः केशमिषाद् ईदृशीं ताम् अधुना सूते॥ पुष्पवतोः—सूर्यचन्द्रयोः। लसन्—क्रीडन् कृष्णः—नन्दसुतः यस्यां सा लसत्कृष्णा, तस्याः भावस्तत्ता, तया। भव्याम्—शुभाम्। स्रवन्तीम्—नदीं कालिन्दीम्। पुरा सूते-असूत। मानाद्—गर्वाद्। ईदृशीम्—लसत्कृष्णतया भव्याम्। लसन्—शोभमानः। कृष्णः—कृष्णवर्णो यस्याः, सा लसत्कृष्णा इति केशपक्षेऽर्थः। ताम्—कालिन्दीम्। पुष्पवच्चन्द्रसमुद्भूतत्वादेव सीताकेशकालिन्द्याः पुष्पालङ्कृतत्वमिति भावः ॥ २९ ॥

**एषा च सा च स्फुटभङ्गिकान्ते वेणीस्वरूपे यमुने इह द्वे।**
**तस्यां मुकुन्दः किल पर्यरंसीदस्यां पुनः क्रीडति तत्तनूजः ॥ ३० ॥**

सीताकेशकालिन्द्याः व्यतिरेकं दर्शयति—**एषेति**। इह एषा च सा च स्फुटभङ्गिकान्ते वेणीस्वरूपे द्वे यमुने (भवतः)। तस्यां मुकुन्दः किल पर्यरंसीत्। अस्यां पुनः तत्तनूजः क्रीडति॥ एषा—सीताकेशकालिन्दी। सा—प्रसिद्धा कालिन्दी। स्फुटाभिः भङ्गीभिः—वीचिभिः, कुटिलताभिश्च कान्ते—मनोरमे। वेणी—केशबन्धः प्रवाहश्च, तत्स्वरूपे। यमुने—कालिन्द्यौ। तस्याम्—प्रसिद्धकालिन्द्याम्। मुकुन्दः—कृष्णः। पर्यरंसीत्—क्रीडितवान्।

अस्याम्–सीताकेशकालिन्द्याम् । तत्तनूजः–कृष्णपुत्रः प्रद्युम्नरूपः कामः । एषा–केशकालिन्दी काममुद्दीपयतीति भावः ॥ ३० ॥

**प्रादात् किमिन्द्रः सुहितः सुधानां मालां स्वनीलाश्मकृताममुष्यै ।**
**एतन्मुखत्वे शशिनः पुनः सा यद्भाति मूर्धन्यलकच्छलेन ॥ ३१ ॥**

अलकान् वर्णयति । शशिनः एतन्मुखत्वे सुधानां सुहितः इन्द्रः स्वनीलाश्मकृतां मालाम् अमुष्यै प्रादात् किम्? यत् सा पुनः अलकच्छलेन मूर्धनि भाति ॥ सुधानां सुहितः–अमृतैस्तृप्तः । स्वनीलाश्मकृताम्–इन्द्रनीलरत्ननिर्मिताम् । अमुष्ये–सीतायै । यत्–यस्मात् । सा–नीलरत्नमाला । मूर्धनि–शिरसि ॥ ३१ ॥

**नित्यं ललाटेन निजोपरिस्थादभ्यस्तमस्याः किमु कुन्तलौघात् ।**
**चातुर्यमेतच्छ्रितनीलकण्ठो विजीयते येन शितिः कलापः ॥ ३२ ॥**

ललाटं वर्णयति । अस्याः ललाटेन, नित्यं निजोपरिस्थात् कुन्तलौघाद् एतत् चातुर्यम् अभ्यस्तं किमु? येन श्रितनीलकण्ठः शितिः कलापः विजीयते ॥ येन–ललाटेन । श्रितः–आश्रितः नीलकण्ठः मयूरः, शिवश्च येन, तादृशः । शितिः–मेचकः, धवलश्च । कलापः–बर्हम्, कलाः पातीति कलापश्चन्द्रश्च । विजीयते–पराभूयते ॥ कुन्तलौघो विशिष्टं बर्हं विजयते, ललाटमपि तादृशं चन्द्रं विजयते इत्यर्थः ॥ ३२ ॥

**मध्येललाटं मनुजब्रुवेण यत्कल्पितं धातुरसेन शिल्पम् ।**
**अस्या मुखेन्दोः खलु जातमात्रं तच्चित्रकं पुत्रकमेव विद्मः ॥ ३३ ॥**

ललाटगतं तिलकं वर्णयति । मध्येललाटं मनुजब्रुवेण धातुरसेन यत् शिल्पं कल्पितं, तत् चित्रकम्, अस्याः मुखेन्दोः खलु जातमात्रं पुत्रकम् एव विद्मः ॥ मध्येललाटम्–ललाटमध्ये । मनुजब्रुवेण–मूर्खेण मनुष्येण । रामेणेति भावः । चित्रकम्–तिलकम् । जातमेव–जातमात्रम् । अचिरजातमित्यर्थः । सद्योजातत्वादेव तिलकस्य अल्पता रक्तवर्णता चेति भावः । पुत्रकम्–अल्पं पुत्रम् । विद्मः–जानीमः ॥ ३३ ॥

**जागर्ति बाणोऽयमनन्यजस्य फालस्तु बालेन्दुसखः सुमुख्याः ।**
**मन्ये जगद्यौवनभेदलग्नं विशेषकं शोणितविन्दुमत्र ॥ ३४ ॥**

तिलकस्य रक्तबिन्दुत्वमुत्प्रेक्षते । बालेन्दुसखः सुमुख्याः अयं फालः तु, अनन्यजस्य बाणः जागर्ति । अत्र विशेषकं, जगद्यौवनभेदलग्नं शोणितबिन्दुं मन्ये ॥ फालः–ललाटम्, सीरावयवश्च । यथा सीरायुधो बलभद्रः, तथा सीरावयवायुधः कामः इति भावः । अनन्यजस्य–कामस्य । अत्र–ललाटात्मके बाणे । विशेषकम्–तिलकम् । जगति यद् यौवनम्–युवसमूहः, तस्य भेदे–विदारणे लग्नम् । शोणितबिन्दुम्–रक्तकणम् ॥ ३४ ॥

**विशेषकं वीक्ष्य शशाङ्कधीरं विनिर्गतौ कर्णबिलाज्जिघृक्षू ।**
**कालाविमौ व्यालशिशू मृगाक्ष्या भ्रूसंज्ञया योजयते जनौघः ॥ ३५ ॥**

भ्रुवौ वर्णयति । शशाङ्कधीरं मृगाक्ष्याः विशेषकं वीक्ष्य जिघृक्षू कर्णबिलाद् विनिर्गतौ कालौ इमौ व्यालशिशू, जनौघः भ्रूसंज्ञया योजयते ॥ शशाङ्कधीरम्–चन्द्रतुल्यम् । विशेषकम्–तिलकम् । जिघृक्षू–ग्रहीतुमिच्छू । चन्द्रं यथा राहुकेतू, तथेति भावः । कर्णबिलात्–श्रवणरन्ध्रात् । कालौ–कृष्णवर्णौ । व्यालशीशू–सर्पशाबकौ ॥ ३५ ॥

**मुखस्य तन्व्याः समवायिहेतौ चन्द्रे कृते तत्परिवेषचक्रम् ।**
**द्वेधा विधाय प्रसभं स वेधाश्चक्रे भ्रुवौ नेत्ररुचातिनीले ॥ ३६ ॥**

भ्रुवावेव वर्णयति । चन्द्रे तन्व्याः मुखस्य समवायिहेतौ कृते तत्परिवेषचक्रं, सः वेधाः प्रसभं द्वेधा विधाय नेत्ररुचा अतिनीले भ्रुवौ चक्रे ॥ समवायिहेतौ–उपादानकारणे । तस्य–चन्द्रस्य परिवेषमेव चक्रम् । वेधाः–ब्रह्मा । नेत्ररुचा–नयनकान्त्या ॥ ३६ ॥

**स्मारं धनुर्व्यक्तमिदं सुदत्या युग्मं भ्रुवो राजति यद्गुणाढ्यम् ।**
**कटाक्षनाराचविमोक्षणे यद्विलोक्यते कृष्टमिवातिभुग्नम् ॥ ३७ ॥**

भ्रुवोः कामचापत्वं कटाक्षस्य बाणत्वं च कल्पयति । यद् गुणाढ्यं राजति, इदं सुदत्याः भ्रुवोः युग्मं स्मारं धनुः, व्यक्तम् । कटाक्षनाराचविमोक्षणे अतिभुग्नं यत् कृष्टम् इव विलोक्यते ॥ गुणाढ्यम्–वक्रत्वादिगुणयुक्तम्, मौर्वीयुक्तं च । स्मरस्य–कामस्य । इदं–

स्मारम् । कटाक्षाः एव नाराचाः—शराः, तेषां विमोक्षणे—क्षेपे । अतिभुग्नम्—अत्यन्त-कुटिलम् ॥ ६७ ॥

**फालस्थलीबालशशाङ्कमूले सङ्क्रान्तयोरुत्तमपक्ष्मपङ्क्त्योः ।**
**भ्रूभावमस्या भजतः स्वरूपे तद्यौगपद्योदितकेलिलौल्ये ॥ ३८॥**

भ्रूयुग्मस्य पक्ष्मपङ्क्तिप्रतिबिम्बत्वं कल्पयति । फालस्थलीबालशशाङ्कमूले संक्रान्तयोः उत्तमपक्ष्मपङ्क्त्योः स्वरूपे तद्यौगपद्योदितकेलिलौल्ये (सती) अस्याः भ्रूभावं भजतः ॥ फाल-स्थली एव बालशशाङ्कः, तस्य मूले । संक्रान्तयोः—प्रतिबिम्बितयोः । स्वरूपे—बिम्बे । तयोः—पक्ष्मपङ्क्त्योः यौगपद्येन—साहचर्येण उदितं केलिलौल्यं—क्रीडाकौतुकं ययोः, तादृशी बालयोरेकत्र समवेतयोः क्रीडाकौतुकं स्वाभाविकं खलु । भ्रुवोश्च सविलासचलनं स्वाभाविकम् ॥ ३८ ॥

**जित्वा सरोजादि समस्तमाजौ दर्पादथान्योन्यजिगीषयास्याः ।**
**किमाभिमुख्येन मिथः पतन्ती नेत्रे चकास्तश्चपलेक्षणायाः ॥ ३९॥**

नेत्रे वर्णयति । अस्याः चपलेक्षणायाः नेत्रे सरोजादि समस्तम् आजौ जित्वा अथ दर्पाद् अन्योन्यजिगीषया किम्, आभिमुख्येन मिथः पतन्ती चकास्तः ॥ समस्तम्—सकलं नेत्रोपमानम् । जिगीषया—जेतुमिच्छया । मिथः—अन्योन्यम् । पतन्ती—प्राप्नुवन्ती । चकास्तः—दीप्येते ॥ अस्याः नेत्रे अतुल्ये इति भावः ॥ ६९ ॥

**दृशौ कुरङ्गीनयनस्य कुल्ये परं न शृङ्गाररसस्य चास्याः ।**
**मध्ये तयोर्भाति कनीनिकाख्यं लीलामरुत्कम्पितमुत्पलं यत् ॥ ४० ॥**

नेत्रयोर्मृगीनयनतुल्यत्वं शृङ्गाररसपूर्णत्वं कनीनिकयोर्नीलोत्पलकल्पत्वं चाह । अस्याः दृशौ न परं कुरङ्गीनयनस्य कुल्ये, शृङ्गाररसस्य च (कुल्ये) । यत् तयोः मध्ये कनीनिकाख्यं लीलामरुत्कम्पितम् उत्पलं भाति ॥ न परम्—न केवलम् । कुरङ्गीनयनस्य—मृगीनेत्रस्य । कुल्ये—कुले भवे । तुल्ये इत्यर्थः । कुल्ये—कृत्रिमनद्यौ च । यत्—यस्मात् । तयोः—

दृशोः। कनीनिका—तारका इति आख्या—नाम यस्य तत्। लीला—विलासः एव मरुत्—वायुः, तेन कम्पितम्। उत्पलम्—इन्दीवरम् ॥ ४० ॥

**अस्याः सपत्रा क्रियते स्म दृष्टिः पक्ष्मावलिभ्यां परमेष्ठिना यत्।**
**पत्रीभवन्ती तदियं स्मरस्य चित्तं सपत्राकुरुते जनस्य ॥ ४१ ॥**

दृष्टेः कामशरत्वं परिकल्प्य वर्णयति। परमेष्ठिना अस्याः दृष्टिः, पक्ष्मावलिभ्यां सपत्रा क्रियते स्म, (इति) यत्, तद् इयं स्मरस्य पत्री भवन्ती जनस्य चित्तं सपत्राकुरुते॥ परमेष्ठिना -ब्रह्मणा। पक्ष्मावलिभ्याम्—अक्षिरोमपङ्क्तिभ्याम्। सपत्रा—पत्राभ्यां दलाभ्यां सहिता। क्रियते स्म—चक्रे। इयम्—दृष्टिः। पत्री—बाणः। पत्रीभवन्ती—बाणतां गच्छन्ती। सपत्राकुरुते—सपुङ्खशरस्य अन्तः प्रवेशेन शरघटितपत्रसहितं करोति। अतिव्यथयतीत्यर्थः ॥ ४१ ॥

**विधिः पुरास्याः कृतकेशसृष्टिः किं तद्द्युतिध्वान्तविमुग्धदृष्टिः।**
**अस्वस्थधीरुत्पलमास्थदन्तः पत्रं बहिष्केसरमक्षिदेशे ॥ ४२ ॥**

कनीनिकाया नीलोत्पलत्वं पक्ष्मणां तत्केसरत्वं च प्रकल्पयति। पुरा अस्याः कृतकेशसृष्टिः विधिः तद्द्युतिध्वान्तविमुग्धदृष्टिः अस्वस्थधीः (सन्) किम्, अक्षिदेशे अन्तःपत्रं बहिष्केसरम् उत्पलम् आस्थत्॥ कृतकेशसृष्टिः—केशानां सृष्टिं कृतवान्। विधिः—सृष्टिकर्ता। तेषाम्—केशानां द्युतिरिव यद् ध्वान्तं, तेन विमुग्धा—विमूढा दृष्टिः—नेत्रं यस्य, तादृशः। अन्तःपत्रम्—अन्तर्गतानि पत्राणि यस्य, तादृशम्। बहिष्केसरम्—बहिः केसराणि यस्य, तादृशम्। उत्पलम्—इन्दीवरम्। आस्थत्—क्षिप्तवान् ॥ ४२ ॥

**यथामुना सीदति लोचनेन तथा न लोकः कमलादिबाणैः।**
**निजाग्रजाग्रत्तमकर्णमेतद्दुरुद्धरः कर्णिशरः स्मरस्य ॥ ४३ ॥**

नेत्रस्य कामकर्णिशरत्वं कल्पयति। लोकः अमुना लोचनेन यथा सीदति, तथा कमलादिबाणैः न सीदति। निजाग्रजाग्रत्तमकर्णम् एतद् दुरुद्धरः स्मरस्य कर्णिशरः॥ लोकः—

जनः। सीदति–पीडितो भवति। कमलादिबाणैः–कमलाशोकचूतनवमालिकानीलोत्पलाख्यैः शरैः। निजम्–स्वकीयं यदग्रं, तत्र जाग्रत्तमः–प्रस्पष्टः। कर्णम्–श्रोत्रं, कर्णिशरावयवश्च यस्य-तादृशम्। एतद्–लोचनम्। दुरुद्धरः–दुःखेनोद्धर्तुं शक्यः। कर्णिशरः–कर्णवान् शरविशेषः ॥ ४३ ॥

**उत्तारितौ दर्पकतत्प्रियाभ्यां केतोः कृतेऽस्याः श्रुतिकूपकाभ्याम्।**
**विसारिणो तावतिभीतिकम्प्रौ वैसारिणौ किं नयने नताङ्ग्याः ॥ ४४ ॥**

नयनयोः कामध्वजमत्स्यत्वमुत्प्रेक्षते। अस्याः नताङ्ग्याः नयने, दर्पकतत्प्रियाभ्यां केतोः कृते (अस्याः) श्रुतिकूपकाभ्याम् उत्तारितौ विसारिणौ अतिभीतिकम्प्रौ तौ वैसारिणौ किम्? ॥ दर्पकः–कामः, तत्प्रिया–रतिः, ताभ्याम्। केतोः–ध्वजस्य। श्रुती–कर्णौ एव कूपकौ–कृत्रिमगर्तौ, ताभ्याम्। उत्तारितौ–तीरं प्रापितौ। विसारिणौ–द्रुतगमन-शीलौ। वैसारिणौ–मत्स्यौ। कामस्य मत्स्यध्वजत्वं प्रसिद्धम् ॥ ४४ ॥

**नासादसीया श्रयति श्रियं यां नासादनीया तिलपुष्पकैः सा।**
**आकारसाम्येऽपि गुणः पदार्थं भिनत्ति पूर्णेन्दुकरीषयोर्वा ॥ ४५ ॥**

नासिकां वर्णयति। अदसीया नासा यां श्रियं श्रयति, सा तिलपुष्पकैः न आसाद-नीया। आकारसाम्ये अपि पूर्णेन्दुकरीषयोः वा गुणः पदार्थं भिनत्ति ॥ अदसीया–सीता-सम्बन्धिनी। तिलपुष्पकैः–प्रशस्तैः तिलपुष्पैः। न आसादनीया–न लब्धुं शक्या। करीषः–वृत्ताकारं शुष्कगोमयकृतेन्धनम्। वा–इव। गुणः–गुणभेदः। भिनत्ति–भिन्नं करोति ॥ ४५ ॥

**तिलप्रसूनादतिकोमलेयं नासा नताङ्ग्याः प्रथितोऽयमर्थः।**
**जघन्यवृत्तिश्रितपूर्वशब्दं यद्वज्रपुष्पं हि पदं तदीयम् ॥ ४६ ॥**

नासिकायास्तिलप्रसूनाधिकं सौकुमार्यमाह। इयं नताङ्ग्याः नासा तिलप्रसूनाद् अति-कोमला (इति) अयम् अर्थः प्रथितः। यत् तदीयं पदं, जघन्यवृत्तिश्रितपूर्वशब्दं वज्रपुष्पं हि ॥ प्रथितः–प्रसिद्धः। यत्–यस्मात्। तदीयम्–तिलप्रसूनसम्बन्धि। तद्वाचकमिति

भावः। पदम्—शब्दः। जघन्यवृत्तिम्—लक्षणां श्रितः पूर्वशब्दः—तिलप्रसूनशब्दः यस्य, तादृशम्। वज्रपुष्पम्—तिलपुष्पम्। तिलप्रसूनपदगतः प्रसूनशब्दो लक्षणया तिलपुष्पमभिधत्ते, वज्रपुष्पपदं तु अभिधयैव तिलपुष्पमभिधत्ते इति भावः। 'पुष्पं वज्रपुष्पं तिलस्य यत्' इत्यमरः ॥ ४६ ॥

अधीरदृष्टरधरोऽयमीष्टे बालारुणीयं किरणं विजेतुम् ।
तल्लेशसन्दर्शनमात्रजातम्लानः प्रवालः पुनरस्य कः स्यात् ॥ ४७॥

अधरं वर्णयति। अधीरदृष्टेः अयम् अधरः बालारुणीयं किरणं विजेतुम् ईष्टे। तल्लेशसन्दर्शनमात्रजातम्लानः प्रवालः पुनः अस्य कः स्यात्॥ बालारुणीयम्—बालसूर्यसम्बन्धिनम्। किरणम्—रश्मिम्। ईष्टे—शक्नोति। तल्लेशस्य—बालसूर्यरश्मिकणम्य सन्दर्शनमात्रेण जातं म्लानम्—म्लानिः यस्य, तादृशः। प्रवालः—पल्लवः। अस्य—अधरस्य। कः स्यात्? । न कोपि स्यादित्यर्थः। उपमानं न भवेदिति भावः ॥ ४७ ॥

सन्ध्याघनस्यैव विवर्तमोष्ठं शङ्के मृगाक्ष्या न तु विद्रुमाद्रेः ।
धत्तेऽमृतं यन्निभृतं निजान्तर्व्यक्तं कदाचित् समये किलैषः ॥४८॥

अधरस्य सान्ध्यमेघविवर्तत्वमुत्प्रेक्षते। मृगाक्ष्याः ओष्ठ सन्ध्याघनस्य एव विवर्तं शङ्के। विद्रुमाद्रेः (विवर्तं) तु न (शङ्के)। यद् एषः निजान्तः कदाचित् समये व्यक्तं निभृतम् अमृतं धत्ते किल॥ एषः—अधरः। अधरे कदाचिदमृतं व्यक्तम्। सान्ध्यमेघेऽमृतकिरणश्च। विद्रुमाद्रौ तु नामृतम् ॥ ४८ ॥

बिभर्ति वन्यं मृगमोषधीशो नैवौषधिं मामिति रोषतः किम् ।
अस्या मुखे तद्द्विषि संश्रयन्ती निजं फलं बिम्बलतोपजहे ॥ ४९ ॥

अधरस्य बिम्बफलत्वमुत्प्रेक्षते। ओषधीशः वन्यं मृगं बिभर्ति, (वन्याम्) ओषधिं मां न एव (बिभर्ति), इति रोषतः किम्, तद्द्विषि अस्याः मुखे संश्रयन्ती बिम्बलता निजं

फलम् उपजह्रे ॥ ओषधीशः—ओषधीनामीशः—चन्द्रः । वन्यम्—वने भवम् । रोषात्—कोपात् । तद्द्विषि—चन्द्रशत्रौ । चन्द्रतुल्ये इति भावः । अस्याः—सीतायाः । उपजह्रे—उपहृतवती ॥ ४९ ॥

**आदाय पीयूषरसं सुधांशोः सन्ध्याशिखिप्रत्यहपाकरक्तम् ।**
**तेनैव नूनं विधिरम्बुजाक्ष्याश्चक्रेऽधरं चारुतरस्वरूपम् ॥ ५० ॥**

पीयूषरसेन कृतोऽधर इत्याह । सन्ध्याशिखिप्रत्यहपाकरक्तं सुधांशोः पीयूषरसम् आदाय तेन एव नूनं, चारुतरस्वरूपम् अम्बुजाक्ष्याः अधरं चक्रे ॥ सन्ध्या एव यः शिखी—अग्निः, तत्कृतेन प्रत्यहपाकेन रक्तम्-शोणवर्णम् । पाकेन पीयूषस्य रक्तत्वं जातम्, तेन कृतत्वादधरस्यापि रक्तता जातेति भावः ॥ ५० ॥

**बन्धूकमुद्बन्ध्य जपामपास्यन् विद्रावयन् विद्रुममप्यशङ्कम् ।**
**अध्यास्त एष स्वयमोष्ठभागो मुखेन्दुसिंहासनमेकवीरः ॥ ५१ ॥**

बन्धूकजपाविद्रुमेभ्यो रक्ततमः सीताधरः इत्याह । ओष्ठभागः बन्धूकम् उद्बन्ध्य जपाम् अपास्यन् विद्रावयन् स्वयम् एकवीरः (सन्) मुखेन्दुसिंहासनम् अध्यास्ते ॥ मुखेन्दु-मेव सिंहासनम् । अध्यास्ते—अधितिष्ठति ॥ ५१ ॥

**पत्युर्मुखस्यानिशमोषधीनामन्तः स्थितत्वादधरोऽयमस्याः ।**
**सिद्धौषधं मन्मथनिर्मिताधिव्याधिप्रतीकारविधौ विशङ्के ॥ ५२ ॥**

अधरस्य सिद्धौषधत्वमुत्प्रेक्षते । अयम् अस्याः अधरः, अनिशं मुखस्य ओषधीनां पत्युः अन्तः स्थितत्वाद् मन्मथनिर्मिताधिव्याधिप्रतीकारविधौ सिद्धौषधं विशङ्के ॥ ओषधीनां पत्युः—चन्द्रस्य । अन्तः—मध्ये । मन्मथेन निर्मितो यः आधिः—मानसी व्यथा, सः एव व्याधिः—रोगः, तस्य प्रतीकारविधौ—चिकित्सायाम् । ओषधीशमध्यगतस्य सिद्धौषधत्वं युक्तमिति भावः ॥ ५२ ॥

किञ्चित्समाकुञ्चितसृक्वमध्यः सौभाग्यसन्दोहमहाम्बुराशिः ।
नेत्राणि मे सम्प्रति सन्धिनोति कदा रसज्ञामधरस्तरुण्याः ॥ ५३ ॥

रावणः सीताधररसास्वादे लालसामाविष्करोति । किञ्चित्समाकुञ्चितसृक्कमध्यः सौभाग्यसन्दोहमहाम्बुराशिः तरुण्याः अधरः सम्प्रति मे नेत्राणि सन्धिनोति । रसज्ञां कदा (सन्धिनोति ?)॥ किञ्चित् समाकुञ्चितं सृक्कणोः–ओष्ठप्रान्तयोः मध्यं यस्याताद्दशः । सन्धिनोति–सम्प्रीणयति । रसज्ञाम्–जिह्वाम् ॥ ५३ ॥

माधुर्यनिर्भर्त्सितगोस्तनीकं मार्दव्यनिर्धूतनवप्रवालम् ।
अस्या निपीयाधरमेकवारं त्यक्ष्यामि चेज्जीवितमस्मि धन्यः ॥ ५४ ॥

सकृत् सीतायाः अधरपाने निजं जीवितं धन्यमिति रावणो मन्यते । माधुर्यनिर्भत्सितगोस्तनीकं मार्दव्यनिर्धूतनवप्रवालम् अस्याः अधरम् एकवारं निपीय जीवितं त्यक्ष्यामि चेत् (अहं) धन्यः अस्मि ॥ गोस्तनी–द्राक्षा । मार्दव्यम्–सौकुमार्यम् । अस्याः–सीतायाः । धन्यः–भाग्यवान् ॥ ५४ ॥

समुद्रजाताः सुहृदः सुधांशोर्मुक्तास्तमेवास्यमुदीतमस्याः ।
प्रेमातिरेकात् परिरभ्य नित्यं वसन्ति दन्तावलिकैतवेन ॥ ५५ ॥

दन्तपङ्क्तिं वर्णयति । समुद्रजाताः सुधांशोः सुहृदः मुक्ताः, उदीतं तम् एव अस्याः आस्यं प्रेमातिरेकाद् नित्यं परिरभ्य दन्तावलिकैतवेन वसन्ति ॥ सुधांशोः–चन्द्रस्य । सुहृदः–मित्राणि । चन्द्रस्यापि समुद्रजातत्वात् । मुक्ताः–मौक्तिकानि । तम्–सुधांशुम् । अस्याः–सीतायाः । आस्यम्–मुखम् । परिरभ्य–आलिङ्ग्य । दन्तावलिः–दन्तपङ्क्तिः ॥ ५५ ॥

रोषेण रुद्रः स्मरकीर्तिमालामाचूर्णयत् प्रागमितप्रकाशाम् ।
तत्र स्खलित्वा पतितैः किमस्याः सृष्टा रदाः स्थूलकणप्रकाण्डैः ॥ ५६ ॥

दन्तानां कामकीर्तिकणत्वमुत्प्रेक्षते । रुद्रः प्राक् रोषेण अमितप्रकाशां स्मरकीर्तिमालाम् आचूर्णयत् । तत्र स्खलित्वा पतितैः स्थूलकणप्रकाण्डैः किम्, अस्याः रदाः सृष्टाः ॥ रुद्रः–

शिवः। सरस्य कीर्तिमेव मालाम्। तत्र–मालायाम्। स्थूलकणप्रकाण्डैः–प्रशस्तैः स्थूलकणैः। रदाः–दन्ताः ॥ ५६ ॥

मदस्रुतिर्मन्मथवारणस्य ज्योत्स्नाङ्कुरश्चन्द्रमसो मुखस्य ।
सौभाग्यपीयूषसरित्तरङ्गः स्मितं मनोहारि जयत्यमुष्याः ॥ ५७ ॥

स्मितं वर्णयति। मन्मथवारणस्य मदस्रुतिः मुखस्य चन्द्रमसः ज्योत्स्नाङ्कुरः सौभाग्यपीयूषसरित्तरङ्गः मनोहारि अमुष्याः स्मितं जयति॥ वारणः–गजः। मदस्रुतिः–मदजलप्रवाहः। पीयूषसरित्–अमृतनदी ॥ ५७ ॥

अश्रान्तमन्धङ्करणी जनानां दन्ताग्रनग्नङ्करणी क्रियास्याः ।
चित्रं तथाऽप्युज्झति नैव साम्यं ज्योत्स्नाभिराढ्यङ्करणी मुखेन्दोः ॥ ५८ ॥

स्मितस्य चन्द्रिकया साम्यमाविष्करोति। अस्याः दन्ताग्रनग्नङ्करणी क्रिया अश्रान्तं जनानाम् अन्धङ्करणी (भवति)। तथा अपि मुखेन्दोः आढ्यङ्करणी (सती) ज्योत्स्नाभिः साम्यं न एव उज्झति। चित्रम्॥ दन्ताग्राणां नग्नङ्करणी–प्रकाशिका। क्रिया–कर्म। मन्दहासः इत्यर्थः। अश्रान्तम्–सर्वदा। अन्धङ्करणी–अन्धताम्–मोहं जनयन्ती। कामान्धतां जनयन्ती इति भावः। आढ्यङ्करणी–आढ्यताम्–धनिकतां जनयन्ती। कान्तिमावहन्ती इति भावः। ज्योत्स्नाभिः–चन्द्रिकाभिः। उज्झति–त्यजति। चित्रम्–आश्चर्यम् ॥ ५८ ॥

अयं विशेषः दरमद्भुताङ्ग्याः कपोलभित्तेर्मुकुरस्य भित्तात् ।
गृह्णाति रूपं यदि तत् परेषामेषा तु चेतोऽपि निरस्तदोषा ॥ ५९ ॥

कपोलं वर्णयति। अद्भुताङ्ग्याः कपोलभित्तेः, मुकुरस्य भित्ताद् अयं परं विशेषः। तत् परेषां रूपं यदि गृह्णाति, (तर्हि) निरस्तदोषा एषा तु (परेषां) चेतः अपि (गृह्णाति)॥ मुकुरस्य–दर्पणस्य। भित्तात्–खण्डात्। परम्–केवलम्। विशेषः–भेदः। तद्–दर्पणखण्डम्। परेषाम्–अन्येषाम्। एषा–कपोलभित्तिः ॥ ५९ ॥

**फालेन बालो विजितः सुधांशुर्वक्त्रेण वृद्धश्च वराङ्गनायाः ।**
**का ख्यातिरत्रेति कपोलभागस्तं मध्यमं लक्षयते जयस्य ॥ ६० ॥**

कपोलस्य अर्धचन्द्रसादृश्यं प्रकाशयति । वराङ्गनायाः फालेन बालः सुधांशुः विजितः । वक्त्रेण वृद्धः च (सुधांशुः विजितः) । अत्र का ख्यातिः इति कपोलभागः मध्यमं त जयस्य लक्षयते ॥ फालेन–ललाटेन । वृद्धः–पूर्णः । अत्र–बालवृद्धजये । ख्यातिः–कीर्तिः । मध्यमम्–मध्यवयस्कम् । युवानमिति भावः । तम्–सुधांशुम् । लक्षयते–लक्ष्यं करोति ॥ ६० ॥

**कर्णोऽयमर्णोजविलोचनायाः स्वर्णारविन्देन वतंसनीयः ।**
**निर्णूयते कैरिव वर्णरूपैर्निर्णीयते वा कथमस्य लक्ष्मीः ॥ ६१ ॥**

कर्णं वर्णयति । अर्णोजविलोचनायाः स्वर्णारविन्देन वतंसनीयः अयं कर्णः वर्णरूपैः कैः इव निर्णूयते ? ; अस्य लक्ष्मीः कथं वा निर्णीयते ? ॥ अर्णोजम्–पद्मम् । वतंसनीयः–अलङ्करणीयः । कैः–कतमैः । वर्णरूपैः–अक्षरात्मकैः पदैः । शुक्लादिवर्णैः पुष्पाद्याकारैश्च । निणूयते–स्तूयते । अस्य–कर्णस्य । लक्ष्मीः–कान्तिः । निर्णीयते–एतावती इति निश्चीयते ॥ ६१ ॥

**अस्याः स्फुटं मन्मथतन्महिष्योः केलीतटाकौ श्रुतिरन्ध्रभागौ ।**
**तदीयतीरोपवनीनिबद्धे किं कर्णपाशौ च सुवर्णदोले ॥ ६२ ॥**

कर्णरन्ध्रौ कर्णपाशौ च वर्णयति । अस्याः श्रुतिरन्ध्रभागौ मन्मथतन्महिष्योः केलीतटाकौ, स्फुटम् । कर्णपाशौ च, तदीयतीरोपवनीनिबद्धे सुवर्णदोले किम् ? ॥ श्रुत्योः–कर्णयोः रन्ध्रभागौ । मन्मथतन्महिष्योः–कामस्य रतेश्च । तदीययोः–केलीतटाकसम्बन्धिनोः तीरयोः ये उपवन्यौ–उद्याने, तत्र निबद्धे । दोले–प्रोङ्खे ॥ ६२ ॥

**एतद्भुजाकोटिकृतेः पुरस्तादुद्भाव्य कर्णं शतपत्रयोनिः ।**
**न सम्यगासीदिति कुण्डलेन किं योजयामास मृषाविशङ्की ॥ ६३ ॥**

कुण्डलं वर्णयति। शतपत्रयोनिः एतद्भुजाकोटिकृतेः पुरस्ताद् कर्णम् उद्भाव्य सम्यक् न आसीद् इति मृषाविशङ्की किं, कुण्डलेन योजयामास॥ एतस्याः भुजाकोटेः–बाह्वग्रस्य कृतेः–निर्माणात्। भुजायाः कोटेश्च निर्माणाच्च। पुरस्तात्–पूर्वम्। कर्णम्–श्रोत्रम्–कर्णाख्यरेखां च। उद्भाव्य–निर्माय। सम्यक्–साधु। मृषाविशङ्की–असत्यशङ्कावान्। भ्राम्यन् इत्यर्थः। कुण्डलेन–कर्णवेष्टनेन, कुण्डलनाख्यरेखया च॥ क्षेत्रगणिते ऊर्ध्वरेखायाः कोटिरिति, तिर्यग्रेखायाः भुजा इति कोट्यग्राद् भुजाग्रपर्यन्तं क्रियामाणाया रेखायाः कर्णः इति च संज्ञाः प्रसिद्धाः। भुजाकोटिप्रमाणनिर्णयानन्तरमेव कर्णप्रमाणनिर्णयः कर्तुं शक्यते। तदेवं भुजाकोटिकरणात् पूर्वं कर्णोद्भावने असाधुत्वम् असाधोर्वर्णस्य कुण्डलनाख्यरेखया आवरणं लिपिविन्याससम्प्रदायसिद्धम् ॥ ६३ ॥

**किञ्चिन्नमत्कोमलध्यभागं क्रियासु भर्तुः करलालनीयम्।**
**आवापलीलामधुराङ्कुरस्य बिभर्ति तन्व्याश्चिबुकं मनोज्ञम् ॥ ६४ ॥**

चिबुकं वर्णयति। किञ्चिन्नमत्कोमलमध्यभागं क्रियासु भर्तुः करलालनीयं मनोज्ञं तन्व्याः चिबुकम् अधराङ्कुरस्य आवापलीलां बिभर्ति॥ किञ्चिद् नमन् कोमलः मध्यभागः यस्य, तादृशम्। चिबुकम्–ओष्ठाधोभागः। अधरः एव अङ्कुरः, तस्य। आवापः–आलवालम्, तस्य लीलाम्–विलासम् ॥ ६४ ॥

**इदं सुदत्याः सुकृतैकलभ्य लेखाधिरूढाधरमध्यभागम्।**
**अनेकविद्याधरमास्यबिम्बं साक्षादिह स्वर्ग इवावतीर्णः ॥ ६५ ॥**

सीतामुखस्य श्लेषभङ्ग्या स्वर्गसाम्यमापादयति। सुकृतैकलभ्यं लेखाधिरूढाधरमध्यभागम् अनेकविद्याधरम इदं सुदत्याः आस्यबिम्बम्, इह अवतीर्णः साक्षात् स्वर्गः इव (भवति)॥ लेखाया अधिरूढः अधरस्य ओष्ठस्य मध्यभागः यस्मिन्, तादृशम्। लेखैः–देवैः अधिरूढौ अधरमध्यभागौ–अधोमध्यप्रदेशौ यस्मिन्, तादृशमिति च। अनेकाः विद्याः धरतीति–अनेकविद्याधरम्। अनेके विद्याधराः–देवयोनिविशेषाः यस्मिन्, तादृशमिति च। इह–भूमौ ॥ ६५ ॥

**अब्जे उभे च श्रितपुष्करान्ते दिनेश्वरालोकविवर्धिताङ्गे।**
**अस्या मुखस्य श्रियमाप्तुकामे व्यक्तं भजेते वरदौ हरीशौ ॥ ६६ ॥**

मुखस्य चन्द्रसाम्यं पद्मसाम्यं चाह। श्रितपुष्करान्ते दिनेश्वरालोकविवर्धिताङ्ग उभे च अब्जे, अस्याः मुखस्य श्रियम् आप्तुकामे वरदौ हरीशौ भजेते। व्यक्तम्॥ श्रितः—सेवितः पुष्करान्तः—जलप्रदेशः आकाशप्रदेशश्च याभ्याम्, तादृशे। दिनेश्वरस्य—सूर्यस्य आलोकेन—प्रकाशेन वर्धितानि अङ्गानि ययोः तादृशे। अब्जं—पद्मं च अब्जः—चन्द्रश्च अब्जे। 'नपुं-सकमनपुंसकेन' इत्येकशेषः। अस्याः—सीतायाः। हरिः—विष्णुश्च ईशः—शिवश्च—हरीशौ। हरेर्हस्तम् ईशस्य शिरश्चेति भावः। यतः शङ्खचक्रगदापद्मधारी हरिः, चन्द्रशेखरश्च ईशः॥ ६६॥

**एतन्मुखस्पर्धितया शशाङ्कः शङ्के कलङ्केन मलीमसश्रीः।**
**महीयसां स्पर्धनमाचरन्तः के नाम लोके न कलङ्कवन्तः॥ ६७॥**

चन्द्रस्य कलङ्कोदये सीतामुखस्पर्धा हेतुत्वेनोत्प्रेक्षते। शशाङ्कः एतन्मुखस्पर्धितया कलङ्केन मलीमसश्रीः (अभवत् इति) शङ्के। लोके महीयसां स्पर्धनं आचरन्तः के नाम कलङ्कवन्तः न (भवन्ति)॥ कलङ्केन—अङ्केन, अपवादेन च। मलीमसश्रीः—मलिनकान्तिः। महीयसाम्—महत्तराणाम्॥ ६७॥

**कृपाविहीनं कमलाभिभूतौ मुग्धेक्षणाया मुखमाकलय्य।**
**तत्रास यत् सापि मुकुन्दकान्ता तत् किंवदन्ती चपलेति तस्याः॥ ६८॥**

मुखलक्ष्मीं निर्दिशति। मुग्धेक्षणायाः मुखं, कमलाभिभूतौ कृपाविहीनम् आकलय्य मुकुन्दकान्ता सा अपि यत् तत्र आस, तत् तस्याः चपला इति किंवद ती (अभवत्)॥ कमलस्य—पद्मस्य, कमलायाः—लक्ष्म्याश्च अभिभूतौ—पराभवे। आकलय्य—ज्ञात्वा। सा—कमला। तत्र—तन्मुखे। यत्—यस्मात्। आस—दिदीपे। असगतिदीप्त्यादानेषु इति भ्वादौ। तत्—तस्माद्। तस्याः—कमलायाः। चपला—अस्थिरा। किंवदन्ती—जनश्रुतिः॥ ६८॥

**विलोक्य धात्रा विजितं मुखेन स्ववासपङ्केरुहमप्यमुष्याः।**
**क्रोधेन किं कुण्डलनास्य चक्रे नवप्रभामण्डलकैतवेन॥ ६९॥**

मुखप्रभामण्डलं वर्णयति   धात्रा, स्ववासपङ्केरुहम् अपि अमुष्याः मुखेन विजितं विलोक्य क्रोधेन किम्, नवप्रभामण्डलकैतवेन अस्य कुण्डलनां चक्रे ॥ अस्य–मुखस्य। कुण्डलना–परितो वृत्ताकाररेखा ॥ ३९ ॥

भ्रूवैजयन्तीलसदक्षिमीनध्वजं चलत्कुण्डलचक्रयुग्मम् ।
नासाग्रभूषामणिहेतिचित्रं मन्ये रथं मन्मथमास्यमस्याः ॥ ७० ॥

मुखं कामरथत्वेनोत्प्रेक्षते । भ्रूवैजयन्तीलसदक्षिमीनध्वजं चलत्कुण्डलचक्रयुग्मं नासाग्रभूषामणिहेतिचित्रम् अस्याः आस्यं, मान्मथं रथं मन्ये ॥ भ्रूभ्यामेव वैजयन्तीभ्याम्–पताकाभ्यां लसन्तौ अक्षिणी एव मीनध्वजे, यस्मिन्, तादृशम्। चलन्ती कुण्डले एव चक्रयुग्मं यस्मिन्, तादृशम्। नासाग्रभूषायां यो मणिः तस्य हेतयः–ज्वालाः एव हेतयः–शस्त्राणि यस्मिन्, तादृशम् चित्रम्–वैचित्र्ययुक्त विस्मयावहं च। अस्याः–सीतायाः। आस्यम्–मुख। मान्मथम्–कामसम्बन्धिनम् ॥ ७० ॥

अस्या मुखं रत्नमयं विशङ्के यदिन्द्रनीलायितकृष्णतारम् ।
राजत्कपोलस्फटिकं रदालीमुक्ताफलं विद्रुमदन्तचेलम् ॥ ७१ ॥

मुखस्य रत्नमयत्वमुत्प्रेक्षते। यत्, इन्द्रनीलायितकृष्णतारं राजत्कपोलस्फटिकं रदालीमुक्ताफलं विद्रुमदन्तचेलं (च भवति, तद्) अस्याः मुखं रत्नमयं विशङ्के ॥ यद्–(मुखम्)। इन्द्रनीलायिता–इन्द्रनीलरत्नसदृशी कृष्णा तारा–कनीनिका यस्मिन्, तादृशम्। राजन् स्फटिकासदृशकपोलः यस्मिन्, तादृशम्। रदाली–दन्तपङ्क्तिः मुक्ताफलानीव यस्मिन्, तादृशम्। विद्रुमः–प्रवालः इव दन्तचेलम्–अधरः यस्मिन्, तादृशम् ॥ ७१ ॥

सत्पत्रवल्लिस्फुटगण्डमस्य वक्त्रं विराजत्तिलकश्रिताभ्रम् ।
उद्यद्द्विजश्रेणिरुचि स्मरस्य क्रीडावनं भूरिसुमाभिरामम् ॥ ७२ ॥

मुखस्य कामकेलीवनत्वमारोपयति। सत्पत्रवल्लिस्फुटगण्डं विराजत्तिलकश्रिताभ्रम् उद्यद्द्विजश्रेणिरुचि भूरिसुमाभिरामम् अस्याः वक्त्रं स्मरस्य क्रीडावनं (भवति)॥ सत्या–प्रशस्तया पत्रवल्ल्या–पत्रलताख्यप्रसाधनेन स्फुटाः–प्रकटाः गण्डाः–खड्गिनामकमृगविशेषाः यस्मिन्,

तत्–स्फुटगण्डम्। सत्पत्रवल्लि च तत् स्फुटगण्डं चेति विशेषणोभयपदकर्मधारयः। विराजन्ती तिलकस्य श्रीः यस्मिन्, तादृशं च तद् (अधरे) ताम्रं–रक्तवर्णं चेति। पूर्ववत् कर्मधारयः। क्रीडावनपक्षे–विराजत्तिलकं च तत् श्रिताम्रं चेति कर्मधारयः। विराजन्तः तिलकाः–तदाख्य-वृक्षविशेषाः यस्मिन्, तद् विराजत्तिलकम्। श्रिताः सेविताः आम्राः–चूताः यस्मिन्, तत् श्रिताम्रम्। उद्यती द्विजश्रेणेः–दन्तपङ्क्तेः रुचिः यस्मिन्, तादृशम्। क्रीडावनपक्षे, द्विजाः–पक्षिणः। भूर्या–प्रचुरया शोभनया मया–लक्ष्म्या अभिरामम्। पक्षान्तरे भूरिभिः सुमैः–पुष्पैः अभिरामम्। अस्याः–सीतायाः। स्मरस्य–कामस्य ॥ ७२ ॥

**वाग्भङ्गिभेदैर्बहुभिः किमेभिः प्राप्येतरैस्तद्गुणपूरवारैः।**
**आप्तान्त्यकक्ष्यो जगदीक्षणानां आनन्द एवाननमायताक्ष्याः ॥७३॥**

मुखवर्णनमुपसंहरति। एभिः बहुभिः वाग्भङ्गिभेदैः किम्। आयताक्ष्याः आननं, प्राप्येतरैः तद्गुणपूरवारैः जगदीक्षणानाम् आप्तान्त्यकक्ष्यः आनन्द एव॥ प्राप्येतरैः–अप्राप्यैः। दुर्लभैरित्यर्थः। तस्य–मुखस्य गुणानां ये पूराः–प्रवाहाः, तेषां वारैः–समूहैः। जगति यानि ईक्षणानि–नेत्राणि, तेषाम्। आप्ता अन्त्यकक्ष्या–परमकाष्ठा येन तादृशः। आनन्दः–आनन्दहेतुः। कारणे कार्यत्वारोपः। परमानन्दजनकमिति भावः ॥ ७३ ॥

**निजाङ्कवाणीकरपद्मवीणाक्वाणानुपादाय निधाय कम्बौ।**
**तेनैव नूनं विततान तन्व्या विधिः शिरोधिं विशदत्रिरेखम् ॥७४॥**

ग्रीवां वर्णयति। विधिः, निजाङ्कवाणीकरपद्मवीणाक्वाणान् उपादाय कम्बौ निधाय तेन एव नूनं विशदत्रिरेखं तन्व्याः शिरोधिं विततान॥ विधिः–ब्रह्मा। निजे अङ्के–उत्सङ्गे या वाणी, तस्याः क्वाणान्–नादान्। उपादाय–गृहीत्वा। कम्बौ–शङ्खे। निधाय-निक्षिप्य। तेन–शङ्खेन। विशदाः–व्यक्ताः तिस्रः रेखाः यस्मिन्, तादृशम्। शिरोधिम्–ग्रीवाम्। विततान–सृष्टवान्। कण्ठे शङ्खे चास्ति रेखात्रितयम् ॥ ७४ ॥

**यः शङ्खभावाद् भवति प्रधानं मनोजपूजाविधिसाधनेषु।**
**कण्ठः स नास्याः परिपूर्यते किं सारस्वतैः साधु रसप्रवाहैः ॥७५॥**

कण्ठस्य काव्यरसपूर्णतामाह । यः शङ्खभावात् मनोजपूजाविधिसाधनेषु प्रधानं भवति, सः अस्याः कण्ठः सारस्वतैः रसप्रवाहैः साधु किं न पूर्यते ? ॥ यः—कण्ठः । मनोजः—कामः । सारस्वतैः—काव्यसम्बन्धिभिः । रसप्रवाहैः—शृङ्गारादिरसप्रवाहैः, जलप्रवाहैश्च । किं न पूर्यते ?—पूर्यत एवेत्यर्थः । पूजासाधनेषु शङ्खः प्रधानम् । तत्र प्रथमं तु कृत्यं शङ्खपूरणमिति सम्प्रदायः ॥ ७५ ॥

**कन्दर्पदर्पद्विरदेन्द्रबन्धः कण्ठस्थले मङ्गलसूत्रबन्धः ।**
**आभाति सौभाग्यविशेषलब्धसाम्राज्यभोगोचितपट्टबन्धः ॥ ७६ ॥**

मङ्गलसूत्रं वर्णयति । कन्दर्पदर्पद्विरदेन्द्रबन्धः कण्ठस्थले मङ्गलसूत्रबन्धः, सौभाग्यविशेषलब्धसाम्राज्यभोगोचितपट्टबन्धः आभाति ॥ कन्दर्पः—कामः एव यो दर्पद्विरदेन्द्रः—मत्तगजाधिपतिः, तस्य बन्धः—बन्धनरज्जुः । सौभाग्यविशेषेण लब्धं यत् साम्राज्यं, तस्य भोगे—पालने उचितः पट्टबन्धः—राजचिह्नधारणम् । आभाति—दीप्यते ॥ ७६ ॥

**अस्याः कुचौ किं नवहेमकुम्भौ किं पद्मकोशाविति नेत्रभाजाम् ।**
**सन्देहदाने न हि संदिहाते सन्देहलेशोऽपि न विद्यते नः ॥ ७७ ॥**

कुचौ वर्णयति । अस्याः कुचौ, (इमौ) किं नवहेमकुम्भौ, किं पद्मकोशौ इति सन्देहदाने न हि सन्दिहाते । नः सन्देहलेशः अपि न विद्यते ॥ सन्देहदाने—संशयजनने । सन्दिहाते—संशयं कुरुतः । नः—अस्माकम् ॥ ७७ ॥

**एतत्कुचस्पर्धि गतर्द्धि तालं भिया चलोदग्रकुटाग्रमागात् ।**
**प्रपातपातात् प्रयतं पुनस्तत् प्रयाति सायुज्यमिवेदमीयम् ॥ ७८ ॥**

कुचस्य तालफलत्वमुत्प्रेक्षते । एतत्कुचस्पर्द्धि तालं गतर्द्धि (सत्) भिया अचलोदग्रकुटाग्रम् आगात् । पुनः प्रपातपातात् प्रयतं तत् इदमीयं सायुज्यं प्रयाति इव ॥ तालम्—तालफलम् । गता ऋद्धि—ऐश्वर्यं यस्य, तादृशम् । अचले—पर्वते उदग्रः—उन्नतः यः कुटः—

वृक्षः, तस्य अग्रम्। आगात्—आरूढम्। प्रपाते—पर्वतभृगौ पातात्—पतनात्। प्रयतम्—पूतम्। तन्—तालम्। इदमीयम्—एतत्कुचसम्बन्धि। सायुज्यम्—ऐक्यम्। मुनयो भृगुपतनेन ध्वस्तपापाः भगवत्सायुज्यं गच्छन्तीत्यार्षः सम्प्रदायः ॥ ७८ ॥

**विलीनगाङ्गेयघटीदमीयस्तनोपमानं क्रियते कथं वा ।**
**अन्तर्विसारा खलु सा विगन्धाप्येतौ तु सारौ च सगन्धसारौ ॥७९॥**

स्तनयोः स्वर्णघटापेक्षया उत्कृष्टतां समर्थयति। विलीनगाङ्गेयघटी कथं वा इदमीयस्तनोपमानं क्रियते? सा खलु अन्तः विसारा विगन्धा अपि। एतौ तु सारौ सगन्धसारौ च॥ विलीनं यद् गाङ्गेयम्—स्वर्णम् तस्य घटी। सा—घटी। विसारा—स्थिरांशरहिता। विगन्धा—गन्धरहिता। एतौ—स्तनौ। सारौ—श्रेष्ठौ, अन्तः सारवन्तौ च। सगन्धसारौ—गन्धसारेण—चन्दनेन सहितौ, उत्कृष्टगन्धवन्तौ च ॥ ७९ ॥

**मुदां सदेदं कुचचक्रवाकद्वन्द्वं पदं राजदनन्तरत्नम् ।**
**बिधौ मुखाख्ये सविधस्थितेऽपि वियोगभाङ् नैव च चित्रमेतत् ॥ ८० ॥**

स्तनद्वयस्य चक्रवाकद्वन्द्वाद्भेदं दर्शयति। राजदनन्तरत्नम् इदं कुचचक्रवाकद्वन्द्वं, सदा मुदां पदम्, मुखाख्ये विधौ सविधस्थिते अपि वियोगभाक् न एव च। एतत् चित्रम्॥ राजन्ति अनन्तानि रत्नानि यस्मिन्, तादृशम्। राजत् अनन्तरत्नम्—सूर्यः यस्मिन्, तादृशं च। मुदाम्—प्रीतीनाम्। पदम्—स्थानम्। विधौ—चन्द्रे। वियोगम्—विरहं भजत इति वियोगभाक्। चित्रम्—आश्चर्यम्। चक्रवाकौ खलु निशायां वियोगं भजतः। स्तनौ तु सर्वदा संयुक्तौ ॥ ८० ॥

**रोमावलीदण्डधरः कुलालस्तारुण्यनामा तपनीयपङ्कैः ।**
**कृतप्रभाचक्रपरिभ्रमः किं चक्रे कृशाङ्ग्याः कुचकुम्भयुग्मम् ॥८१॥**

कुचयोः कुम्भयुग्मत्वमुत्प्रेक्षते, रूपकपरम्परामवलम्ब्य। रोमावलीदण्डधरः तारुण्यनामा कुलालः कृतप्रभाचक्रपरिभ्रमः (सन्) तपनीयपङ्कैः कृशाङ्ग्याः कुचकुम्भयुग्मं चक्रे किम्॥

रोमावलीमेव दण्डं धरतीति यथा। कुलालः–कुम्भकारः। प्रभाणां चक्रम्–मण्डलमेव यत् चक्रम्–कुम्भनिर्माणसाधनचक्रम्, तस्य परिभ्रमः–भ्रमणं कृतो येन, तादृशः। तपनीयैः–स्वर्णैरेव पङ्कः–मृत्तिकामयैः कर्दमैः। चक्रे–कृतवान्॥ कुलालो दण्डेन चक्रभ्रमणं कृत्वा मृत्पङ्केन कुम्भं करोतीति प्रसिद्धम् ॥ ८१ ॥

**लावण्यसिन्धोरुदितौ मृगाक्ष्याः सुजातपत्रावलिराजमानौ ।**
**मन्ये कुचौ मित्रकरोपसङ्गादाभोगभाजावरविन्दकोशौ ॥८२॥**

कुचयोः पद्मकोशत्वमुत्प्रेक्षते। लावण्यसिन्धोः मृगाक्ष्याः उदितौ सुजातपत्रावलिराजमानौ मित्रकरोपसङ्गाद् आभोगभाजौ कुचौ अरविन्दकोशौ मन्ये॥ लावण्यसिन्धोः–लावण्यनद्याः। सुजातौ-सुन्दरौ च पत्रावल्या–पत्रलेखाख्यप्रसाधनविशेषेण, दलपङ्क्त्या च विराजमानौ च। मित्रस्य–सुहृदः प्रियस्य, सूर्यस्य च करस्य–हस्तस्य, रश्मेश्च उपसङ्गाद्–योगात्। आभोगम्–परिपूर्णतां भजतः इति तथा ॥ ८२ ॥

**नतभ्रुवो विभ्रमचङ्क्रमेषु स्तनौ चलच्चूचुकतां दधानौ ।**
**अभ्यस्यतो द्रष्टुरिवोपदेष्टुं गुरू शिरःकम्पनमात्मनैव ॥८३॥**

स्तनकम्पं वर्णयति। विभ्रमचङ्क्रमेषु चलच्चूचुकतां दधानौ गुरू नतभ्रुवः स्तनौ, द्रष्टुः शिरःकम्पनम् उपदेष्टुम् आत्मना एव अभ्यस्यतः इव॥ विभ्रमचङ्क्रमेषु- विलासगतिषु। चलन्ती चूचुके–कुचाग्रे ययोस्तौ–चलच्चूचुकौ, तयोर्भावं तत्ताम्। गुरू–पृथुलौ, उपदेष्टारौ च। आत्मना–स्वयम्। अभ्यस्यतः–अभ्यासं कुरुतः ॥ ८३ ॥

**सहैव जातौ सततं सहैव पीनौ स्तनौ मीनविलोचनायाः ।**
**अहो सुहृद्भावमपास्य दूरं परस्परं पीडयतः किमन्यत् ॥८४॥**

सहजयोः स्तनयोः परस्परोत्पीडनं वर्णयति। सह एव जातौ सततं सह एव पीनौ मीनविलोचनायाः स्तनौ, सुहृद्भावं दूरम् अपास्य परस्परं पीडयतः। अहो! अन्यत् किं (वदामि)?॥ पीनौ–वृद्धिं गतौ। सुहृद्भावम्–मैत्रीम्। अपास्य–त्यक्त्वा। अहो–कष्टम् ॥ ८४ ॥

**अन्योन्ययोग्यायतपीवभावौ बाहू इमौ बाहुजवंशजायाः ।**
**पयोधरक्ष्माधरपार्श्वजाते दूरप्रवाहे इव निम्नगे द्वे ॥ ८५ ॥**

बाहू वर्णयति। अन्योन्ययोग्यायतपीवभावौ इमौ बाहुजवंशजायाः बाहू, पयोधरक्ष्माधरपार्श्वजाते द्वे निम्नगे इव (भवतः)॥ अन्योन्ययोग्यौ—परस्परानुरूपौ आयतपीवभावौ—दीर्घत्वस्थूलत्वे ययोः, तादृशौ। बाहुजवंशजायाः—क्षत्रियकुलजातायाः सीतायाः। पयोधरौ—स्तनौ एव यौ क्ष्माधरौ—पर्वतौ तयोः पार्श्वजाते। निम्नगे—नद्यौ ॥ ८५ ॥

**अग्रस्थितश्रीकरपुष्करत्वादस्या भुजौ लब्धमृणालभावौ ।**
**प्रकाशयेते निजवल्लभस्य कण्ठावलम्बेषु सकण्टकत्वम् ॥ ८६ ॥**

करयोः पद्मत्वं भुजयोः मृणालत्वं चापादयति। अग्रस्थितश्रीकरपुष्करत्वाद् लब्धमृणालभावौ अस्याः भुजौ निजवल्लभस्य कण्ठावलम्बेषु सकण्टकत्वं प्रकाशयेते॥ अग्रे स्थितौ श्रीयुक्तौ करौ एव पुष्करे ययोः तौ—अग्रस्थितश्रीकरपुष्करौ, तयोर्भावस्तत्त्वं, तस्मात्। लब्धः मृणालभावः—बिसत्वं ययोः, तादृशौ। भुजौ—बाहू। सकण्टकत्वम्—रोमाञ्चसहितत्वम् सूच्यग्रसहितत्वं च॥ ८६ ॥

**कुशेशयेभ्यः करभागमुष्याः शयस्तथैव द्रुमपल्लवेभ्यः ।**
**उदीर्यते तत् कर इत्यशेषैरन्त्यस्य लोपादथवोपचरात् ॥ ८७ ॥**

करस्य करसंज्ञालाभे कारणमुन्नयति। अमुष्याः शयः कुशेशयेभ्यः करभाक्। तथा एव द्रुमपल्लवेभ्यः (करभाक्)। तद् अन्त्यस्य लोपाद्, अथवा उपचारात् करः इति अशेषैः उदीर्यते॥ शयः—करः। कुशेशयेभ्यः—पद्मेभ्यः। करम्—राजग्राह्यभागं भजतीति करभाक्। तद्—तस्मात्। अन्त्यस्य—भाक्शब्दस्य। उपचारात्—करभाजि करत्वारोपात्। करभाक्त्वमेव करसंज्ञालाभे हेतुरित्यर्थः। पद्मपल्लवसदृशौ करौ इति भावः॥ ८७ ॥

**पाणिद्वयं पङ्कजलोचनायाः शाणभ्रमं चेतसि नस्तनोति ।**
**शोणश्रियं बिभ्रदिदं जपादिबाणप्रकाषादिव मन्मथस्य ॥ ८८ ॥**

पाणौ कामबाणनिकषत्वमुत्प्रेक्षते। मन्यथस्य जपादिबाणप्रकाशाद् इव शोणश्रियं बिभ्रत् इदं पङ्कजलोचनायाः पाणिद्वयं नः चेतसि शाणभ्रमं तनोति॥ जपादिपुष्पाण्येव बाणाः, कामस्य पुष्पबाणत्वात्, तेषां प्रकाषात्—कषणात्। शोणश्रियम्—रक्तकान्तिम्। शाणभ्रमम्—निकषोपलबुद्धिम्। तनोति—करोति॥

नखेन्दुखण्डावलिमण्डिताभिः पञ्चायुधः पञ्चभिरङ्गुलीभिः।
अस्याः समस्तं जयतीह लोकं मुधापवादः कमलादिकेषु ॥८९॥

कराङ्गुलीषु कामशरत्वमारोपयति। पञ्चायुधः नखेन्दुखण्डावलिमण्डिताभिः अस्याः पञ्चभिः अङ्गुलीभिः इह समस्तं लोकं जयति। कमलादिकेषु अपवादः मुधा॥ पञ्चायुधः—पञ्चशरवान् कामः। नखाः एव इन्दुखण्डाः—चन्द्रशकलाः, तेषाम् आवलिभिः—पङ्क्तिभिः भूषिताभिः। मुधा—वृथा। सीतायाः पञ्च अङ्गुल्यः एव कामस्य पञ्च शराः, न कमलादीनि पञ्चपुष्पाणीति भावः॥८९॥

निसर्गरक्ता निभृतान्तरालाः स्निग्धत्विषः कोमलभावरम्याः।
नखेन्दुभासाङ्गुलयोऽङ्गनायाः स्फुटं हसन्तीव नवप्रवालान् ॥९०॥

करनखकान्तिं वर्णयति। निसर्गरक्ताः निभृतान्तरालाः स्निग्धत्विषः कोमलभावरम्याः अङ्गनायाः अङ्गुलयः नखेन्दुभासा नवप्रवालान् स्फुटं हसन्ति इव॥ निभृतम्—ग्रथितम् अन्तरालम्—अभ्यन्तरम् यासाम्, ताः। स्निग्धा त्विट्—कान्तिः यासां ताः। नखेन्दुभासा—नखचन्द्रकान्त्या। स्फुटम्—स्पष्टम्॥९०॥

विलासिनीलोकजयप्रशस्तिवर्णावलीवोल्लिखिता विधात्रा।
विराजते रोमलता नताङ्ग्या मध्यस्थलीकाञ्चनपट्टिकायाम् ॥९१॥

रोमावलिं वर्णयति। नताङ्ग्याः रोमलता, मध्यस्थलीकाञ्चनपट्टिकायां विधात्रा उल्लिखिता विलासिनी लोकजयप्रशस्तिवर्णावली इव विराजते॥ मध्यस्थली—मध्यभागः एव

काञ्चनपट्टिका, तस्याम्। विधात्रा—ब्रह्मणा। विलासिनीलोकस्य—सुन्दरीजनस्य जये या प्रशस्तिः, तस्याः वर्णावली—अक्षरपङ्क्तिः। विराजते—शोभते ॥ ९१ ॥

**पृथुस्तनेभ्यः पृथुरोमदृष्टेरस्याः सरस्या नतनाभिनाम्नः।**
**स्वकेतुमादातुमिवान्तरास्थल्लोमावलीश्यामलदाम कामः ॥ ९२ ॥**

रोमावलिं नाभिं च वर्णयति। पृथुस्तनेभ्यः कामः पृथुरोमदृष्टेः अस्याः नतनाभिनाम्नः सरस्याः स्वकेतुम् आदातुम् इव लोमावलीश्यामलदाम अन्तः आस्थत्॥ पृथुस्तनाः—पृथुरुस्तन्यः सुन्दर्यः, तासाम् इभ्यः—स्वामी। युवतीजननायकः इत्यर्थः। पृथुरोमा—मत्स्यः। पृथुरोमदृष्टेः—मीनलोचनायाः। अस्याः—सीतायाः। नतनाभिनाम्नः—निम्ननाभिनामधेयायाः। सरस्याः—कासारात्। स्वकेतुम्—निजध्वजरूपं मत्स्यम्। आदातुम्—ग्रहीतुम्। लोमावली—रोमलता एव श्यामलदाम—मत्स्यग्रहणार्थं नीलसूत्रम्। अन्तः—सरसोऽन्तर्भागे। आस्थत्—अस्यति स्म क्षिप्तवानित्यर्थः ॥ ९२ ॥

**त्रिदामभिर्हेममयैरमुष्या बध्यानि मध्ये मकरध्वजेन।**
**अपि त्रिलोकीजनमानसानि प्रत्येकमित्येव वयं प्रतीमः ॥ ९३ ॥**

त्रिवलिं वर्णयति। अमुष्याः मध्ये हेममयैः त्रिदामभिः मकरध्वजेन त्रिलोकीजनमानसानि अपि प्रत्येकं बध्यानि इति एव वयं प्रतीमः॥ मध्ये—अवलग्ने। हेममयैः—स्वर्णरचितैः। त्रिदामभिः—तिसृभिः रज्जुभिः। प्रत्येकम्—एकस्मिन् एकस्मिन्। बद्धयानि—बन्धुं शक्यानि। एकैकेन दाम्ना ऐकैकलोकजनमानसानि बन्धुं शक्यन्ते इति भावः। प्रतीमः—विश्वसिमः ॥ ९३ ॥

**नाभीसरस्तीरविहारभूमेरुत्तुङ्गवक्षःस्थलमारुरुक्षोः।**
**निःश्रेणिकाश्रेणिरिवाङ्गयोनेर्वलित्रयी भाति विलासवत्याः ॥ ९४ ॥**

त्रिवलिमेव भङ्ग्यन्तरेण वर्णयति। विलासवत्याः वलित्रयी, नाभीसरस्तीरविहारभूमेः उत्तुङ्गं वक्षस्थलम् आरुरुक्षोः अङ्गयोनेः निश्रेणिकाश्रेणिः इव भाति॥ नाभी एव यत् सरः

तस्य तीरे या विहारभूमिः—क्रीडास्थानम्, ततः। आरुरुक्षोः—आरोढुम् इच्छोः। अङ्गयो नेः—कामस्य। निःश्रेणिकाश्रेणिः—सोपानपङ्क्तिः। भाति—शोभते ॥ ९४ ॥

**अस्योदरस्य श्रियि लोलभावः स्वपल्लवानामिति सर्वलोकान्।**
**बोधिद्रुमत्वादवबोधयन्तं जानेतरां तं चलपत्रवन्तम् ॥ ९५ ॥**

उदरस्य अश्वत्थपत्रसाम्यं विवृणोति। अस्य उदरस्य श्रियि लोलभावः स्वपल्लवानाम् इति सर्वलो कान् बोधिद्रुमत्वाद् अवबोधयन्तं चलपत्रवन्तं (सन्तम्) तं जानेतराम् ॥ अस्य—सीतासम्बधिनः। श्रियि—कान्तौ। लोलभावः—सतृष्णत्वम्, चञ्चलता च। बोधिद्रुमत्वाद्—बोधनशीलवृक्षत्वाद्। चलपत्रवन्तम्—चञ्चलदलवत्तवम्। तम्—बोधिद्रुमम्। जानेतराम्—अहम् अतिशयेन जानामि। 'बोधिद्रुमश्चलदलः' इत्यश्वत्थपर्यायेऽमरः ॥ ९५ ॥

**मध्यं विधेः सृष्टवतो मृगाक्ष्याः स्रष्टुं पुनर्द्वे न पृथक्प्रयासः।**
**भूतस्य भूतेशकचस्य पुष्पं तुङ्गं च शृङ्गं शशिलाञ्छनस्य ॥ ९६ ॥**

मध्यस्य कृशत्वं वर्णयति। मृगाक्ष्याः मध्यं सृष्टवतः विधेः पुनः स्रष्टुं पृथक् प्रयासः न। भूतेशकचस्य भूतस्य पुष्पम्, शशिलाञ्छनस्य तुङ्गं शृङ्गं च॥ मृगाक्ष्याः—सीतायाः। मध्यम्—उदरम्। विधेः—ब्रह्मणः। प्रयासः—प्रयत्नः। ते के इत्याह भूतस्येति। भूतेशः—शिवः, तस्य कचस्य—केशस्य। भूतस्य—पञ्चभूतेष्वन्यतमस्य आकाशस्येत्यर्थः। व्योमकेशः खलु शिवः। शशी—चन्द्रः, तस्य यद् लाञ्छनम्—अङ्कः, तस्य, शशस्य इत्यर्थः। तुङ्गम्—उन्नतम्। शृङ्गम्—विषाणम्। यथा आकाशममूर्तम्, यथा च शशविषाणमविद्यमानं तथैव सीतायाः उदरमिति भावः ॥ ९६ ॥

**अविद्यमानं यदि मध्यमस्याः कथं नु तिष्ठत्ययमूर्ध्वभागः।**
**देवस्य बन्दीकृतशम्बरर्द्धेर्जानामि वै तादृशमिन्द्रजालम् ॥ ९७ ॥**

मध्यस्य अविद्यमानत्वमाश्रित्याह। अस्याः मध्यं यदि अविद्यमानम्, (तर्हि) अयम् ऊर्ध्वभागः कथं नु तिष्ठति? । बन्दीकृतशम्बरर्द्धेः इन्द्रजालं तादृशं वै जानामि ॥ ऊर्ध्व-

भागः–पूर्वकायः। बन्दीकृता–बलादाहृता शम्बरस्य–तदाख्यस्य असुरस्य ऋद्धिः–ऐश्वर्यं येन, तस्य। शम्बरारेः कामस्येत्यर्थः। शम्बरस्य ऐन्द्रजालिकत्वं प्रसिद्धम्। तद्वैरी कामः ततोऽपि इन्द्रजाले कुशलतरः इति भावः ॥ ९७ ॥

**कान्तिप्रवाहे कमलेक्षणाया गम्भीरमावर्तमवैमि नाभिम्।**
**विशत्यमुत्रोडुपसत्सखोऽपि यः सोऽयमन्तःशय एव नूनम् ॥ ९८ ॥**

नाभिं वर्णयति। कमलेक्षणायाः नाभिम्, कान्तिप्रवाहे गम्भीरम् आवर्तम् अवैमि। उडुपसत्सखः अपि यः अमुत्र विशति, सः अयम् अन्तश्शयः एव। नूनम् ॥ आवर्तम्–अम्भसां भ्रमम्। अवैमि–जानामि। उडुपः–चन्द्रः सत्सखः–उत्तमसुहृत् यस्य, तादृशः। काम इति भावः। चन्द्रस्य कामोद्दीपकत्वात्। उडुपम्–प्लवः सत्सखम्–उत्तमोपकरणं यस्य, तादृशमिति च। अमुत्र–कान्तिप्रवाहे। अन्तः शेते इति अन्तःशयः। अन्तर्निमग्नः इत्यर्थः। कामस्य मनसिजत्वान्मनस्येव शेते इत्यर्थः। नूनम्–तर्कयामि ॥ ९८ ॥

**पृथ्वीसुतायाः खलु युक्तमस्याः पृथ्वी नितान्तं जघनस्थली यत्।**
**इदं पुनः केन महीति शब्दः स्पृशत्यदःस्पर्शिनि मुख्यवृत्त्या ॥ ९९ ॥**

जघनं वर्णयति। पृथ्वीसुतायाः अस्याः जघनस्थली नितान्तं पृथ्वी इति यत्, (तत्) युक्तं खलु। मही इति शब्दः अदःस्पर्शिनि मुख्यवृत्त्या स्पृशति। इदं पुनः केन? ॥ पृथ्वीसुतायाः–भूमिपुत्र्याः। अस्याः–सीतायाः। पृथ्वी–पृथुला, भूमिरिति च गम्यते। महः–उत्सवः अस्य अस्तीति मही–उत्सववान्। भूमिरिति च गम्यते। अदःस्पर्शिनि–जघनस्थलीस्पर्शं कुर्वाणे। मुख्यवृत्त्या–अभिधया। न तु लक्षणयेति भावः। स्पृशति–प्रवर्तते। केन–केन कारणेन? ॥ ९९ ॥

**को वेदमालिङ्गति कोमलाङ्ग्याः श्रोणीतटं शारदसैकतश्रि।**
**हस्ताङ्घ्रिनेत्रास्यसरोजराजिर्यस्यां लसत्यूर्मिमयी च वेणी ॥ १०० ॥**

नितम्बं वर्णयति। यस्यां हस्ताङ्घ्रिनेत्रास्य सरोजराजिः ऊर्मिमयी वेणी च लसति, तस्याः कोमलाङ्ग्याः शारदसैकतश्रि इ श्रोणीतटं कः वा आलिङ्गति?। हस्तङ्घ्रिनेत्रास्य-

सरोजराजिः हस्तपद्मस्य पादपद्मस्य नेत्रपद्मस्य मुखपद्मस्य च पङ्क्तिः । ऊर्मिः–कौटिल्यं, वीचिश्च, तन्मयी । कुटिला वीचिबहुला चेति भावः । वेणी–कचः, प्रवाहश्च । लसति–शोभते, शारदसैकतस्य–शरत्कालभवस्य सिकतामयतटस्य श्रीरिव श्रीः यस्य तद् । श्रोणी–कटिः एव तटम्–तीरम् । कः–कतमः, मारुतश्च । आलिङ्गति–आश्लिष्यति ॥ १०० ॥

**आक्रम्य रम्या जघनस्थलीयं ममाधुना चेतसि कातराक्ष्याः ।**
**अमोचनीयानपि नाकलोकैः प्राणानहो मोचयते मुहुर्माम् ॥ १०१ ॥**

जघनस्थलीं वर्णयति । रम्या इयं कातराक्ष्याः जघनस्थली, अधुना मम चेतसि आक्रम्य नाकलोकैः अपि अमोचनीयान् प्राणान् मां मुहुः मोचयते । अहो ॥ नाकलोकैः–देवैः । अमोचनीयान्–मोचयितुमशक्यान् । मुहुः–पुनः पुनः । मोचयते–मोक्तुं प्रेरयति ॥ १०१ ॥

**मोचायुगं मन्मथराजधानीद्वारस्थलीमङ्गलसाधनं यत् ।**
**तदेव जानामि दुकूलगुप्तमूरुद्वयं चारुतरं तरुण्याः ॥ १०२ ॥**

ऊरुद्वयं वर्णयति । मन्मथराजधानीद्वारस्थलीमङ्गलसाधनं यद् मोचायुगम् , तद् एव, दुकूलगुप्तं चारुतरं तरुण्याः ऊरुद्वयं जानामि ॥ मोचायुगम्–कदलीयुगमम् । दुकूलगुप्तम्–वस्त्राच्छादितम् । जानामि–मन्ये ॥ १०२ ॥

**आरभ्य रम्भामिदमूरुयष्टेः स्रष्टुं समामिष्टमनाप्य रुष्टः ।**
**स्रष्टा करस्थेन विपाट्य भूयष्टङ्केन शङ्के त्वचि तां निरास्थत् ॥ १०३ ॥**

कदल्यपेक्षया सीतायाः ऊरोर्वैशिष्ट्यं प्रतिपादयति । स्रष्टा इदमूरुष्टेः समां रम्भां स्रष्टुम् आरभ्य इष्टम् अनाप्य रुष्टः (सन्), करस्थेन टङ्केन विपाट्य भूयः तां त्वचि निरास्थत्-(इति) शङ्के ॥ इदमूरुयष्टेः–अस्याः प्रशस्तस्य ऊरोः । रम्भाम् -कदलीम् । टङ्केन–आयुध विशेषेण । विपाट्य–विदार्य । ताम्–रम्भाम् । निरास्थत्–निरस्तवान् ॥ १०३ ॥

हस्तावमानादखिलद्विपानां दानाम्बुधारामवगृह्णता च ।
सुगन्धितामूरुयुगेन नीता स्मराभिधानो जयति द्विपेन्द्रः ॥ १०४ ॥

ऊरुयुगस्य गजेन्द्रहस्तसादृश्यं प्रस्तौति । अखिलद्विपानां हस्तावमानाद् दानाम्बुधाराम् अवगृह्णता च ऊरुयुगेन सुगन्धितां नीतः स्मराभिधानः द्विपेन्द्रः जयति ॥ दानाम्बुधाराम्—मदजलधाराम् । स्मराभिधानः—कामाख्यः । द्विपेन्द्रः—गजाधिराजः । जयति—सर्वोत्कर्षेण वर्तते ॥ १०४ ॥

सव्येतरं सव्यमिवायताक्ष्याः सव्यं च सव्येतरवद्विभाति ।
अष्ठीवतोः सुष्ठुतराङ्गभाजोर्निष्ठीवतोर्निस्तुलकान्तिपूरम् ॥ १०५ ॥

जानुनी वर्णयति । सुष्ठुतराङ्गभाजोः निस्तुलकान्तिपूरं निष्ठीवतोः आयताक्ष्याः अष्ठीवतोः (मध्ये) सव्येतरं सव्यम् इव, सव्यं च सव्येतरवद् विभाति ॥ निष्ठीवतोः—बहिः विसृजतोः । अष्ठीवतोः – जानुनोः । सव्येतरम् – दक्षिणम् । सव्यम्—वामम् ॥ १०५ ॥

अधोमुखौ किं निहितौ निषङ्गौ जङ्घे इमे पङ्कजसायकस्य ।
तत्कालतन्निर्गलिताम्बुजास्त्रश्रियं दधाते चरणौ यदस्याः ॥ १०६ ॥

जङ्घे चरणौ च वर्णयति । इमे जङ्घे, अधोमुखौ निहितौ पङ्कजसायकस्य निषङ्गौ किम् ? । यद् अस्याः चरणौ तत्कालतन्निर्गलिताम्बुजास्त्रश्रियं दधाते ॥ निहितौ—विन्यस्तौ । पङ्कजसायकस्य—कामस्य । निषङ्गौ—तूणीरौ ॥ १०६ ॥

व्याकोशतादत्तमुखत्वलुप्तशाताग्रभावस्य भवत्यमुष्याः ।
जङ्घायुगं केतककोरकस्य श्रियः सतीधर्मविलोपनाय ॥ १०७ ॥

जङ्घायुगस्य केतककोरकसादृश्यं प्रकाशयति । अमुष्याः जङ्घायुगं, व्याकोशतादत्तमुखत्वलुप्तशाताग्रभावस्य श्रियः सतीधर्मविलोपनाय भवति ॥ व्याकोशतायै दत्तं मुखं येन,

सः व्याकोशतादत्तमुखः, तस्य भावस्तत्त्वम्, तेन लुप्तः शाताग्रभावः यस्य, तादृशस्य । श्रियः–लक्ष्म्याः। शोभाया इत्यर्थः। सतीधर्मः–पातिव्रत्यम्। तस्य विलोपनाय–नाशनाय। केतककोरकसदृशं भवतीति भावः ॥ १०७ ॥

**अमन्दरागं भजतस्तरुण्या बाहीकभागः पदपङ्कजस्य ।**
**जयत्यसौ कर्परमादिमस्य कूर्मस्य धर्तुः किल मन्दरागम् ॥१०८॥**

पादाग्रं वर्णयति। अमन्दरागं भजतः तरुण्याः पदपङ्कजस्य असौ बाहीकभागः, मन्दरागं धर्तुः किल आदिमस्य कूर्मस्य कर्परं जयति ॥ अमन्दः-अनल्पः रागः–शोणिमा, तम्। बाहिकभागः–बहिर्भागः। मन्दरागम्–मन्दराख्यं पर्वतम्। अल्परागमिति च गम्यते। धर्तुः–वहतः। कर्परम्–कपालम् पृष्ठमिति भावः ॥ १०८ ॥

**शङ्के पदं शङ्करमायताक्ष्या गौर्या रुचेराश्रयतां गतं यत् ।**
**नखावलीकैतवकुल्यमालं प्रपन्नलेखं प्रतिभासतेऽलम् ॥ १०९ ॥**

पादं वर्णयति। यत्, गौर्याः रुचेः आश्रयतां गतं नखावलीकैतवकुल्यमालं प्रपन्नलेखम् अलं प्रतिभासते, (तद्) आयताक्ष्याः पदं शङ्करं शङ्के॥ गौर्याः–अरुणायाः पार्वत्याश्च रुचेः–कान्तेः प्रीतेश्च । नखावलीकैतवा–नखपङ्क्तिव्याजा कुल्यमाला–अस्थिमाला यस्य, तादृशम्। प्रपन्नाः–प्राप्ताः, शरणागताश्च लेखाः-रेखाः, देवाश्च यस्मिन्, तादृशम्। अलम्–अत्यर्थम्। पदम्–पादम्। शङ्करम्–सुखरम, शिवं च। शङ्के–मन्ये ॥ १०९ ॥

**स्थित्वा चिरं वारिणि कण्ठदघ्ने यम् सेवितोऽभूत् कमलेन हंसः ।**
**जाने पुनस्तत् पदभावमस्याः प्राप्याधुना हंसगतिं प्रयाति ॥११०॥**

गतिं वर्णयति। यत् कमलेन कण्ठदघ्ने वारिणि चिरं स्थित्वा हंसः सेवितः अभूत्, तत् पुनः अस्याः पदभावं प्र प्य अधुना हंसगतिं प्रयाति॥ यत्–यस्मात्। कण्ठदघ्ने–कण्ठप्रमाणे। हंसः–सूर्यः, परमात्मा च। तत्–कमलम्। पदभावम्–पाद वम्। हंसगतिम्-राजहंसगमनम्, परमात्मैक्यरूपां-गतिं च। मोक्षमित्यर्थः। प्रयाति–प्र नोति ॥ ११० ॥

**अस्याः पदं कोकनदं विकासि श्रियः पदं च प्रथितं तदेव ।**
**तस्या महाभाग्यमिदं यदेतत् साम्यं जनाः श्लिष्टगिरो वदेयुः ॥ १११ ॥**

पदस्य पद्मसाम्यमुपपादयति । अस्याः पदं विकासि कोकनदं (भवति) । प्रथितं श्रियः पदं च तद् एव । इदं तस्याः महाभाग्यम् । यत् श्लिष्टगिरः जनाः (तस्य) एतत्साम्यं वदेयुः ॥ अस्याः—सीतायाः । पदम्—पादः । कोकनदम्—रक्तपङ्कजम् । श्रियः—लक्ष्म्याः । पदम्—निवासस्थानम् । तद्—रक्तपङ्कजम् । तस्याः—श्रियः । श्लिष्टगिरः—श्लेषयुक्तवाक्प्रयोगनिपुणाः । एतत्साम्यम्—सीतापदसादृश्यम् ॥ १११ ॥

**मग्नेव सिन्दूरपरागपुञ्जे या श्रीरदःपादसरोजलग्ना ।**
**प्रसाधनासाधनमग्रतोऽस्या यावद्रवेर्दीप इवाहिमांशोः ॥ ११२ ॥**

पादगतं शोणिमानमाह । या श्रीः अदःपादसरोजलग्ना, (सा) सिन्दूरपरागपुञ्जे मग्ना इव । अस्याः अग्रतः प्रसाधनासाधनं यावत्, (तावत्) अहिमांशोः रवेः (अग्रतः) दीपः इव (भवति) ॥ श्रीः—कान्तिः । अमुष्याः पादसरोजे लग्ना । परागपुञ्ज—चूर्णराशौ । अस्याः—पादकान्तेः । अग्रतः—पुरोभागे । प्रसाधनासाधनम्—अलक्तकादि यावत्, तावत्—सकलम् । अहिमांशोः—उष्णरश्मेः । रवेः—सूर्यस्य ॥ ११२ ॥

**क्षन्तव्यमेतत्तव दासवर्गे यन्मेऽपराध्यं कमलेष्वितीव ।**
**प्रत्येकमस्याः पदयोः सदारो नम्रः सुधांशुर्नखकैतवेन ॥ ११३ ॥**

पादनखान् वर्णयति । सदारः सुधांशुः अस्याः पदयोः नखकैतवेन प्रत्येकं नम्रः, 'तव दासवर्गे कमलेषु मे यद् अपराध्यम्, एतत् क्षन्तव्यम्' इति (वदति) इव ॥ सदारः—पत्नीसहितः । सुधांशुः—चन्द्रः । मे यद् अपराध्यम्—मया यः अपराधः कृतः । एतत्—एषोऽपराधः ॥ ११३ ॥

**आ कैशिकादा च नखेन्दुबिम्बादेवं गुणैरेव निबद्धमस्याः ।**
**विजृम्भते कान्तिभरेण गात्रं सौदामिनीदुर्मदनिःसहेन ॥ ११४ ॥**

सर्वाङ्गकान्तिमाह। आ कैशिकाद् आ नखेन्दुबिम्बात् च एवंगुणैः एव निबद्धम् अस्याः गात्रं सौदामिनीदुर्मदनिस्सहेन कान्तिभरेण विजृम्भते ॥ कैशिकात्–केशसमूहात्। सौदामिनी–विद्युत्, तस्याः दुर्मदम् असहमानेन, विद्युत्सदृशेनेति भावः। विजृम्भते–विस्फुरति ॥ ११४ ॥

**वर्णः शिखाया वरवर्णिनीनां सहस्रपर्णादधिकः सुवर्णात्।**
**किमेतदर्णोरुहकर्णिकानामवर्णदाने यदि लब्धवर्णः ॥ ११५ ॥**

सीतायाः स्वर्णवर्णमाह। वरवर्णिनीनां शिखायाः, सुवर्णात् सहस्रपर्णाद् अधिकः वर्णः, अर्णोरुहकर्णिकानाम् अवर्णदाने यदि लब्धवर्णः, एतद् किम्? ॥ वरवर्णिनीनाम्–सुन्दरीणाम्। शिखायाः–अग्रगणनीयायाः। परमसुन्दर्याः इत्यर्थः। सहस्रपर्णात्–पद्मात्। अर्णोरुहकर्णिकानाम्–पद्मबीजकोशानाम्। अवर्णदाने–आक्षेपकरणे। लब्धवर्णः- विचक्षणः। एतत् किम्?। अत्यल्पमिति भावः ॥ ११५ ॥

**अस्या वपुर्वर्णविचारणायामेतावदेव प्रतिपत्तुमीशे।**
**विधाय सौरूप्यकथादरिद्रामसौ परिद्रावयते हरिद्राम् ॥ ११६ ॥**

हरिद्रावर्णसाम्यमाह। अस्याः वपुर्वर्णविचारणायाम् एतावद् एव प्रतिपत्तुम् ईशे। असौ हरिद्रां, सौरूप्यकथादरिद्रां विधाय परिद्रावयते ॥ ईशे–शक्नोमि। सौरूप्यकथायां–मनोज्ञत्वकथने दरिद्राम्। परिद्रावयते–परितो धावयति ॥ ११६ ॥

**जगद्दृशां विस्मयकामधेनुः कामार्णवोद्वेलनशीतभानुः।**
**गच्छद्गतागामिवधूविधानां साधारणी सृष्टिरियं न धातुः ॥ ११७ ॥**

सीतासृष्टेरसाधारणत्वमाह। जगद्दृशां विस्मयकामधेनुः कामार्णवोद्वेलनशीतभानुः इयं धातुः सृष्टिः, गच्छद्गतागामिवधूविधानां साधारणी न ॥ जगद्दृशाम्–लोकनयनानाम्। कामः एव योऽर्णवः, तस्य उद्वेलने–संवर्धने शीतभानुः–चन्द्रः। गच्छन्तीनाम्–वर्तमानानाम्,

गतानाम्–भूतानाम्, आगामिनीनाम्–भाविनीनाम्, वधूविधानाम्–वनिताप्रकाराणाम्। साधारणी–समाना ॥ ११७ ॥

**अतिप्रयासेन विधाय वेधा लोकोत्तरं रत्नविशेषमेतत्।**
**निर्विद्य भूयो मम सृष्टिरीदृङ् मा भूदिति स्वं शपति स्म शङ्के ॥११८॥**

सीतासृष्टेरतिप्रयाससाधितत्वमाह। वेधाः लोकोत्तरं एतद्रत्नविशेषं अतिप्रयासेन विधाय, निर्विद्य, भूयः मम ईदृक् सृष्टिः मा भूद् इति स्वं शपति स्म (इति) शङ्के॥ निर्विद्य–निर्वेदं प्राप्य। स्वम्–आत्मानम् ॥ ११८ ॥

**अदर्शनात् संप्रति सुन्दरीणामेतादृशीनामनुमेयशापः।**
**स्रष्टा कथं स्रक्ष्यति रत्नमीदृङ् न चासृजत् प्रागशपन्न यत् स्वम् ॥११९॥**

ब्रह्मकृतं स्वशापं समर्थयति। सम्प्रति एतादृशीनां सुन्दरीणाम् अदर्शनाद् अनुमेयशापः स्रष्टा ईदृक् रत्नं कथं स्रक्ष्यति?। यत् स्वं न अशपत् (तर्हि), प्राक् कथं न च असृजत्॥ अनुमेयः–अनुमातुं योग्यः शापो यस्य सः। यद्–यदि। असृजत् सृष्टवान् ॥ ११९ ॥

**किं वा कियत् पुण्यमकारि तेन यस्याङ्कपर्यङ्कशयीकृतेयम्।**
**पीयूषतः कोटिगुणाधरोष्ठी निर्विश्यते शर्म ममाङ्गयष्टिः ॥१२०॥**

पुण्यातिरेकेणैवोपभोक्तव्येयमित्याह। इयं यस्य अङ्कपर्यङ्कशयीकृता, तेन किं वा कियद् (वा) पुण्यम् अकारि?। पीयूषतः कोटिगुणाधरोष्ठी मम शर्म अङ्गयष्टिः (तेन) निर्विश्यते॥ इयम्–सीता। अङ्कः–उत्सङ्गः एव पर्यङ्कः–शय्या, तत्र शेते इति अङ्कपर्यङ्कशय्या। अतादृशी तादृशी सम्पद्यमाना कृता–अङ्कपर्यङ्कशयीकृता। अकारि–कृतम्। पीयूषतः–अमृताद्। कोटिसंख्याकगुणयुक्तौ अधरोष्ठौ यस्याः, तादृशी। शर्म–सुखहेतुभूता। अङ्गयष्टिः–प्रशस्तशरीरम्। निर्विश्यते–उपभुज्यते ॥ १२० ॥

तत्तादृशं व्यर्थमहो कृतं मे तपस्त्रिलोकीकृतसाधनं यत् ।
अशेषलोकेशयजीवलोकप्रमोहिनीं नैवमिमामविन्दे ॥ १२१ ॥

रावणः स्वकृतस्य तपसो व्यर्थतां समर्थयति । यत् (तपः) त्रिलोकीकृतसाधनम्, तत् तादृशं कृतं मे तपः व्यर्थम् । अहो ! एवम् अशेषलोकेशयजीवलोकप्रमोहिनीं इमां (अहम्) न अविन्दे ॥ त्रिलोकी–लोकत्रयम्, तदर्थं कृतसाधनम्–साधितम् । इमाम्–सीताम् न अविन्दे–न लब्धवानस्मि ॥ १२१ ॥

अदर्शि वात्सल्यमहो भृशं नः पितामहेन प्रपितामहेन ।
मयि स्थिते यः कृपया सहेमां मर्त्याय कस्मैचिददत्त वामाम् ॥ १२२ ॥

ब्रह्मणः स्वस्मिन् वात्सल्याभावमुद्भावयति रावणः । मयि स्थिते (सति) यः कृपया सह इमां वामां कस्मैचित् मर्त्याय अदत्त, (तेन) नः प्रपितामहेन पितामहेन भृशं वात्सल्यम् अदर्शि । अहो ॥ वामाम्–वनिताम् । अदत्त–दत्तवान् । नः–अस्माकम् । प्रपितामहेन–पितुः–विश्रवसः पितुः–पुलस्त्यस्य पितुः । ब्रह्मणः पुत्रः खलु पुलस्त्यः । पितामहेन–ब्रह्मणा । वात्सल्यम्–(विपरीतलक्षणया) वात्सल्याभावः । अदर्शि–दर्शितम् । अहो–कष्टम् ॥ १२२ ॥

गृह्णातु पुंसः प्रसभं परस्मादस्मत्प्रपोतो रसगौरवाय ।
इत्यन्यदीयीकरणे कृशाङ्ग्याः पत्युः प्रजानामथवाशयः स्यात् ॥ १२३ ॥

अथ वात्सल्यमेवोपपादयति । अथवा, अस्मत्प्रपोतः रसगौरवाय परस्मात् पुंसः प्रसभं गृह्णातु इति कृशाङ्ग्याः अन्यदीयीकरणे प्रजानां पत्युः आशयः स्यात् ॥ अस्मत्प्रपोतः–अस्माकम् अत्यन्तशिशुः । प्रपौत्र इति भावः । रसगौरवाय–आस्वादाधिक्याय । प्रसभम्–बलात्कारेण अन्यदीयीकरणे–परकीयतापादने । प्रजानां पत्युः–ब्रह्मणः । आशयः–अभिप्रायः । 'कृच्छ्रलब्धमधिकादरदं तु' इति भावः ॥ १२३ ॥

**आस्तां तदेषा युवतीषु भूषा ममैव भोग्या भवितुं हि योग्या ।**
**एनामनादाय वृथा न भूयो निवर्तनीयं दशकन्धरेण ॥ १२४ ॥**

सीतामादायैव गन्तव्यमिति निश्चिनोति रावणः। तद् आस्ताम्। युवतीषु भूषा एषा हि मम एव भोग्या भवितुं योग्या। दशकन्धरेण एनाम् अनादाय वृथा भूयः न निवर्तनीयम् ॥ भूषा–अलङ्कारभूता। एषा–सीता। भोग्या–भोक्तुम्–अनुभवितुं योग्या। दशकन्धरेण–रावणेन मयेति भावः। अनादाय – अगृहीत्वा। निवर्तनीयम– प्रतिगन्तव्यम् ॥ १२४ ॥

**इतः परं विश्वजगज्जयश्रीलीलाविहारोचितसौधभूमौ ।**
**नित्यं ममैवोरसि निस्तुलाङ्गी शेतामियं श्रीरिव केशवस्य ॥ १२५ ॥**

इतः परं मया सह रमतामियं सीतेति कामयते। इतः परम् इयं निस्तुलाङ्गी विश्वजगज्जयश्रीलीलाविहारोचितसौधभूमौ मम एव उरसि, केशवस्य (उरसि) श्रीः इव नित्यं शेताम् ॥ शेताम्–शयनं कुरुताम। रमतामिति भावः ॥ १२५ ॥

**इति स मनसा तल्लावण्यामृतस्तुतिपूर्वकं**
**कपटनियमी कामावेशवशेन विचिन्तयन् ।**
**सविधमसरत्तस्यास्त्रस्यत्कुरङ्गकुलाङ्गना-**
**नयनसुषमाबन्दीकारक्षमेक्षणसम्पदः ॥ १२६ ॥**

रावणः कपटयतिवेषेण सीतामुपसर्पति। कपटनियमी सः इति कामावेशवशेन मनसा तल्लावण्यामृतस्तुतिपूर्वकं विचिन्तयन् त्रस्यत्कुरङ्गकुलाङ्गनानयनसुषमाबन्दीकारक्षमेक्षणसम्पदः तस्याः सविधम् असरत् ॥ कपटनियमी–व्याजभिक्षुः। सः–रावणः। त्रस्यन्ती–भयचकिता कुरङ्गकुलाङ्गना–मृगी, तस्याः नयनसुषमायाः–नेत्रशोभायाः बन्दीकारे–बलाद् ग्रहणे क्षमा–समर्था ईक्षणसम्पद्–नेत्रश्रीः यस्याः, तादृश्याः। तस्याः–सीतायाः। सविधम्–समीपम्। असरत्–अगमत् ॥ १२६ ॥

तं दृष्ट्वा यतिनायकं नृपसुता शालीनताशालिनी
भर्तुः सङ्कटशङ्कया भृशतरं खिन्नापि सम्प्रीतधीः ।
आतिथ्यं विधिवच्चकार मधुरैराराधयन्त्यादरा-
द्वाग्भेदैरतिथिप्रशस्तिपिशुनैस्तत्कालकालोचितैः ॥ १२७॥

इति श्रीगोदवर्मविद्वद्युवराजकृते
श्रीरामचरिते महाकाव्ये
द्वादशः सर्गः

---

सीता तस्य कपटयतेरातिथ्यं करोति । भर्तुः सङ्कटशङ्कया भृशतरं खिन्ना अपि तं यतिनायकं दृष्ट्वा सम्प्रीतधीः नृपसुता, शालीनताशालिनी आदरात् अतिथिप्रशस्तिपिशुनैः तत्कालकालोचितैः मधुरैः वाग्भेदैः आराधयन्ती विधिवद् आतिथ्यं चकार । शालीनता-शालिनी–लज्जावती। पिशुनैः–सूचकैः । आराधयन्ती–प्रीणयन्ती ॥ १२७॥

इति पण्डितरत्नश्रीनारायणपिषारोटिविरचितायां
श्रीरामचरितमहाकाव्यव्याख्यायां अन्वयार्थप्रबोधिन्यां
सीताकेशादिपादान्तवर्णनं नाम द्वादशः सर्गः



# त्रयोदशः सर्गः

अथादरेणातिथिमर्चयन्तीमात्मानमज्ञातनिजापदेशाम् ।
अत्यन्तमन्तर्धृतसम्भ्रमोऽपि धीरो यतिस्तां स्मितपूर्वमूचे ॥ १ ॥

कपटयतिः सीतामाभाषते । अथ धीरः यतिः, आदरेण अतिथिम् आत्मानम् अर्चयन्तीम् अज्ञतनिजापदेशां ताम्, अत्यन्तम् अन्तः धृतसम्भ्रमः अपि स्मितपूर्वम् ऊचे ॥ अपदेशः—व्याजः ॥ १ ॥

कल्याणशीले कलवाणि बाले कल्लोललीलाहरणोचितभ्रूः ।
प्रीतस्त्वदालोकनमात्रतोऽहं सपर्यया किं पुनरातिथेय्या ॥ २ ॥

आभाषणप्रकारमेवाह एकादशभिः श्लोकैः । कल्याणशीले, कलवाणि, बाले, कल्लोललीलाहरणोचितभ्रूः ! त्वदालोकनमात्रतः अहं प्रीतः । आतिथेय्या सपर्यया पुनः किम् ? ॥ आतिथेय्या—अतिथिषु साध्व्या । सपर्यया—पूजया ॥ २ ॥

इदं किमप्येष वदामि बाले कृतावधाना भवती शृणोतु ।
जानामि सम्यग्भवदीयवार्तामामूलतो दिव्यविलोचनेन ॥ ३ ॥

बाले ! एषः (अहम्) इदं किमपि वदामि । भवती कृतावधाना शृणोतु । भवदीयवार्ताम् आमूलतः, दिव्यविलोचनेन सम्यग् जानामि ॥ ३ ॥

त्यक्तस्य पित्रा भजतो मुनीनां वृत्तिं वनान्ते विधिवैपरीत्यात् ।
नित्यानुवृत्त्या नरपालसूनोः किं दूयसे नो कमलायताक्षि ॥ ४ ॥

कमलायताक्षि! विधिवैपरित्यात् पित्रा त्यक्तस्य वनान्ते मुनीनां वृत्तिं भजतः नरपालसूनोः नित्यानुवृत्त्या किं नो दूयसे ? ॥ ४ ॥

क्वेदं वपुस्ते सकलातिशायि क्वेयं दशा ते वनवासरूपा ।
कः कल्पयेताननुरूपमेवं यत् पश्यतां हन्त मनो दुनोति ॥ ५ ॥

सकलातिशायि इदं ते वपुः क्व ? वनवासरूपा इयं ते दशा क्व ? यत् पश्यतां हन्त मनः दुनोति, एवम् अननुरूपं (तत्) कः कल्पयेत ? ॥ हन्त–अनुकम्पया । दुनोति–दुःखयति ॥ ५ ॥

अशेषयोषाजनरत्नभूतां जानीमहे त्वां महनीयगात्रि ।
ये रत्नभाजस्त्रिषु विष्टपेषु तेषां भवत्यर्हति दारभावम् ॥ ६ ॥

महनीयगात्रि ! त्वाम् अशेषयोषाजनरत्नभूतां जानीमहे । त्रिषु विष्टपेषु ये रत्नभाजः, तेषां दारभावं भवती अर्हति ॥ दारभावम्–भार्यात्वम् ॥ ६ ॥

जागर्ति सम्प्रत्यखिलत्रिलोकीजयश्रियालङ्कृतदिव्यमूर्तिः ।
सौभाग्यनिर्भर्त्सितमत्स्यकेतुर्दशाननो राक्षसचक्रवर्ती ॥ ७ ॥

सम्प्रति अखिलत्रिलोकीजयश्रिया अलङ्कृतदिव्यमूर्तिः सौभाग्यनिर्भत्सितमत्स्यकेतुः राक्षसचक्रवर्ती दशाननः जागर्ति ॥ मत्स्यकेतुः–कामः । दशाननः–दशमुखो रावणः ॥ ७ ॥

यस्यापदानानि विलासवत्यो गायन्ति शब्देन विना सुराणाम् ।
दासीपदं प्राप्य यथानियोगं लङ्कापुरे कर्म वितन्वते याः ॥ ८ ॥

याः लङ्कापुरे दासीपदं प्राप्य यथानियोगं कर्म वितन्वते, (ताः) सुराणां विलासवत्यः यस्य अपदानानि शब्देन विना गायन्ति ॥ अपदानानि–प्रशस्तकर्मणि ॥ ९ ॥

यत्पादपीठे गृहमेधिभावं गतानि नित्यं गतकल्मषाणि ।
रत्नानि दिक्पालकिरीटरत्नेष्वातिथ्यसंभावनमाचरन्ति ॥ ९ ॥

यत्पादपीठे गृहमेधिभावं गतानि गतकल्मषाणि रत्नानि नित्यं दिक्पालकिरीटरत्नेषु आतिथ्यसम्भावनम् आचरन्ति॥ दिक्पालाः नित्यमागत्य रावणपादपीठे प्रणमन्तीति भावः ॥ ९ ॥

तस्यैव लोकाधिपतेरसि त्वं वक्षस्थलीसौधविहारयोग्या ।
किरीटकोटेरितरत्र राज्ञां माणिक्यरत्नस्य न हि प्रकाशः ॥ १० ॥

त्वं लोकाधिपतेः तस्य एव वक्षःस्थलीसौधविहारयोग्या असि। राज्ञां कीरीटकोटेः इतरत्र माणिक्यरत्नस्य प्रकाशः न हि ॥ तस्य—रावणस्य ॥ १० ॥

तपस्विनो दुर्भगमानुषस्य प्रेम्णः कणेनापि विहीनबुद्धेः ।
पश्चाद्वनान्तेषु परिभ्रमन्ती मा नीनशो रम्यमिदं वपुस्ते ॥ ११ ॥

तपस्विनः प्रेम्णः कणेन अपि विहीनबुद्धेः दुर्भगमानुषस्य पश्चाद् वनान्तेषु परिभ्रमन्ती (सती) (त्वं) रम्यम् इदं ते वपुः मा नीनशः॥ मा नीनशः—मा नाशय ॥ ११ ॥

नयामि सद्यो भवतीमिदानीं निशाचराधीश्वरराजधानीम् ।
तत्रानिशं तेन समं कमित्रा चित्रानुकूलानुपभुङ्क्ष्व भोगान् ॥ १२ ॥

(अहम्) इदानीं सद्यः भवतीं निशाचराधीश्वरराजधानीं नयामि। तत्र अनिशं तेन कमित्रा समं चित्तानुकूलान् भोगान् उपभुङ्क्ष्व ॥ कमित्रा—कामुकेन। भोगान्—सुखानि ॥ १२ ॥

इतीर्यमाणां यतिनापि तेन वाणीमसाध्वीमुपकर्ण्य साध्वी ।
सञ्जातरोषा सहसैनमेषा जगाद योषाजनमौलिभूषा ॥ १३ ॥

सीता कुपिता कपटयतिं प्रति वदति। यतिना अपि तेन इति ईर्यमाणाम् असाध्वीं वाणीम् उपकर्ण्य साध्वी एषा योषाजनमौलिभूषा सञ्जातरोषा सहसा एनं जगाद ॥ १३ ॥

धिक्त्वामकार्यं कथयन्तमेवं विगर्हितं यद्विदुषां कुलेन ।
अहो महापापतमोऽसि मोहात् सन्न्यासिभावेन मयाऽऽदृतस्त्वम् ॥ १४ ॥

सीतायाः प्रतिवचनप्रकारमाह षड्भिः श्लोकैः । विदुषां कुलेन यद् विगर्हितम्, (तद्) अकार्यम् एवं कथयन्तं त्वां धिक् । मया मोहात् सन्न्यासिभावेन आदृतः त्वं महापापतमः असि । अहो ॥ धिक्—निन्दामि ॥ १४ ॥

जानासि धर्मं न सतीजनानां ततोऽस्खलन्तीमपि वृत्तिमस्याः ।
स्वप्नेऽपि यस्याः परिणेतुरन्यं पुमांसमाजिघ्रति नान्तरङ्गम् ॥ १५ ॥

(त्वं) सतीजनानां धर्मं न जानासि । ततः अस्खलन्तीम् अस्याः (मे) वृत्तिम् अपि (न जानासि) । यस्याः अन्तरङ्गं, परिणेतुः अन्यं पुमांसं स्वप्ने अपि न आजिघ्रति ॥ १५ ॥

शुश्रूषणं भर्तुरनारतं यत् स एव धर्मः परमोऽङ्गनानाम् ।
वनान्तरं वा भवनान्तरं वा स्वर्गस्तदासक्तधियां वधूनाम् ॥ १६ ॥

अनारतं भर्तुः शुश्रूषणं यत्, सः एव अङ्गनानां परमः धर्मः । तदासक्तधियां वधूनां वनान्तरं वा भवनान्तरं वा स्वर्गः ॥ १६ ॥

मतिर्न ते किं नृपतेरमुष्मात्तद्वल्लभायामपि दूषणेच्छोः ।
यद्बाणधाराबडवाग्निकीला दग्धुं जगत् सेन्द्रमपि क्षमेत ॥ १७ ॥

यद्बाणधाराबडवाग्निकीला सेन्द्रम् अपि जगद् दग्धुं क्षमेत, तद्वल्लभायाम् अपि दूषणेच्छोः ते अमुष्मात् नृपतेः भीतिः न किम्?॥ कीला—ज्वाला । क्षमेत—शक्नुयात् ॥ १७ ॥

यं मन्यसे राक्षसपाशमीशं तृणं स भर्तुर्दशकन्धरस्ते ।
खरादिवार्ता तव न श्रुता किं विलोकितं शूर्पणखामुखं च ॥ १८ ॥

यं राक्षसपाशं (त्वम्) ईशं मन्यसे, सः ते दशकन्धरः (मे) भर्तुः तृणम्। खरादिवार्ता तव किं न श्रुता। शूर्पणखामुखं च किं न विलोकितम्॥ राक्षसपाशम्—दुष्टराक्षसम् ॥ १८ ॥

कोऽसौ भवानीदृशदुष्टबुद्धिर्नैवासि कर्मन्दिजनेषु कश्चित्।
चारित्रभङ्गाय पतिव्रतानां यतव्रतानां कतमो यतेत ॥ १९ ॥

ईदृशदुष्टबुद्धिः असौ भवान् कः? कर्मन्दिजनेषु कश्चित् न एव असि। पतिव्रतानां चारित्रभङ्गाय यतव्रतानां कतमः यतेत॥ कर्मन्दी—भिक्षुः। यतव्रतानाम्—यतीनां मध्ये ॥ १९ ॥

इति श्रुते चेतसि रावणस्य क्रोधेन किंचिच्छिशुना जजृम्भे।
कामोऽग्रजस्तद्गुणगानपूर्वं प्रस्वापयामास शनैरथैनम् ॥ २० ॥

रावणस्य कोपं कामः शमयति। इति श्रुते रावणस्य चेतसि शिशुना क्रोधेन किञ्चिद् जजृम्भे। अथ एनम्, अग्रजः कामः तद्गुणगानपूर्वं शनैः प्रस्वापयामास॥ शिशुना—बालेन। अल्पेन इत्यर्थः। अग्रजः—ज्येष्ठः। पूर्वं जातः इत्यर्थः। तद्गुणाः—सीतागुणाः ॥ २० ॥

ततः स राजा रजनीचराणां निवेदयिष्यन् निजतत्त्वमेव।
आक्रुश्यमानोऽपि तया नितान्तं तामाह कामाहतिलुप्तकोपः ॥ २१ ॥

रावणः आत्मानं सीतायै प्रकाशयति। ततः सः रजनीचराणां राजा निजतत्त्वम् एव निवेदयिष्यन्, तया नितान्तम् आक्रुश्यमानः अपि कामाहतिलुप्तकोपः ताम् आह ॥ २१ ॥

सम्यक् सरोजाक्षि समीक्षितं ते न मन्यसे यन्मयि भिक्षुभावम्।
अवेहि मां राक्षसराजराजं यस्तुभ्यमाख्यायि मयाधुनैव ॥ २२ ॥

रावणस्य वचनप्रकारमेवाह दशभिः श्लोकैः। सरोजाक्षि! मयि भिक्षुभावं यद् न मन्यसे, तत् ते समीक्षितं सम्यक्। मया अधुना एव यः तुभ्यम् आख्यायि, तं राक्षस-राजराजं माम् अवेहि॥ समीक्षितम्–दर्शनम्। सम्यक्–साधु। आख्यायि–आख्यातः। अवेहि–जानीहि ॥ २२ ॥

**बन्दीकृतानाममराङ्गनानामजस्रसम्भोगकलाविरक्तः।**
**अन्वेषमाणो वनिताविशेषं नीतस्तवाभ्याशमहं नियत्या ॥ २३ ॥**

बन्दीकृतानाम् अमराङ्गनानाम् अजस्रसम्भोगकलाविरक्तः वनिताविशेषम् अन्वेषमाणः अहं नियत्या तव अभ्याशं नीतः॥ बन्दीकृतानाम्–बलादाहृतानाम्। नियत्या–दैवेन ॥ २३ ॥

**कदापि न व्याहतपूर्वमिष्टं सपूर्वदेवैरपि यस्य देवैः।**
**स त्वामसाधारणजातकामां लब्धामुपेक्षेत कथं दशास्यः ॥ २४ ॥**

यस्य इष्टं सपूर्वदेवैः देवैः अपि कदापि न व्याहतपूर्वम्, सः दशास्यः, असाधारण-जातकामां लब्धां त्वां कथम् उपेक्षेत ?॥ पूर्वदेवाः–असुराः ॥ २४ ॥

**या सुन्दरी दृष्टिपथं गता मे नासावितः पूर्वमभूदभुक्ता।**
**वामासि वामाकुलमौलिमाले मा मा वद व्यर्थमिहाक्षराणि ॥ २५ ॥**

या सुन्दरी मे दृष्टिपथं गता, असौ इतः पूर्वम् अभुक्ता न अभूत्। वामाकुलमौलि-माले! (त्वं) वामा असि ?। इह व्यर्थम् अक्षराणि मा मा वद॥ वामा–वनिता, प्रतिकूला च ॥ २५ ॥

**नेष्यामि सद्यः प्रसभं गृहीत्वा त्वां राजधानीं मम मर्त्यदुर्गाम्।**
**को वारयेताखिलकण्टकं मां किं वा करिष्यत्यबलोऽभिकस्ते ॥ २६ ॥**

(अहम्) त्वां सद्यः प्रसभं गृहीत्वा मर्त्यदुर्गां मम राजधानीं नेष्यामि। कः अखिलकण्टकं मां वारयेत? अबलः ते अभिकः किं वा करिष्यति?॥ अभिकः– कमनः ॥ २६ ॥

वामासि वामोरु यदि प्रियं नः सम्भोक्ष्यसे यत् प्रसभं मया त्वम्।
अवामभोगादतिरिक्तशर्मा प्रसह्य सम्भोगविधिर्वधूनाम् ॥ २७ ॥

वामोरु! (त्वं) यदि वामा असि, नः प्रियम्। यत्, त्वं मया प्रसभं सम्भोक्ष्यसे। वधूनां प्रसह्य सम्भोगविधिः, अवामभोगाद् अतिरिक्तशर्मा ॥ वामा–प्रतिकूला। प्रसभम्– बलात्। अवामभोगात्–अनुकूलभोगात्। अतिरिक्तशर्मा–अधिकसुखकरः ॥ २७ ॥

गाढग्रहालिङ्गननिश्चलाङ्गो निरुद्धकाकुर्दृढचुम्बनेन।
दीर्घोष्णनिःश्वासरसाभिरामः कश्चिद्वधूनां जयति प्रभोगः ॥ २८ ॥

गाढग्रहालिङ्गननिश्चलाङ्गः दृढचुम्बनेन निरुद्धकाकुः दीर्घोष्णनिश्श्वासरसाभिरामः कश्चिद् वधूनां प्रभोगः जयति ॥ २८ ॥

सम्भुज्य सम्भुज्य दिने दिने त्वां सन्तोषभारं भजतां जनोऽयम्।
सञ्चिन्त्य सञ्चिन्त्य सुखं मदीयं बिभर्तु सन्तापभरं वरस्ते ॥ २९ ॥

अयं जनः दिने दिने त्वां सम्भुज्य सम्भुज्य सन्तोषभारं भजताम्। मदीयं सुखं सञ्चिन्त्य सञ्चिन्त्य ते वरः सन्तापभरं बिभर्तु ॥ २९ ॥

वियोगदावेन तवामुनैव सन्दह्यमानो दशमीमवस्थाम्।
क्रमेण यायान्मनुजः प्रियस्ते कस्त्वादृशीनां सहते वियोगम् ॥ ३० ॥

मनुजः ते प्रियः अमुना एव तव वियोगदावेन सन्दह्यमानः दशमीम् अवस्थां क्रमेण यायात्। त्वादृशीनां वियोगं कः सहते ॥ वियोगदावेन–विरहाग्निना। दशमीम् अवस्थाम्–मरणम् ॥ ३० ॥

मह्यं भगिन्यादिविरूपणाद्यैर्द्रुह्यत्यसौ यत् प्रसभं मनुष्यः ।
सद्यो वधादीदृश एव मन्ये तस्य प्रतीकारविधिर्वरिष्ठः ॥ ३१ ॥

असौ मनुष्यः भगिन्यादिविरूपणाद्यैः प्रसभं मह्यं यत् द्रुह्यति, तत्, तस्य सद्यः वधाद् ईदृशः एव प्रतीकार विधिः वरिष्ठः (इति) मन्ये ॥ वरिष्ठः—उत्कृष्टतमः ॥ ३१ ॥

॥ एतत्पद्यपर्यन्तमेव श्रीरामचरितंमहाकाव्यं गोदवर्मविद्वद्युवराजेन विरचितम् ॥

( शिष्टं 346 पुटे पुरोवर्तते )

( प्रासङ्गिकं श्रीकोच्चुण्णिराजविरचितम् विद्वद्युवराजचरितम् )

सद्योगिनो यां हृदये निधाय सद्यो लभन्तेऽखिलवाञ्छितार्थान् ।
हृद्या नतानां मम सा कुरुम्बा हृद्याविरस्तु स्वयमेव काली ॥ १ ॥

भूमण्डले भारतनाम्नि वर्षे विन्ध्यस्य यद्दक्षिणतश्चकास्ति ।
खण्डं भुवः केरलनामधेयं श्रीकोटिलिङ्गं पुरमस्ति तत्र ॥ २ ॥

चिन्तामणी राजति यत्र चन्द्रचूडामणिः शृङ्गपुराधिनाथः ।
विष्णुः सुरद्रुः कुलशेखरेशः काली कुरुम्बापि च कामधेनुः ॥ ३ ॥

तत् पत्तनं पालयतां नृपाणां पाश्चात्यपाथोनिधिपालकानाम् ।
वंशे प्रसूतस्य शुभं चरित्रं वदामि किञ्चिद्युवभूमिपस्य ॥ ४ ॥

दिव्यावतारोचितसन्मुहूर्ते विशिष्टदैवज्ञवरोपदिष्टे ।
उत्पादितो यश्चरमाब्धिनाथवंशाम्बुधौ मौक्तिकवत् प्रसूतः ॥ ५ ॥

---

१. महाकविः कोच्चुण्णिराज आत्मन इष्टदेवतां कालीं कुरुम्बामनुसरति ।

२. विद्वद्युवराजस्य जन्मदेशं केरलगतं कोटिलिङ्गपुरमुपक्षिपति । कोटिलिङ्गपुरम्—कोटुङ्ङल्लूर् ।

३. कोटिलिङ्गपुरे भासमानं देवतात्रयमनुसरति ।

४. विद्वद्युवराजचरितवर्णनं प्रतिजानीते । कोटिलिङ्गपुरपालका राजानः पश्चिमसमुद्राधिपतयः ।

५. विशिष्टदैवज्ञोपदिष्टे परमशोभने मुहूर्ते गर्भाधानम् ।

सपञ्चसप्तत्यधिकात् सहस्रात् शतेऽपनीते परिशिष्टसङ्ख्या ।
या तन्मिते योऽत्र किलावतीर्णः कोलम्बवर्षे भुवि कुम्भमासे ॥ ६ ॥

स्वर्गस्य दाता शिशुरेष शास्त्रसारोपदेशेन समाश्रितानाम् ।
इतीव नाम्नाथ चकार गोदं तं कोटिलिङ्गेश्वरबालमम्बा ॥ ७ ॥

यो बाल एव स्थिरधीः शुभात्मा कालीं कुरुम्बामभजन्महात्मा ।
यथा ध्रुवो मातृगिरा रमेशं सर्वोत्तमं स्थानमवाप्तुकामः ॥ ८ ॥

आकण्ठमग्नः शिशिरे स्मरन् यः कालीं व्रणं नागणयत् पदे स्वे ।
कुम्भीरपुच्छासिविघट्टनोत्थं धीरेषु विघ्ना ह्यफला भवन्ति ॥ ९ ॥

यो बाल एव प्रतिभाबलेन महाजनानां मुहुरन्तरङ्गे ।
उद्दण्डजिद्भट्ट इवाततान महान्तमाश्चर्यभरं सहर्षम् ॥ १० ॥

विद्याकलाभ्यासगुणैर्विचित्रैः प्रहर्षयामास गुरुं स्वकीयैः ।
विस्मापयामास च यः प्रकामं यथा भरद्वाजसुतं किरीटी ॥ ११ ॥

समस्तशास्त्राम्बुधिमन्दराद्रिर्मूलं पठन् पाठविशेषतो यः ।
व्याख्यासहस्रार्थमकुण्ठबुद्धिः प्रकाशयामास गुरूत्तमानाम् ॥ १२ ॥

दवोपनीतान्मुहुरुग्रकृच्छ्रादुत्तारितस्यात्मगुरोः प्रसादम् ।
लब्ध्वा महानर्जुनवत्ततो यो विद्यायशस्सागरभावमाप ॥ १३ ॥

---

६. ९७५ तमे कोलम्बवर्षे कुम्भमासे युवराजस्य जन्म । (१८०० A D)

७. गोदः इति नामकरणम् ।

८. बालः एव कुरुम्बां कालीमभजत् ।

९. आकण्ठमग्नेन कालीं ध्यायता अनेन बालेन नक्रपुच्छघट्टनात् पादे जातो व्रणो न अगण्यत ।

१०. बाल्य एव अयं प्रतिभाबलेन महदाश्चर्यं जनानां जनयामास ।

११. विद्याकलाभ्यासगुणैः अयं गुरुं विस्मापयामास ।

१२. मूलस्य पठनभेदमात्रेण व्याख्याविशेषान् प्रकाशयामास ।

१३. दैवोपनीताद् उग्रकृच्छ्राद् गुरुमुत्तार्य अनुग्रहमासादितवान् ।

अनन्तगम्भीरविशालभावाच्छास्त्राणि यस्माद्बहुलार्थदानि ।
समाददुर्भूरि जना यथार्हं रत्नानि सिन्धोरिव शोभनानि ॥ १४ ॥

सुदुष्करं किञ्चन यज्ञकर्म संप्रार्थितो यः सुकरं विधातुम् ।
ग्रन्थं चकारोज्झितवैदिकोक्तिः श्रुतश्रुतिः पद्यमयं यथावत् ॥ १५ ॥

काव्यज्ञवर्यस्य तु यस्य वाक्यैर्गतः कवित्वं सितरत्नविप्रः ।
तैरेव दैवज्ञवरस्य भूयो मेनेऽनुरूपं तनयं कदम्बम् ॥ १६ ॥

यः शब्दशास्त्रे फणिनाथतुल्यान् श्रीसङ्गमग्रामभवान् द्विजेन्द्रान् ।
विस्मापयामास सुहृद्यपद्यैस्तस्येदमित्यादिभिरात्तलीलम् ॥ १७ ॥

यः साधुपद्यैः सरसैस्तु हेत्वाभासप्रभेदान् प्रकटीचकार ।
तान्यद्य मान्तिट्टधरासुराद्याः पठन्ति तर्कज्ञवरा महान्तः ॥ १८ ॥

कर्माणि यस्योत्तमशिल्पिशास्त्रदक्षस्य वीक्ष्य स्म जनाः स्मरन्ति ।
कर्माण्यहो विश्वसृजोऽद्भुतानि महात्मनः फल्गुनसारथेश्च ॥ १९ ॥

कलेशमौलेरवियुक्तभूतेः सर्वज्ञभावं दधतश्च यस्य ।
कालीवशत्वं सुदृढं विलोक्य लोकाः स्मरन्ति स्म रसात् स्मरारिम् ॥ २० ॥

---

१४. नानाशास्त्राणि बहूनध्यापयामास ।

१५. सुदुष्करयज्ञकर्मक्रमं पद्यैः सङ्गृहीतवान् ।

१६. कविकर्मशिक्षया शिष्यस्य सितरत्नविप्रस्य कवित्वमापादितवान् । निजोपदेशैः तं सुपुत्रवन्तं च कृतवान् । सितरत्नविप्रः–वेण्मणि अच्छन् नम्पूतिरिः । तत्तनयः कदम्बः–वेण्मणि महन् नम्पूतिरिः ।

१७. 'तस्येदम्' इत्यादिभिः हृद्यपद्यैः व्याकरणपण्डितान् सङ्गमग्रामभवान् द्विजेन्द्रान् विस्मापयामास । सङ्गमग्रामः–इरिङ्ङालक्कुट ।

१८. हेत्वाभासभेदानां रम्याणि उदाहरणपद्यानि रचितानि । तानि केषुचित् नैयायिकेषु प्रसिद्धानि ।

१९. शिल्पिशास्त्रे तत्प्रयोगे च निपुणः ।

२०. भक्त्या कालीं स्वाधीनामकरोत् ।

निरर्थकं हन्त पलाशनेति पद्यं समासाद्य बुधेश्वरं यम् ।
बभूव सार्थं निखिलं हि सार्थं भवत्यहो योजकवैभवेन ॥ २१ ॥

अबद्धशब्दार्थमवृत्तमेकः पठत्यहो पद्यमिति स्म किञ्चित् ।
सुवृत्तशब्दार्थमदो गुरूक्त्या चकार योऽन्त्याद्यपदप्रयोगात् ॥ २२ ॥

दोषात्मका यस्य बुधस्य सङ्गाद्गुणात्मकत्वं बहवः प्रपन्नाः ।
यथा जवात् सिद्धरसस्य सङ्गात् सुवर्णतां लोहमयाः पदार्थाः ॥ २३ ॥

स्वपादमूलं शरणं प्रपन्नं महाधनं कञ्चन तन्तुवायम् ।
विमोचयामास सुदुर्जयेन कुष्ठेन यः स्वर्णसहस्र(कर्मविपाक)दानात् ॥ २४ ॥

बहूनि कृत्वा शिवविष्णुकालीस्तोत्राणि चित्राण्यतिमङ्गलानि ।
भक्त्यादिनानारसपूरितानि लोकस्य यः शङ्करतां प्रपेदे ॥ २५ ॥

अभीष्टमर्थं बहवोऽत्र माटवञ्चिक्षितीशप्रभृतिभ्य आपुः ।
यन्निर्मितैरात्मगुणप्रदीपैः श्लोकैः प्रदत्तैः परितोषितेभ्यः ॥ २६ ॥

---

२१. निरर्थकस्य पलाशनेति पद्यस्य सार्थकत्वं साधितवान् ।

'पलाशनारे चपलाशनारे मदन्तरङ्गं कुमदन्तरङ्गम् ।
विलासिकायाः सविलासिकाया विरूपकान्ते रविरूपकान्ते ॥'

इति तत् पद्यम् । अस्यार्थः कीदृश इति आपाततः न ज्ञायते ॥

२२. अबद्धशब्दार्थम् अवृत्तं पद्यमन्त्याद्यपदयोजनेन सुवृत्तशब्दार्थं चकार, गुरुवचनात् ॥

२३. स्वसंसर्गात् सदोषान् बहून् गुणवतश्चकार ।

२४. शरणागतस्य महाधनस्य तन्तुवायस्य कुष्ठरोगं, कर्मविपाकदानं कारयित्वा प्रशमितवान् ।

२५. शिवविष्णुकालीस्तोत्राणि बहूनि कृतानि ।

२६. स्वयमुद्ग्रथ्य दत्तान् श्लोकानुपहृत्य बहवः राजसकाशादभीष्टमर्थं साधितवन्तः ॥

सङ्गीतविद्यात्रिदिवस्रवन्त्या यन्मातुलोऽभूद्धिमवान् यथाद्रिः ।
साहित्यविद्यात्रिदिवस्रवन्त्या तथाभवद्यः परमोन्नतात्मा ॥ २७ ॥

स तण्डुलस्थाल्युपहाररम्ये काल्युत्सवे मातुलसंयुतं यम् ।
मेने जनो वीक्ष्य तु मूर्तिमन्तं ज्ञानोच्चयं भक्तिरसेन युक्तम् ॥ २८ ॥

आशौचदीपस्य विधाय सम्यग्व्याख्यां शुचीन् यस्तु चकार लोकान् ।
अयत्नबोधं लघुपद्यरूपमाशौचसूत्रं च पुनर्व्यतानीत् ॥ २९ ॥

गानं मनोज्ञं कृतवानहल्यामोक्षाभिधं केरलभाषया यः ।
महोत्सवेषूत्तमहस्ततालनृत्तोचितं यत्तरुणीजनानाम् ॥ ३० ॥

महाकविः पुष्पवनाभिधानः स्वर्वर्णनं येन तु कारयित्वा ।
स्वकाव्यमध्येऽथ विलिख्य चाप कीर्तिं परामन्यजनैर्दुरापाम् ॥ ३१ ॥

बाल्ये तु बाल्युद्भवनामधेयं गुणोज्ज्वलं काव्यमपेतदोषम् ।
चकार विद्वज्जनराजहंसपद्माकरं भूरिरसाकरं यः ॥ ३२ ॥

नानोत्तमालङ्कृतिशोभमानं भाणं मनोज्ञं सदनं रसस्य ।
चकार यः साधुतरं चरित्रं यत्रेतिवृत्तं गिरिजोत्सवस्य ॥ ३३ ॥

---

२७. मातुलः सङ्गीत इव अयं युवराजः साहित्ये अद्वितीयोऽभूत् ।

२८. तण्डुलस्थाल्युपहारोत्सवे मातुलभागिनेयौ भक्तिज्ञानयोगाविव व्यराजताम् । तण्डुलस्थाल्युपहारः–तालप्पोलिः ।

२९. आशौचदीपकस्य व्याख्याम्, आशौचसूत्रं च रचितवान् ।

३०. अहल्यामोक्षाख्यं हस्ततालनृत्तगानं रचितवान् ।

३१. पुष्पवनमहाकवेः काव्ये योजयितुं स्वर्गवर्णनं विरच्य दत्तवान् ।

३२. बाल्ये बाल्युद्भवाख्यं काव्यं रचितवान् । पुष्पवनम्–पून्तोट्टं नम्पूतिरिः ।

३३. रससदनभाणं रचितवान् । इदं १८९३ क्रिस्तुवर्षे मुम्बय्यां निर्णयसागराख्ययन्त्रालये मुद्रयित्वा प्रकाशितम् ॥

वदन् वधूनामृतुकालमग्र्यो होराविदां योऽधिकविस्मितेषु ।
कार्तान्तिकेषु स्मितपूर्वमूचे कुजेन्द्विति श्लोकमुदारबुद्धिः ॥ ३४ ॥

यो भाव्यवर्षाधिकवर्षणादिबह्वर्थमुक्त्वाथ जनोपकारम् ।
चकार कृष्यादिषु तीक्ष्णबुद्धिः शक्ता अमर्त्या अपि यन्न कर्तुम् ॥ ३५ ॥

धरासुरः कश्चन यन्निषिद्धवराय दुर्दैवबलेन कन्याम् ।
दत्त्वान्यमौहूर्तिकसङ्घवाक्यात् सद्यः प्रपेदे परमां विपत्तिम् ॥ ३६ ॥

पूर्वक्षपालोकिततारकेशो निर्णीतवान् श्राद्धदिनं जवाद्यः ।
तत्कालचन्द्रस्फुटमाकलय्य निर्णीतवन्तस्तदिदं तथान्ये ॥ ३७ ॥

लीलावतीभास्वरभावयोगैः सङ्क्रीडमानं गणकेन्द्रमध्ये ।
विलोक्य लोकास्तु यमिन्द्रजालविद्याविदग्धं स्म वदन्ति गाढम् ॥ ॥ ३८ ॥

मौहूर्तिकानां सुदृढं परेषामसम्मते यद्विहिते मुहूर्ते ।
विप्रार्भकः कोपि किलोपनीतस्त्यक्तस्वजाड्यः श्रुतिपारगोऽभूत् ॥ ३९ ॥

यत्रोक्तवान् यो मरणानि येषां तत्रैव तेष्वन्यमृतीर्विलोक्य ।
वञ्जीश्वरः सन्निहितात्ममृत्युर्भयाकुलोऽभूत् किल हावशिष्टः ॥ ४० ॥

यस्य प्रसादं समवाप्य नाणुं शिष्यो द्विजः कश्चन नाणुरासीत् ।
चिकित्सया शोभनयाथ कीर्त्या हन्तात्र दैवज्ञतया श्रिया च ॥ ४१ ॥

---

३४. 'कुजेन्दुहेतु' इति पद्यमवलम्ब्य स्त्रीणामृतुकालं पूर्वमेव वदन्नासीत् ।

३५. भाविवर्गवर्षादिकं पूर्वमेवोक्त्वा कृषिप्रवृत्तानामुपकुर्वन्नवर्तत ।

३६. विवाहे वधूवरयोर्जातकवशादानुरूप्यनिर्णये निपुणः आसीत् । एतेन निषिद्धाय वराय कन्यां दत्वा कश्चन विप्रो विपत्तिमाप ।

३७. चन्द्रं विलोक्य श्राद्धदिननिर्णयमकरोत् ।

३८. लीलावतीगणितविषये निष्णातबुद्धिः अभूत् ।

३९. सुमुहूर्ते उपनयनं कारयित्वा विप्रबालस्य कस्यचित् जाड्यं शमितवान् ।

४०. मरणलक्षणं पूर्वमेव जानन्नयं वञ्चीश्वरं भीषयामास मरणलक्षणसूचनेन ।

४१. वैद्यके ज्यौतिषे च प्रसिद्धः नाणुनामा कश्चनविप्रः अस्य शिष्य आसीत् ।

धरासुरः कश्चन युक्तिभाषासूक्ष्मार्थतत्त्वान्यधिगम्य यस्मात् ।
गेहेन देहेन च हन्त कृष्णः शुभ्राणि चक्रे भुवनानि कीर्त्या ॥ ४२ ॥

आजानुबाहुर्मतिमांश्च येन विनीतनागः कटलायविप्रः ।
मातङ्गतन्त्रेष्वथ नाणुनम्ब्याराख्यादपि श्रैष्ठ्यमवाप किञ्चित् ॥ ४३ ॥

शिवद्विजेन्द्रः परमेश्वराख्यः प्रसादमासाद्य यतः स शास्त्रम् ।
गुरुर्बभौ वञ्चिमहीश्वराणाम् श्रीपद्मनाभाङ्घ्रिसरोजभाजाम् ॥ ४४ ॥

यदीयशिष्यत्वमवाप्य कोय्परामाभिधः कश्चन सूतमौलिः ।
नाट्येन वाक्येन च रङ्गसंस्थानाह्लादयामास रसैर्विचित्रैः ॥ ४५ ॥

यच्छिष्यमुख्यः खलु कुम्भकोणजातो द्विजः कश्चन कृष्णसंज्ञः ।
अनन्तशास्त्राम्बुधिपानदाक्ष्यात् कुम्भोद्भवत्वं व्रजति स्म चित्रम् ॥ ४६ ॥

नयामि सद्यस्तनयं प्रियं मे दिशानुवादं सुमते ममेति ।
आगत्य मृत्युः स्वयमाह गूढं हरात्मजाध्यानकरं स्थितं यम् ॥ ४७ ॥

यच्चारुवेणुक्वणितं निशम्य द्राङ्मातुलो वैणिकचक्रवर्ती ।
उवाच विद्या भुवि का नु यास्य वत्सस्य नेत्यद्भुतपूरितात्मा ॥ ४८ ॥

---

४२. युक्तिभाषायां कृष्णाख्यः कश्चिद्विप्रः शिष्य आसीत् । देहेन गेहेन च कृष्णः–करुत्तेटत्तु कृष्णन् नम्पूतिरिः ।

४३. गजविनयने कटलायविप्रः अस्य विदग्धः शिष्यः आसीत् ।

४४. अस्य शिष्यः परमेश्वराख्यः शिवद्विजः वञ्चिराजगुरुरासीत् । परमेश्वरशिवद्विजः–परमेश्वरन् मूस्सतु ।

४५. कोय्परामः सूतः नाट्ये वाक्ये च अस्य शिष्यत्वं लब्ध्वा विदग्धोऽभूत् । कोय्परामः सूतः–कोय्प रामच्चाक्यार् ।

४६. नानाशास्त्रपण्डितः कुम्भकोणं कृष्णशास्त्री अस्य शिष्येष्वग्रगण्यः अभूत् ।

४७. मृत्युरपि स्वयमागत्य तनयनयनाय अस्य अनुवादं याचितवान् ।

४८. वेणुगानेऽपि विदग्धोऽभूत् । तेन वैणिकं मातुलं तोषितवान् ।

अखण्डमेतामधिकृत्य वृष्टिं पद्यं समुत्पाद्य पठाद्य सद्यः ।
यस्त्वेवमुक्तः शिशुकाननेन गम्भीरपद्यं वमति स्म वक्त्रात् ॥ ४९ ॥

यस्य प्रसादात् पदमुन्नतं यत् कोच्चुण्णिबाहूद्भव आप शिष्यः ।
गुरोः प्रकोपादथ तच्च्युतोऽभूत् त्रिशङ्कुवद्धृद्गतशोकशङ्कुः ॥ ५० ॥

अरूर्द्विजेन्द्राद्द्रुतमाहिताग्नेः सङ्क्रान्तबोधः कविशास्त्रिमौलेः ।
महामतिर्योऽतिरराज दीपात् सङ्क्रान्तसप्तार्चिरिव प्रदीपः ॥ ५१ ॥

सद्यो रसालङ्कृतिशोभनार्थविद्योतमानै रुचिरैः सुशब्दैः ।
हृद्यैरनेकैरखिलाभिरामैः पद्यैरकार्षीज्जनरञ्जनं यः ॥ ५२ ॥

(युग्मकम्)

श्रीरामराजच्चरिताभिरामं काव्यं महन्नैषधमाघतुल्यम् ।
श्रीकालिदासाभिधसत्कवीन्द्रकाव्योत्तमस्मारकमादरेण ॥ ५३ ॥

आजानकीराक्षसचक्रवर्तिसल्लापमत्युज्ज्वलमारचय्य ।
समापनात् प्राक् त्रिदिवं गतो यः श्रीरामसङ्कीर्तनपुण्यपूरात् ॥ ५४ ॥

षड्युक्तया विंशतिसंख्यया यद्युक्तं सहस्रं प्रमिते तु तेन ।
कोलम्बवर्षे मिथुनं गतेऽर्के स्वर्गं गतोऽभूद्युवभूमिपो यः ॥ ५५ ॥

यस्मिन् महातेजसि हा गतेऽस्तं सूर्याह्वये सर्वसुबोधहेतौ ।
अज्ञानसंज्ञं निबिडं तमिस्रमाक्रम्य लोकं सकलं जजृम्भे ॥ ५६ ॥

---

४९. शिशुकाननवचनात् वृष्टिवर्णनपरं पद्यं सद्यो ग्रथितवात्। शिशुकाननः–उण्णिकाट्टनम्पूतिरिः ?

५०. कोच्चुण्णिराजः अस्य प्रसादादौन्नत्यं, प्रकोपात् च्युतिं च प्राप ।

५१. अरूर् द्विजेन्द्राद् विज्ञानमर्जयित्वा सुतरां रेजे ।

५२. जनरञ्जनार्थमनेकानि रुचिरपद्यानि रचयामास ।

५३, ५४. श्रीरामचरितं रचयितुं प्रवृत्तः समापनात् प्राक् त्रिदिवं गतः ।

५५. १०२६ तमे कोलम्बवर्षे मिथुनमासे अस्य, स्वर्गतिः । (१८५१ A.D.)

५६. अस्मिन् अस्तं गते सर्वत्र अज्ञानान्धकारो व्याप्तः ।

सरस्वती येन सहैव याता ज्योत्स्नेव रम्या रजनीकरेण ।
यशोभृतं यस्य शुभं निपीय लोकाः पुनस्त्वद्य भृशं रमन्ते ॥ ५७ ॥

पूर्णं रसैर्दैववशादपूर्णं तत् काव्यमज्ञोऽप्यधुनातिरम्यम् ।
तद्भागिनेयीतनयोऽहमस्मीत्यारूढधैर्यः परिपूरयामि ॥ ५८ ॥

---

(त्रयोदशः सर्गः पूर्वतोऽनुवृत्तः)

पत्युः परोक्षं तव मेऽपहर्तुरकीर्तिभीतिर्न कुरङ्गनेत्रे ।
कः शङ्कते पञ्चमुखस्य भीतिं हर्तुर्हरिण्या हरिणासमक्षम् ॥ ३२ ॥

पुरा प्रताप्याखिललोकमद्य लोकान्तरस्थस्य ममातिदूरे ।
रामप्रतापं खलु पश्यसि त्वं खद्योततेजः सवितुर्निशीव ॥ ३३ ॥

मद्द्रोह उग्रः खरनिग्रहादिः शुभाङ्गि रामस्य तदेव वक्ति ।
प्रसुप्तकृष्णोरगराजमूर्ध्नि बालस्य यत् पादतलप्रहारः ॥ ३४ ॥

त्वया कृता रामगुणप्रशंसा महागुणं मां रसयत्यनर्वे ।
अणुर्महानन्यगुणोऽस्ति यस्यास्तस्याः कियान् स्यात् स महान् हृदीति ॥

अन्योपभोगादि गदन्त्यशक्ता जायादिरक्षार्थमनर्थबीजम् ।
यथार्थधीस्तत्र तवातिशैल्या बुद्धिर्यथाभ्यासमवस्थिता हि ॥ ३६ ॥

जयो यशः सद्गुणवस्तुलाभः सुखं ततः शक्तिमतो भवन्ति ।
परार्थहर्तुर्वद को न्वनर्थः श्रोतास्ति को दुर्बलसेर्ष्यवाचाम् ॥ ३७ ॥

---

५७. सः कीर्तिशेषतां गतः ।

५८. तत् काव्यं तद्भागिनेयीतनयः अहं परिपूरयामि ।

३२. पञ्चमुखस्य—सिंहस्य । हरिणासमक्षम्—मृगपरोक्षम् ॥

३६. आतिशैल्या—अतिशीलादागता ।

इदं मतं साधु यशःसुखादेर्हेतुः सदा पौरुषमेकमेव ।
श्रुतास्त्वया येऽघफलप्रदा द्राग् जिता मया तेऽप्यथ कोऽत्र वादः ॥ ३८ ॥

असद्भयात् स्तब्धजलाद्य जाता गोदावरी व्याकुलितः समीरः ।
चन्द्रायते चण्डकरोऽपि पश्य काष्ठां परां मामकपौरुषस्य ॥ ३९ ॥

समुन्नतं प्राप्य पदं सुखेन वस्तुं न योगो बलवर्जितानाम् ।
महाबलस्याश्रयमन्तरेण प्रतानीनीनामिव भूरुहस्य ॥ ४० ॥

विपक्षपक्षक्षपणातिदक्षं समस्तमित्रोदयहेतुभूतम् ।
न मे महापौरुषमेव बाले पश्याद्य सौन्दर्यमुखान् गुणांश्च ॥ ४१ ॥

उक्त्वेति रूपं निजमाददे स नवोन्नवन्मेघनिभं दशास्यम् ।
तृणेऽपि लोले रघुनाथशङ्की सदा दशाशान्तनिरीक्षणेच्छुः ॥ ४२ ॥

तस्मादभूद्भीरनुरञ्जनार्थं रूपेण तेन प्रकटीकृतेन ।
तस्या यथा व्याधियुतस्य मृत्योः सुखाय दुर्वैद्यकृतौषधेन ॥ ४३ ॥

हा राम राम द्रुतमेहि पाहि हरत्ययं त्वद्दयितां दशास्यः ।
हा वत्स हे लक्ष्मण लक्ष्मणेति मुहुर्विचुक्रोश भयात्तदा सा ॥ ४४ ॥

अथातितापाय स रामजायामभ्यद्रवत्तां रजनीचरेन्द्रः ।
मतङ्गजः पिप्पलपल्लवालीभ्रान्त्येव दावाग्निशिखं ग्रहीतुम् ॥ ४५ ॥

दुःखैकहेतुं जगतोऽखिलस्य तमापतन्तं प्रसमीक्ष्य घोरम् ।
दुद्राव सा भर्तरि दूरसंस्थे धर्मे यथाऽधर्मजनिन्दिता श्रीः ॥ ४६ ॥

---

३८. अघफलप्रदाः–पापफलप्रदाः यमादयः ।

४०. प्रतानिनीनाम्–वल्लीनाम् । भूरुहस्य–वृक्षस्य ।

४२. दशास्यम्–दशमुखयुक्तम् । दशाशान्ताः–दशदिगन्ताः ।

दुद्राव वेगेन यतो यतः सा ततस्ततः सोऽनुपपात कामी ।
दशाननस्तद्गुणजालबद्धः पाशैरबद्धोऽप्पतिनापि योऽभूत् ॥ ४७ ॥

ततः स तस्याः श्रमविश्लथाङ्ग्या जग्राह कैश्यं द्रुतिविप्रकीर्णम् ।
व्यमोचयत् स्वां सुतनुं ततस्तद्यदाशु तत् स्नेहगुणस्य लक्ष्म ॥ ४८ ॥

ततः स रामस्य वधूं त्वरावान् प्रगृह्य केशे दृढमाचकर्ष ।
अचिन्तयन्ती महतीं व्यथां तं पार्श्वस्थितं सा तरुमाललम्बे ॥ ४९ ॥

हा राम राम द्रुतमार्यपुत्र संरक्ष मां राक्षसगृह्यमाणाम् ।
त्वं क्वासि हा लक्ष्मण लक्ष्मणेति चुक्रोश दीना जनकात्मजोच्चैः ॥ ५० ॥

विक्रोशदस्या वदनं पिधाय तं वृक्षबन्धं च विमोच्य सद्यः ।
आदाय सीतां द्विगुणीकृतान्तश्शोकासगाद्वायुरिवाम्बरेण ॥ ५१ ॥

निशाचरेणाधिकपीड्यमानां निरीक्ष्य तां रौद्रविचेष्टितेन ।
शुचा रुदन्त्यः सभया विशब्दं विदुद्रुवुः काननदेवतास्ताः ॥ ५२ ॥

क्रूरं विनेदुर्मृगपक्षिसङ्घाः समीरणश्चक्रचरो बभूव ।
नष्टप्रभोऽभूदपि चित्रभानुः सीतां हरत्याशरवंशनाथे ॥ ५३ ॥

क्रन्दच्छिवं रौद्ररटत्कपोतमुद्भ्रान्तनानामृगपक्षिजालम् ।
पतल्लतावृक्षगणं वनं तदस्वस्थमासीद्भयदं तदानीम् ॥ ५४ ॥

---

४७. अप्पतिना–वरुणेन ।

४८. कैश्यम्–केशानां समूहः । द्रुतिः–धावनम् । स्नेहगुणस्य–प्रेम्णः, स्निग्धतायाश्च ॥ लक्ष्म–लक्षणम् ।

५३. चित्रभानुः–सूर्यः ।

५४. शिवा–क्रोष्ट्री ।

सीताभिधानं बडिशं गृहीत्वा क्रव्यादमत्स्ये चलिते तु तस्मिन् ।
बभूव युक्तं कमलाधिवासः स धीवरो हर्षभराकुलात्मा ॥ ५५ ॥

उवाच चर्वीन् स मुदा शुचार्तान् जग्राह सा तं खलु यन्त्रनाली ।
अकारि यस्याहतये त्रिलोकीशल्यस्य या रूपमयी मयेति ॥ ५६ ॥

ततः प्रतस्थे स रथेन शीघ्रं याम्यां समुद्दिश्य दिशं दशास्यः ।
मुमूर्षुरुच्चैर्यममार्गमुग्रं ह्रस्वीकरिष्यन्निव दीर्घदीर्घम् ॥ ५७ ॥

त्वया वयं यच्छिरसा धृतास्तम् पतिं वदामो विपदं तवेमाम् ।
इतीव तद्विश्लथकेशपाशाद्ययुर्विदूरं सुमनस्समूहाः ॥ ५८ ॥

शोकाग्निमालोक्य समेधमानं तद्दाहशान्त्यर्थमिवातिमात्रम् ।
तदीयनेत्रं जलजातमित्रं निरर्गलं बाष्पजलं ववर्ष ॥ ५९ ॥

मार्गं ददानेव सुखोद्गमार्थमतः शरीरादपि दुःखपात्रात् ।
जीवस्य तस्या विवृता चकासे नासापुटी दीर्घतरं श्वसन्त्याः ॥ ६० ॥

शेकुः सकृत् क्षोभयितुं दिगीशकरा न वज्रादिभिरायुधैर्यम् ।
अकम्पयत्तं मुखपद्ममस्या हा राम रामेति सदा वचोभिः ॥ ६१ ॥

तस्या भुजाङ्घ्री बत विक्षिपन्त्यास्तीव्रां शुचं द्रष्टुमिवाक्षमाणि ।
तदा व्यशीर्यन्त निनादवन्ति प्रायो महार्हाणि विभूषणानि ॥ ६२ ॥

सुवर्णवर्णं कृमिकोशजातं तस्याश्चकम्पेऽम्बरमम्बुजाक्ष्याः ।
समुत्पतत्स्यन्दनयानवेगान्निशाचरेन्द्रादिव भीतभीतम् ॥ ६३ ॥

---

५५. बडिशम्—मत्स्यवेधनम् । क्रव्यादः—राक्षसः । कमलाधिवासः—ब्रह्मा । धीवरः—दाशः, श्रेष्ठबुद्धिश्च ।

५६. शल्यम्—शङ्कुः ।

५८. सुमनस्समूहाः—पुष्पसमूहाः, शोभनचित्ताश्च ।

दयोदयं श्रोतृमनस्सु कुर्वन्नस्या उदश्चन् कलकण्ठकण्ठ्याः ।
स्वरोऽतिदीनोऽत्र सुखप्रसुप्तं जटायुषं गृध्रमबोधयत्तम् ॥ ६४ ॥

स्वभावतो रक्ततमेन निद्राशेषेण रोषेण च लोचनेन ।
पश्यन् स्ववीर्यानलदह्यमानमिवारुणाङ्गं स चकार रक्षः ॥ ६५ ॥

निरीक्ष्य तं स्निग्धतमं शुचार्ता साक्रन्ददुच्चैर्विनिहत्य वक्षः ।
हा नीयमानाममुना खलेन पश्यार्य मां पत्तरथेश्वरेति ॥ ६६ ॥

साधुः स साध्व्याः करुणं विलापं सुहृत्तमः शोकपरिप्लुतायाः ।
शशाक नाकर्णयितुं खगेन्द्रो विशेषतः सन्निजनामवर्णम् ॥ ६७ ॥

उवाच चामुं मतिमानदीनं जातः कुले पूज्यतमे विधातुः ।
श्रुतिस्मृतिज्ञो मतिमांश्च राजा कर्मेदृशं किं कुरुषे विगर्ह्यम् ॥ ६८ ॥

साध्वीति पापस्य विरागिणीति दुःखस्य मुष्टेत्ययशोभरस्य ।
रामस्य जायेति कुलक्षयस्य दात्र्यानया को भविता तवार्थः ॥ ६९ ॥

अहं सखा पङ्क्तिरथस्य राज्ञो नाम्ना जटायुः फणिवैरिवीर्यः ।
सहे तवागोऽप्यविषह्यमेतद्गुणान् क्षमाया विमृशन् सदर्च्यान् ॥ ७० ॥

तदाशु सीतां विसृजाथवास्मिनिति क्रुधा सोऽभ्यपतद्दशास्यम् ।
तत्पक्षवातोत्थरजश्छलेन भूरुद्ययौ सान्त्वयितुं स्वपुत्रीम् ॥ ७१ ॥

रिपोरथाभिद्रवतो वधाय ये प्रेरिता राक्षसनायकेन ।
ते पत्रिणः पत्रिकुलेश्वरं तमजिह्मगास्तीव्रजवं न जघ्नुः ॥ ७२ ॥

---

६६. पत्त्ररथेश्वर–पक्षिराज ।

७०. पङ्क्तिरथस्य–दशरथस्य । आगः–अपराधः ।

७२. पत्रिणः–शराः । पत्रिकुलेश्वरम्–पक्षिवंशराजम् । अजिह्मगाः–ऋजुगामिनः ।

तत्पक्षघोरानिलदूरधूतान् महाफलानप्यफलान् विलोक्य ।
तान् सायकानाशु पुनर्जघान दशाननस्तं दशभिः पृषत्कैः ॥ ७३ ॥

धारा प्रविष्टावयवेषु तस्य चापाच्च्युतानां न तथा शराणाम् ।
तं पक्षिराजं व्यथयाञ्चकार दृष्टा यथाक्ष्णो रघुनाथपत्न्याः ॥ ७४ ॥

अथाभिपत्यास्य धनुः प्रगृह्य वभञ्ज गृध्रश्चरणद्वयेन ।
स्वमत्सरिध्वंसभवादिव भ्रूस्तस्यास्तदा हर्षभराद्ववल्ग ॥ ७५ ॥

अथान्यदादत्त धनुस्त्वरावद्रक्षः स पक्षी तदपि प्रभज्य ।
ददौ पुनर्वक्रनखक्षतानां व्याजेन तस्मै धनुषां सहस्रम् ॥ ७६ ॥

हेमप्रभं तन्नखतुण्डघातविचूर्णितं वर्म निशाचरस्य ।
दिव्यं तदानीं दिवि विप्रकीर्णं दधार खद्योतसहस्रलीलाम् ॥ ७७ ॥

खराननेकान् वहतस्तदीयं रथं रयाढ्यान् नखपक्षपातैः ।
हत्वातिचक्राम स विक्रमेण श्रीराममप्येकखरान्तकं तम् ॥ ७८ ॥

खरा गताः संयमिनीं त्वमद्य किं वा पुनस्तिष्ठसि गच्छ गच्छ ।
इतीव सूतं यमराजधानीं सम्प्रेषयामास शिरो विलूय ॥ ७९ ॥

---

७३. फलम्—बाणाग्रम्, प्रयोजनं च। पृषत्कैः—बाणैः ।

७४. धारा—शराग्रम्, जलधारा च।

७५. स्वमत्सरिध्वंसभवात् हर्षभरात् इत्यन्वयः। तस्याः—सीतायाः ।

७७. वर्म—कवचः।

७८. खरान्—गर्दभान्। खरः—तदाख्यो राक्षसः ।

७९. संयमनीम्—यमराजधानीम् ।

ततः सितं चामरयुग्ममस्य छत्रौषधीशं जवतो जटायुः ।
अनन्तरत्नं च रथं प्रमथ्य स्फुटं खगोत्कर्षमिवातनोत् स्वम् ॥ ८० ॥

भग्नायुधस्यन्दनसूतवाहवर्मा दशास्यः स पपात भूमौ ।
सीतां वहन्नङ्कतलेन सिद्धा अपूजयन् साध्विति गृध्रराजम् ॥ ८१ ॥

अथाशराधीश्वरमभ्युपेत्य जघान पक्षी नखतुण्डपक्षैः ।
पुलस्त्यपौत्रोऽपि करैर्विहङ्गं महेन्द्रमातङ्गमहामदघ्नैः ॥ ८२ ॥

रुषा निबद्धं रुधिरावनद्धं वीर्याविरुद्धं नखरादिसिद्धम् ।
जगत्प्रसिद्धं सविधस्थसिद्धं तद्द्वन्द्वयुद्धं प्रबभौ समिद्धम् ॥ ८३ ॥

ततः प्रहारैः स बलादमुष्य चञ्च्वा शरीराद्द्रुतमुच्चकर्ष ।
सिरागणान् पक्षिपतिर्भुजङ्गान् वल्मीकरन्ध्रेभ्य इवोग्रवीर्यः ॥ ८४ ॥

ततः समादत्त महेशदत्तं स चन्द्रहासं प्रबलारिशान्त्यै ।
हतो जटायुर्निहतो जटायुर्हा हेति चुक्रोश तदर्षिसङ्घः ॥ ८५ ॥

सम्प्रेरिता खड्गलताशरेण महाजवातिप्लुतिलाघवाढ्यम् ।
तमस्पृशन्ती तपसाऽविषह्यं कृत्येव सा प्रेरकमाजघान ॥ ८६ ॥

---

८०. चामरयुग्मम्–चामरयोः–वालव्यजनयोः युग्मम् । पक्षान्तरे, अमरयुग्ममिति छेदः । अमरयुग्मम्–देवयुगलम् । छत्रमेव ओषधीशम् चन्द्रम् । अनन्तानि रत्नानि यस्मिन्, तदनन्तरत्नम । अनन्ते–आकाशे यद्रत्नं, तद् इति च । सूर्यमित्यर्थः । खगाः–देवाः, सूर्यचन्द्रादिग्रहाः, पक्षिणश्च ।

८२. महेन्द्रमातङ्गः–ऐरावतः ।

८३. समिद्धम्–दीप्तम् ।

तदद्भुतं कर्म विलोक्य तस्य जहास हर्षेण महर्षिलोकः ।
प्रिया च साध्वी रघुनायकस्य शकुन्तराजं तमपूजयच्च ॥ ८७ ॥

मर्मावगाढेन शितेन तेन न चन्द्रहासेन तथा व्यथाभूत् ।
निशाचरेन्द्रस्य नरेन्द्रपत्नीतन्मन्दहासेन यथा तदानीम् ॥ ८८ ॥

ततस्समुद्धृत्य कृपाणमुग्रं स्वदेहतो नैऋतलोकनाथः ।
महाबलस्तेन जघान वेगाज्जटायुषं रोषकषायितात्मा ॥ ८९ ॥

स तत्प्रहारान् प्लुतिलाघवेन विधाय वन्ध्यानखिलान् खगेन्द्रः ।
जराश्रमार्तः क्षणविश्रमार्थं महातरुस्कन्धतलं ललम्बे ॥ ९० ॥

तदन्तरे राघवधर्मपत्नीं ययौ गृहीत्वा द्रुतमाशरेन्द्रः ।
जराश्रमार्तोऽपि तदा जटायू रुरोध तं क्रोधपरीतचेताः ॥ ९१ ॥

जराश्रमाभ्यां जववर्जितस्य छित्त्वाऽसिना पक्षपदं स तस्य ।
आदाय सीतां द्विगुणीकृतान्तःशोकामगाद्वायुरिवाम्बरेण ॥ ९२ ॥

हा हेति शब्दः सुमहांस्तदासीत्तत् पश्यतामाशु नभश्चराणाम् ।
गुणोऽपि यो विष्णुपदस्य चक्रे श्रुतोऽपि तापं हृदि सज्जनस्य ॥ ९३ ॥

सीताशुचं वीक्षितुमक्षमास्ते विस्मृत्य भाव्यासुरनाशसौख्यम् ।
विमुञ्च सीतां निधनोऽन्यथा स्यात्तवेति सिद्धा हितमूचुरस्य ॥ ९४ ॥

अथर्श्यमूकस्थकपीश्वराणां सीतोत्ससर्जाभरणौघमग्रे ।
ददर्श तत् कर्म निशाचरेन्द्रो न सम्भ्रमध्वान्तसमुद्रमग्नः ॥ ९५ ॥

---

८७. शकुन्तराजम्—पक्षिराजं जटायुषम् ।

९०. वन्ध्यान्—निष्फलान् ।

९३. विष्णुपदस्य—आकाशस्य गुणः—शब्दः ।

समुल्लङ्घ्य क्षिप्रं निशिचरवरः पुष्करचरः
पुरग्रामारण्यानुदधिमथ लङ्कापुरगतः ।
कृताश्वासो रामप्रणयनिधिलाभेन जडधीः
स मेने पूर्णं स्वं जडयति न कं पञ्चविशिखः ॥ ९६ ॥

इक्कावाख्यमहीश्वरीप्रियसुतः कुञ्जुणिधात्रीपतेः
शिष्यो यः कविसार्वभौमपदभाक्कालीपदस्याज्ञया ।
कोच्चुणिक्षितिपेन रामचरिते सम्पूर्यमाणेऽधुना
काव्ये तेन गतस्त्रयोदशतमः सर्गः समाप्तिं शुभे ॥ ९७ ॥

इति श्रीगोदवर्मविद्वद्युवराजकृते
श्रीरामचरिते महाकाव्ये
सीतापहरणं नाम
त्रयोदशः सर्गः



---

९६. पुष्करचरः—आकाशगामी ।

९७. शुभे काव्ये इत्यन्वयः ।

# चतुर्दशः सर्गः

अथ तत्र निधाय जानकीं रमणीयोपवने शुचातुराम् ।
स्मरतप्तमना दशाननो द्रुतमानाय्य जगाद राक्षसीः ॥ १ ॥

यदशेषपतेर्हिते रता मम यूयं खलु चाटुशिक्षिताः ।
बहुयोगदतीक्ष्णबुद्धयस्तदिदं वः किमपि ब्रवीम्यहम् ॥ २ ॥

सकलेन्द्रियबुद्धिचेष्टितप्रकृतीनां महदन्तरं कृतम् ।
मम दाशरथेश्च वेधसा परमेका त्वियमङ्गनासवः ॥ ३ ॥

अभवाय भवाय तस्य मेऽप्यधुनेयं तरुणी मया हृता ।
निहतः स खरोऽल्पबुद्धिना भगिनी येन च हा विरूपिता ॥ ४ ॥

मयि रज्यति नेयमङ्गना मम तांश्चारुगुणानजानती ।
परदोषकथापरैर्मया निहतैर्भिक्षुजनैः प्रतारिता ॥ ५ ॥

इयमद्य न वेत्ति तत्त्वतो गुणजालं मम वर्णितं मया ।
अपि सत्यगिरः परस्य हि स्वयमुक्तेषु गुणेषु संशयः ॥ ६ ॥

तदिमां वदतानघां तथा द्रुतमङ्गीकुरु चारुरूप भोः ।
तव दास्यहमीश्वरेति मामियमद्यैव यथाभियाचते ॥ ७ ॥

मम तस्य जगत्त्रयप्रभोरियमाज्ञैव न याचनापि वः ।
हृतचित्तधनस्य हानया न पुरायाचत यः पुरद्विषम् ॥ ८ ॥

परितोषभरः स मेऽखिलः फलमेतत्करणस्य वः सदा ।
स्वपदानि भजन्ति ते पुनः प्रणता यल्लवतो दिगीश्वराः ॥ ९ ॥

इति यातुपतिर्निगद्य ता निजसौधाग्रगतोऽवदद्रहः ।
चतुरः स चरान्निशाचरांश्चतुरान् दाशरथेर्भयातुरः ॥ १० ॥

भवतां बलमिन्द्रभीतिदं युधि मायां च मयस्य मोहिनीम् ।
मयि भक्तिभरं शितां मतिं विमृशन् किञ्चिदिदं वदामि वः ॥ ११ ॥

व्रजतातिजवेन दण्डकान् खलयो राघवयोर्वधैषिणः ।
न भयादिह किन्तु नस्त्वरा स्वसृवक्त्रस्मृतिदत्तया रुषा ॥ १२ ॥

खरहन्तृवधोऽतिदुष्करः सकलानामिति मास्तु वो मतिः ।
दयितां हरता मया स्मरज्वरमूर्च्छास्य हि रन्ध्रमाहितम् ॥ १३ ॥

इति भर्तृगिरं निशम्य ते त्वरिताः क्रव्यभुजो ययुस्ततः ।
मनसेदमुवाच रावणः स्मरतापं बत सोढुमक्षमः ॥ १४ ॥

शिशुनेदृशसद्गुणाश्रयप्रमदारत्नमजानता मया ।
त्रिजगत्प्रभुता वृता बत स्वभुवः प्राक् तपसा प्रसादितात् ॥ १५ ॥

कलुषाश्रु रिपुस्तवोद्यतं मदधिक्षेपकृदप्यहो मुखम् ।
न विमुञ्चति येन दृश्यतां स इदंरूपगुणो महाद्भुतः ॥ १६ ॥

धनुषा सगुणेन सायकैरपि सेन्द्राणि जगन्त्यशेषतः ।
विजितानि मया तमद्य मां जयतीयं तु गुणेन केवलम् ॥ १७ ॥

विरहे मम दारभाषिते स्तवबुद्धिर्हृदि याभवत् स्थिरा ।
अधुना विधुनाति तामदोविरहः स्वानुभवो हि तत्त्वदः ॥ १८ ॥

न पविर्दहनो न दुस्सहो यमदण्डः प्रलयोऽपि नो महान् ।
मम मृत्युभयाय कल्पते विरहेऽस्याः क्षण आदिमोऽप्यहो ॥ १९ ॥

लघु यामि ततः प्रियान्तिकं बहु रत्नानि पुनः प्रदर्श्य ताम् ।
भुजवीर्यहृतान्यमूनि मे गुणविस्रम्भवतीं करोमि च ॥ २० ॥

इति निश्चितवानवाप्य तां रुदतीं रामकथापरायणाम् ।
कुणपादवधूसमावृतामवदत् पङ्क्तिमुखः पराङ्मुखीम् ॥ २१ ॥

अयि तिष्ठसि किं पराङ्मुखी मयि सेन्द्राखिललोकनायके ।
अनुरक्तधियो नियुञ्जते मदनं दूत्यकृतौ सुरस्त्रियः ॥ २२ ॥

मदुपाहृतरत्नभूषिता नगरीयं वदति स्फुटं तथा ।
मम भूरिगुणाननक्षरं बधिरौघोऽपि यथावगच्छति ॥ २३ ॥

द्रुतमेहि तदित्यतिव्यथां प्रणयात्तां प्रणयन्नितस्ततः ।
बलतः समुवाच रक्षसामधिपस्तत्तदथ प्रदर्शयन् ॥ २४ ॥

तरुपञ्चकमिन्द्रजीवितं तदिदं पश्य बलान्मया हृतम् ।
शरणं तव पल्लवच्छलाद्बहुमानेन बिभर्ति मूर्ध्नि यत् ॥ २५ ॥

न हि कामदुघेत्युपाहरं बलसम्पूरितकामितस्त्विमाम् ।
सुरभिं मुनिहोमसाधनं प्रमवित्रीत्यरिमर्मतत्त्ववित् ॥ २६ ॥

अयमभ्रगजः सदामदो भवतीं मत्प्रतिकूलकारिणीम् ।
अवलोक्य रुषाद्य भूमिजाम् दलयन् गर्जति पश्य भूमिजे ॥ २७ ॥

सुरभि[illegible]बालधिभ्रमप्रदसम्मार्जनिकाप्रहारतः ।
मदरिस्तुतिकारिणि क्षितिं जननीं निन्दति ते विलोकय ॥ २८ ॥

मयि वीक्ष्य विरागिणीमयं तुरगस्त्वां जगदीश्वरेऽध्विजः ।
अतिरुष्टमनाः खुरैर्भवज्जननीं दारयति क्षितिं सदा ॥ २९ ॥

मदमीष्टभवन्मुखद्विषत्कमलोत्पादनमन्तुमञ्जलम् ।
इह शृङ्गयुगेन ताडयन्नयमास्ते शमनस्य सैरिभः　　॥ ३० ॥

अमृतं तदिदं घटोपमस्तनि चिन्तामणिकुम्भकोटिषु ।
इह मृत्युभयायशोभयान्न खलु स्वाद्वपि पीयते जनैः　　॥ ३१ ॥

विनिवारयितुं प्रचेतसा मम तेजोभिधमुग्रमातपम् ।
इदमातपवारणं सितं विनयेनात्र विचित्रमुज्झितम्　　॥ ३२ ॥

[ पुष्पकविमानवर्णनम् ]

अमुमत्र विमानमुत्तमं त्रिजगत्सोदरमम्बरोदरि ।
पुरवैरिसखान्मया हृतं भवती पश्यतु पुष्पकाह्वयम्　　॥ ३३ ॥

समवेक्ष्य जगत्त्रयप्रभोः प्रियतां सम्प्रति कर्बुरेषु मे ।
अयमश्नुति कर्बुरात्मतां गजनासोरु विमाननायकः　　॥ ३४ ॥

भगणा बहुरत्नकैतवादिदमस्मत्पदमाश्रयन्त्यमी ।
परिमुच्य हरेः पदं महत्त्रिदशेन्द्रा इव पश्य सुन्दरि　　॥ ३५ ॥

अमुनामलरत्नशोभिना प्रभया भास्करजातवेदसोः ।
जितयोः परिताप उद्धणः सकलैरप्यनुभूयते जनैः　　॥ ३६ ॥

विविधाकृतयो विहङ्गमास्तुरगाश्चाद्भुतशिल्पकैतवात् ।
इह तन्वि वसन्ति सन्ततं गतिशैघ्र्यादिगुणोपलब्धये　　॥ ३७ ॥

वहति श्रितचक्रशोभितस्फुटितेन्दीवरकाननाच्च्युताः ।
सुभगे कमलालया अयं सरसीः सागरकन्यका इव　　॥ ३८ ॥

ललितैः कलहंसमण्डलैरकलङ्कैरिव चन्द्रमण्डलैः ।
स्नपितश्रमतः समाश्रितैरवियुक्ताः कमलाकरा इह ॥ ३९ ॥

यदयं विदयं वियोगिनां हृदयं पुष्पशरस्य बाणवत् ।
विलुनासि कृतः कवीश्वरैस्तदसौ सुन्दरि पुष्पनामवान् ॥ ४० ॥

गत एष हिरण्यभर्तां विधिवत् पुष्करसंस्थितो धुतः ।
कलहंसवरैर्वशीकृतस्तपसा विक्रमशालिना मया ॥ ४१ ॥

अयि जानकि कामगं रसादमुमारुह्य सुरासुरस्तुता ।
भुवनत्रयदर्शनोत्सवं सह वीरेण मया त्वमाप्नुहि ॥ ४२ ॥

अवबुध्य वरोरु चक्रिणं जगदीशे मयि बद्धमत्सरम् ।
अयमत्ति जवेन चक्रिणं गुहकेशी निजदृष्टिगोचरम् ॥ ४३ ॥

विधिहंसवरोऽम्बुदालके भवदीयाश्रुझरं विलोक्यन् ।
जलदागमशङ्कया गतो तव शिष्यश्चलितोऽद्य मा शुचः ॥ ४४ ॥

भजते दशकन्धरं गणस्तडितामायुरवाप्तुमायतम् ।
इति बुद्धिकरं विपश्चितामसुमालोकय भूषणोच्चयम् ॥ ४५ ॥

न विशोषयति प्रभञ्जनो, न जलं क्लेदयति, प्रभाकरः ।
न तपत्यपि यानि मद्भयात्, कुसुमैस्तैर्ग्रथिता इमाः स्रजः ॥ ४६ ॥

स्मितकान्त्युचिते भवन्मुखे पतितं श्यामलमश्रु कस्य वा ।
न निहन्ति दृशं निशामुखे नवकौमुद्युचिते यथा तमः ॥ ४७ ॥

स यतः शतमन्युतां गतो भुवनेऽस्मत्सुतबन्धनात्ततः ।
हतसर्वसुखः पुरा पुरे न रुरोदैवमिहामरेश्वरः ॥ ४८ ॥

अपि भिन्नरुचेः सुखं प्रियं खलु लोकस्य ब्रुवीति मे मतिम् ।
तव रोदनमेतदुद्भवणं हरति प्राप्तमहासुखोदये ॥ ४९ ॥

विपिनाद्भयदाद्विमोक्षणं सुरलोकोत्तमलोकसङ्गमः ।
प्रणयः सुमहान् जगत्पतेर्न सुखं कस्य नताङ्गि कुर्वते ॥ ५० ॥

हृतराज्यसुहृद्धनो वनें विचरन् मूलफलाम्बुभक्षणः ।
जटिलस्तव राघवः प्रिये न समस्तत्स्मरणं परित्यज ॥ ५१ ॥

नियतं सुखदुःखयोर्नृणां सदसत्सङ्गतयोऽत्र हेतवः ।
मनसापि कृतस्तवाद्य यत् कुरुते राघवसङ्गमः शुचम् ॥ ५२ ॥

अतिदुःसहपूतिनि स्थिते स्वशरीरेऽधिकपूतिता यथा ।
बहुदुःखनिधौ हृदि स्थिते तव रामेऽत्र तथा व्यथेदृशी ॥ ५३ ॥

विपिनस्थितिरात्मनश्चिरं सुहृदां दुःखभरः पितुर्मृतिः ।
इह यस्य फलानि कर्मणः स कथं दाशरथिर्महामतिः ॥ ५४ ॥

गुणदोषविभागवर्जितं समबुद्धिं सकलेषु वस्तुषु ।
पुरुषं बत रामसन्निभं श्रयतां का गुणिनां द्युतिर्भवेत् ॥ ५५ ॥

अवरोधसहस्रमुज्ज्वलं मम दासीकृतदिव्ययौवतम् ।
तव दास्यमरालकुन्तले सततं गच्छतु मां भजादरात् ॥ ५६ ॥

वनराशिलसद्धरिप्रियदारस्मृतिदाः प्रागनुरागदाः प्रियाः ।
अधुना भवदङ्गदर्शनान्मम जाताः सुभगे विरक्तिदाः ॥ ५७ ॥

मदुरस्त्रुटिताञ्जनप्रभं सितमुक्ताफलतारभासुरम् ।
घनपीनमनन्तमम्बरं शशिलेखेव विभूषय प्रिये ॥ ५८ ॥

शतयोजनविस्तृताब्धिना नगरीयं परिवेष्टिता मम ।
कथमत्र विशाललोचने प्रविशेद्दाशरथिर्नराधमः ॥ ५९ ॥

अतिकायनिकुम्भशक्रजित्त्रिशिरःकुम्भमुखैर्निशाचरैः ।
प्रमथैरिव शूलिनः पदं मम निश्शेषविभीषणं पुरम् ॥ ६० ॥

रजताचलनाथवृत्रजित्करिकुम्भादिविमर्दितं मया ।
हृदयोद्भवयोः प्रियाय ते हृदयं किं न पुनः प्रसीदति ॥ ६१ ॥

अयि देववरान् घ्नता मया न कृतश्चित्तजनिग्रहः पुरा ।
अपि चास्य वशोऽस्मि किं पुनस्तव चित्तं न बत प्रसीदति ॥ ६२ ॥

सुमनोरिपुमाकलय्य मां न मनः किं सुमनत्वमश्नुते ।
तव पश्य सुरक्षमारुहां सुमनांस्यद्य शिरःस्थितानि मे ॥ ६३ ॥

रणनिर्जितसर्वदिक्पतेः सततं स्वान्तविरोधितां मम ।
अवबुध्य महाभयेन किं तव न स्वान्तमिदं प्रसीदति ॥ ६४ ॥

कलुषं बहुपङ्ककारणे घनकालेऽपि न मानसं प्रिये ।
हतपङ्कगणेऽपि मय्यहो किमिदं ते कलुषं विलोक्यते ॥ ६५ ॥

त्रिजगत्प्रभुतेव दुर्बलैर्द्रुहिणाद्यैरपि या सुदुर्लभा ।
मम तां प्रथमामिमां नतिं परिगृह्याशु कृपां कुरु प्रिये ॥ ६६ ॥

इति रावणभाषणेन्धनैर्ज्वलितः क्रोधहुताशनः क्षणात् ।
स्थिरभर्तृरतेर्नतभ्रुवः शमयामास भयं महत् तमः ॥ ६७ ॥

जनकक्षितिपात्मजामुखात् सहसा वर्णगणोऽथ निर्ययौ ।
कलयन् पिशिताशनप्रभोस्तदमर्षाग्निकणव्रजभ्रमम् ॥ ६८ ॥

कुमते लपितैः कृतं कृतं रघुनाथाददतिभीतचेतसः ।
मम मोषणकारिणोऽखिलैर्विदितं तेऽद्य बलं हि कर्मणा ॥ ६९ ॥

त्वयि नास्त्यरिपक्षजेतृता वचनाङ्गीकृतवीरचेष्टिते ।
कथमम्बुदतात दुन्दुभौ निनदस्वीकृतमेघगर्जिते ॥ ७० ॥

परतत्वविवेकहानितोऽप्यभिपत्ययात्तमृती रघूत्तमात् ।
भयलीनखरो मृगोऽप्यहो भवतः श्रेष्ठतमो मतो मम ॥ ७१ ॥

मतिहीन पलायनादिभिस्तव रक्षा न भवेत् कथञ्चन ।
अमितोग्रबले रघूत्तमे कुपिते काल इवान्तकारिणि ॥ ७२ ॥

प्रचलच्छरसन्ततेः प्रियां रघुनाथस्य गभीरवर्ष्मणः ।
हरतस्तव का पुनः स्थितिर्जड वेलामिव यादसांपतेः ॥ ७३ ॥

निहनिष्यति लक्ष्मणाश्रितः सकलानन्दकरः कलानिधिः ।
तिमिरप्रकरान् निशाचरान् विततै रामशशी गवां गणैः ॥ ७४ ॥

शमयिष्यति लोकबान्धवः कमलोल्लासकरो रघूत्तमः ।
पिशिताशततिं गवां गणैरविषह्यैर्द्युमणिर्निशामिव ॥ ७५ ॥

प्रबलाशुगदीप्ततेजसो रघुवीरस्य शुचेः प्रियां भ्रमात् ।
स्पृशतस्तव बालता स्फुटा दहनस्येव शिखां समुज्ज्वलाम् ॥ ७६ ॥

चपलाशुगचापनादवान् रघुवर्याम्बुधरोऽमृतप्रदः ।
पिशिताशनसञ्चयोष्मकं शरवर्षैः शमयिष्यति द्रुतम् ॥ ७७ ॥

रघुनन्दनचण्डमारुते भ्रमहेतौ धरणीभृतामपि ।
प्रचलत्यतिमात्ररंहसा शरणं किन्नु पलाशसन्ततेः ॥ ७८ ॥

भुवने बहुरन्ध्रकारिणः शमयिष्यन्ति निशीथिनीचरान् ।
पिशिताशनमूषकानिमान् सहसा दाशरथेः शरोरगाः ॥ ७९ ॥

शठ जिह्मगतेर्जगद्‌द्रुहो भवतः कुण्डलिनोऽत्र भोगिनः ।
निधनं घटयिष्यति क्षणाद्रघुवीरस्य शरः खगेश्वरः ॥ ८० ॥

न समक्षमटन्ति यज्जिता यमदूता भुवि जीवहारिणः ।
त्रपया रघुनाथसायकानिह कस्तान् विषहेत दुर्मते ॥ ८१ ॥

नयनं किल यज्जितोज्ज्वलच्छिखवह्नि त्रपया निमीलयन् ।
वसतीन्दुधरो रघुप्रभोरिषवस्ते न दहेयुरत्र कम् ॥ ८२ ॥

त्रिपुरारिधनुर्भवाद्दशैरविकम्प्यम् सुरदानवार्चितम् ।
दलितं लघु येन लीलया तव जय्यः स कथं रघूत्तमः ॥ ८३ ॥

( कुमते शृणु येन लीलया निहतस्त्वच्छलभानलोऽर्जुनः । )
कुमते शृणु येन नाशितः करिणस्ते हरिणाधिपोऽर्जुनः ।
तमृषिं धनुषैव योऽजयत्तव जय्यः स कथं रघूत्तमः ॥ ८५ ॥

रघुनायकतीक्ष्णसायकैर्निहतं त्वां रुधिरार्द्रविग्रहम् ।
रणभूपतितं च्युतप्रभं परिपश्येयमिहेक्षणामृतम् ॥ ८६ ॥

परितो वृतमामिषार्थिभिर्बहुभिर्गृध्रसृगालवायसैः ।
रचयिष्यति राघवः शरैर्न चिरात्त्वां नयनोत्सवाय मे ॥ ८७ ॥

रजनीचारपुङ्गवास्त्वया कथिताः शक्रजिदादयोऽत्र ये ।
शलभाः खलु ते शरार्चिषो रघुदीपस्य समग्रतेजसः ॥ ८७ ॥

सहसैव महास्त्रतेजसा परिदग्धुं भुवनान्यशेषतः ।
अलमेव महाबलस्तु यः क्षितिपस्यास्य जलाम्बुधिः कियान् ॥ ८८ ॥

सकलव्यसनार्णवाः क्षयं स्मरतां यस्य पदं व्रजन्त्यहो ।
शतयोजनमात्रविस्तृतो जलधिस्तस्य कियानयं भवेत् ॥८७॥

रघुवंशवरेण तेन मे रहितायाः बहुशोककारणम् ।
असुविष्किरपञ्जरायितं दह वा भक्षय वा कलेबरम् ॥८९॥

रघुनन्दनकालचक्रिणो विरचय्योग्रमलीकमीदृशम् ।
तव मूढ कुतः सुखं भवेत् श्रयतोऽपीन्द्रविरिञ्चिशङ्करान् ॥९१॥

सकलोत्तमरत्नसञ्चयं भवतो रात्रिचरस्य मुष्णतः ।
उचितं भरताग्रजः शरैर्वधदण्डं प्रतिपादयिष्यति ॥९२॥

विकृताननेत्रनासिकारदनश्रोत्रमिदं वपुस्तव ।
स्मरतोऽपि न कस्य साध्वसं कुरुते कुत्सितघोरचेष्टितम् ॥९६॥

अमृतत्विषि येन योजिता बत दोषाकरता समत्सरे ।
रघुवंशमणेर्मुखाम्बुजं मम तद्दृष्टिपथं विगाहताम् ॥९४॥

अहितव्रजकालपावकः सुहृदानन्दसमुद्रचन्द्रमाः ।
रघुवंशपतिः शुभाकृतिर्लघु मे दृष्टिपथं विगाहताम् ॥९५॥

समुपेक्षितबन्धुमन्दिरा सरसं येन समं महावने ।
उषितास्मि चिरं भयङ्करे मम भूयात् पुरतः स राघवः ॥९६॥

निरयामरलोकलक्ष्मता नियता मे यदभावभावयोः ।
लघु मे पुरतः स राघवो बहुकल्याणगुणः प्रकाशताम् ॥९७॥

---

८९. असवः प्राणा एव विष्किरः पक्षी, तस्य पञ्जरायितम् ।
९४. दोषाकरः चन्द्रः ।

इत्थं वाक्यं जनकदुहितुर्भर्तृपादं स्मरन्त्याः
श्रुत्वा रक्षः परुषमधिकं प्रत्युवाचात्यमर्षम् ।
आयुर्वर्षं तव नियमितं तत्परं दुर्भगे त्वां
प्रातर्भुक्त्यै पशुमिव बलात् सूदयिष्यन्ति सूदाः ॥ ९८ ॥

इत्युक्त्वा स जगाम राक्षसपतिः सीतानदीं स्वान्तरे
कुर्वाणः कुचचक्रवक्त्रकमलां स्वं मन्दिरं मन्दधीः ।
नित्यं तद्धृदयह्रदान्तरचरं रामाभिधं पन्नगं
कामान्धो न विलोकयन्निषुमहादंष्ट्रासहस्रोल्बणम् ॥ ९९ ॥

इति श्रीकोच्चुण्णिराजविरचिते
श्रीरामचरितमहाकाव्यपूरणे
रावणसीतासंवादो नाम
चतुर्दशः सर्गः



# पञ्चदशः सर्गः

निहत्य रामो मृगरूपधारिणं निशाचरं तं निशितेन पत्त्रिणा ।
निवर्तमानः सहसान्तिकेऽशृणोत् स पृष्ठतः फेरवभैरवारवम् ॥ १ ॥

विदेहकन्यानुजदुःखशङ्किनस्ततः स्फुटं तस्य बहूनि जज्ञिरे ।
मुहूर्निमित्तान्यशुभान्युपस्थिते यथाग्ररूपाणि गदे शरीरिणः ॥ २ ॥

ततो विषादाकुलिताखिलेन्द्रियो रघूत्तमः सर्वनिमित्ततत्त्ववित् ।
जगाम चिन्तां महतीं महामतिर्व्रजन्निजं सत्वरमाश्रमं पथि ॥ ३ ॥

विभेद्य रूपेण निशाचरः स्फुरन्मृगाकृतिर्मामिव किन्तु लक्ष्मणम् ।
त्यजन्नसून् लक्ष्मण पालयेति मत्स्वरेण तारेण ततोऽपनीतवान् ॥ ४ ॥

विदेहजा मत्स्वरसन्निभस्वरं निशम्य तं तीव्रभयेन लक्ष्मणम् ।
व्रज व्रजेत्युक्तवती मुहुर्दृढं भयं हि नारीमन एव बाधते ॥ ५ ॥

तया मदेकान्तनिबद्धभावया ततः स नुन्नो नियतं विनिर्गतः ।
ज्यया महाकार्मुकगाढनद्धया शरः प्रणुन्नो न कथं विनिष्पतेत् ॥ ६ ॥

महावनेऽस्मिन् पिशिताशनावृते कथं भवेत्तेन मया च सा विना ।
विनेन्दुना भानुमता च किं भवेन्नभस्थले मेघगणैर्वृते प्रभा ॥ ७ ॥

इति व्रजन् दाशरथिः स लक्ष्मणं महाविषादोद्गमदूषितत्विषम् ।
ददर्श चन्द्रप्रतिमं यशश्चयं यथापवादोदयसादितप्रभम् ॥ ८ ॥

उवाच रामः सहसानुजं पुनर्विपद्भुजङ्गीघटभेदनं त्विदम् ।
निबद्धवैरस्त्वमिहाशरैर्वृते विहाय सीतां विपिने यदागतः ॥ ९ ॥

समुन्नतान्निर्गलितं निजात् पदादभिप्रयान्तं वनराशिमाशु माम् ।
अनुप्रयाता बत कौमुदीव या तुषारभानुं हरिणेक्षणा क्व सा ॥ १० ॥

यथा वसन्तं नवपुष्पसन्ततिः स्वभावतो या मृदुलान्ववर्तत ।
वने वसन्तं गहने रसेन मां क्व सा कृशाङ्गी जनमौलिलालिता ॥ ११ ॥

परिप्लुतां स्नेहरसेन भूरिणा मलैर्विहीनां बत मेऽन्तरेण याम् ।
यथा प्रदीपस्य दशां विना स्थितिः सुदुर्लभा सा क्व नु वल्लभा वद ॥१२॥

हुताशनिष्टप्तसुवर्णवर्णया यया जगत्पावनशीलया विना ।
मम स्थितिः पङ्कजबान्धवाभया विना दिनस्येव न संभवेत् क्व सा ॥१३॥

समीक्षमाणस्य मनोज्ञनेत्रया तया भवन्तं रहितं समागतम् ।
मनो मम प्रव्यथितं विकारिणो यथा विहीनं कृपया चिकित्सकम् ॥१४ ॥

विडम्बयाम्यद्य बताहमीदृशत्वदर्पितात्मप्रियदाररक्षणः ।
कृषीवलं चण्डचलत्समीरणद्रविष्यदभ्राहितसस्यपालनम् ॥ १५ ॥

गिरं मदीयां दयितां च तां भवान् विहाय कस्मादधुना समागतः ।
वदन्तमेवं गुरुशोकभारतो जगाद रामं विवशः स लक्ष्मणः ॥ १६ ॥

निबोध भो बोधवतां वर श्रुतत्वदीयनादप्रतिमार्तनिस्वना ।
प्रबोध्यमानापि मया न जग्मुषी धृतिं मृगाक्षी निजगाद मामिति ॥ १७ ॥

भवान् मदर्थं विनिगूहितेन्द्रियः सदात्मनस्तस्य विपत्तिमिच्छति ।
निहन्यमानं प्रबलैर्निशाचरैर्यदद्य नाथं न बतानुधावति ॥ १८ ॥

अहं मृतस्यापि समस्तमङ्गलालयस्य तस्यैव सदा वशे स्थिता ।
विशुद्धविद्येव गुरोरवेहि ते सुदुर्लभाऽन्तेवसतोपि दुर्मतेः ॥ १९ ॥

महीमवाप्तुं भरतस्य शासनादृजुस्वभावस्य रिपुः प्रियस्य मे ।
इहाटसि छिद्रसमीक्षणोत्सुको यदद्यनाथं न बतानुधावसि ॥ २० ॥

न कृष्णसर्पत्वमिवातिदारुणः शुभैः पुरस्तात् प्रतिलोम्य कर्मभिः ॥
विपन्निमग्नं शरणार्थिनं पुनर्यदद्य नाथं न बतानुधावसि ॥ २१ ॥

तयेति वाक्यैः सविषैरिवाशुगैर्निकृत्तमर्मा हमिहागतः प्रभो ।
इमां क्षणं पालयतेति भामिनीं समर्प्य सम्यग्वनदेवतासुताम् ॥ २२ ॥

इतीदमुक्त्वा विरतं कृताञ्जलिं पुनर्बभाषे सहजं रघूत्तमः ।
धिगस्तु हा हा भवतापि कर्मणा धिया च सम्यक् शिशुता स्फुटीकृता ॥ २३ ॥

गुरोः समालोचननिर्मलीकृतं विहाय वाक्यं द्विषदामयौषधम् ।
त्वया मनस्सम्भ्रमरोषदूषितं स्त्रिया गृहीतं वचनं विषोपमम् ॥ २४ ॥

अवन्ति सान्त्वैः पुरुषाः स्थिराशयाः समानदुःखा अपि चञ्चलाः स्त्रियः ।
विपत्सु घोरासु वधूगिरा गतो भवान् पुनः क्षोभमभाग्यतो मम ॥ २५ ॥

अमेयमायां द्विषतामसृग्भुजां बलं ममानन्तमिमां च दुर्बलाम् ।
विजानतस्तेऽद्य ततो विनिर्गमे न कारणं वेद्म्यपि सूक्ष्मदर्शिनः ॥ २६ ॥

तव स्थितिस्तत्र भवेत् क्षणान्तरं स्त्रियास्तु कस्याश्चन सम्भ्रमप्रदा ।
ततः पुनर्निर्गमनं कुलस्य नः सबन्धुलोकस्य कुठारतां व्रजेत् ॥ २७ ॥

त्रिविष्टपस्था अपि जातु देवता यतोऽवतुं न प्रभवन्ति दुर्जयात् ।
ततः कथं तां वनदेवताः स्वयं पुराभिरक्षन्ति निशाचरव्रजात् ॥ २८ ॥

इति ब्रुवन्नेव तदाश्रमं द्रुतं प्रविश्य विध्वस्तबृसीकटाजिनम् ।
प्रियामपश्यन्नथ तत्र राघवो विहारदेशेषु च तापमाप सः ॥ ८९ ॥

पुनः पुनः स्वाश्रमशैलदीर्घिकानदीविहारस्थलगह्वराटवीः ।
विचिन्वतस्तां दयितामविन्दतो रघुप्रवीरस्य बभूव सम्भ्रमः ॥ ९० ॥

प्रियां विचिन्वन्निजजीवितादपि भ्रमन् समन्तात् सहसोत्पतन् क्वचित् ।
अभूत्तदोन्मत्त इवारुणेक्षणः स रामभद्रः शिथिला जटा वहन् ॥ ९१ ॥

परिभ्रमन्तं सहसातिकामतः स लक्ष्मणस्तं बहुसूक्तया गिरा ।
नियन्तुकामोऽन्वतपत्त्वरान्वितो यथैव रज्वा वृषभं कृषीवलः ॥ ३१ ॥

समस्तलोकोत्तमसारनिर्मितां प्रियामपश्यन् जनकेन्द्रनन्दिनीम् ।
अगाधशोकार्णवमग्नमानसो धृतिं विनेति प्रललाप राघवः ॥ ३३ ॥

अयि क्व लीनासि गजेन्द्रगामिनि द्रुतं त्वमेह्येहि ममान्तिकं प्रिये ।
कृतं कृतं तेऽद्य कृशाङ्गि लोलया भृशं दिशन्त्या मम शोकमीदृशम् ॥३४॥

सुदारुणा केलिरियं तवाधुना भवद्वियोगानलपाकविक्लवम् ।
विशीर्णमूलं हृदयं मम प्रिये कृपाणधारेव भृशं निकृन्तति ॥ ३५ ॥

यया विनोदैः समयो लघुः कृतः क्रिया बुधैः केलिरितीयमुच्यते ।
गुरुर्विषादः क्रियते यया पुनः ध्रुवं विपत्कोटिषु सा हि गण्यते ॥ ३६ ॥

ह्रिया पिधानं निज एव मन्दिरे कपाटपृष्ठेन कृतं त्वमर्हसि ।
कृशाङ्ग्युरस्येव यथा कुचद्वयी पटान्तरेणाद्य पुनः क्व निर्गता ॥ ३७ ॥

---

८९. बृसी–सन्न्यासिनामासनम् ।

३६. सा क्रिया विपत्कोटिषु गण्यते ।

दृशा मृगः कृष्णफणी मनोज्ञया जितः कबर्या गमनेन कुञ्जरः ।
त्वयात्र कट्या च मृगाधिनायकः पुनर्वने व.ऽतव शात्रवो भवेत्    ॥ ३८ ॥

हृतासि किं मञ्जुलपुष्पमालिकाभ्रमाद्वसन्तेन सुमास्त्रबन्धुना ।
चकोरपोतैरथवाऽच्छचन्द्रिकाभ्रमेण पीता वनमध्यवासिभिः    ॥ ३९ ॥

ललाटनेत्रानलधूमसङ्गतः कलङ्किताः चन्द्रकलां विहाय ताम् ।
जहार किं त्वां गिरिकाननान्तरस्थितां गिरीशः शशभृत्कलोज्ज्वलाम् ॥ ४० ॥

स्ववाहचक्राङ्गविहङ्गपुङ्गवं मनोहरां शिक्षयितुं गतिं शुभे ॥
भटैरुताहो भवती स्वयम्भुवा जवेन नीतासि निजं निकेतनम्    ॥ ४१ ॥

श्रियः क्षमायाश्च पतिः स्वजाययोः प्रियाय लक्ष्मीसुतसेवितां सदा ।
धरात्मजां त्वामहरत् स मायया विमोह्य मां यो हि वृकादिवश्वकः ॥ ४२ ॥

समुद्गिरन्ती वचनं सुधामयं सुधाशतेन्द्रैर्भवती हृता नु किम् ।
विधोः प्रभीतैरथवा महासुरैर्विभीषयन्ती विधुमास्यशोभया    ॥ ४३ ॥

खरादिविध्वंसनजातमन्युना समस्तलोकोत्तमवस्तुहारिणा ।
हृतासि किं राक्षसचक्रवर्तिना विमोह्य मां दारुणमाययानया    ॥ ४४ ॥

पतिव्रतात्वादिगुणैः समेधिते सदापि धर्मे सति दीप्तजेसि ।
कथं स्पृशेत्त्वामपि वा निशाचरो यथान्धकारो दृशमुज्वलेऽनले    ॥ ४५ ॥

अपारसौन्दर्यसमुद्रमध्यगां मनोभुवा वीरवरेण पालिताम् ।
सुदर्शनैश्चावयवैः समुज्ज्वलां कथं स्पृशेत्त्वामपि वासवो रिपुः ।    ॥ ४६ ॥

मया वियुक्ता मलयानिलैर्धितप्रसूनबाणाभिधपावकोष्मणा ।
इदं क्षणार्धं भवतीप्रबाधिता परिद्रुता किं नवनीतगात्र्यभूत्    ॥ ४७ ॥

विषादमूढो बहुधा वितर्कयन्निति स्मरंस्तां गुणराजिराजिताम् ।
पुनः स पप्रच्छ रघूत्तमः श्वसन् प्रियामपश्यंस्तदभूद्यदग्रतः ॥ ४८ ॥

इदं मनोहारि विलासचेष्टितं यया वितीर्णं प्रणयेन वः पुरा ।
उरोजलक्ष्मीः स्तबकेऽधरद्युतिर्नवप्रवाले च लता गता क्व सा ॥ ४९ ॥

दिगन्तरेभ्यः सततं समागतैरुपास्यमाना मुखराननैर्द्विजैः ।
महीरुहा ब्रूत परोपकारिणः क्व साऽधुनाऽऽस्ते मम जीवनायिका ॥ ५० ॥

भवत्सु दृष्टिद्युतिदानतत्परा क्व सा मृगाः शंसत वल्लभा मम ।
नृशंसशार्दूलवृकादिजं भयं विनाशयिष्यामि शरैर्वनेषु वः ॥ ५१ ॥

निजाह्वयद्वीपिपदार्थचिन्तनस्फुटीभवद्द्वीपपतित्वविश्रुता ।
वदन्तु शार्दूलवरा मम प्रिया किमन्तरीपेषु भवद्भिरीक्षिता ॥ ५२ ॥

वराह भो ब्रूहि पुरा विनिर्गता क्षितेः प्रविष्टा क्षितिमेव साद्य किम् ।
मनोज्ञतद्वीक्षणकाङ्क्षिणो भवेद्वृथान्यथैतत्तव भूविदारणम् ॥ ५३ ॥

कुचादिनाहृत्य ममेव चेतनां गजेन्द्र कुम्भादिरुचिं तवोज्ज्वलाम् ।
वनेऽत्र कुत्रापि निलीय तां स्थितां विदेहजामाशु विमार्गयावहै ॥ ५४ ॥

नमोऽस्तु तुभ्यं भवतोचितं कृतं मृगेन्द्र सर्वास्वपि दिक्षु वीक्षितुम् ।
मम प्रियामुच्चतरं महागिरेः शिरो यदारोहसि शीघ्रमुत्पतन् ॥ ५५ ॥

वलीमुखा वानरनाममलाभतो नरेषु साजात्यसुहृत्त्वमुत्तमम् ।
प्रकाशयन्तः सुहृदो मम प्रियां विचित्य दृष्ट्वा वदतादारेण तत् ॥ ५६ ॥

दृढं करिष्यन्ति मयेदमीरितं जवेन शाखामृगवंशनायकाः ।
यदद्य सीतागतिशंसनप्रियः समीक्ष्यतेऽयं शकुनव्रजः शुभः ॥ ५७ ॥

अशेषलोकाखिलकर्मपाककृल्ललाटलेखाकरवाहवंशजाः ।
परोपकारैरिह मानसालया इति श्रुतं ब्रूत रितच्छदः क्व सा ॥ ५८ ॥

इदं वधूरत्नमपि त्वया हृतं स्वकान्तरत्नाकरदानकौतुकात् ।
तथा यदि त्वय्युदधिः श्लथादरो भवेद्धि गोदावरि देहि देहि मे ॥ ५९ ॥

भवान् दिविस्पृङ्ङ्निखिलां समीक्षितुं क्षमः क्षमां सिद्धसुरर्षिसेवितः ।
विराजते भूधरनाथ मत्प्रिया क्व साधुनास्ते गदितुं त्वमर्हसि ॥ ६० ॥

मया वियुक्ता गुरुशोककर्शिता धरित्रि मातर्वसति क्व जानकी ।
किमद्य मौनं भजते भवत्यपि प्रस्तरमुष्याः करुणां विनोचिताम् ॥ ६१ ॥

नमोऽस्तु तुभ्यं भगवन् प्रभाकर प्रसीद सत्यं वद कर्मसाक्ष्यसि ।
भवन्महावंशभवस्य मे प्रिया हृता द्विषा केन नु लोकबान्धव ॥ ६२ ॥

त्वमन्तरात्मासि समस्तदेहिनां प्रभो जगत्प्राणतयातिवल्लभ ।
विदेहकन्यानववृत्तबोधकं समीरय त्वं वचनं समीरण ॥ ६३ ॥

न वेद्म्यहं तं भवता समर्पितं क्षणं वसत्यन्तरमन्तरेण यः ।
विभो वद त्वं विमलाम्बर प्रिया मम क्व सास्ते विमलाम्बरप्रिया ॥ ६५ ॥

मयार्थ्यमाना अपि चाटुभाषितैः प्रसाद्यमाना अपि वन्दनादिभिः ।
ददत्यमी हन्त न मह्यमुत्तरं पदच्युतोऽसाविति मय्यनादरात् ॥ ६५ ॥

जनाः समाविष्कृतवीर्यदारुणं सभाजयन्तीह मृदुं न केवलम् ।
प्रभञ्जने चण्डतरे समागते द्रुमा नमन्तः प्रणमन्ति किं मृदौ ॥ ६६ ॥

अतः परं किञ्चन दर्शयाम्यहं तदात्मनस्तेज इति क्रुधाभवत् ।
जगत्त्रयं कर्तुमनाः स भस्मसात् पुरत्रयं प्राग्वृषभध्वजो यथा ॥ ६७ ॥

ततः समारोपितभीमकार्मुकः स्वदृष्टिशोभास्रझरीपरिप्लुतः ।
स सान्ध्यरागारुणशक्रचापवज्जगत्क्षयोद्युक्तघनोपमो बभौ ॥ ६८ ॥

चचाल भूमिः सह भूतसञ्चयै ररास सिन्धुर्विषसाद वासवः ।
तथा तु रामे कुपिते व्यजृम्भत स्वयम्भुवः कश्चन संभ्रमः स्फुटः ॥ ६९ ॥

इति प्रपञ्चेऽशरणे चराचरे प्रतप्यमाने करुणाम्बुशीतलः ।
तदानुजस्तं न्यरुणत् प्रतापिनं निदाघमुग्रं जलदागमो यथा ॥ ७० ॥

करौ निजग्राह धनुर्गृहीतवान् मुहुर्मुहुश्च प्रणनाम पादयोः ।
गुरोस्तदा दारुणकर्मशान्तये स लक्ष्मणः प्रेमभरेण धैर्यवान् ॥ ७१ ॥

पुरन्दराद्यैरपि कर्तुमक्षमं दिशामधीशैः प्रणयेन लक्ष्मणः ।
प्रसह्य रामस्य करग्रहादिकं चकार लोकत्रितयं दिधक्षतः ॥ ७२ ॥

परन्तु रामस्य गुरुप्रसादजं दयामृतस्राविच यद्भविष्यति ।
स्मरिष्यमाणं सततं जगत्प्रभोस्तदुज्ज्वलं कर्म चकार लक्ष्मणः ॥ ७३ ॥

सौमित्रिस्तमुवाच चाग्रजमिदं शान्तात्मना सर्वदा
लोकानां हितकारिणा च भवता क्रोधः कृतोऽयं कथम् ।
दुर्गन्धं जनयेत् कथं मृगमदश्चण्डातपं चन्द्रमाः
क्रूरं गार्दभमारवं परभृतः पुण्ड्रेक्षुकाण्डः कटुम् ॥ ७४ ॥

ग्रस्तः प्राक्कलिना नलो नरपतिर्यातो ययातिर्जरां
स्वर्गाच्च च्युतिमश्नुतो ग्रहपती हा हन्त राहुग्रहम् ।
भूः कम्पं व्रजति क्वचिद्विधिरपि छिन्नैकमूर्धा वृका-
द्भीतात्मा स्वयमद्रवत् पशुपतिः को नापदं प्राप्तवान् ॥ ७५ ॥

यद्वत्तामिस्रपङ्क्तिर्निशि तपनरुचिर्वासरे तद्वदेषा-
मापत् सम्पच्च नृणां भवति मुहुरपि स्वस्वकर्मानुरोधात् ।
काले काले निवार्यं खलु जगति जनैः कर्म पाकोन्मुखं तद्-
दुःखेऽपि स्वानुरूपामिह तमसि नरव्याघ्र दृष्टिं विधेहि ॥ ७६ ॥

इत्युक्त्या भरतानुजस्य शशिनः कान्त्येव रोषात्मकं
दूरीकृत्य तमश्चचार स चिरं सीतां विचिन्वन् वने ।
मार्गे तत्र जटायुषं बत गतप्रायायुषं सानुजो-
ऽपश्यत् सास्रझरं सगैरिकजलोद्गारं गिरीन्द्रं यथा ॥ ७७ ॥

हा तातप्रियबान्धव द्विजपते केन त्वमल्पायुषा
नीतः कष्टदशामिमामिति गदन् मन्दं करेण स्पृशन् ।
रामाहं युधि रावणेन निहतस्त्वद्वल्लभाहारिणे-
त्येवं वादिनमण्डजेन्द्रमवदद्रामो मुमूर्षुं पुनः ॥ ७८ ॥

क्लेशं किं भजसे वृथा खगपते सख्युर्वियोगादिदं
त्यक्त्वा जीर्णतरं वपुर्नवमवाप्यान्यद्व्रजेन्द्रालयम् ।
स्वर्गद्वारकवाटमेतदयशो रक्षःकृतं पत्रिणां
क्रव्याद्ध्वंशहरः समुद्घटयिता सौमित्रिपत्र्यञ्जसा ॥ ७९ ॥

प्राप्तानुज्ञः परमपुरुषाद्देहमौज्झज्जटायुः
पश्यन्नेव त्रिजगदधिपं सानुजं स्वाग्रभागे ।
रामस्त्वार्तः सहजसहितस्तव्द्यधात् प्रेतकार्यं
पक्षीन्द्रोऽसौ पदमथ यतः प्रापदानन्दसान्द्रम् ॥ ८० ॥

---

७९. पत्रिणां एतत् अयशः रक्षःकृतं स्वर्गद्वारकवाटं सौमित्रिपत्री क्रव्याद्ध्वंशहरः अञ्जसा समुद्घटयति । सोमित्रि त्रीत्यत्र, पत्री—पक्षी, धन्वी चार्थः ।

तस्मै वारि वितीर्य तां जनकजां तौ मार्गयन्तौ पुनः
क्रौञ्चारण्यमतीत्य घोरविपिनं प्राप्तौ मतङ्गाश्रमम् ।
नागावाससहोदरीमथ दरीमालोक्य रक्षोवधूं
वीरौ शूर्पणखीसखीं व्यतनुतां तत्रासिनाऽयोमुखीम् ॥ ८१ ॥

भूयस्तौ सञ्चरन्तावथ पथि दनुभूरायताभ्यामगृह्णा-
द्दोर्भ्यामासन्नपूर्वार्जितसुकृतपरीपाकबन्धः कबन्धः ।
ताभ्यां विच्छिन्नबाहुः क्षितितलपतितो दग्धसर्वाङ्गपापः
शापोन्मुक्तः स भूत्वा रघुपतिमवदत् पूरुषश्चारुरूपः ॥ ८२ ॥

शापात् स्थूलशिरोमहर्षिविहितादस्मि त्वया मोचितः
साहाय्यं भवतः करोमि तदहं सम्यग्धिया राघव ।
वालित्रासितमृश्यमूकनिलयं सीताप्तये वानरं
सुग्रीवं सखिकाङ्क्षिणं प्रियसुतं मित्रस्य मित्रं कुरु ॥ ८३ ॥

अमी सन्दृश्यन्ते बहुसुमफला यत्र तरवः
पथा यातं तेन स्फटिककमलां फुल्लकमलाम् ।
युवां पम्पां, सम्पादितबहुलपुण्या वसति सा
सदा यस्यास्तीरे जटिलकबरी सिद्धशबरी ॥ ८४ ॥

---

८१. वारि तिलोदकं वितीर्य- और्ध्वदैहिकं सर्वं विधायेत्यर्थः । नागावासः—पाताललोकः ।

८२. दनुभूः—दानवः कबन्धः ।

८३. स्थूलशिराः इति ऋषेर्नाम । दनुर्नाम देवविशेषः स्थूलशिरश्शापात् वैरूप्यं प्राप्त इति कथा ।

८४. युवां पम्पां यातम् इत्यन्वयः ।

सुग्रीवस्थानभूतः स च शिखरिपतिर्भाति तस्याः समीपे
मुञ्चन्नानामृगालीकलकलनिनदैर्मूकतामृश्यमूकः ।
इत्थं तस्मिन्निगद्य त्रिदिवमधिगते तेन मार्गेण वीरौ
पम्पयास्तीरदेशं विविशतुरुदयल्लाघवौ राघवौ तौ ॥ ८५ ॥

अथ विहितसपर्यः सानुजन्मा शबर्या
सपदि सुकृतमय्या सेविते नाकलोके ।
कुवलयमवतीर्णं बन्धुभावेन बिम्बं
शशिन इव सरस्तद्रामचन्द्रो ददर्श ॥ ८६ ॥

इति श्रीकोच्चुण्णिराजविरचिते
श्रीरामचरितमहाकाव्यपूरणे
रामविरहतापो नाम
पञ्चादशः सर्गः



# षोडशः सर्गः

अथालोक्य पम्पामगाधां विशालां सरोजभ्रमद्भृङ्गचक्राङ्गचक्राम् ।
अतिस्वच्छनीरां लसद्वृक्षतीरां स्मरन् जानकीमेवमाह स्म रामः ॥ १ ॥

अये लक्ष्मणालोकयालोकय त्वं विशालाक्ष पम्पां विहारैकयोग्याम् ।
इमां निर्मलैः पूरितं वारिपूरैर्दधानां मनो भूयशः पात्रलक्ष्मीम् ॥ २ ॥

बहुस्नेहसंसेकजाज्वल्यमाना शिखेयं हुताशस्य सीताभिधाना ।
निजारातितोयाकरालोकनान्मां सरोषेव दन्दह्यतेऽन्तः प्रविष्टा ॥ ३ ॥

ममोत्फुल्लरक्तोत्पलेन्दीवराब्जभ्रमद्भृङ्गहंसैयमाभाति पम्पा ।
इदानीं बताङ्गारकेङ्गालभस्मोच्चलद्धूमकङ्कालकीर्णाचितेव ॥ ४ ॥

सिताम्भोजरक्तोत्पलेन्दीवरौघैरियं भाति पम्पा समन्तात्प्रकीर्णा ।
शशाङ्कप्रभासान्ध्यरागान्धकारैर्युतेवामला पद्धतिर्निर्जराणम् ॥ ५ ॥

अमुष्याचलेन्द्रस्य पुष्पैर्विचित्रैः समृद्धश्रियो दर्शनाय स्वभर्तुः ।
प्रकाशं प्रणीता धरण्या सलीलं गभीरेव नाभिश्चकास्तीह पम्पा ॥ ६ ॥

भयात्कृत्तिवासोजटाकाननान्तर्निलीनां समालोक्य मन्दाकिनीं ताम् ।
स्फुटाम्भोजवक्त्रेण पम्पा हसन्ती मरुल्लालिता सर्वदा नृत्यतीयम् ॥ ७ ॥

नभोमण्डलं चण्डभानुप्रभाभिः कृतादुग्रतापान्वितान्तं भयेन ।
अतिस्वच्छपानीयसंक्रान्तमूर्तिच्छलान्नोदरं जातु मुञ्चत्यमुष्याः ॥ ८ ॥

समादाय घर्माम्बुमुक्तामणीनां गणानागतेभ्यो जनेभ्यो ददाति ।
महार्घान् पयोरुट्समुद्रान्तरस्थान् सुगन्धान् वणिग्गन्धवाहोऽयमस्याम् ॥ ९ ॥

पयश्शोषकाणां विवस्वत्करणां रिपूणां निरोधार्थमञ्जासनेन ।
अमुष्याः सुधातुल्यवार्युज्ज्वलायाः समन्तादमी निर्मितास्तुङ्गसालाः ॥ १० ॥

मृणालावलीव्यालमालाकलापा बकौघास्थिशुभ्रद्विजेशावतंसा ।
इयं भाति जह्नोः सुता रागभूम्ना स्वयं धूर्जटेराददानेव वेषम् ॥ ११ ॥

अदस्तोयतीरोत्थशष्पैकलोलान् मुहुर्वक्रितग्रीवमालोकयन्त्यः ।
शिशून् पृष्ठगानत्र दुग्धं क्षरन्त्यो हरिण्यश्चरन्त्यस्तृणं सञ्चरन्ति ॥ १२ ॥

प्रति स्वीयजाया इव स्यन्दमानैर्बहिः स्नेहसारैर्निषिक्ता मदान्धाः ।
इदङ्कूलसञ्चारिणोऽमी कुरङ्गा रमन्ते मृगीभिः समं मांसलाङ्गाः ॥ १३ ॥

सुधातुल्यमम्भः पिबन्तो धरित्रीधरोत्तुङ्गशृङ्गोपमा वारणेन्द्राः ।
अमी तत्र पारेऽधिकं दूरभावाद्वितन्वन्ति वाहारिबालौघबुद्धिम् ॥ १४ ॥

हरिक्रूरगोपातसञ्जाततापा दृढं पीवरं कायमभ्रङ्कषे च ।
वहन्तोऽत्र मज्जन्त्यमी वारणेन्द्रा धरित्रीधराः प्राग्यथा वारिराशौ ॥ १५ ॥

दरोत्फुल्लनीलोत्पलश्यामलाङ्गा अमी धीरनादा न नूनं गजेन्द्राः ।
त्रिलोकीपतेराज्ञया वृत्रशत्रोरितस्तोयमादातुमाप्ताः पयोदाः ॥ १६ ॥

इहायं करी पुष्करिण्यां करिण्यां किरन् पुष्कलं पुष्करं पुष्करेण ।
चिरं क्रीडति ध्वस्तनिश्शेषतापो वशा नास्य रक्षोवशा पश्य भाग्यम् ॥ १७ ॥

निपीयाङ्घ्रिणा पादपैस्तृप्तिमद्भिः समुद्गारतस्तोयमुद्गीर्णमस्याः ।
समास्वाद्य पीयूषयूषानुकारि द्विजाः संस्तुवन्तीव हृष्टा नदन्तः ॥ १८ ॥

प्रभोरोषधीनाममदःपोषणार्थं जलान्यानिनीषोरमुष्या नियोगात् ।
अमून्यागतानीह ताराणि भान्ति प्रफुल्लावदाताम्बुजातापदेशात् ॥ १९ ॥

स्वमित्राग्निसंसर्गसञ्जाततापं शमं नेतुकामः समीरोऽयमस्याः ।
कणैरम्भसां शीतलैरार्द्रमूर्तिश्चरत्यत्र कूले प्रतप्तानुकूले ॥ २० ॥

यतोऽभून्मुकुन्दाङ्घ्रिसङ्क्षालनार्हा नदी तस्य पात्रस्य सम्पूरणाय ।
समाहर्तुमम्भः शिवं वेधसाऽस्या अमी प्रेषिता हंसवाहेन हंसाः ॥ २१ ॥

गिरीशाक्षिवैश्वानरज्वालशान्तिप्रदेनाम्भसा पूरितायाममुष्याम् ।
सरोजाशुगः सन्ततं नष्टभीतिर्वसत्यस्य केतुर्झषो दृश्यते च ॥ २२ ॥

सदा मीनदृग्दृष्टिसृष्टिप्रवृत्ताद्विधेरानिनीषोर्झषान् मीनकेतुः ।
अमुष्यामगाधोदरायां निधाय स्फुटाब्जेषुकूटैरवत्याश्रितायाम् ॥ २३ ॥

न शैवालमेतत् कुरङ्गायताक्षीघनव्यायतस्निग्धकेशानुकारि ।
ग्रहीतुं नृणां कामिनां मानसानि स्मरेणास्तृतं जालमस्यां विशङ्के ॥ २४ ॥

वहन्ती जलं शम्भुनेत्राग्निशत्रुं सरोजाशुगान् सम्यगुत्पादयन्ती ।
अवन्ती झषं केतनं मीनकेतोः करोत्यद्य किं किं न साहाय्यमेषा ॥ २५ ॥

शुभं स्पर्शमात्रेण पङ्कघ्नमस्या जलं नारकं हन्ति नूनं जनानाम् ।
अतः प्रेतराड्वाहवंश्यैर्लुलायैरिदं हन्यते शृङ्गचक्रेण रोषात् ॥ २६ ॥

पयोदागमे भूरिदोषाविलाभिर्निदाघेषु शुष्कोदकाभिर्नदीभिः ।
कथं वा भवेत्तुल्यता लक्ष्मणास्याः सदा निर्मलैर्वारिभिः पूरितायाः ॥ २७ ॥

बलारातिनीलोपलभ्रान्तिमन्तर्ददाना नृणां न द्विरेफावलीयम् ।
इमां दर्शनीयां सदा द्रष्टुकामा जनानां रसादागता दृष्टिमाला ॥ २८ ॥

समालोक्य मां पम्पया कोपवह्निर्गृहीतोऽप्रिये वैतरण्येव दुष्टम् ।
परिभ्रान्तपुष्पन्धयव्रातनाम्नो यदेषाऽधुना धूमसङ्घान् बिभर्ति ॥ २९ ॥

हुताशस्य शान्तिं प्रदीप्तस्य तोयं करोतीति या भारती सा मृषैव ।
स्फुटाम्भोजकिञ्जल्कगन्ध्यम्बवमुष्या यदेतन्क्षमोद्दीपयत्यङ्गजाग्निम् ॥ ३० ॥

प्रियास्नेहपूर्णे मनस्यस्मदीये सदा दीप्यमानो मनोजानलोऽयम् ।
अमुष्याः सुगन्ध्यम्बुना वर्धितोऽलं व्रजेद्दुस्सहः केन वा हन्त शान्तिम् ॥

इदं लक्ष्मणालोकयायोजनान्तं वनं तीरभागे समुत्पन्नमस्याः ।
उपेतं विचित्रैः प्रवालैः प्रसूनैः फलैर्दर्शनीयैर्विहङ्गैः खगैश्च ॥ ३२ ॥

खगैः सम्पतद्भिस्समाक्रान्तदेहा नवास्त्रोपमानैः प्रसूनैः परीता ।
भ्रमद्भृङ्गझङ्कारहुङ्कारनादा अमी किंशुका योधसाम्यं भजन्ति ॥ ३३ ॥

लताजालमत्यान्त्रमालाकलापाः प्रसूनावलीरक्तधारातिरक्ताः ।
मधूद्गारिणो भृङ्गनादाट्टहासैरमी भान्ति सम्पूरिताशाः पलाशाः ॥ ३४ ॥

चलन्मारुतालोलशाखा भुजाभिर्मिथो मर्दनं कुर्वतामायताभिः ।
सुमव्याजतः सिन्दुवारद्रुमाणां श्रमाम्भःकणा नूनमाविर्भवन्ति ॥ ३५ ॥

वियोगिव्रजध्वंसनोत्पन्नमंहः शमं नेतुकामेन कामेन नूनम् ।
अयं हेमराशिर्द्विजेभ्यः प्रदातुं चितः कर्णिकारप्रसूनच्छलेन ॥ ३६ ॥

द्रुमान्योन्यसंश्लेषजातान्धकारे वनेऽस्मिन् वसन्तं वसन्तं दिदृक्षोः ।
प्रवेशे सुखाय स्मरस्य प्रसूनच्छलाच्चम्पका दीपमुद्योतयन्ते ॥ ३७ ॥

धनुस्तत् क्व वत्सानयाद्याङ्गजेन प्रयुक्तं समुद्दीप्तमाग्नेयमस्त्रम् ।
क्षणं वञ्चितोऽस्मि ज्वलद्वह्निकल्पः सुमौघोऽयमालोक्यतेऽशोकजातः ॥ ३८ ॥

ऋतं तदृढं यत् प्रसादं विधत्ते दलं चूतजं चर्वितम् धातुपत्न्याः ।
तथाहीदमास्वाद्य सञ्जातमात्रं स्तवः कोकिलैर्गीयते पुष्पकेतोः ॥ ३९ ॥

त्रिलोकैकवीरस्य पङ्केरुहेषोर्जयश्रीकरे स्यन्दने मन्दवाते ।
समायाति भक्त्या नमन्तः शिरोभिर्द्रुमाः साधु कुर्वन्त्यमी पुष्पवर्षम् ॥ ४० ॥

समुत्सार्य सर्वाणि शुष्काणि पत्राण्ययं मारुतः पुष्पमाध्वीरसेन ।
अरण्यस्थलीं सिञ्चति राज्यकीर्तेर्वसन्तस्य सख्युः स्मरस्य प्रवेशे ॥ ४१ ॥

निजाग्राधिरूढातिमुक्तप्रसूनच्छलादुन्नतानाममीषां द्रुमाणाम् ।
अमर्त्याध्ववीथीसमुल्लेखनेन प्रसक्तानि शाखासु ताराणि भान्ति ॥ ४२ ॥

प्रसूनव्रजच्छन्नशम्याकवृक्षच्छलेनात्र सौवर्णराशीन् सुरेशाः ।
नमेरूदयं चावलोक्य श्रयन्ते स्ववासक्षयाशङ्कयाऽस्वप्नभावम् ॥ ४३ ॥

तमाला घना लोध्रपुष्पं तुषारः सुमच्छन्नशम्याकवासन्तिकाली ।
रवीन्दुप्रभे सन्ति सन्तं वसन्तं भजन्तेऽत्र शेषर्तवः स्वामिनं स्वाम् ॥ ४५ ॥

अयोध्या विचित्रद्रुमारामरम्या लसत्सारसै राजमाना तटाकैः ।
समुत्तुङ्गहर्म्या तथा नैव पम्पा सशैलाटवीयं यथा रोचते मे ॥ ४५ ॥

गृहैर्वैजयन्तादिभिर्नन्दनाद्यैर्वनैः शोभमाना वियद्गङ्गया च ।
पुरी वृत्रशत्रोस्तथा नैव पम्पा सशैलाटवीयं यथा रोचते मे ॥ ४६ ॥

विचित्रेऽतिमात्रं विदेहेन्द्रपुत्र्या तया चारुगात्र्यात्र सत्रा वसेयम् ।
क्षणं यद्यहं तर्हि जातः कृतार्थस्तृणायैव मन्ये मनोज्ञान्यदेशान् ॥ ४७ ॥

लतापादपानां सुमोत्पत्तिहेतावृतावत्र पुंस्कोकिलारावरम्ये ।
सदासेविते मारुतैर्दाक्षिणात्यैः कथं धारयेज्जानकी लक्ष्मणासून् ॥ ४८ ॥

अशक्ता क्षणं सोढुमस्मद्वियोगं वनं या प्रविष्टा समुत्सृज्य राज्यम् ।
मया सा कथं वा विनास्मिन् वनान्ते सजीवा भवेद्रावणेनापनीता ॥ ४९ ॥

इति व्याकुलं चिन्तया भाषमाणं प्रियाविप्रयोगेन दन्दह्यमानम् ।
अतिस्विन्नगात्रं मुहुर्निःश्वसन्तं सुमित्रात्मजो रामचन्द्रं बभाषे ॥ ५० ॥

भवान् विप्रयोगेन हा हा प्रियायाः कथं दह्यते मूढवत् प्राज्ञमौले ।
अरण्यस्य शुष्कस्य शुक्रेण दाहः स्फुटं जायते न क्वचिद्वारिराशेः ॥५१ ॥

विषादं कृथा मा वृथोद्योगशत्रुं, महात्मन् मृता नो भवेन्नूनमार्या ।
ऋषीन्द्रैः स्फुटज्ञातकालत्रयार्थैर्यदस्याः प्रभो व्याहृतं दीर्घमायुः ॥ ५२ ॥

अलं दातुमार्यां दशास्यापनीतामियं नाश्रुधारा न चेमे प्रलापाः ।
विभो किन्तु शास्त्रानुगा धीरियं ते शरा ब्रह्मदण्डप्रकाशास्तथैते ॥ ५३ ॥

विपत्तिं गताः प्राकृता यान्ति नाशं स्फुटीकुर्वते साधु धीराः प्रतापम् ।
पतन्ति द्रुमा हन्यमानाः कुठारैर्वमन्त्युग्रमश्मोच्चया लोहिताश्वम् ॥ ५४ ॥

स्मरन् गृध्रराजादिभिः प्रोक्तमर्थं विना शोकमुत्तिष्ठतां वीरमौले ।
अधःपातितस्ताडनेनातिवेगं समुत्थानकृत् सत्वरं कन्दुकोऽपि ॥ ५५ ॥

इति प्राज्यमोहान्धकारार्ककल्पैर्वचोभिः समाश्वासितो लक्ष्मणेन ।
विशुद्धात्मना राघवस्तेन साकं समुत्तीर्य पम्पामवापर्ष्यमूकम् ॥ ५६ ॥

बभाषे च सौमित्रिमुत्साहवन्तं सुतः कोसलाधीशपुत्र्या महात्मा ।
द्रुतं गच्छ सुग्रीवमुग्रप्रतापं प्रसादार्थिनं चात्र मां ब्रूह्यवासम् ॥ ५७ ॥

ततः कुण्डिकावेणुदण्डाक्षमाला वहन् रक्तवासा यतिर्भस्मधारी ।
तयोराविरासीत्पुरस्ताद्वपुष्मान् रसः शान्तनामेव संशुद्धतेजाः ॥ ५८ ॥

महापूरुषौ तौ निरीक्ष्याथ भिक्षुर्बभाषे युवां तापसौ कौ जटाभिः ।
शरान् पावकार्चिस्समानुद्वहन्तावमू कार्मुके चेन्द्रचापोपमाने ॥ ५९ ॥

शुभैर्लक्षणैर्लक्षितावात्मभासा वनं शोभयन्ताविदं सञ्चरन्तौ ।
हुताशानिलौ किं नु चण्डांशुचन्द्रौ युवां जिष्णुविष्णू किमु ब्रह्मशम्भू ॥ ६० ॥

वराहर्क्षशार्दूलसिंहादिसत्वव्रजं त्रासयन्तौ प्रतापोज्वलाभ्याम् ।
वपुर्भ्यां त्रिलोकाधिपत्यौचिताभ्यां अरण्यं प्रविष्टौ किमर्थं भवन्तौ ॥ ६१ ॥

अहं वानरेन्द्रस्य सुग्रीवनाम्नो दिनाधीशपुत्रस्य मन्त्री हनूमान् ।
श्रितस्यर्श्यमूकं सदा वालिभीत्या कपिः कामरूपस्सुतो मारुतस्य ॥ ६२ ॥

ततो वीक्ष्य सुग्रीवसन्दर्शनार्थी रघूणां पतिस्तत्र सुग्रीवभृत्यम् ।
प्रहर्षप्रकर्षप्रफुल्लाननस्तं स्तुवन् वत्स तत्त्वं वदेत्याबभाषे ॥ ६३ ॥

अथोवाच तं लक्ष्मणो वायुसूनुं दशस्यन्दनो नाम राजा यशस्वी ।
सखा वृत्रशत्रोरयोध्याधिपोऽभूत् पितेव प्रजाः पालयन् धर्मशीलः ॥ ६४ ॥

अयं रामनामाऽस्य राज्ञः सुतानां चतुर्णां गुणैरग्रगो जन्मना च ।
पितुर्वाक्यतः काननं संप्रविष्टः प्रियत्वं हि धर्मे सतां नेश्वरत्वे ॥ ६५ ॥

अहं लक्ष्मणाऽख्योनुजो जानकी च प्रियैतस्य शक्तौ न सोढुं वियोगम् ।
पुरस्तात् प्रयातावशङ्कं तदानीं यथा काश्यपिर्भास्करस्य प्रभा च ॥ ॥ ६६ ॥

हृता राक्षसेनाऽस्य जाया प्रिया सा यथैवान्धकारेण लोकस्य दृष्टिः ।
पुनस्ताममुष्मै प्रदातुं समर्थो भवेत् सूर्यवत् सूर्यसूनुर्न चान्यः ॥ ६७ ॥

अयं सर्वलोकस्य नाथो महात्मा गुणैरुज्वलः सज्जनश्लाघनीयैः ।
प्रियान्वेषणायाद्य मार्ताण्डपुत्रं कपिं नाथमिच्छन् प्रविष्टो वनेऽस्मिन् ॥ ६८ ॥

महापूरुषौ तौ ततः कार्यवन्तौ स विज्ञाय वातात्मजो दीर्घदर्शी ।
हतं वालिनं प्राप्तराज्यं च भानोस्तनूजं विनिश्चित्य हृष्टो बभाषे ॥ ६१ ॥

महाकार्मुकौ दीप्तबाणौ भवन्तौ विलोक्याधुना वर्तते सूर्यसूनुः ।
भृशं व्याकुलो बालिभीनष्टबुद्धिर्भयान्धस्य किं किं न भीतिं विधत्ते ॥७०॥

तदार्यौ युवां तस्य सम्भ्रान्तिशान्त्यै समारुह्य मामर्हथस्तत्र गन्तुम् ।
इति स्वीकृतस्वाकृतिर्मारुतिस्तौ समारोप्य पृष्ठं गतः स्वामिपार्श्वम् ॥७१॥

तयोरीप्सिते वर्णिते वातजेन स्फुटं वानरेन्द्रस्य सूर्यात्मजस्य ।
दृढं मर्दयन् साध्वसध्वान्तमन्तस्तादानीं रराजोदितो मोदचन्द्रः ॥ ७२ ॥

विधायाथ तौ साक्षिणं हव्यवाहं कृतान्योन्यसख्यौ कृतार्थौ समर्थौ ।
सुखेनोपविष्टौ गिरेस्तस्य शृङ्गे कथाश्चक्रतू रामसप्ताश्वपुत्रौ ॥ ७३ ॥

पुरा यानि सीतोत्ससर्जाशरेण द्रुतं नीयमाना महार्हाणि तानि ।
तदा भूषणान्युत्तरीयं च रम्यं प्रभुर्दर्शयामास रामं कपीनाम् ॥ ७४ ॥

मणिच्छन्ननाङ्गारकैरावृतानि प्रियाभूषणान्याशु रामो गृहीत्वा ।
हृदि न्यस्तवान् यद्द्रवीभूतमासीत्ततः स्नेहरूपं मनस्तस्य तापात् ॥ ७५ ॥

रुदन्तं पुनस्तं रघूत्तंसमुच्चैर्वदन्तं प्रिये क्वासि हा जानकीति ।
सुहृद्बुद्धिमान् हेतुमद्भिर्वचोभिः समाश्वासयामास मार्ताण्डसूनुः ॥ ७६ ॥

समाश्वस्य तद्भाषितं रामभद्रस्ततस्तस्य शोकेन सञ्जातरोषः ।
शरं रौद्रमुल्लालयन् कालकल्पं प्रतिज्ञातवान् निग्रहं शक्रसूनोः ॥ ७७ ॥

ततः साधु साध्वित्युदीर्य प्रणम्रः शरण्यो भवानेव नूनं जनानाम् ।
भयोत्कम्पितानामिति द्विस्त्रिरुच्चैर्हरिर्वाक्यमावर्तयन् नृत्यति स्म ॥ ७८ ॥

मायाविप्रलयप्रदाननिरते ज्येष्ठे प्रविष्टे गुहां
बालिन्यात्मन उग्रमोहजनितं तत् कन्दराच्छादनम् ।
वैरं तेन समुत्थितं दृढतरं दारापहारादिकं
सर्वासु भ्रमणं च दिक्ष्वथ हरी रामाग्रतोऽवर्णयत् ॥ ७९ ॥

कक्षे राक्षसचक्रवर्तिमथनं तल्लीलया बालिन-
स्तत् पाथोधिषु तर्पणं दितिभुवस्तन्निग्रहं दुन्दुभेः ।
निष्पत्रीकरणं करप्रहृतिभिः सालद्रुमाणामपि
स्मारं स्मारमसावभूचकितधीः कीशो नरेशान्तिके ॥ ८० ॥

सुग्रीवप्रत्ययार्थं रघुकुलतिलको दुन्दुभेरस्थिकूटं
पादाङ्गुष्ठेन केल्याऽक्षिपदथ दशकं योजनानां जनानाम् ।
यश्चक्रे पश्यतां द्राक् सुरसरणितले वर्तमानोऽतिमानो-
न्मानो मानातिमुह्यद्दशवदनकरोत्क्षिप्तकैलासशङ्काम् ॥ ८१ ॥

बाणेनैकेन रामः पुनरपि विपुलान् सप्तसालान् बिभेद
क्ष्माभृद्भूमिं, स्वमित्रप्लवगकुलपतेः संशयं चाशयस्थम् ।
पश्चाद्येऽधःपतन्तश्चटचटरटितैः शृण्वतामाशु कर्णं,
ब्रह्माण्डाघातजातप्रतिरवगुरुभिर्दुर्जनानां मनश्च ॥ ८२ ॥

किष्किन्धां बालिगुप्तां दशरथतनयौ मन्त्रिणो वायुजाद्याः
सुग्रीवोऽथ प्रविश्य क्षितिरुहपिहितास्तस्थुरन्तस्थकोपाः ।
स्पष्टं पुत्रस्तु भानोः सितकिरणकलाकारदंष्ट्राकरालो
युद्धार्थी सर्वलोकश्रुतिमतुलरवैरर्दयन्नृत्यति स्म ॥ ८३ ॥

श्रुत्वा तं तस्य नादं श्रवणपुटकटुं स्त्रीभिरन्तःपुरस्थः
क्रोधेनोग्रेण दीप्तोऽनल इव हविषा हेममाली स बाली ।

निश्चक्रामाथ मुञ्चन्नतिपरुषारवांस्तान् प्रभो राघवाणां
सुग्रीवोन्मुक्तशब्दप्रतिनिनदमतिं ये वितेनुस्तदानीम् ॥ ८४ ॥

वीर्योद्धतावकुरुतामथ तौ नियुद्धं कीशेश्वरौ झटिति यत्र तयोः प्रतापः ।
अन्योन्यलोहकठिनाङ्गविघट्टनोद्यद्वह्निच्छलेन सकलैः स्फुटलक्ष्य आसीत् ॥

उन्मानमाननिनदेक्षणवेषवर्णगत्यादिभिः सुसदृशावथ तौ विलोक्य ।
धीमांस्तदा सखिवधं परिहर्तुकामो रामः शिलीमुखविमुक्तिपराङ्मुखोऽभूत् ॥

क्षीणप्राणस्तदनु बलिना बालिना पीड्यमान-
स्तं चापश्यन् रघुपतिशरं प्राद्रवत् सूर्यसूनुः ।
वैरित्यक्तं गिरिमुपगतस्यानुजाद्यैः समेतो
रामश्चाथ व्यथितमनसस्तस्य पार्श्वं प्रपेदे ॥ ८७ ॥

रघुकुलपतिनाथ साधुवाक्यै रवितनयः परिसान्त्वितः कथञ्चित् ।
स्फुटतरवनवृक्षपुष्पमाल्यस्फुटपरिलक्षितलक्षणः कृतश्च ॥ ८८ ॥

पुनश्च ते वानरराजधानीमवाप्य वृक्षान्तरिता अतिष्ठन् ।
रवैर्दिशो निर्दलयन् रणाय रवेः सुतो बालिनमाजुहाव ॥ ८९ ॥

सर्पा दर्पाधिका यं विजितविषधरं वीक्ष्य रन्ध्रेषु लीनाः
रौद्रास्ते काद्रवेयाः खगपतिसदृशं लज्जया वा भिया वा ।
बाणं तं बालिवक्षस्तलदलनपटुं विस्फुरत्कालदंष्ट्रा-
दण्डाकारं विधुन्वन् सशिख इव शिखी तत्र जज्वाल रामः ॥ ९० ॥

इति श्रीकोच्चुण्णिराजविरचिते
श्रीरामचरितमहाकाव्यपूरणे
वालिसुग्रीवयुद्धं नाम
षोडशः सर्गः



## सप्तदशः सर्गः

अथ तं निशम्य निनदं त्विषां पतेस्तनयस्य रोषकलुषीकृताशयः ।
पुरतः पुरुन्दरसुतः समुत्पतन् कपिराडभण्यत निषिध्य तारया ॥ १ ॥

त्यज रोषमुल्बणममुं समुत्थितं कपिलोकनायक विनाशकारणम् ।
परिजृम्भमाणविषदर्पदूषितः फणिपुङ्गवः शिरसि केन धार्यते ॥ २ ॥

विपदर्णवेऽधिकगभीरदारुणे सहसा विवेकरहितो निमज्जति ।
पुरुषस्तु यत्परिगृहीतमानसस्तममुं न कोपमिह को बुधस्त्यजेत् ॥ ३ ॥

यदि ते मनो रिपुजयोत्सुकं सदा कपिसिंह तर्हि जय कोपमागतम् ।
परतोऽरिकोटिषु मुनीश्वरैरमुं गणितं नयानयविचारकोविदैः ॥ ४ ॥

अधुनैव वीर भवता जितो द्रुतस्तपनात्मजः शितमतिर्युयुत्सया ।
अविशङ्कमत्र पुनरप्युपागतो विनदन् करोति तरलं मनो मम ॥ ५ ॥

असहाय एष न समापतेद्ध्रुवं समराय वीर बहुशस्त्वया जितः ।
अपरीक्षितं च विनियोजयेदयं न सहायकर्मणि महामतिर्हि सः ॥ ६ ॥

प्रबलौ कपिप्रवर रामलक्ष्मणौ रविवंशजौ दशरथस्य नन्दनौ ।
दिनकृत्सुतस्य किल बन्धुतां गताविति मे चरोक्तमवदत् सुतोऽङ्गदः ॥ ७ ॥

निखिलान् मदेन मनुते स्वतोऽधमान् बलवान् विपर्ययमतोऽबलो भयात् ।
यदिमावुभावपि यथार्थदर्शिनौ न ततो विपत्सु नियतं निमज्जतः ॥ ८ ॥

भुजयोस्तथाऽवति न निस्तुलं बलं धिषणा शुभां सरणिमाश्रिता यथा ।
विपदामवाप्तिसमये शरीरिणां प्रथमं हि दूषयति शेमुषीं विधिः ॥ ९ ॥

रविभूः स्ववृत्तमनृतेतरद्वदन् निपतन् मुहुश्च भवदीयपादयोः ।
सरुषा यदा स भवता निराकृतो न मनस्तदाप्रभृति मे प्रसीदति ॥ १० ॥

प्लवगस्तवायमनुजः सुहृत्तमो मतिमन्नरिस्तु हृदि रोष एव ते ।
रिपुणा बलाद्धत भवान् प्रचोदितः सहजं स्वबन्धुमधुना जिघांसति ॥ ११ ॥

ऋजुमानसः प्रणयभारजातया परिमूढधीर्भवदनर्थशङ्कया ।
रविनन्दनः पिहितवान् गुहां पुरा कपिराज तां न खलु राज्यलोभतः ॥ १२ ॥

न विभो मृतिस्तव पुरामुना महाबल किन्त्वृतास्तदनुमानहेतवः ।
कथिताः गुहावरणमात्मनश्च तत् सचिवैस्तदा तु कपिराडयं कृतः ॥ १३ ॥

तदमुं कुरुष्व युवराजमादरादनुजं गुणाढ्यमनुरागिणं त्वयि ।
रघुनाथघोरशरकालपावके शलभोऽद्य मा भव धव प्रसीद मे ॥ १४ ॥

इति तद्वचः स्वगुणवृद्धिकारणं कपिराडमर्षपरिभूतमानसः ।
कृमिदुष्टमूल इव पादपो जलं न समाददे पतनकाल आगते ॥ १५ ॥

निजगाद सोऽथ हरियूथपो हसन्नयि साध्वसं किमिदमीक्ष्यते त्वयि ।
मनसोऽखिला विकृतयोऽतिबृंहिता जनयन्ति सुन्दरि दृढं हि विभ्रमम् ॥ १६ ॥

अविषह्यमेव मम निर्जितद्विषः परिपन्थिगर्जनमिदं प्रधर्षणम् ।
व्यथयन्त्यवृत्तिमृतिदुर्यशांसि हि क्रमशो जनानधममध्यमोत्तमान् ॥ १७ ॥

प्रथमं रणं सुलभजीवितात्ययं बलिनारिणा सह गतस्य मे तदा ।
सरणिं निरुध्य नगरं गतं निजं सहजं न वैरिणमवैम्यहं कथम् ॥ १८ ॥

निरतस्य सान्त्ववचनेष्वनेकशः प्रथमं विरोधमवलम्ब्य मादृशः ।
सरुषोथ तर्जयत उद्धणं कथं वशमभ्युपैतु बत दुष्टबालवत् ॥ १९ ॥

मदमेव तस्य युधि नाशयाम्यहं चपलोऽधुनापि स पलायतां भिया ।
द्विषतः प्रमथ्य समुपेक्षणं रणे नियतं वधादपि शुभं हि तादृशः ॥ २० ॥

अयि मित्रजस्य स गतोऽपि मित्रतां रघुनन्दनो लघु निहन्तु मां कथम् ।
बहुषु श्रितेष्वपि गुणेषु तादृशः सविशेष एव हृदि धर्म आदरः ॥ २१ ॥

मयि तस्य सद्गुणनिधेरदर्शनाद्व्यथमानचेतसि पदाश्रयोत्सुके ।
न शरः पतेच्छमनदण्डसन्निभश्शरमं वदन्ति मुनयो हि दण्डनम् ॥ २२ ॥

तदिमाःसहस्व विकृतीर्हृदि स्थिता नगरीमिमां चिरसखीं प्रति व्रज ।
परितोषमेष्यसि विलोक्य माऽऽगतं समराङ्गणाल्लघु जयश्रिया श्रितम् ॥ २३ ॥

असुभिः शपे मम निवर्ततां द्रुतं भवती न कालमयि मर्षयाम्यहम् ।
इति स न्यवर्तयत तामिव श्रियं विवशां स्वभर्तुरपथे पदार्पणात् ॥ २४ ॥

रघुनन्दनेन हरिणेव पालितं सहजं विजेतुमभियान्तमुन्मदम् ।
स्वपतिं समीक्ष्य भृशमुष्णमाकुलां प्रववर्ष बाष्पझरमङ्गदप्रसूः ॥ २५ ॥

समराय याति कपिराज्यनायके सहसाट्टहासतुलिताशनिस्वने ।
सवनाचलालमचलाप्यकम्पत स्थिरधीरसावगमदर्कजान्तिकम् ॥ २६ ॥

अथ तत्तयोः पुनरभून्महद्रणं कृतिनोरमेयबलशौर्यतेजसोः ।
भरताग्रजोऽपि शरकार्मुके वहन् करयोश्चिरं यदवलोकयन् स्थितः ॥ २७ ॥

पदपाणिभिः खरनखैर्दृढाङ्ग्योर्बहुशस्तयोः प्रहरतोः परस्परम् ।
वपुरद्रितो विजितवह्निहेतिभिः सहसोद्भावि बहुलास्रनिर्झरैः ॥ २८ ॥

पदमुन्नतं सपदि गन्तुमिच्छतोस्तरुशैलवर्षणकृतोस्तयो रणम् ।
परिपश्यतां दिवि निरन्तरं स्थितो द्युसदां बिभेद बहुधा महान् गणः ॥ २९ ॥

अथ दुस्सहेन सकलेन तेजसा कपिराडवर्धत महेन्द्रनन्दनः ।
सममात्मना समवलोक्य सूर्यजं समदो यथा प्रतिगजं गजाधिपः ॥ ३० ॥

पुरुहूतजन्मनि तदा महागुणे परिवृद्धिमेयुषि तथा निरर्गलम् ।
अपतत्यसक्तगति राघवाशुगेऽप्यभवत् क्षयस्तपनजाततेजसः ॥ ३१ ॥

विवशं रवेः सुतमवेक्ष्य बालिना परिपीडितं स दिनकृत्कुलोद्वहः ।
त्रिजगद्गभीरगुणघोषपूरितं कलयन् मुमोच शरमन्तकोपमम् ॥ ३२ ॥

रविजं शुचार्तमनुजं विनिघ्नतः कुलिशायुधारिपृतनाप्रमाथिनः ।
प्रसभं बिभेद हृदयं स बालिनो बहुधास्रविस्रुतिकरः शरोत्तमः ॥ ३३ ॥

रुधिराम्बुवर्षणमभून्ममहाशुगः परमस्फुरत् स हरयः प्रचुक्रुशुः ।
न्यपतच्चलन् भुवि वनौकसां वरः श्लथसन्धिमूल इव पादपो महान् ॥ ३४ ॥

रघुनाथबाणपवनाशने तथा हृदयं गतेऽस्य मरुतः शरीरगाः ।
चलिता अधारिषत कण्ठलम्भया कनकस्रजा मरुदधीशदत्तया ॥ ३५ ॥

विशिखेन दण्डधरदण्डवर्चसा निहतं श्रमत्तदशं महाबलम् ।
अवलोक्य बालिनमनन्तसद्गुणः समुपासदद्रघुपतिः सलक्ष्मणः ॥ ३६ ॥

रघुनन्दनं समरवेषधारिणं समवेक्ष्य भास्करमित्रोदयं गतम् ।
हरिनायकः शरविभिन्नविग्रहः परुषं जगाद बहुधर्मसंयुतम् ॥ ३७ ॥

रविवंशजस्त्वमवनीन्द्र शिष्यतां समुपागतो द्रुहिणगाधिपुत्रयोः ।
न्यवधीस्त्रिवर्गसहितं स्वमेनसां निधिनामुना कथय कर्मणा कथम् ॥ ३८ ॥

प्रथिते जगत्यनृजुविक्रमस्य ते स्वकुलायशस्कर इदं कुकर्मणि ।
उपकारमेव न कथं नु मंस्यते तमसोऽपि कर्म भगवांस्तमोरिपुः ॥ ३९ ॥

नृप१मौक्तिकेषु सुरलोकवासिभिः शिरसा धृतेषु रविवंशजन्मसु ।
कलुषायशोविषकरेण हा त्वयानृजुगामिनाद्य रचिता मलाक्तता ॥ ४० ॥

स्वयमीश्वरी क्षितिरवर्जयच्छलान्मृतिदं भवन्तमिति मन्महे वयम् ।
जननीव योद्वहति सर्वमन्यथा क्व स भूपतिः क्व च जडा नु मन्थरा ॥

अमुना प्रदूष्य कुटिलेन कर्मणा धरणीभुजामनृतवैरिणां गणम् ।
कथमुत्तमाः परिषदः प्रवेक्ष्यसि स्वगणच्युतिं भुवि सहेत कः पुमान् ॥ ४२ ॥

अथ तापसेन्द्रगणनासु कोविदैर्गणितौ पुलस्त्यमनुगोत्रनायकौ ।
भवते गुरू कुटिल किं करिष्यतः क्षयवर्जितौ बत वसिष्ठकौशिकौ ॥ ४३ ॥

सुरवैरिवैरिणि दशामिमां गते मयि रावणेन बहुमायया हृता ।
भवतोऽनृजोः सहचरी कथं पुनर्वशमेष्यति प्रणयिनी विदेहजा ॥ ४४ ॥

दयिताप्तये रविजसख्यमिच्छता भवताद्य जिह्ममुनिवेषधारिणा ।
जितरावणे प्रहरता मयीदृशं प्रकटीकृतं नृपतिनीतिनैपुणम् ॥ ४५ ॥

पितृमित्रपुत्र इति धर्मवानिति क्षितिपोऽस्मदीश इति येन सेव्यसे ।
भृशमत्र मे हृदय एव निघ्नतस्तव धर्मवृद्धिरतुला भविष्यति ॥ ४६ ॥

अधिकप्रमत्तमपरेण सङ्गतम् समरे पराङ्मुखमनागसं च माम् ।
सहसा निहत्य फलमन्यदाप्तवानिह किं भवानयशसः सनारकात् ॥ ४७ ॥

यदि दृश्य एव समराय मां व्रजेर्निहतो मया त्वमवलोकयेर्यमम् ।
स्फुटमप्रमत्तमृगनाथसङ्गतः किमु वञ्चकोऽपि सुखमेति वञ्चुकः ॥ ४८ ॥

तव साधु राजमुनिवेषवञ्चितैरुपगीयमानमवधारयन् गुणम् ।
अपि तारयोक्तमवधूय भाषितं हितमुत्तमां विपदमाप्तवानहम् ॥ ४९ ॥

भृशमञ्जसाखिलजनान् प्रबाधितुं मुनिराजवेषपिहितश्चरन् भवान् ।
अमृताकृतिं यवनिकां गतं विषं सदृशीकरोत्यखिलघोरचेष्टितः ॥ ५० ॥

मणिहेमवाजिरथहस्तिपत्तनक्षितिकन्यकादिकमनिच्छता मया ।
तव किञ्चनापकृतमत्र किं प्रभो विपिनौकसाम्बुफलमूलवृत्तिना ॥ ५१ ॥

इह सत्सु सूकरमृगादनादिषु त्वमपातयः शरममुं कुतो मयि ।
कपिचर्मरोमपिशितादि दूरतः परिवर्जितं हि मनुजैर्भवादृशैः ॥ ५२ ॥

हृतवित्तदारयशसामुना कृतः प्लवगेन चेदुचित एव मद्वधः ।
भवता पुनः क्षितिपसूनुना छलाद्विहितः समस्तजनगर्हितो भवेत् ॥ ५३ ॥

इति तं निगद्य विमना रघूत्तमं विरराम शुष्कवदनः कपीश्वरः ।
शितबाणभिन्नहृदयः श्वसन् भृशं श्लथसर्वसन्धिरवनीतले लुठन् ॥ ५४ ॥

अथ भेत्तुमस्य हृदयस्थितं मतं प्लवगप्रभोर्दृढतरं नृपात्मजः ।
शुभपक्षसंश्रयमजिह्ममुत्तमं फलवद्युयोज वदनेन भाषितम् ॥ ५५ ॥

द्युमणेः प्रभेव हि ककुत्स्थजन्मनः क्षितिभृत्कुलस्य सावनाचलाचला ।
भवतोऽस्य तत् समृगपक्षिणां नृणामुचितावनुग्रहविनिग्रहौ वशे ॥ ५६ ॥

भरतोऽद्य तत्कुलभवः प्रशास्ति गां वयमस्य वानर निदेशकारिणः ।
अपरेऽपि दिक्षु विचरन्ति बाहुजा जगतां हिताय तरणेः करा इव ॥ ५७ ॥

गुरुरग्रजः सहभवश्च धर्मतः पितरौ हि शिष्यसहजानुजौ सुतौ ।
त्वममुष्य कष्टमनुजस्य जीवतो महिषीं स्नुषां परिगृहीतवानसि ॥ ५८ ॥

अधिकं स्नुषागमनतः किमस्त्यघं वध एव दण्डनमिहोत्कटांहसः ।
क्वचिदप्यनुग्रहविनिग्रहे नृपाः किमपि स्खलन्ति न हि मित्रवंशजाः ॥ ५९ ॥

न भवानघी भवतु गर्हयन् नृपान् मनुजाकृतीनखिलरक्षकान् सुरान् ।
शुचिराशु गच्छतु हरेः पदं जना नृपदण्डनात् खलु भवन्त्यकल्मषाः ॥ ६० ॥

शृणु मित्रमेष मम मित्रनन्दनः सकलार्थसिद्धिषु सदापि तत्परः ।
कथमस्य कार्यमपि नेक्ष्यते मया सुहृदां हि वञ्चनमघं महद्विदुः ॥ ६१ ॥

मृगयाविधौ नरवरर्षयो मृगान् परिवञ्चितांश्च विशसन्ति सत्तमाः ।
त्वमतो हतः पिहितमूर्तिना मया विशिखेन शक्रसुत वानरो ह्यसि ॥ ६२ ॥

तव दण्डनं व्रणचिकित्सितादिवद्दयया सुखाय कृतवन्तमद्य माम् ।
न रुषेव दूषयितुमर्हसि स्थितं नृपधर्म एव सततं सनातने ॥ ६३ ॥

इति राघवस्य वचनेऽतिशोभने विविधार्थतत्त्वपरिदर्शनक्षमे ।
तरणेरिवाशु किरणे समुत्थिते तमसा विमुक्त इव सोऽभवत् कपिः ॥ ६४ ॥

अभितप्तधीः स परुषैः स्वभाषितैर्दृढताडनैरिव गुरौ दयामृदौ ।
पुरतः स्थितं रघुपतिं कृताञ्जलिः पुरुषोत्तमं पुनरिदं वचोऽब्रवीत् ॥ ६५ ॥

नृप सत्यमेव भवतेरितं वचो न कथं विजेष्यति गुणोत्तमोऽधमम् ।
परुषाक्षरैर्मयि कृतागसि प्रभो शरपीडितेऽतिविवशे कुरु क्षमाम् ॥ ६६ ॥

नृपते पुरस्कृतमहाव्यतिक्रमो भवताद्य धर्मगुरुणास्मि पालितः ।
मद्दर्शनेन कनकाङ्गदोऽङ्गदः कुलजीवितं कथमयं भविष्यति ॥ ६७ ॥

गुणिनां वरौ रविसुताङ्गदाविमौ भवदङ्घ्रिसेवनरतौ दयानिधे ।
स्मरणीयतां भरतलक्ष्मणाविव व्रजतां तव त्रिजगदीश्वरेश्वर ॥ ६८ ॥

मम दोषतः किमपि मत्परिग्रहं परिपीडयेन्न रविभूर्यथा तथा ।
कुरु सर्वमेव वशवर्तिनो हि ते कपिराज्यमस्त्यमरराज्यमप्यहो ॥ ६९ ॥

कपिराज्यमेतदवधूय तारया विनिवारितोऽप्यमरराज्यतत्परः ।
भवता कृतं निधनमर्थयन्नहं सहजेन राम सह सङ्गरं गतः ॥ ७० ॥

समवाप्तुमत्र बहुचित्रमर्थवद्भवतो वचः सकललोकमङ्गलम् ।
शुभमीप्सता नृप मया भवत्कृतं वधदण्डनं परुषमुक्तमीदृशम् ॥ ७१ ॥

इति तं निगद्य विरराम सन्नतः कपिनायकः परमभक्तिशुद्धधीः ।
अथ सान्त्वयन्नयमुवाच राघवो मकरन्दबिन्दुझरसुन्दरं वचः ॥ ७२ ॥

त्यज तापमाशु हृदये स्थितं कपे नृपदण्डनेन हतकल्मषो ह्यसि ।
व्रज शाश्वतं तदमृतात्मकं शुभं बहुतेजसा परिगतं हरेः पदम् ॥ ७३ ॥

सविशेषमेव कृतधर्मनिश्चयः किमयं जनः प्लवग चिन्त्यते त्वया ।
अयमङ्गदस्त्वयि यथैव वर्तते रविजे तथैव मयि च प्रवर्तताम् ॥ ७४ ॥

रामस्य वाक्यममृतप्रतिमं तदेतन्मोहं प्लवङ्गमपतेरहरत् समूलम् ।
बाणस्तु कालकरवालकरालदंष्ट्रादण्डोपमोऽन्तसमये जनयाञ्चकार ॥ ७५ ॥

श्रुत्वा भर्तुर्निधनमथ तत्साङ्गदानङ्गदाह-
ग्रस्ता त्रस्ता नयनविगलद्बाष्पधाराथ तारा ।
उत्पत्योच्चैः शिखरिकुहराद्विद्रवन्ती रुदन्ती
वल्लीवृक्षे विदलित इवास्याङ्गलग्ना पपात ॥ ७६ ॥

हृदि धृतशितबाणं शोकशल्यं वहन्ती बहु परिगलदस्रं सङ्गीरन्त्यस्रपूरम् ।
द्रुततरमुपयाता जीवितेशस्य पार्श्वं दयितमनुचकारेवाङ्गना तद्विधं सा ॥ ७७ ॥

हे नाथ नाथ हिततत्पराय मयोक्तं तद्वाक्यमौषधमिव त्वमसेबमानः ।
हा व्याधिनेव बालिना रिपुणासि नीतः कष्टां दशामिति मुहुर्विललाप तारा ॥

त्वं तेजसाप्रतिहतेन पराणि तेजांस्याक्रम्य नित्यमुदयेन विराजमानः ।
कालेन हन्त चरमां गमितोऽस्यवस्थामाशामिवार्क इति सा विललाप दीना॥७९॥

शोच्या शोचसि कं वृथैव चपला दीनं कमुद्वीक्षसे
दीना चिन्तय तत्त्वमित्यनिलजेनाश्वासिताप्युक्तिभिः ।
तारा दुःखरसातिपूर्णहृदया मोद्वेलकल्लोलिनी-
न्यायेनान्तिकवर्तिनां तरलतां चक्रे तदार्द्रात्मानाम् ॥ ८० ॥

पितुः पदं प्राप्य विचेष्टमानं गुणोन्नतं नन्दनमङ्गदं सा ।
अगाधभर्तृव्यसनाराशौ नालोकयामासम्बु तदा निमग्ना ॥ ८१ ॥

मन्दप्राणस्तदनु कपिराड् वीक्ष्य सुग्रीवमग्रे
भक्त्या नम्रं रणविजयिनं सान्त्वयित्वा सशोकम् ।
तस्मै स्नेहाकुलितहृदयस्तत्र तारां सपुत्रां
मूर्तां राज्यश्रियमिव ददौ काञ्चनीं तां च मालाम् ॥ ८२ ॥

दिव्यां तां हेममालां कथमपि महिषीं नन्दनाभ्यां गृहीत्वा
भ्रातृस्नेहार्द्रचित्त रुदति रविसुते दासवत् पार्श्वसंस्थे ।
संसिद्धाशः कपीशः प्रणयपरवशः प्राप्तदीर्घप्रवास-
स्तारेयं पादमूले पतितमसुसमं पुत्रमित्थं बभाषे ॥ ८६ ॥

समाहितात्मा भव देशकालावस्थाः समालोचय सूक्ष्मसूक्ष्माः ।
वर्तस्व सुग्रीववशे सहस्व सुखं च दुःखं प्रियमप्रियं च ॥ ८४ ॥

प्रत्यूहं समुचितकार्ययोगसिद्धेर्भूपानां त्यजतु भवान् समुत्कटत्वम् ।
नाभावं विरचय चाक्रियादिहेतुं मध्यस्थो भव मतिमन्नतः सदापि ॥ ८५ ॥

इतीरयित्वाथ विवृत्तनेत्रस्तप्तो भृशं रामशिलीमुखेन ।
दंष्ट्राकरालान् प्रकटय्य दन्तानुत्क्रान्तजीवोऽजनि शक्रसूनुः ॥ ८६ ॥

पाणौ बाणं धनुरपि दधत्सेवितं लक्ष्मणाद्यै-
रानन्दार्द्रस्मितमुखदयालोकनालोकनीयम् ।
तेजोरूपं त्रिभुवनपते रूपमग्रे स पश्यन्
रामस्यागात् सुकृतिसुलभं तत् पदं चक्रपाणेः ॥ ८७ ॥

लोकान्तरं कालवशात् प्रयाते तस्मिन् हरौ तीक्ष्णकरप्रतापे ।
दुःखं तमस्तत्र समेधमानं स रामचन्द्रः शिथिलीचकार ॥ ८८ ॥

मासे वसन्त इव साधुजनप्रियेऽस्मिन् यातेऽन्यतस्सुमनसामभिवृद्धिहेतौ ।
हर्युत्तमप्रबलशोकनिदाघतापं तत्राशु रामजलदः शमयाञ्चकार ॥ ८९ ॥

गतस्य देवेन्द्रभुवस्त्रिविष्टपं सहाङ्गदेन स्वयमग्रजन्मनः ।
चकार राजोचितमौर्ध्वदैहिकं रवेः सुतो रामपरायणः कपिः ॥ ९० ॥

ददुः पुरस्तात्तिलशः प्रभग्नैर्मनोरथैर्वारि विलोचनानि ।
हरिप्रवीराय दिवं गताय तिलैः परस्तात् सुहृदः कपीन्द्राः ॥ ९१ ॥

कृत्वा कृत्यं विधिवदखिलं संस्थितस्याग्रजस्य
भ्रातुः स्फीतप्रणयतरलो मित्रपुत्रः समित्रः ।
अत्यन्तार्द्रः पितृवनमतिक्रम्य बद्धाञ्जलिः सन्
पार्श्वे तस्थौ रघुकुलपतेः सर्वलोकैकगोप्तुः ॥ ९२ ॥

रामाज्ञामुद्वहन्तः पवनसुतमुखा वानरेन्द्राः पुरीं तां
किष्किन्धां प्राप्य देवा इव विबुधपतिं तत्र भद्रासनस्थम् ।

सुग्रीवं हेमकुम्भाम्बुभिरथ विमलैरभ्यपिञ्चन् प्रहृष्टाः
भूनाथं नेत्रतोयैर्युगपदतिहिमैस्तत्प्रियां चाम्बुदाश्च ॥ ९३ ॥

रघुपतिरविसृजनुप्रेरणाद्वालिपुत्रं पुनरभिषिषिचुस्ते यौवराज्ये युवानम् ।
भुवि समभवदुच्चैस्तूर्यघोषस्तदानीं दिवि च मरुदुदञ्चन्मेघघोषच्छलेन ॥ ९४ ॥

कीशेशद्वितयमहाभिषेककालः प्रख्यातैः कपिवृषभैः कृतोत्सवश्रीः ।
सर्वेषामपि सकलेन्द्रियप्रहर्षं भूतानां सपदि ददौ गुणैः समृद्धैः ॥ ९५ ॥

ततस्तु हर्यक्षपतिः स राममुपेत्य सर्वैः सह यूथनाथैः ।
नत्वाङ्गदेनापि समं पुरस्तात्तस्थाविवोत्साहगुणो वपुष्मान् ॥ ९६ ॥

कालस्तोयागमोऽयं कलुषजलनदीपङ्कसंरुद्धमार्गो
नोद्योगायोचितोऽस्मादिह वस चतुरो वार्षिकान् सौम्य मासान् ।
किष्किन्धायां सुखी त्वं शरदि पुनररेर्निग्रहार्थं यतस्वे-
त्याज्ञाप्यादित्यसूनुं रघुपतिरगमत् सानुजो माल्यवन्तम् ॥ ९७ ॥

तस्य प्रस्रवणस्य पर्वतपतेरुत्तुङ्गयोः शृङ्गयो-
र्मध्ये पूर्वदिगुल्लसत्कमलिनीवीचीमरुत्सेविते ।
विस्तीर्णायतगह्वरे निशमयन् हर्षोर्जितं गर्जितं
किष्किन्धापुरवासिनां सहभुवा रामः समेतोऽवसत् ॥ ९८ ॥

इति श्रीकोच्चुण्णिराजविरचिते
श्रीरामचरितमहाकाव्यपूरणे
सुग्रीवाभिषेको नाम
सप्तदशः सर्गः



# अष्टादशः सर्गः

हत्वा तथा बालिनमुग्रवीर्यं सुग्रीवमप्यस्य पदेऽभिषिच्य ।
रामो वसन् प्रस्रवणेऽभ्रवृन्दं विलोकयन् लक्ष्मणमित्युवाच ॥ १ ॥

पश्यानुजोदश्वति भीमकायस्तिरस्कृताशोऽम्बुभृतां निकायः ।
जलाभिवृद्ध्यै दिवि दैवसृष्ट उद्योगिनां मूर्त इवान्तरायः ॥ २ ॥

ज्ञात्वा तडित्खड्गलताप्रहारं प्रागेव भीमं ग्रहनित्यसक्तः ।
नाकः करोत्येष निजाङ्गगुप्त्यै जीमूतकालायसवर्मबन्धम् ॥ ३ ॥

वलाहकाम्बुप्रसवोत्सवेऽस्मिन् जातं जगद्विस्मयनीयरूपम् ।
विद्युत्पताकोल्लसितं प्रनृत्यच्छिखावलं गर्जिततूर्यघोषम् ॥ ४ ॥

वहन्ति चापं विपुलं शरौघान् वर्षन्ति गर्जन्त्यभिसम्पतन्ति ।
जीमूतयोधा दिवि देवभर्त्रा हतः किमुद्योगगुणोऽयमुर्व्याः ॥ ५ ॥

वीराग्रयमुग्रं स्वसुतं विजित्य राजासनं सूर्यसुतेऽधिरूढे ।
भानुं तिरस्कृत्य घनैः प्ररुष्टः क्षयाय किं वर्षति मेघवाहः ॥ ६ ॥

हते हरौ शक्रसुतेऽतिवीरे सुतेऽभिषिक्ते च निजे विवस्वान् ।
भुवो रसं पूर्वहतं करैः स्वैः पुनः किमद्याशु ददाति वृद्ध्यै ॥ ७ ॥

घनद्विपा व्योमसरो विगाह्य विद्राव्य शुभ्रद्विजराजमारात् ।
उन्मूल्य ताराम्बुजमातपाम्भः पिबन्ति गर्जन्ति परिभ्रमन्ति ॥ ८ ॥

मषीप्रलिप्तास्तटिदुग्रदीपाः पयोदचोरा धृतभीमचापाः ।
प्रसह्य चन्द्रान्तररत्नतारामुक्तास्रजं सद्युमणिं हरन्ति ॥ ९ ॥

समुत्पतद्भिर्गगनद्रुमाशाशाखासु नीलैर्जलदप्लवंगैः ।
व्याप्तासु लोकैः करकच्छलेन नक्षत्रपुष्पाणि पतन्ति भूमौ ॥ १० ॥

द्विपद्भिरुग्रैः परुषाट्टहासैर्घनान्धकारैः परिपीड्यमानाः ।
इतस्ततोऽर्कद्युतयो द्रवन्ति विद्युच्छलेन द्रुतहेमवर्णाः ॥ ११ ॥

जलागमे वह्निसखोऽयमाशु भङ्गान् प्रकुर्वन् वनराशिषूच्चैः ।
समुत्क्षिपन् कोषभरादिवेतस्ततः पयोदान् चलति प्रचण्डः ॥ १२ ॥

महाशनित्रासभराद्गुहासु लीनेषु सर्वेष्वनिलाशनेषु ।
चलत्सु तीव्रं च घनांशुकेषु वाता परामभ्युपयान्ति वृद्धिम् ॥ १३ ॥

खगा महावातरयावधूतैर्घनाम्बुधाराविकृतैश्च पक्षैः ।
नीडान्तरेभ्यः क्वचिदापतन्तः कृच्छ्रेण गच्छन्त्यभिलक्ष्य देशम् ॥ १४ ॥

आस्तीर्णवर्षोपलपुष्पितासु वनस्थलीषु भ्रमराः पतन्ति ।
प्रचण्डवाताहतिजातकम्पजम्बूद्रुमेभ्यः फलकैतवेन ॥ १५ ॥

अभीष्टगन्धानि फलानि रुच्यस्वादूनि वाते चलति द्रुमारौ ।
आम्राः प्रणम्राः क्षितिजाः क्षमायां शाखाभुजाभिर्द्रुतमर्पयन्ते ॥ १६ ॥

अधोमुखैराहितसेतुभेदैः पङ्कावहैर्दूषितसर्वमार्गैः ।
निम्नत्वमौन्नत्यमपीह तुल्यं कृतं जलैर्निन्द्यमसन्महत्वम् ॥ १७ ॥

निजालयेष्वाक्रमणाज्जलानां नष्टेषु सर्वेषु सरोरुहेषु ।
निर्याति रम्या कमलाकरेभ्यो मूर्ता स्वयं श्रीरिव हंसमाला ॥ १८ ॥

प्रसादलक्ष्याशयसेवनीयाः सौभाग्यलक्ष्मीलसिताः पुरा याः ।
जलाक्रमाद्दुर्भगतां प्रपन्नास्ता अद्य नद्यः कलुषा भवन्ति ॥ १९ ॥

पयोददत्तैः पयसां पृषद्भिस्तृप्तिं प्रयातेष्विह चातकेषु ।
लोकः सुखोच्छ्वासभवं समीरं मुहुर्मुहुर्मुञ्चति शीतशीतम् ॥ २० ॥

अत्युन्नतक्ष्माधरशृङ्गदेशान्निरर्गलं निष्पततां जलानाम् ।
समुत्थितानां दलभृत्समूहान्मृगानयं त्रासयति प्रणादः ॥ २१ ॥

जलागमेऽस्मिन् विरहिप्रचण्डे जामातरं मां तनयां च सीताम् ।
वियोगिनौ लक्ष्मण हन्त दृष्ट्वा मही भृशं मुञ्चति बाष्पमुष्णम् ॥ २२ ॥

नवाम्बुभृद्दुन्दुभिनादविद्युत् प्रदीपरम्यं शितिकण्ठनृत्तम् ।
वनेषु दृष्ट्वा मुकुलैः परीता रोमाञ्चिताङ्गा इव भान्ति नीपाः ॥ २३ ॥

वलाहकानां निकरेऽतिनीले वर्षर्तुलक्ष्मीघनकेशपाशे ।
विराजतेऽत्यर्थमियं वलाकामाले सिताम्भोरुहचारुमाला ॥ २४ ॥

प्रवातमेघाम्बुधिबर्हिवारिप्रवाहभेकादिरवैर्महद्भिः ।
अनारतं श्रावणबोधदायी जातो ध्रुवं श्रावण एष मासः ॥ २५ ॥

पूर्वं प्रसक्तानि भुवो रजांसि प्रक्षाल्य सर्वाणि मलीमसानि ।
वर्षाम्बुभिः कैतकपुष्पजैस्तैर्दिशः प्रलिम्पन्ति सुगन्धिभिः स्वम् ॥ २६ ॥

मृगद्विजच्छिन्नतृणास्तृतेषु शनैश्चरन्ती भुवि शाद्वलेषु ।
एषेन्द्रगोपावलिराविभाति नवास्रधारेव परिस्रवन्ती ॥ २७ ॥

अत्यन्तशीतैर्जलदाम्बुवर्षैर्विरामहीनैर्विवशीकृताङ्गी ।
छत्राण्यसौ स्वीकुरुते समन्ताच्छत्राकसंज्ञानि समुद्रकाञ्ची ॥ २८ ॥

वनेषु पत्रावलिमेचकेषु ज्योतिस्सु जीमूततिरस्कृतेषु ।
जलप्रवाहैर्विरले च वह्नौ लोके तमांसि प्रबलीभवन्ति ॥२९॥

नष्टेषु ताराग्रहमौक्तिकेषु खद्योतसंज्ञान्तरितारकूटैः ।
मुहुर्विवर्णैः समलङ्करोति रात्रिर्दरिद्रेव निजं शरीरम् ॥३०॥

वियोगिनं मां वनभूमयोऽमूः संलक्ष्य जातीमुकुलादिदन्ताः ।
हसन्ति निघ्नन्ति कठोरवाता मेघा निनादैः खलु तर्जयन्ति ॥३१॥

विदेहपुत्र्या विरहाकुलाया विलोचने ते जलजोपमाने ।
बाष्पाम्बुधारोल्बणवर्षशीले धत्तोऽद्य नूनं जलदोपमां च ॥३२॥

निवृत्तनिश्शेषनिशान्तकृत्यः सम्पादितार्थो भरतः स वत्सः ।
आषाढमासावसितौ व्रतानि नूनं करोत्यद्य विशोषितात्मा ॥३३॥

क्लिष्टश्चिरं संप्रति निर्जितारी राज्यं समासाद्य महत् समृद्धम् ।
सम्प्राप्तदारः सुखमश्नुतेऽद्य मासानिमान् वर्षऋतौ हरीशः ॥३४॥

राज्याच्च्युतोऽहं महतः प्रणष्टदारोऽतिमात्रं व्यसने निमग्नः ।
दुर्गायता प्रावृडरिर्दशास्यं रक्षोऽधिगच्छामि न पारमद्य ॥३५॥

कपिप्रवीरे प्रणतेऽपि तस्मिन् जलागमोऽयं चिरदुःखितोऽयम् ।
इदं च कार्यं मम यत्नसाध्यमिति त्वरां नाकरवं तदानीम् ॥३६॥

एतासु वर्षास्वनुभूय सौख्यं विश्रम्य सम्यक्स्वयमेव काले ।
करिष्यति द्राङ्मम कार्यमेतत् कृतं स्मरन्नूनमयं हरीशः ॥३७॥

इत्थं वदन्तं बहुधार्तरूपं प्रियावियोगेन विदह्यमानम् ।
समानदुःखः परिसान्त्वनार्थं रामं सुमित्रातनयो बभाषे ॥३८॥

51

तथा करिष्यत्यखिलं तवार्थं प्लवङ्गमेशो भवता यथोक्तम् ।
अमुष्य सन्त्येव गुणा ह्यनर्घास्ततः समीक्षस्व घनव्यपायम् ॥ ३९ ॥

इत्थं तयोः संवदतोर्हरीशसाहाय्यकं चिन्तयतोः सुरेन्द्रः ।
वनेषु सर्वेष्वतुलां समृद्धिं विधाय वर्षं प्रतिसञ्जहार ॥ ४० ॥

मलीमसत्वं जहुरल्पभावं ययुश्च नद्यः सह वारिवाहैः ।
प्रसारयामास रविः समन्तादुष्णान् करान् पङ्कजलापहान् स्वान् ॥ ४१ ॥

स्वच्छाम्बरां चन्द्रमुखीं विराजन्नक्षत्रमालां शरदं समीक्ष्य ।
कान्तामिवान्तर्मिथिलेन्द्रपुत्रीं रामः स्मरन् लक्ष्मणमेवमूचे ॥ ४२ ॥

लोकान्मषीसेचकमेघवृन्दजातं तमो दूरगतं समस्तम् ।
सुग्रीवतो रागमदप्रभूतं नो लक्ष्मणाद्यापि तमोऽपयाति ॥ ४३ ॥

निशाचराणां तमसां क्षयाय ताराधिनाथो भजति प्रसादम् ।
उद्यन् बताद्यापि मयि प्रसन्नो न वर्ततेऽयं कपिचक्रवर्ती ॥ ४४ ॥

व्यपेतमेघे विमलेऽन्तरिक्षे सन्दृश्यतेऽयं स्फुटमृक्षसङ्घः ।
प्रियां विचेतुं मम नष्टपङ्के धरातले नैव हरीशसुनुः ॥ ४५ ॥

सुखाय लोकस्य जलीकृतस्य प्रतापमाविष्कुरुते दिनेशः ।
प्रियावियोगेन जलात्मनो मे भद्राय नाद्यपि दिनेशसूनुः ॥ ४६ ॥

जातः समीरो मृदुरत्र काले सुतेन वायोः सचिवेन युक्तः ।
प्लवंगमेशः कृपया मृदुत्वं न याति दुःखैर्मयि हन्यमाने ॥ ४७ ॥

सम्प्रत्यगस्त्याभ्युदयेन सर्वं तोयाशयानां हृदयं प्रसन्नम् ।
पश्याधिकं मे कलुषं विषादैः कृते हरीशाभ्युदयेऽप्यमुष्मिन् ॥ ४८ ॥

हंसैः सुहृद्भिः परिसेव्यमानाः पद्माकराः स्वां श्रियमाप्नुवन्ति।
हा लक्ष्मणाद्यापि हरिप्रवीरैस्त्यक्तोऽधिगच्छामि न वल्लभां ताम् ॥ ४९ ॥

रक्तोऽधिकं शालिभरेण वक्रउत्थानमुत्सृज्य चिरं शयानः।
विच्छेदमेवार्हति कालपक्वः कपीश्वरो भोगभरेण यद्वत् ॥ ५० ॥

शसत्ययं वर्षविरामकालं क्रौञ्चद्विजानां समदः प्रणादः ।
शृणोमि नाद्यापि मदश्रुवर्षविरामहेतुं कपिसैन्यनादम् ॥ ५१ ॥

अहं हरीणामृषभं सहायं यथा हतोद्योगमवेक्ष्य दीनः ।
तथेन्द्रमालोक्य विषण्णरूपा सबाष्पकण्ठा बत नीलकण्ठाः ॥ ५२ ॥

तृप्तिं ददानाः परिहृत्य तापं नद्यः परेषां सलिलादिभिः स्वैः ।
काशान् यशांसीव समुद्वहन्ति नाद्यापि कृत्यं कुरुते हरीशः ॥ ५३ ॥

मतङ्गजानां मदविह्वलानां सप्तच्छदोत्थं सुमभातनोति ।
मदप्रवृद्धिं प्लवगेश्वरस्य मद्यं यथा राज्यमदाकुलस्य ॥ ५४ ॥

नदीतटेष्वायतविस्तृतेषु प्रभूतशष्पेषु महोक्षसङ्घः ।
मत्तो गवां मध्यगतोऽर्कसूनुः कीशांगनानामिव पानभूषु ॥ ५५ ॥

आपत्सु वर्षासु पयोजिनीर्या विहाय रेमे नवमालिकाभिः ।
यो हन्त पूर्वं मधुपव्रजः स सम्पत्सु ता एव पुनः प्रयाति ॥ ५६ ॥

स्त्रीषु प्रसक्तो मधुपानमत्तः स्फुटं स राजा सचिवैः सुहृद्भिः ।
प्रबोध्यमानोऽपि न बुध्यतेऽद्य न सत्पथं याति जनोऽतिमत्तः ॥ ५७ ॥

यो नैव वाक्यं सुहृदां शृणोति हितं स मत्तश्चपलः कपीशः ।
नूनं मम श्रोष्यति चापनादं युगान्तकालाशनिघोषभीमम् ॥ ५८ ॥

प्रियावियोगानलदीप्यमानः प्रवर्धते कोपमहानलो मे ।
त्वं याहि सुग्रीवपुरीं जवेन ब्रूयास्तमेवं च वचो मदीयम् ॥ ५९ ॥

सुग्रीव नो संकुचितः स पन्था मया हतो येन गतः स बाली ।
कृतं स्मर त्वं समये च तिष्ठ सबान्धवोऽनुव्रज पूर्वजं मा ॥ ६० ॥

इत्यार्तरूपस्य निशम्य वाक्यं रामस्य सौमित्रिरदीनसत्त्वः ।
कालेऽप्यनुद्योगिनि सूर्यसूनौ जज्वाल रोषेण कषायितात्मा ॥ ६१ ॥

अथ प्रकोपाधिकरक्तमूर्तिः शरासनार्चिः स समग्रतेजाः ।
पूर्णोऽन्तरङ्गे बहिरेत्य तिष्ठन् रामस्य कोपाग्निरिवाभासे ॥ ६२ ॥

उवाच चेदं स शरासपाणिर्न सत्पथे स्थास्यति वानरेशः ।
न राज्यमर्हत्यजितेन्द्रियोऽयं शुभाशुभेष्वस्य मतिर्विमूढा ॥ ६३ ॥

सुग्रीवमद्याशु निहन्मि तस्माद्भवान् यथा पूर्वजमस्य पूर्वम् ।
विदेहजान्वेषणमङ्गदोऽयं करोतु सार्धं कपिमन्त्रिवीरैः ॥ ६४ ॥

इत्यात्तबाणासनतीक्ष्णबाणम् तमुत्पतन्तं समरोग्रकोपम् ।
उवाच रामः स्वयमेव रोषं निजं निगृह्याप्रतिमप्रभावः ॥ ६५ ॥

भावादृशानां कथमुग्रकोपः स्थिरं प्रकोपेषु हि साहसिक्यम् ।
भवेत् कुतः साहसिकस्य दृष्टिर्दृष्टिं विना कोऽटति साधुमार्गे ॥ ६६ ॥

अतः समीक्ष्याखिलमर्थतत्त्वम् सामाधिको दर्शितभेददण्डः ।
वशे कुरु त्वं विविधैरुपायैस्तं वानरं नागमिव प्रमत्तम् ॥ ६७ ॥

इत्यग्रजाज्ञां शिरसा गृहीत्वा द्रुताद् द्रुतं कार्यवशाद्ययौ सः ।
स्थितो गुहाद्वारि ददर्श पुर्या बहिश्चरांश्चोग्रबलान् प्लवङ्गान् ॥ ६८ ॥

ते लक्ष्मणं वीक्ष्य धृतोग्रचापमुत्पाट्य वृक्षान् जगृहुः शिलाश्च ।
तत् कर्म दृष्ट्वा द्विगुणं स कोपाज्जज्वाल यद्वत् घृतसेकतोऽग्निः ॥ ६९ ॥

ज्ञात्वानयं तं सचिवाः प्लवङ्गा व्यज्ञापयन् कीशपतिं तु मत्तम् ।
प्रसाद्य सौमित्रिमथाङ्गदश्च रामानुजं प्राप्तमुदीर्णकोपम् ॥ ७० ॥

कपीश्वरे शृण्वति तच्च चक्रे सौमित्रिरुच्चैर्निजचापघोषम् ।
आकर्ण्य यं तूर्णविदीर्णकर्णं त्रासेन राजा स मदं मुमोच ॥ ७१ ॥

ततः कपीन्द्रः प्रकृतिं प्रपन्नः स्वैर्मन्त्रिवर्यैर्भवनं स्वकीयम् ।
प्रवेशयामास रघूत्तमम् तं प्रसादयामास च नम्रमूर्ध्ना ॥ ७२ ॥

रामस्य सन्देशमथारुणाक्षान्निशम्य सौमित्रिमुखान्महार्थम् ।
कृताञ्जलिर्वेपथुमान् सलज्जः सबाष्पकण्ठः कपिराडुवाच ॥ ७३ ॥

नष्टां श्रियं कीर्तिमिदं च राज्यं महत् कपीनां भवतोऽग्रजस्य ।
रामस्य लोकाधिपतेः प्रसादादवाप्तवानस्मि नरेन्द्रसूनोः ॥ ७४ ॥

अस्योपकारस्य महत्तरस्य तेनाप्रमेयेन कृतस्य साधो ।
किं वा भवेत् प्रत्युपकारकर्म काल्पस्य शक्तिर्मम तच्च कर्तुम् ॥ ७५ ॥

यो लीलयेशस्य बभञ्ज चापं जिगाय शिष्यं च शरेण वीरः ।
खरादिरक्षोगणधूमकेतोः साहाय्यकं तस्य भवेत् किमर्थम् ॥ ७६ ॥

यः सप्तसालान् वसुधां गिरिं च तीव्रं बिभेदैकशरेण शीघ्रम् ।
ज्यानादवित्रस्तजगत्त्रयस्य कोऽर्थः प्रभो तस्य भवेत् सहायैः ॥ ७७ ॥

तथापि रक्षोधिपशासनाय प्रयास्यतस्तस्य महत्तमस्य ।
भक्त्यानुयात्रं महतीं विकर्षन् सेनां करिष्ये जयघोषणाय ॥ ७८ ॥

उद्योभङ्गेन ममेदृशस्य न कायसङ्गोऽस्ति हि तादृशस्य ।
महत्तमातिक्रमदूषितं मां राज्यं यशः श्रीश्च बत त्यजन्ति ॥ ७९ ॥

मयाद्य वाऽभूत् प्रणयात् प्रमादाद्विश्वासतो वापि कृतोऽपराधः ।
प्रेष्यस्य तं मे चरणानतस्य क्षन्तुं भवनार्हति लोकनाथः ॥ ८० ॥

इति ब्रुवाणे प्लवगाधिनाथे रामानुजन्माजनि सुप्रसन्नः ।
सन्तः प्रसन्नाः शिशुवत् प्रकृत्या न यन्ति कालुष्यमहेतुकं हि ॥ ८१ ॥

आश्लिष्य सुग्रीवमुवाच चेदं मयाग्रजन्मव्यसनार्दितेन ।
रुषा यदुक्तं प्रणयेन वा तत् क्षन्तुं भवानर्हति दीनबन्धो ॥ ८२ ॥

यत्तेऽनुरूपं बहुधार्मिकस्य राज्ञः कृतज्ञस्य कृपाकुलस्य ।
शूरस्य रामस्य च सख्युरेतत्त्वया तदुक्तं वचनं हरीश्वर ॥ ८३ ॥

कृतं कृतं मेऽद्य समर्हणेन निर्गच्छ पुर्य्यास्त्वरितं महात्मन् ।
सखायमार्तं दयितावियोगाद्रामं समाश्वासय कर्मभिः स्वैः ॥ ८४ ॥

प्रागेव यद्वाक्यगुणादतानीत् स्वयं बलोद्योगविधौ प्रयत्नम् ।
तस्मिन् हनूमत्यथ कृत्यशेषमाशाय राजा निरगात् स्वपुर्याः ॥ ८५ ॥

सितातपनव्यजनादिशोभी ससैन्यघोषः सह लक्ष्मणेन ।
आरुह्य रम्यां शिबिकां हरीशो रामाश्रितं भूधरशृङ्गमाप ॥ ८६ ॥

विलोक्य दूराद्रघुवंशनाथं यानादवप्लुत्य विनीतवेषः
कृताञ्जलिः किञ्चिदुपेत्य मूर्ध्ना ननाम रामं धरणीगतेन ॥ ८७ ॥

प्रेम्णा समुत्थाप्य सखायमाशु रामः परिष्वज्य नतोत्तमाङ्गम् ।
ततो निषीदेति निजैर्वचोभिः क्षितौ निषण्णं तमिदं जगाद ॥ ८८ ॥

अन्योन्यबाधारहितं त्रिवर्गं यः सेवते साधु विभज्य कालम् ।
मित्रार्जने शत्रुजये च यत्तश्चिरं स राजा सुखमश्नुते हि ॥ ८९ ॥

उद्योगयोग्या शरदागतेयं तच्चिन्त्यतां शत्रुजयाय सर्वम् ।
स एवमुक्तः प्रभुणा हरीन्द्रः प्रसादयन्नेवमुवाच वाचम् ॥ ९० ॥

श्रीकीर्तिराज्यानि भवत्प्रसादादवाप्तवानस्म्यतिदुर्बलोऽपि ।
यद्यन्ममेहास्ति तवैव तत्तदशेषमाज्ञापय किं करोमि ॥ ९१ ॥

इदं तु कोटित्रितयं कपीनामायातमाहूय बलं हरीणाम् ।
नानानगारण्यनिवासि भीमं यदानयिष्यत्यथ वल्लभां ते ॥ ९२ ॥

रामो बभाषे तमिति ब्रुवन्तमुद्योगसम्पन्नमतिप्रसन्नः ।
त्वया हनिष्यामि रिपुं सनाथस्तं रावणं यो दयितां जहार ॥ ९३ ॥

अन्योन्यं नरवानरप्रवरयोरेवं तयोर्जल्पतो-
रासीत्तीव्रतिरस्कृताम्बुजसुहृत्तेजो रजो दारुणं ।
उद्दामप्रकटीभविष्यदखिलक्रव्यादकक्षापह-
श्रीरामप्रभवप्रतापदहनप्रोद्भूतधूमोपमम् ॥ ९४ ॥

यातेऽथ द्राङ्मुहूर्ते सितशितनखरारालदंष्ट्राकरालै-
र्हुङ्कुर्वद्भिर्नदद्भिः प्लवनमुरुविधं तत्र तन्वद्भिरुच्चैः ।
नीलै रक्तैर्हरिद्राद्रवसमरुचिभिः काशसंकाशवर्णै-
राक्रान्तं भीमरूपैः क्षितितलमखिलं कामरूपैः प्लवंगैः ॥ ९५ ॥

सुवर्णसमरोचिषां जववतामरण्यौकसां
सुवर्णगिरिवासिनां शतसहस्रलक्षैः सह ।
अदृश्यत निशाचरप्रथनमर्थयन्नग्रतो
बलीमुखपतेर्बली शतबलिर्महायूथपः ॥ ९६ ॥

अनृजुनिशिचरालींदारणायेव सृष्टैः
कुटिलकुनखदंष्ट्रादारुणैर्वानराणाम् ।
तदनु बहुसहस्रै राजमानः सुषेणः
कनकशिखरिवर्ष्मा तत्र तारापितागात् ॥ ९७ ॥

तत्रागमत्तदनु कोटिशतैः कपीनां वज्राभदन्तनखरैर्दशभिः समेतः ।
तारो नमन् रघुकुलप्रवरौ रुमायास्तातः प्लवङ्गमपतेः श्वशुरो महात्मा ॥ ९८ ॥

अनिलमिव हनूमत्तातमुद्दामवेगं
विपुलबलमवाप्य द्राक् प्रतापानलोऽयम् ।
अगमदधिकवृद्धिं कीशसैन्यैः स युक्तः
कपिपतिमुपतस्थे केसरी यूथनाथः ॥ ९९ ॥

जातोऽग्नेः पृथुतरधूमराजितुल्य-
स्तत्रागान्निशिचरवर्गधूमकेतुः ।
नीलाख्यः कपिपृतनापतिर्हरीणां
कोटीभिः सह दशभिः स्वसन्निभानाम् ॥ १०० ॥

क्रव्यादिभ्यो ददाति प्रथनविधिषु यः शात्रवाङ्गानि शक्त्या
राज्याङ्गानि स्वकेभ्यो रघुकुलपतये चात्मनोऽङ्गानि भक्त्या ।
तत्रागाद्यौवराज्यश्रियममितगुणां रामदत्तां प्रपन्न-
स्तेजस्वी कोटिकोटिप्लवगगणयुतः सोऽङ्गदो बालिपुत्रः ॥ १०१ ॥

पदद्वयन्यासमितत्रिलोकं प्रदक्षिणीकृत्य हरिं पुरा यः ।
अतो यत्तत्र निशातबुद्धिः स जाम्बवानृक्षगणैर्वृतोऽगात् ॥ १०२ ॥

वायोस्तुल्यस्तनूजो बलजवगतिभिस्तेजसां स्थानमेकम्
विद्यानां क्षेत्रमग्र्यं सकलगुणगणश्रीतनूमान् हनूमान् ।
कर्षन् कोटीसहस्रं रिपुकुलमथनं स्वोपमानां कपीनां
प्रापत् सुग्रीवपार्श्वं रघुतिलकयशोराशिवत् काशवर्णः ॥ १०३ ॥

अन्येऽप्यात्मीयसैन्यैर्नलगवयदरीवक्त्रनासत्यजाद्याः
प्रख्याता यूथनाथाः प्लवगकुलपतेः पार्श्वमापुः प्रहृष्टाः
बभ्राजे रामचन्द्रः सकलनिशिचरध्वान्तविध्वंसहेतु-
र्युक्तस्तत्रर्क्षतारादिभिरधिकरुचा लक्ष्मणानुज्झितात्मा ॥ १०४ ॥

इति श्रीकोच्चुण्णिराजविरचिते
श्रीरामचरितमहाकाव्यपूरणे
कपिसेनासन्नाहो नाम
अष्टादशः सर्गः

## एकोनविंशः सर्गः

सुग्रीवोऽथ स्वविषयचरान् स्वस्वसैन्यैः समेतान्
दृष्ट्वाशेषांस्त्रिदशसदृशान् यूथनाथानुपेतान् ।
सिद्धार्थोऽधिक्षितिधरवनं तान् यथार्हं निवेश्य
प्रोद्योगश्री रघुकुलपतिं सानुजं भाषते स्म ॥ १ ॥

हर्यृक्षा मद्विषयनिलयाः सर्व एवागतास्ते
पश्यैते त्वद्गुरुफलकृपाकाङ्क्षिणः सन्निविष्टाः ।
देवैर्ब्रह्मादिभिरतिगुणाः पूर्वमुत्पादिता ये
सन्तः पुत्रान् गुणसमधिकानात्मनो ह्यर्थयन्ते ॥ २ ॥

उल्काविद्युत्खगपतिमरुत्सन्निभा व्योमयाने
पातालान्तः सरभसगतावादिशेषाविशेषाः ।
देवासंगैः सलिलगमनैरादिमीनायमानाः
वेगेनैते स्वगतिषु महायोगिचित्तोपमानाः ॥ ३ ॥

कर्माशक्यं बहु दिविषदां तीक्ष्णदंष्ट्रानखाग्रैः
शक्ताः कर्तुं प्रथमकिटिवन्मर्त्यपश्वास्यवच्च ।
शैलोद्धारे हरिकमठवद्राम सर्वे समर्था-
स्तुल्याः साक्षाद्बलिमखभिदा कामरूपत्वतोऽमी ॥ ४ ॥

खञ्जः पङ्गुर्नयनरहितः सर्वधातुक्षयार्तः
संपद्धीनो विगलितसुहृत् क्षुत्पिपासाभिभूतः ।

इष्टानर्थान् झटिति लभते दुर्घटानप्यजस्रं
याभिर्विद्यास्वधिकनिपुणास्तास्त्वमी राम सर्वे ॥ ५ ॥

कैश्चित् पीतं सरसममृतं निर्जितान् निर्जरेन्द्रान्
कृत्वा हत्वा युधि दितिसुतान् धर्मरक्षा कृतान्यैः ।
ये ये प्राथ्या अपि सुरवरैर्ब्रह्मशार्ङ्गीश्वरेभ्यः
प्राप्ताः कैश्चिद्रघुकुलपते ते वराः सारभूताः ॥ ३ ॥

दूराद्दारात्मजगृहकथा विस्मृताः सम्पदस्ता-
स्तान्युद्यानान्यपि गुणगणैर्निन्दितं नन्दनं यैः ।
सीतादेवीकरुणहरणाकर्णनोद्घूर्णमानैः
पश्यामीभिः कपिभिरधुना किं पुनस्त्वां प्रपन्नैः ॥ ७ ॥

कार्यं जानाम्यहमिह तथाप्यर्थतत्त्वैकवेत्ता
कालेऽमुष्मिन् कथयतु भवानेव कर्तव्यमेभिः ।
विज्ञाप्येति प्लवगवृषभे तत्र याते विरामं
रामो रामाधिगमनविधये तं हरीन्द्रं जगाद ॥ ८ ॥

ज्ञेयामीभिर्जनकतनया जीवयुक्ता न वा सा
रक्षोभर्तुः पदमपि पुनः संविधास्ये समस्तम् ।
कार्येऽमुष्मिन्नधिकविषमे लक्ष्मणो नो न चाहं
नाप्येकोऽन्यः प्रभुरसि सुधीर्वानरेन्द्र त्वमेव ॥ ९ ॥

पुत्रः साक्षात्त्वमसि सवितुस्तेजसामेकराशे-
स्तत्तद्योगैश्चिरमतिबलाद्वालिनोऽरेर्विमुक्तः ।
दत्तोऽस्मभ्यं पथि सखितया केनचिद्दिव्यपुंसा
त्वादृक्कोऽन्यः प्रभवति पुमानास्पदं सद्गुणानाम् ॥ १० ॥

आज्ञायाज्ञामिति रघुपतेः सूर्यसूनुः स राजा
हर्यृक्षणां वदति विनतं नाम तं यूथनाथम् ।
यस्यालोक्याधिकपृथुवपुर्वज्रनिष्पेषघोषम्
भीताः शैला गहनविपिनैराचरन्त्यात्मगुप्तिम् ॥ ११ ॥

एतैः सार्धं सपदि कपिभिः सोमसूर्यात्मजैस्त्वं
गच्छ प्राचीं दिशमतिबलैर्लोकमान्यैश्च सैन्यैः ।
नानारण्याचलजनपदग्रामनद्यादिदृश्यां,
सीतां देवीं मृगय निलयं रावणस्यापि तस्याम् ॥ १२ ॥

यद्यत् कर्तुं नयरसिक भो यत्र यत्रानुरूपं
देशे काले भवति भवता तत्र तत् संविधेयम् ।
कर्माभीष्टं जनयति फलं देशकालानुरूपं
नशायान्यत् खलु परमतस्तत्र देशान् प्रवक्ष्ये ॥ १३ ॥

ग्रामारामोत्तमपुरयुतान् ब्रह्ममालाविदेहान्
पुण्ड्रानङ्गान् प्लवगवृषभा मालवान् मागधाख्यान् ।
काशीं देशान् पुनरपि परान् पेशलान् कोसलादीन्
गत्वा सीता स च दशमुखो मार्गितव्यौ भवद्भिः ॥ १४ ॥

भागीरथ्या विमलपयसः शोणनाम्नः सरय्वाः
सिन्धोर्मह्यास्तपनदुहितुः कौशिकीकालमह्योः ।
उग्रग्राहप्रतिभयतरह्रादनानाह्रदादि-
ष्वन्वेष्टव्यौ जनकतनयाराक्षसेन्द्रौ भवद्भिः ॥ १५ ॥

गत्वा भूयः कनकरजताद्याकरान् भूमिभागा-
नन्वेष्टव्या जनकतनया कोशकारावनिं च ।

शैलान् दुर्गान् गहनविपिनैः सागरान्तः प्रविष्टान्
दुष्टो रक्षःपतिरपि पुराण्यन्तरीपालयानि ॥ १६ ॥

ग्रामा ये सन्त्यधिकवितते मन्दरोत्तुङ्गशृङ्गे
तेषु स्थानेष्वपि वनजुषां घोरलोहाननानाम् ।
अक्षय्यानामतिलघु पदैकेन गन्तुं पटूनां
कार्यं रक्षोधिपजनकजामार्गणं मर्कटेन्द्राः ॥ १७ ॥

आस्यान्तस्थश्रुतिरतितरां विस्तृतत्वं प्रपन्नाः
येषां जाड्यं हरति सकलं भूसुराणामिव द्राक् ।
तेषां वेश्मस्वतिबलभृतां मैथिली मार्गितव्या
व्याधेन्द्राणां निशिचरपतिश्चातियत्नाद्भवद्भिः ॥ १८ ॥

रूपोदग्राः शितत‍रशिखाः स्वर्णवर्णाः किराताः
येऽन्ये द्वीपान्तरनिलयना आममीनाशना ये ।
ये सन्त्यन्तस्सलिलगतयो व्याघ्रवक्त्राश्च तेषां
स्थानेष्वार्या जनकतनया मार्गितव्या भवद्भिः ॥ १९ ॥

नो शक्यन्ते कथमपि गिरीनन्तरेणाभिगन्तुं
ये वा येऽन्ये प्लवनमपरे ये प्लवं तत्र देशाः ।
तेष्वन्वेष्या जनकतनया सा यवस्वर्णरूप्य-
द्वीपेष्वाढ्येष्वतिशुभगुणैर्यत्नवद्भिर्भवद्भिः ॥ २० ॥

सप्तभ्राजज्जनपदयवद्वीपतोऽतः परस्ता-
दद्रिर्नाम्ना भवति शिशिरस्तत्र सीता विमृग्या ।
यच्छृङ्गेषु स्फुटमिह दिवं स्पर्धयेवोल्लिखत्सु
क्रीडालोलः सह युवतिभिः सेवते देवसङ्घः ॥ २१ ॥

जम्बूद्वीपं लवणजलधिं साचलद्वीपमेवं
रक्षोभर्त्रा सह जनकजां सम्यगन्विष्य सर्वम् ।
प्लक्षद्वीपं व्रजत परतः सागरस्यास्य यस्मिन्
शोणोऽगाधः प्रवहति नदः शीघ्रमालोहिताम्बुः ॥ २२ ॥

सम्पूर्णस्यामलजलभरैस्तस्य रम्येषु तीर्थे-
ष्वुद्यन्नानादलसुमफलैः काननेषूज्ज्वलेषु ।
तीरस्थेषु द्विजमृगकुलक्रीडितेषु प्रयत्ना-
दन्वेष्टव्या निशिचरपती रामपत्न्या सहैव ॥ २३ ॥

तस्मिन् द्वीपे विबुधभुवनाग्राधिरोहानुकूलैः
शृङ्गैर्नागालयतलगतावुद्यताभिर्नदीभिः ।
भासन्ते ये परिवृततटस्तापसेन्द्रैर्नगेन्द्राः
नागेन्द्रैश्च प्लवगतिलकास्तत्र सीता विमृग्या ॥ २४ ॥

वाताघातात् सततमुदितैः सङ्कुलं भङ्गजालैः
विक्रोशन्तं स्फुटमतितरामिक्षुसारद्रवाब्धिम् ।
तीर्थेनातिक्रमत हरयस्तत्र गृह्णन्ति दैत्या-
श्छायां भोक्तुं चिरमनशना ब्रह्मदत्तानुवादाः ॥ २५ ॥

मार्गं यास्यन्त्यधिपथि दृशां शाल्मलीद्वीपमुख्याः
द्वीपास्ते वस्तदनु च सुरासागराद्याः समुद्राः ।
राजन्नानानगनदनदीभूषितास्तेषु सर्वे-
ष्वन्वेष्टव्यः सह जनकभूपालपुत्र्या दशास्यः ॥ २६ ॥

शाल्मल्याख्ये परमवितते तत्र तत् पश्यतोच्चै-
स्तस्य स्थानं खगकुलपतेर्विश्वकर्मप्रणीतम् ।

सह्लोकोऽयं भजति भगवत्पादविन्यासधन्यं
यत्पक्षोद्यत्पवनचकिताः काद्रवेया द्रवन्ति ॥ २७ ॥

दैत्याः सूर्योदयनसमये ब्रह्मतेजोऽभिभूताः
मन्देहाख्या मधुजलनिधौ तत्र नित्यं पतन्ति ।
तप्ता भूयस्तपनकिरणैर्भूभृदुत्तुङ्गशृङ्गे-
ष्वालम्बन्ते क्षितिभृदुपरिस्थाचलभ्रान्तिदास्ते ॥ २८ ॥

तत्तद्वीपांस्तदनु समतिक्रम्य यूयं क्रमेण
क्षीरोदाख्यं सरिदधिपतिं द्रक्ष्यथ प्रेक्षणीयम् ।
दीर्घाकारा गुरुतरमरुल्लोलकल्लोलमाला
मुक्तामाला इव सितकरस्वच्छवर्णा दधानम् ॥ २९ ॥

मध्ये तस्य क्षितिभृदृषभो नाम गोक्षीरपाण्डु-
र्गन्धश्लाघ्यस्तबकविपिनै राजतै राजतेऽलम् ।
वाहः श्रीमान् खलु पशुपतेः सोऽयमित्यन्तरङ्गे
निश्चिन्वन्ते विबुधनिवहा यस्य रूपं विलोक्य ॥ ३० ॥

शृङ्गे तस्य स्फुरति सविधोद्यानहृद्यं तटाकं
पूर्णं दिव्यै रजतकमलैर्हेमकिञ्जल्करम्यैः ।
हित्वा दूरे सुभगसुभगां हन्त मन्दाकिनीं तां
संक्रीडन्ते सह युवतिभिर्यत्र देवोपदेवाः ॥ ३१ ॥

क्षीराम्भोधिं तदनु समतिक्रम्य तच्चान्तरीपं
पारावारप्रवरमचिराद्यात शुद्धोदकाख्यम् ।
और्वं तेजः सकलभुवनत्रासनं वाजिवक्त्र
शम्भोर्हालाहलमिव गले यत्र निक्षिप्तमास्ते ॥ ३२ ॥

अम्भोराशेरधिकविततस्यास्य पारे विचित्रो
भाति श्रीमान् कनकशिखरी जातरूपोपलाख्यः।
कीशश्रेष्ठाः सुयुतदशकं योजनानामतीत्य
प्राप्यः सोऽयं भवति भवतां स्वर्गिवर्गोपभोग्यः ॥ ३३ ॥

तत्रानन्तं दशशतफणं तुङ्गशृङ्गे निषण्णं
वन्द्यं सर्वैरसितवसनं भक्तियुक्ता भजध्वम्।
यस्यैकस्मिन् शिरसि निहितं मण्डलं भौममेतत्
सप्तद्वीपाद्यरहितमहो याति सिद्धार्थभावम् ॥ ३४ ॥

तालस्तस्य त्रिशिखरलसन् देवदेवस्य केतुः
पूर्वाशाया अवधिरचले स्थापितस्तत्र धात्रा।
रक्षामग्र्यां रचयतितरां काञ्चनी यस्य वेदी
बद्धा मूले स्वखचितमणिज्योतिरुत्थेन्द्रचापा ॥ ३५ ॥

देशादस्मात् परमुदयभूभृद्वरः स्वर्गलोकम्
शृङ्गो यस्य स्पृशति विपुलायामविस्तारशाली।
यत्कूटाग्रप्रभवविटपित्रातकल्पा गुणौघै-
र्विख्यातास्ते विबुधतरवः कल्पवृक्षा भवन्ति ॥ ३६ ॥

कृत्वा यत्र प्रथमचरणन्यासमिन्द्रानुजः प्राक्
शक्रादीनामुदयमकरोच्छुक्रशिष्यार्दितानाम्।
ईशो भासामुदयमयते यं प्रपद्यैव नित्यं
नाम्ना जातस्तदयमुदयः पर्वतः सर्वलोके ॥ ३७ ॥

यस्याश्चित्रैर्गुणततिलतासद्यशःपुष्पवृन्दै-
र्लोकोद्यानं सुरभितमिदं राघवप्रेयसीं ताम्।

स्थानेष्वेतेष्वपि दशमुखं मार्गयध्वं सुरौको
जाने नातः परमरवि वो गम्यमेतावदेव ॥ ३८ ॥

नोक्ता ये केऽप्यथ तु विषयास्तेषु चान्वेषणीया
सीता मासेन च कपिवराः सन्निवर्तध्वमार्याः ।
नो वस्तव्यं खलु परमतो यो वसेन्मे स वध्यः
सिद्धार्थाश्च व्रजत जनकक्ष्मापजालोकनेन ॥ ३९ ॥

प्रस्थाप्येत्थं कपिकुलबलं जानकीमार्गणार्थं
शक्रस्याशां प्रति शितधियाथाखिलं संविचिन्त्य ।
द्रागन्वेष्टुं शमनदिशि तां प्रेषयामास वीर्य-
ज्ञानोत्कृष्टान् विपुलयशसो वानरेन्द्रान् हरीन्द्रः ॥ ४० ॥

नीलः पुत्रः पवनसुहृदः पावमानिर्हनूमान्
धातुः सूनुर्मतिबलवतां जाम्बवानग्रयायी ।
एतैर्मैन्दद्विविदशरभोल्कामुखाद्या विचेतुं
सीतादेवीं प्लवगतिलका दक्षिणाशां व्रजन्तु ॥ ४१ ॥

दोर्मूलान्तर्विमथितदशास्येन तुल्यः स्वपित्रा
तारेयोऽयं भवतु भवतां नायकोऽनन्तसैन्यः ।
तस्यां देशान् दिशि परमतः सम्प्रवक्ष्यामि दुर्गान्
सीतादेव्या सह दशमुखो येषु मृग्यो भवद्भिः ॥ ४२ ॥

विन्ध्यं नानाकुहरशिखरारण्यसत्वादिदुर्गं
रेवां सेवानिरतभुजगां भीमवेगामगाधाम् ।
वेणीघातप्रचलदुपलां कृष्णवेणीं तथान्याः
पत्नीः सिन्धोर्व्रजत विमला उत्कला मेखलाद्याः ॥ ४३ ॥

यूयं भूयो जनकदुहितुर्मार्गणार्थं दशार्णान्
यात ग्रामाकरपुरयुतानश्ववन्तीमवन्तीम् ।
सम्यग्रम्यानृषिकसहितान् माहिषाख्यान् विदर्भा-
नङ्गान् वङ्गानपि च विषयान् कौशिकाख्यान् कलिङ्गान् ॥ ४४ ॥

गोदावर्या परिविलसितं दण्डकारण्यमारा-
दान्ध्रान् पुण्ड्रानधिकसुभगान् केरलान् पाण्ड्यचोलान् ।
सह्यं चाद्रिप्रवरमुदयच्चित्रपुष्पद्रुमौघै-
श्छन्नं यात प्लवगपतयश्चन्दनारण्यरम्यम् ॥ ४५ ॥

तत्रागस्त्यं कृतनिलयनं दीप्यमानं तपोभि-
र्भक्त्या युक्ताः प्रणमत पदानम्रवृन्दारकेन्द्रम् ।
अत्याश्चर्यामृतरसलसद्यद्यशःपुष्पमाला
विश्वव्याप्ता विदधति फलं साधु सर्वश्रुतीनाम् ॥ ४६ ॥

लब्ध्वानुज्ञामृषिकुलपतेः सुप्रसन्नस्य तस्य
द्रष्टव्या सा विमलसलिला ताम्रपर्णी भवद्भिः ।
मुक्ताजालैर्नयनसुभगैरुज्ज्वला गन्धसारै-
र्या कान्तेवाभिसरति सदा हन्त रत्नाकरं तम् ॥ ४७ ॥

तामुत्तीर्य व्रजत परतो दक्षिणस्याम्बुराशे-
स्तीरं वीचीपवनशिशिरं निर्भरोत्तालतालम् ।
पश्यन्तोरित्रजगतिहरीं पाण्ड्यभूनायकानां
मुक्ताहेमद्युतिभिरधिकां राजितां राजधानीम् ॥ ४८ ॥

वीर्यश्लाघ्यैर्विपुलमतिभिः सम्प्रधार्यार्थसिद्धिं
गन्तव्योऽद्रिस्तदनु जलधिं सम्प्रविष्टो महेन्द्रः ।

गीर्वाणानां वलभिदिव यः पर्वतानां महेन्द्रः
पर्वेष्वागच्छति च सकलेष्वादराद्यं महेन्द्रः ॥ ४९ ॥

अन्तर्द्वीपे लवणजलधेर्दक्षिणे तस्य पारे
लङ्का प्राप्या तदनु शतकं योजनानामतीत्य ।
यत्नेनास्यां जनकतनया मार्गितव्या भवद्भी-
रक्षोभर्तुर्भवति नगरी सा हि वध्यस्य दुर्गा ॥ ५० ॥

तस्मिन्नब्धौ निशिचरवधूरस्ति साङ्गारकाख्या
छायाकृष्ट्या सकलमपि या सत्त्वमत्त्युग्रशक्तिः ।
लङ्काद्वीपे निशिचरकुलैः सङ्कुले रामपत्नी-
मन्विष्याथ व्रजत परतः पर्वतं पुष्पिताख्यम् ॥ ५१ ॥

शृङ्गं हैमं श्रयति दिनकृद्राजतं यस्य सोम-
स्तं नत्वाद्रिं सुकृतिसुलभं पापिलोकैरदृश्यम् ।
अन्विष्यार्यामपि च भुवनान्याश्वतो योजनानां
गत्वा प्राप्यो भवति भवतां सूर्यवान्नाम शैलः ॥ ५२ ॥

तं चातीत्य क्षितिधरवरं वैद्युतं प्राप्स्यथाराद्-
भुक्त्वा मूलं फलमविरतं तत्र पीत्वा मधूनि ।
यूयं भूयः कृतरघुपतिप्रेयसीमार्गणाद्रा-
ग्गत्वा कीशाः प्रविशत गिरिं तत्परं कुञ्जराख्यम् ॥ ५३ ॥

तस्मिन् गेहं घटभवमुनेर्योजनायामशालि
श्लाघ्यं दिव्यं खलु दशगुणोच्छायविभ्राजमानम् ।
चित्रं शिल्पैर्विलसतितरां विश्वकर्मप्रणीतं
तद्वीक्ष्याथ व्रजत नगरीं भोगवत्याह्वयां ताम् ॥ ५४ ॥

चन्द्रापीडः फणिमणिगणोद्भासिनालङ्करोति
स्वं येनाङ्गं रुचिरममृतोत्पादने यो गुणोऽभूत् ।
यस्यां पुर्यां वसति स सुधीर्वासुकिस्तत्र सीता-
मन्विष्याराद्चलमृषभं यास्यथातः परस्तात् ॥ ५५ ॥

तस्मिन् दिव्यं मलयजवनं मान्यगन्धर्ववर्यैः
शैलूषाद्यैर्बहुगुणगणोल्लासिभिः पाल्यमानम् ।
न स्प्रष्टव्यं जनकतनयां मार्गयद्भिर्भवद्भि-
र्मान्यद्रोहाचरणमखिलैर्वर्जनीयं हि सद्भिः ॥ ५६ ॥

शैलादस्मात्तदनु परतो ध्वान्तभीमः पितॄणां-
लोकोऽस्त्युग्रो भवति भवतां नैव सेव्यः कपीन्द्राः ।
एतावन्तं दिशि पितृपतेर्देशमन्विष्य दृष्ट्वा
सीतामर्थाधिगममुदिताः सन्निवर्तध्वमार्याः ॥ ५७ ॥

मासः कार्योऽवधिरिह वसेद्यः परस्तात् स वध्यो
यूयं श्लाघ्येष्वतिपृथुगुणैः सत्कुलेषु प्रसूताः ।
नैवासाध्यं भवति भवतां वस्तु किञ्चित्त्रिलोके
तत् सिद्धार्था भवत सुखिनः प्रत्युपेत्यात्युदाराः ॥ ५८ ॥

प्रस्थाप्यैवं महदतिबलं तद्बलं वानराणां
याम्याशायां सदशमुखया लङ्कयालङ्कृतायाम् ।
राजाब्भर्तुर्दिशि जनकजान्वेषणार्थं सुषेणं
व्याकुर्वाणः सहरिनिवहं सन्दिदेश प्रदेशान् ॥ ५९ ॥

प्रज्ञोत्कर्षाद्गुरुरसि महाविक्रमाद्वायुसूनो-
रस्माकं त्वं प्लवगनिकरोत्तंस तारापितृत्वात् ।

मान्यैरन्यैः सममृषिसुतैर्माननीयं भवन्तं
सीतादेवीदशवदनयोः प्रेषयेऽन्वेषणाय ॥ ६० ॥

गच्छान्वेष्टुं जनकतनयां रावणं च प्रतीच्यां
कीशेशानामृषितनुभुवां लक्षयुग्मेन युक्तः ।
अर्चिर्माला इति विदधते सुग्धुनामात्र येषा-
मर्चिर्माला बहु परिलसन्त्यात्मतेजोभिजाताः ॥ ६१ ॥

रम्यस्फीतान् प्लवगवृषभाः दिश्यमुष्यां सुराष्ट्रान्
बाह्लीकाख्यानथ जनपदान् प्राप्य शूरान् सभीमान् ।
अन्वेष्टव्या जनकतनया वीर्यवद्भिर्भवद्भिः
क्रव्यादानामपि परिवृढस्तत्र तत्र प्रयत्नात् ॥ ६२ ॥

विस्तीर्णानि प्रचुरनगराण्युच्चपुन्नागपूगी-
केरैरन्यैरपि तरुकुलैः केतकीवेणुवेत्रैः ।
दुर्गारण्यान्यमलसलिला निम्नगाश्च व्यतीत्य
भ्राम्यद्यादोगणतरलितं पश्चिमं पश्यताब्धिम् ॥ ६३ ॥

तीरेऽम्भोधेस्तदनु कपयः केतकीकेरपूगी-
तापिञ्छानां गहनविपिनेष्वद्रिषु प्रोन्नतेषु ।
सा युष्माभिः कृतविहरणैर्जानकी मार्गितव्या
तत्रावन्त्यादिषु च नगरेष्वीशिताप्याऽऽशराणाम् ॥ ६४ ॥

नैरन्तर्यस्थितपृथुतरोत्तुङ्गवल्लीसमूह-
श्लिष्टानेकद्रुमगणयुतं काननं किञ्चिदस्ति ।
मध्ये तस्य प्रबलतमसा मुष्टदृष्टिप्रचारे
यूयं [र]क्षोधिपजनकजे मार्गयध्वं प्रयत्नात् ॥ ६५ ॥

हैमः शैलः पृथुतरुघनः सिन्धुवाराशियोगे
तत्रास्त्येकः करिमकरशुकपक्षिपश्वास्यचित्रः ।
तस्य ध्वान्तप्रतिभयगुहाप्रस्थशृङ्गप्रदेशे-
ष्वन्वेष्टव्यौ जनकतनयापङ्क्तिकण्ठौ भवद्भिः ॥ ६६ ॥

अम्भोराशौ विलसति महत् पारियात्रस्य शृङ्गं
यस्मिन् सन्ति श्रुतिगुणितषट्कोटिगन्धर्ववीराः ।
तेषां तत्राप्रियमणुतरं नैव कार्यं भवद्भि-
र्भोक्तव्यं नो किमपि च फलं मार्गितव्या च सीता ॥ ६७ ॥

उल्लङ्घ्यैतत् परमतिपृथुं वज्रसंज्ञं महीध्रं
कुर्वन्त्वक्ष्णोर्विषयमचलं चक्रवन्तं भवन्तः ।
पूर्वं यत्र द्युमणिसदृशं चक्रमादत्त विष्णुः
दैत्यं हत्वा सितकरसमं पाञ्चजन्यं च शङ्खम् ॥ ६८ ॥

तं चोल्लङ्घ्य क्षितिधरवरं पश्यताराद्वराहं
यत्र प्राग्ज्योतिषपुरमति भ्राजते सर्वदुर्गम् ।
पूर्णं रत्नैर्नरकदनुजाधीशसंरक्ष्यमाणं
सीतादेव्याः कुरुत बहुशो मार्गणं तत्र यूयम् ॥ ६९ ॥

सौवर्णोऽतः परमति महान् मेघवान् नाम शैलो
यस्मिन् देवाः समभिषिषिचुर्देवराजं महेन्द्रम् ।
नित्योद्यच्छज्झररवभरस्फीतसिंहादिसत्व-
ध्वानक्रीडाकबलितसुरोद्दामभेरीनिनादे ॥ ७० ॥

गुप्तं भर्त्रा तमथ मरुतामद्रिमुल्लङ्घ्य यूयं
यात स्वर्णद्रुमपरिलसत्षष्टिभूभृत्सहस्रम् ।

येषां मध्ये क्षितिधरवरो भाति सावर्णिमेरु-
र्यस्मै प्रदाद्वरमहिमगुः स्वस्थसौवर्णबर्णम् ॥ ७१ ॥

शैलेष्वेतेष्वधिकनिपुणा यूयमन्विष्य सीतां
लङ्काभर्त्रा सह परमतो गच्छतास्ताचलं तम् ।
सर्वोत्कृष्टं वरुणपुरकृद्विश्वकर्मप्रणीत-
प्रासादाख्यास्तुहिनगिरयः सन्ततं यं भजन्ते ॥ ७२ ॥

यत्रैवास्तं व्रजति सकललोकनोत्साहबोधैः
स त्राह्न च द्युमणिभगवान् यत्तदस्तोऽयमद्रिः ।
चित्रां वेदीमधिगतपदोऽत्रास्त सावर्णिमेर्वो-
र्मध्ये तालः खलु दशशिरा भाति चामीकारात्मा ॥ ७३ ॥

ब्रह्मा मेराविव मुनिवरस्तत्र सावर्णिमेरौ
तिष्ठत्युग्रे तपसि निरतो मेरुसावर्णिसंज्ञः ।
स प्रष्टव्यो जनकनयावृत्ततत्त्वं भवद्भि-
र्नत्वा हस्तामलकसदृशं यस्य विश्वं समाप्तम् ॥ ७४ ॥

उक्तानेतान् प्लवगवृषभाः प्राप्य नोक्तांश्च देशान्
सत्रा देव्या जनकसुतया तत्र तत्राशरेन्द्रम् ।
अन्विष्याशु त्रिशतदिवसैः सन्निवर्तध्वमार्या
यूयं गन्तुं खलु कपिकुलैः शक्यमेतावदेव ॥ ७५ ॥

निर्मर्यादं मिहिररहितं वेद्मि नातः परस्ता-
न्मासादूर्ध्वं वसति तु पुरा यः स वध्यो भवेन्मे ।
युष्माभिस्तत् कपिकुलवरास्तत्र सर्वं विधेयं
यद्यद्युक्तं जनकतनयान्वेषणे तत्र तत्र ॥ ७६ ॥

प्रस्थाप्येति प्लवगवृषभांस्तान् सुषेणप्रधानान्
यादोभर्तुर्दिशि जनकजापङ्क्तिकण्ठौ विचेतुम् ।
वित्तेशाशां प्रति कपिपतिर्व्यादिदेशाथ कीशान्
वीर्योदग्रान् शतबलिमुखान् वर्णयन् साधु मार्गम् ॥ ७७ ॥

गच्छाशान्तां स्वसदृशबलैर्वानरैर्लक्षसङ्ख्यै-
रेतैर्वैवस्वततनुभवैर्मन्त्रिभिश्चान्वितस्त्वम् ।
पौलस्त्येन च्छलबलहृतां रामपत्नीं विचेतुं
पौलस्त्यो यामवति सततं किन्नराणामधीशः ॥ ७८ ॥

तत्र म्लेच्छान् भरतयवनान् शूरसेनान् पुलिन्दान्
काम्भोजारट्टकशककुरून् पौरवान् टङ्कणाख्यान् ।
चीनानन्यानपि जनपदान् मद्रकप्रस्थलादीन्
गत्वा कीशा जनकतनया मार्गितव्या भवद्भिः ॥ ७७ ॥

नित्यं पश्चात् परिणयनतः कामशत्रोरिवाङ्कं
यस्य स्वीयं शरणमकरोत् पूर्वमार्या शरण्या ।
तस्मिन् नानाधनवनगुहाशृङ्गदुर्गेऽथ सीतां
रक्षोभर्त्रा सह कपिवरा मार्गयध्वं महीध्रे ॥ ८० ॥

गत्वा सोमाश्रममथ गिरिः कालसंज्ञो महीयान्
सीतान्वेषं परिकलयितुं हेमगर्भोऽथ शैलः ।
अद्रिस्तुल्यस्तदनु हरयः कृष्णचक्रेण नाम्ना
गन्तव्यो वः पुनरचलराड् देवसख्यप्रसिद्धः ॥ ८१ ॥

उल्लङ्घ्याथ द्रुमगिरिसरित्प्राणिशून्यं परस्ता-
देशं दुर्गं प्रमितमभि ो योजनानां शतेन ।

कैलासाद्रिं व्रजत हरयः शर्वमित्राधिवासं
तामन्वेष्टुं जनकतनयां यातुधानाधिपं च ॥ ८२ ॥

क्रौञ्चक्ष्माभृत्तदनु सबिलः स्कन्दशक्त्याहतात्मा
तत्रावृक्षो गिरिरथ पुनर्मानसो हंससेव्यः ।
सर्वेष्वेतेष्वतिवनघनप्रस्थशृङ्गादिदुर्गे-
ष्वन्वेष्टव्या जनकतनया वीयवद्भिर्भवद्भिः ॥ ८३ ॥

मैनाकाद्रिं तदनु समतिक्रम्य दृश्या भवद्भिः
श्रीमत्पुण्याश्रमवसतयो बालखिल्या मुनीन्द्राः ।
वन्द्या भक्त्या जनकतनयायातुधानेन्द्रवृत्तं
प्रष्टव्याश्च प्रबलतपसां नास्ति तेषां परोक्षम् ॥ ८४ ॥

हैमैः क्रीडत्तरुणतरणिच्छायहंसाभिरामैः
पद्मैश्छन्नं विलसति सरस्तत्र वैखानसं तत् ।
यत्र क्रीडारसतरलितः किन्नरेशौपवाह्यः
सम्पर्येति स्वयमिभपतिः सार्वभौमो वशाभिः ॥ ८५ ॥

उल्लङ्घ्यादस्ततमथ सरो व्योम गम्यं भवद्भि-
श्चन्द्रार्कोडुग्रहजलधरैः शून्यमाद्यन्तहीनम् ।
सिद्धेन्द्राणाममलरुचिभिः स्वप्रकाशात्मनां य-
द्भात्यर्थं बत कमलिनीबान्धवस्येव भाभिः ॥ ८६ ॥

शैलोभाख्या तदनु महती निम्नगा तीरवंशा
यस्याः पारं परमतिजवात् सिद्धलोकान् नयन्ति ।
देशाः कीशाः शृणुत कुरवस्तूत्तरास्तत्परस्तात्
क्रीडायोग्याः खलु सुकृतिनां दिव्यभोगैः समृद्धाः ॥ ८७ ॥

पारावारः प्रचलति महानुत्तरस्तत्परस्ता-
दास्ते सोमक्षितिधरपतिर्देवसेव्योऽस्य मध्ये ।
एतेष्वन्येष्वपि हरिवरा नोक्तदेशेषु मृग्यः
सीतादेव्या सह दशमुखः सत्ववद्भिर्भवद्भिः ॥ ८८ ॥

गत्वा सोमक्षितिधरममुं सन्निवर्तध्वमर्वाङ्-
मासाद्गन्तुं प्लवगकुलजैः शक्यमेतावदेव ।
निर्मर्यादं तपनरहितं तत्परं नैव जाने
देशं मासान्निवसति परं यः स वध्यो मम स्यात् ॥ ८९ ॥

दृष्टा सीतेत्यमृतवचनं यो वदेत्तत्वतोऽत्र
श्रीरामस्य त्रिभुवनपतेर्जीवनोपायभूतम् ।
तस्यात्यल्पं फलमिदमहो मत्समत्वं जगत्यां
किं किं न स्यात् सुलभमखिलाधीश्वरेऽस्मिन् प्रसन्ने ॥ ९० ॥

इति श्रीकोच्चुण्णिराजविरचिते
श्रीरामचरितमहाकाव्यपूरणे
कपिसेनासन्नाहो नाम
एकोनविंशः सर्गः

[ :इति हरिसन्देशे प्रथमः सर्गः ]



# विंशः सर्गः

आज्ञाप्यैवं कपिकुलपतिर्यूथपानां समक्षं
स्मारं स्मारं यदमितगुणान् श्लाघते स्म प्रहृष्टः।
सिद्धप्रायं स्वमभिलषितं मन्यमानस्तदानीं
रामः कामं प्रमुदितमनास्तं हनूमन्तमूचे ॥ १ ॥

लोको नाशं व्रजति सकलः प्रातिकूल्यं प्रपन्ने
यस्मिन् सौख्य भजति परमं चानुकूल्यं प्रपन्ने ।
वायोस्तस्य त्वमसि तनयस्तद्गुणा वीर सर्वे
त्वां सेवन्ते गतिजयशोविक्रमाद्या महात्मन् ॥ २ ॥

देवस्थाने भुजगनिलये दानवानां निवासे
भूतप्रेताशरनिवसतौ वारिणि व्योमदेशे ।
अन्यत्रापि क्वचन भवतो नो गतेरस्ति सङ्गो
नैवंभूतं प्लवगनिकरोत्तंसभूतं त्रिलोके ॥ ३ ॥

तिष्ठत्यत्र क्षणमतिचला चञ्चलानन्तवेगा-
त्त्वत्तो भीता बत विषधरानत्ति मर्तुं गरुत्मान् ।
न प्रत्यक्षं भवति महतां योगिनां चान्तरङ्गं
किं किं वेगाज्जगति विजितं न त्वया वायुसूनो ॥ ४ ॥

अन्यैर्मान्यैरपि सुबहुभिः शक्यते यन्न कर्तुं
यत्तत् कर्तुं व्यवसितमतेर्जृम्भमाणस्य सद्यः ।

वोढुं भारं भवति भवतो न क्षमापि क्षमासौ
दातुं शक्तं पृथुतरतनोरन्तरं नाप्यनन्तम् ॥ ५ ॥

यद्वज्रेण त्रिदशपतिना शक्यते नव भेत्तुं
शूलेनापि त्रिपुरजयिना विष्णुना चक्रतोऽपि ।
युक्तं दंष्ट्रानखरनिकरैर्वीक्ष्य तद्भेददक्षै-
स्त्वां सिद्धेशा नृहरिवपुषं देवदेवं स्मरन्ति ॥ ६ ॥

बुद्धी नेत्रोः सुरदितिभुवां सर्वशास्त्रप्रवीणे
नानोपायप्रसवसुरभी येषु कार्यार्णवेषु ।
कीटप्राये पवनज परं मज्जतोऽप्राप्य पारं
चित्रं चित्रं खलु धिषणया गोष्पदं ते कृतास्ते ॥ ७ ॥

[नेत्रोः-गुर्वोः गीष्पतिशुक्राचार्ययोरित्यर्थः]

गीर्वाणानां दनुतनुभुवां यक्षवंशोद्भवानां
गन्धर्वाणां सपिशितभुजां किन्नराणां नराणाम् ।
अन्येषामप्युरगपतगप्रेतभूतादिकानां
लोकानां वा भवदविदितस्तत्त्वतो नास्ति कश्चित् ॥ ८ ॥

सद्यस्तापप्रशमनविधौ भूरिपीयूषवर्ष-
प्रख्यास्तीव्रभ्रममयतमोध्वंसनेऽर्कांशुतुल्याः ।
सान्द्रीभूता विबुधपटलीसम्मतार्थैरनल्पाः
विभ्राजन्ते जगति भवतो वग्विलासा विचित्राः ॥ ९ ॥

यान् प्रालेयक्षितिधरगुरुप्रांशुपीनस्वरूपान्
दृष्ट्वा धीरास्तरलहृदया विद्रवन्त्युज्झितार्थाः ।
प्रत्यूहास्ते चलति भवतो मन्दमुत्साहवाया-
वत्याश्चर्यं सपदि सकलास्तूलराशीभवन्ति ॥ १० ॥

व्योम्नीव त्वय्यधिकविमले जाड्यहेतुप्रहीणे
सर्वौन्नत्यं गतवति रजोदोषलेशैर्वियुक्ते ।
निर्भिन्दानः सपदि तमसां सञ्चयं दुःखमूलं
धर्मादित्यः स्फुरति गुणसंवर्धितानन्दचन्द्रः ॥ ११ ॥

विद्यानद्यो विविधविलसत्सत्रकाराद्रिजाताः
सेव्याः सर्वैः सकलजनतातापविच्छेददक्षाः ।
श्रेयोदात्र्यः कलुषनिवहध्वंसदक्षा महात्मन्
भर्तारं त्वां कपिकुलमणे वारिराशिं भजन्ते ॥ १२ ॥

गीर्वाणानामपि खलु गुणाः सम्पदां हेतुभूताः
आपः पङ्कोत्करमिव मदोत्कर्षमुत्पादयन्ति ।
तस्माद्दोषा इति मुनिवरैर्निन्दिता ये त एते
त्वत्संसर्गादतिदमकृतो यान्ति भूयो गुणत्वम् ॥ १३ ॥

राज्यभ्रष्टं समधिकबलाद्वालिनः शक्रसूनो-
स्त्रस्तं पुत्रं दशशतरुचेर्ऋष्यमूकैकवासम् ।
क्लिष्टः कालं कपिवर भवान् सेवते स्माधिकं य-
त्तत्ते शुद्धामृतनयगुरुस्वामिभक्तिं व्यनक्ति ॥ १४ ॥

हर्यृक्षाणामधिपतिरयं द्वादशात्मात्मजन्मा
नित्योद्युक्तः सकलविदुषामग्रगण्यः सखा मे ।
कार्यस्यास्य त्वयि गुरुतरं भारमारोप्य सर्वं
प्रीतात्माऽऽस्ते पवनज तथा साधु सिद्धे यथार्थे ॥ १५ ॥

आयुर्ब्राह्मं समधिगतवान् नन्दनः पद्मयोने-
र्येनाज्ञातं न किमपि पुरावृत्तमस्तीह लोके ।

ऋक्षेन्द्राणां पतिरतिमतिर्जाम्बवान् सैष योगै-
रुत्साहं ते कमपि कलयन् मानमुच्चैस्तनोति ॥ १६ ॥

दृष्ट्वा पूर्णं गुणगणभरैः सर्वकार्यैकशक्तं
यं जीवन्तं मनसि मनुते बालिनं जीवलोकः ।
आत्मीयाज्ञानियमितमहाभीमहर्यक्षसैन्य-
स्तारेयोऽयं स्फुटमभिलषंस्त्वां पुरस्कर्तुमास्ते ॥ १७ ॥

येषां जन्मान्यखिलभुवनाधीश्वरेभ्यः सुरेभ्यः
स्वैः स्वैः ख्याता विरचितजगच्छर्मभिः कर्मभिर्ये ।
तेऽमी मैन्दद्विविदशरभोल्कामुखासङ्गमुख्याः
नीलोत्तंसा दधति कुतुकं यूथपास्त्वानुगन्तुम् ॥ १८ ॥

यत्तेनास्य स्फुटमिह कृतः साधुसुग्रीवसख्यः
स्वर्वृक्षेन्द्रस्तव न विहतो बाधयायं कयापि ।
नूनं शीघ्रं फलमभिमतं दास्यतीति प्रशंसां
सौमित्रिस्ते रचयति सदा सर्वतत्त्वैकवेत्ता ॥ १९ ॥

लङ्काधीशस्त्रिदशपतिजित्कुम्भकर्णादिसेव्यः
शत्रुर्मायी स दशवदनः शिष्टकालोऽल्पमात्रः ।
किं कर्तव्यं परमिति महामोहरूपं तमिस्रं
शिष्यार्यम्णः पवनज भवान् नः समूलं छिनत्ति ॥ २० ॥

दुःखावस्थाः क्षणमपि नृणां दुर्विषह्या समेताः
भूयस्योऽलं जनकतनयाविप्रयोगातुरस्य ।
प्रत्यक्षास्त्वं न खलु कथये तं वृथा यो यथार्थं
स्वान्तदृष्ट्योन्नयसि सकलं लोकतत्त्वं दुरूहम् ॥ २१ ॥

कृष्टायां प्राग्जनकनृवरेणाध्वराय क्षमायां
सीतायां यां सशुभमुदितामत्र सीतां वदन्ति ।
साक्षाल्लक्ष्मीमिव गुणमयीं तां हृतां राक्षसेन
श्रुत्वा न स्युः कथमिव शुचा हा विदेहा विदेहाः ॥ २२ ॥

यस्याध्यात्मं हृदि सुघटितं याज्ञवल्क्योपदेशात्
सीताबाल्यस्मरणसमये शास्त्रमेति श्लथत्वम् ।
एतत्कष्टश्रवणकलुषः सैष राजर्षिवर्यः
किं किं कुर्यान्न महितमहास्तत् स्मरन् व्याकुलोऽस्मि ॥ २३ ॥

त्यक्त्वा स्वं स्वं भवनममरागारतुल्यं मदीय-
प्रेमाकृष्टा वनमनुगता ये कथञ्चिन्निवृत्ताः ।
ते वैदेहीहरणजनितं हा निशम्यैतदस्मद्-
वृत्तं लोकाः पुरजनपदस्थायिनः किं भवेयुः ॥ २४ ॥

नानाशास्त्रान्तरभवमहासारतत्वोपदेशै-
र्नर्मालापैरनितरगतैः सद्गुणैः प्राग्यया याः ।
शुद्धिं नीताः प्रमदजलधौ मज्जिता गाढबद्धाः
सख्यः श्रुत्वा निशिचरहृतां तां न किं ताः स्फुटेयुः ॥ २५ ॥

शुश्रूषामप्यति सुखकरीं भक्तिमत्यास्तु यस्या-
स्तन्मृद्वङ्ग्ग्लपनचकिता नाभ्यनन्दन् पुरा याः ।
एतां तस्या गरलसदृशीं स्वस्नुषाया अवस्थां
पीत्वा श्रुत्या प्रकृतिमृदुला मातरस्ताः कथं स्युः ॥ २६ ॥

यस्य प्रज्ञामविहतगतिं नावमारुह्य तत्तत्-
कार्याब्धीनां ययुरिह परं पारमिक्ष्वाकुमुख्याः ।

जातं भास्वत्कुलपरिभवं मत्प्रमादात् सुमन्त्रः
स श्रुत्वामुं न खलु सुचिरं जीवितं धारयेत || २७

यं शास्त्रौघः श्रयति विनयः श्रीर्धृतिह्रीर्ऋजुत्वं
धर्मो भूमिः सह बहुजनैर्जीवितं चास्मदीयम् ।
स श्रुत्वैव स्वविपदमिमां सानुजः प्रोक्तकाले
याते कुर्यात् स खलु भरतः शिघ्रमग्निप्रवेशम् || २८ ||

कैकेयस्य ग्रहपतिकुलालङ्कृतेस्तस्य नाशे
रक्षाशून्यं भुवनमखिलं सत्पुमर्थप्रहीणम् ।
तेजोऽभावे नयनमिव हा नष्टकल्पं खलु स्यात्
प्राणापाये वपुरिव पुनर्यास्यति ध्वंसमेव || २९ ||

पातिव्रत्यप्रभृतिभिरहो विस्मिता यद्गुणैर्या
दिव्यज्ञानद्युमणिमहिमोल्लासिताशेषतत्वा ।
तस्यामेवं बहुलकलुषामापदं प्राप्तवत्यां
मन्ये सापि स्वपतिसहिता व्याकुलारुन्धतीति || ३० ||

क्रव्यादानां पृथुलवपुषां वार्मुचां तीक्ष्णदंष्ट्रा-
व्याघातोद्यद्बहुशिखिशिखाविद्युदुद्दीपितानाम् ।
भिन्दानानां श्रुतिपुटयुगं गर्जितैः क्रूरशब्दै-
र्मध्यं प्राप्ता रुचिरिव रवेः सा स्वयं किन्नु नष्टा || ३१ ||

रक्षन्ती सा स्वशुभवपुषा दुस्त्यजेनापि धर्मं
वाञ्छाभङ्गादधिककुपिते यातुधानाधिनाथे ।
धर्मद्वेषप्रकृतिभिरसृक्पानलोलैर्निशाटैः
प्रतार्धुत्त्यै शिततरशिखैः किन्न शस्त्रैर्विशस्ता || ३२ ||

जीवेदेषा बहुशतसमा वीरसूर्वीरपत्नी
साक्षाल्लक्ष्मीरिव गुणनिधिः सूर्यवंशप्रतिष्ठा ।
उद्दिश्यैवं जनकतनयां तापसैर्व्याहृतानि
स्मारं स्मारं न खलु मरणं तर्कयाम्यद्य तस्याः ॥ ३३ ॥

शान्ताः शब्दाः खगमृगकृता दक्षिणा वेपते दृक्
चेतश्चैतज्जलमिव शरद्यद्य मे सुप्रसन्नम् ।
वायुश्चायं चलति सुखसंस्पर्शगन्धः पिता ते
भद्रं भूयस्तव खलु भवेद्गच्छ नः कार्यसिद्धचै ॥ ३४ ॥

प्राग्दृष्टा या निशिचरपतेर्नीयमानाङ्कमध्ये
विद्युद्वल्ली जलमुच इव श्यामधाम्नो भवद्भिः ।
सुज्ञेया सा जनकतनया तत्र ते पूर्वदृष्टा
यत्तत्तस्याः प्लवग न वृथा वर्णये रूपलक्ष्मीम् ॥ ३५ ॥

रक्षोभर्त्रा बहुलजवतो नीयमाना पुरा या
दृष्टैवासीत् परमुपरि सा सुग्रहा स्यात् कथं वा ।
स्त्रीरत्नानां निशिचरपतेर्मध्य इत्याकुलः किं
नक्षत्राणामिव शशिकलां सुग्रहां तां निबोध ॥ ३६ ॥

गन्धर्वाणां दनुतनुभुवां भोगिनां निर्जराणा-
मन्येषां वा दशमुखहृता याः सुता रूपवत्यः ।
सर्वास्ताः स्युर्जितसुरपतेरन्तिकेऽस्य प्रहृष्टाः
खिन्नैका स्याज्जनकतनया व्याघ्रपार्श्वे मृगीव ॥ ३७ ॥

शोकोद्रेकान्निशिचरभयाद्दीर्घतीव्रोपवासा-
न्निद्राभावादपि कृशतरा गात्रयष्टिस्तदीया ।

कालेऽमुष्मिन् भजति बहुलां दुस्सहां नूनमार्ति
वासन्तीव द्युमणिपवनाद्युग्रभावान्निदाघे ॥ ३८ ॥

मूर्तिस्तस्या भृशतरमसंस्कारहेतोर्मलाक्ता
नूनं तीव्राद्विषपरिभवात् काञ्चनी मालिकेव ।
चक्षुः पाद्मं दलमिव हिमैः पीडितं शोकबाष्पै-
रेका वेणी परुषजटिला श्वासशुष्कोऽधरश्च ॥ ३९ ॥

दुःखाक्रान्ता सुचिरमधिकं हन्त निश्चित्य मर्तुं
साद्योद्याने विषधरभृतश्चन्दनस्यैति पार्श्वम् ।
विच्छेत्तुं स्वां मृदुलमृदुलां कण्ठनालीमृणालीं
रक्षोनारीमलकनखरच्छेदिनीं याचते वा ॥ ३० ॥

अद्योद्बध्य प्रचुरघनया दीर्घदीर्घैकवेण्या
यामि त्यक्त्वा लघु तनुमिमां जीवितेशस्य पार्श्वम् ।
निश्चित्यैवं नवकिसलयोत्फुल्लपुष्पोपहार-
क्रीडाव्याजादुपवनतरोः भृङ्गमालम्बते वा ॥ ४१ ॥

अग्रे पूर्वं सपदि भवतामृष्यमूकालयाना-
मुत्सृष्टेभ्यो जनकसुतया वस्त्रमेकं तु शिष्टम् ।
युष्माभिर्यत् कनकरुचिभिस्तन्तुभिः सूक्ष्मसूक्ष्मैः
सृष्टं दृष्टं सदृशममुना भोः श्वदंष्ट्राद्वयं च ॥ ४२ ॥

रत्नैस्तारै रुचिररुचिभिः सन्तत सेव्यमाने
ताराधीशामलपरिलसन्मण्डले कुण्डले द्वे ।
शिष्टे भूयः स्वरुचिविजितैणाङ्कबिम्बस्य तस्याः
वक्त्रस्यारात् सततमुदिते सेवकत्वेन वस्तुम् ॥ ४३ ॥

ज्ञात्वामीभिः स्फुटमनितराधिष्ठितैर्लक्षणैस्तां
सीतां वल्लीमिव मृदुतरामुग्रशोकार्कतप्ताम् ।
आसिञ्च द्राक् शिशिरशिशिरैर्जीवनैस्तर्पणैः स्वै-
र्हृद्यैर्बोधाभ्युदयजनकैः सान्त्ववाक्यामृतैस्त्वम् ॥ ४४ ॥

भूयो भूयः स्मरपरवशेनाशरेन्द्रेण साध्वी
मायायोगैः प्रकृतिसरला गाढमुद्वेजिता सा ।
यं यं द्रक्ष्यत्यमरमसुरं वानरं वा नरं वा
मायाविष्टं निशिचरपतिं केवलं मंस्यते तम् ॥ ४५ ॥

इत्युक्त्वाथ स्वकरकमलोल्लासिशाखापलाशा-
दुद्धृत्य द्रागतिशुभमयेनाङ्कितं रामनाम्ना ।
रम्यं रत्नद्युतिभिरमलैरङ्गुलीयं हनूमत्-
पाणौ दत्त्वा पुनरभिनतं तं जगादेति रामः ॥ ४६ ॥

एतेन त्वां मनसि मनुते साङ्गुलीयेन याव-
न्मुक्तोद्वेगा जनकतनया प्राप्तमस्मत्सकाशात् ।
विश्वस्तां तां त्वयि दृढमिति प्राज्यसान्त्वप्रयोगै-
राश्वस्तां च द्रुतमथ कुरु स्वानुरूपैश्च वीर्यैः ॥ ४७ ॥

अक्षय्यं ते भवति हि बलं वाक् शुभा वक्त्रसंस्था
प्रज्ञा प्राप्ता रुचिरिव गुरोः सुप्रसन्ना तमोघ्नी ।
एवम्भूतं कथयति बुधः कायवाक्चित्तजं तत्
कस्त्वां यात्रोद्यमतरलितं विस्तरेणातिमात्रम् ॥ ४८ ॥

सीतात्यार्तिं भजति भरतश्चोक्तकालप्रतीक्षः
कार्येऽमुष्मिन्न्महति मतिमन्नल्पकालोऽवशिष्टः ।

ननाभावैरतिशुभमयैः शोभनोऽयं मुहुर्त-
स्तद्गच्छ द्राग् भवतु भवतः सौम्य सर्वत्र भद्रम् ॥ ४९ ॥

भक्तिप्रह्वं प्रणयविवशस्तावदेतावदुक्त्वा
रामो रक्षःपतिकुलमहाधूमकेतुं पुनस्तम् ।
तत्रात्मानं ददिव समाश्लिष्य सर्वार्थसिद्ध्यै
वीरैः साकं हरिवरबलैः साङ्गदैरुत्ससर्ज ॥ ५० ॥

कृत्वा मूर्धन्यथ रघुपतेः शासनं साङ्गुलीयं
नत्वा पादौ प्रकटितमहाभक्तिरश्रुप्रवाहैः ।
स्मृत्वा कार्यं तपनमनिलं तातमात्मानुकूलं
मान्यानन्यानपि स सकलान् सम्प्रतस्थे हनूमान् ॥ ५१ ॥

तत् कीशानां बलमतिमहत् सुप्रसन्नं प्रकर्षन्
भास्वत्तेजोव्यतिकरलसद्गौरकान्तिर्हनूमान् ।
रेजे नक्तञ्चरघनतमस्तोमसंहारहेतु-
र्मध्ये तस्य स्फुरदुडुगणस्येव पूर्णः शशाङ्कः ॥ ५२ ॥

दृष्ट्वा यात्रोन्मुखमथ हरी राममूर्तिर्महात्मा
सुग्रीवश्च प्रसृमरसमुत्साहतेजःप्रदीप्तम् ।
हर्षोत्कर्षोल्लसितवदनावाञ्जनेयं हरिं
शृण्वत्स्वन्येष्वपि हरिवरेषूचतुः किञ्चिदेवम् ॥ ५३ ॥

भो भो सर्वाधिकगुण शृणुष्वाप्रमेयं बलं ते
सर्वेऽप्येते हरिवर वयं सन्ततं संश्रिताः स्मः ।
नारीरत्नं जनकतनया सा यथा लभ्यते द्राक्
श्लाघ्यं वातात्मज कुरु तथा विक्रमं सर्वयत्नैः ॥ ५४ ॥

एवं वाक्येऽमृतरसमये सुप्रसादाभिराम-
स्वामिस्फीतामृतकरमुखाभ्यन्तरस्यन्दमाने ।
पातुं योग्यैं विबुधनिकरैर्वर्धमानो हनूमान्
गम्भीरात्मा सलिलधिरिव क्षोभमग्र्यं प्रपेदे ॥ ५५ ॥

इति कोच्चुण्णिराजविरचिते श्रीरामचरितमहाकाव्यपूरणे
हनूमत्सन्देशो नाम विंशः सर्गः

[ इति हरिसन्देशे द्वितीयः सर्गः ]

वक्ता रामो हरिः साक्षात् सुग्रीवश्च हरीश्वरः ।
श्रोता हनूमानत्रान्यै हरयश्चाङ्गदादयः ॥

इति श्रीकोच्चुण्णिराजविरचिते
श्रीरामचरितमहाकाव्यपूरणे
कपिसेनासन्नाहो नाम
विंशः सर्गः



# एकविंशः सर्गः

ते मूर्ध्नि कृत्वा हरिनायकस्य तच्छासनं दारुणशासनस्य ।
सीतां विचेतुं हरितः समन्तात् सर्वे यथोक्तं प्रययुः प्रहृष्टाः ॥ १ ॥

दिशं वलारेर्विनतः ससैन्यो ययौ हनूमान् पितृनायकस्य ।
प्रचेतसो यूथपतिः सुषेणस्त्रिणेत्रमित्रस्य बलिः शताद्यः ॥ २ ॥

एकोऽहमुन्मथ्य बलाद्दशास्यं तामानयिष्यामि विदेहपुत्रीम् ।
इति स्म गर्जन्ति तदा मदान्धाः सर्वे पृथक् ते हरियूथनाथाः ॥ ३ ॥

विमार्गमाणा रघुवीरपत्नीं सर्वासु दिक्ष्वप्रतिमप्रभावाः ।
वियत्पुरग्रामनदीमहीध्रवनानि विघ्नेन विना ययुस्ते ॥ ४ ॥

पोप्लूयमानैर्गगनं प्लवङ्गैः पीतारुणश्यामबलक्षवर्गैः ।
सान्ध्यैर्निदाघान्तशरद्भवैश्च व्याप्तं पयोदैरिव राजते स्म ॥ ५ ॥

विदेहपुत्रीपरिमार्गणाय विगाह्यमानानि वनानि कीशैः ।
अभूतपूर्वामभजन्नवस्थां प्रकम्पिताशेषमृगद्रुमाणि ॥ ६ ॥

लाङ्गूलदण्डैर्हरियूथपानामुत्साहवेगोन्नमितैर्ध्वजाढ्याः ।
सवाद्यघोषा विविधैर्निनादैर्देशा भुवः सोत्सवतामवापुः ॥ ७ ॥

महाबलेषु प्लवगेषु तेषु चरत्सु सीतापरिमार्गणाय ।
जातं भुवः कम्पमवैदहीन्द्रश्लाघाशिरःकम्पकृतं सुधीः ॥ ८ ॥

नोपद्रवः कोऽपि सतां यथा स्याद्यथोद्धतानामसतां दमश्च ।
तथा पुरग्रामवनस्थलीषुममार्गिरे ते रघुवीरपत्नीम् ॥ ९ ॥

यथोचितं ते दिवसेषु जग्मुर्वियुज्य सीतापरिमार्गणाय ।
निशासु संहत्य पुनः समस्ता विश्रान्तिमापुर्गिरिगह्वरेषु ॥ १० ॥

अहस्सु भास्वत्किरणोज्ज्वलेषु विदेहजान्वेषणमेव चक्रुः ।
जितश्रमास्ते सततं क्वचित्तु निशासु चोत्सार्य तमांसि योगैः ॥ ११ ॥

प्रकाशयन्तः कपिराजभक्तिं प्रख्यापयन्तो रघुनाथवीर्यम् ।
संसूचयन्तश्च दशास्यनाशं ममार्गिरे दाशरथिप्रियां ते ॥ १२ ॥

ततः प्रयातेषु तु यूथपेषु सरोरुहाभ्यामिव लोचनाभ्याम् ।
सम्प्रेक्षमाणोऽर्कमित्रार्कपुत्रं विकस्वराभ्यां निजगाद रामः ॥ १३ ॥

ससागरद्वीपवनाकराद्रिनदीपुरग्राममयेयकल्पम् ।
भूमण्डलं सर्वमिदं यथावद्विज्ञातमासीत् भवता कथं वा ॥ १४ ॥

इत्युक्तवन्तं तमुवाच साश्रुः प्लवङ्गमानां प्रवरः प्रणम्य ।
पूर्वानुभूतं चिरमात्मनोग्रं क्लेशं स्मरन् बालिकृतं समस्तम् ॥ १५ ॥

मया कृतं तत्तु गुहापिधानं मत्त्रापराधं परमात्तरोषः ।
बाली पुराभ्यद्रवदुग्रतेजा निहन्तुकामः प्रणतं स्थितं माम् ॥ १६ ॥

ततः समेतः सचिवैर्भयार्तः स्वजीवितेप्सुः शरणं न पश्यन् ।
अधावमत्युल्बणविक्रमस्य तस्याग्रतोऽहं सुरराजसूनोः ॥ १७ ॥

सुरेश्वराशां प्रथमं गतोऽहं नानापुरग्रामवनाद्रियुक्ताम् ।
उल्लङ्घ्य सिन्धूनुदयाद्रिमेत्य ततः परं गन्तुमशक्त आसम् ॥ १८ ॥

निवर्त्य तस्या हरितः कथञ्चिदनुद्रुतस्तेन महाबलेन ।
गत्वा यमाशां पितृलोकतोऽर्वाक् ततः परं गन्तुमशक्त आसम् ॥ १९ ॥

कृच्छ्रेण तस्या अपि सन्निवृत्य ततः प्रतीचीं सहसा प्रयातः ।
अस्ताभिधं तत्र गिरीन्द्रमेत्य ततः परं गन्तुमशक्त आसम् ॥ २० ॥

कृच्छ्रान्निवृत्तोऽथ ततो गतोऽहं कुबेरगुप्तं ककुभं जवेन ।
तत्रोत्तराम्भोनिधिमध्यसंस्थमारात् स्म पश्याम्यथ सोमशैलम् ॥ २१ ॥

अनुद्रुतः पूर्वभवेन तेन ततः परं गन्तुमहं त्वशक्तः ।
यदाभवं निश्शरणस्तदा मां मन्त्री हनूमान् मतिमानवोचत् ॥ २२ ॥

यदि प्रवेश्यस्यमुमृश्यमूकं फलिष्यति द्राक् शतधा शिरस्ते ।
इतीन्द्रसूनोः स मतङ्गशापः स्मृतो मयाद्यैव दिनेशपुत्र ॥ २३ ॥

इत्थं हनूमद्वचनामृतेन सिक्तः प्रणष्टासुविनाशभीतिः ।
इमां पुनः प्राविशमृश्यमूकगुहां स्वकीयैः सचिवैः समेतः ॥ २४ ॥

स्पष्टं मया राघव पूर्वमेवं दृष्टं समस्तं क्षितिचक्रवालम् ।
इति ब्रुवन् कीशपतिः पपात रामस्य पादे कपिराज्यदातुः ॥ २५ ॥

तत्रोषतुः प्रस्रवणेऽथ मासं सुग्रीवरामौ सह लक्ष्मणेन ।
सीतापदान्वेषकयूथपानां प्रत्यागतिं तौ प्रतिपालयन्तौ ॥ २६ ॥

प्राचीमथाशां सकलां विचित्य सीतां न दृष्ट्वा विनतः ससैन्यः ।
मासावसानेऽन्तिकमात्मभर्तुः प्रत्याययौ राघवसेवकस्य ॥ २७ ॥

तथा सुषेणश्च बलेः शताद्यः स्वां स्वां दिशं साधु विचित्य वीरौ ।
प्रत्यागतौ वानरराजपार्श्वं सीतां न दृष्ट्वा विरते तु मासे ॥ २८ ॥

यथोक्तमन्विष्टसमस्तदेशा अदृष्टसीता विपिनौकसस्ते ।
तद्वृत्तमिक्ष्वाकुकुलप्रदीपं सुग्रीवसौमित्रिसमेतमूचुः ॥ २९ ॥

तद्वाक्यमाकर्ण्य जगाद रामं हरीश्वरस्तत्र गतो हनूमान् ।
सीतां स्फुटं द्रक्ष्यति यत्र लङ्का सीतामुषः क्रव्यभुजः पुरीति ॥ ३० ॥

ताराङ्गदाद्यैः सहितो हनूमान् विदेहपुत्रीं परिमार्गमाणः ।
विन्ध्यस्य दुर्गेषु चचार देशेष्वमेयवीर्यो दिशि दक्षिणस्याम् ॥ ३१ ॥

शून्यीकृतं कण्डुमहर्षिशापान्मृगद्रुमाद्यैरपरं प्रदेशम् ।
विचित्य सीतामनवेक्ष्य सर्वैः समं वनं तत्र विवेश किञ्चित् ॥ ३२ ॥

अथासुरः कश्चन तन्निहन्तुमभ्यद्रवद्घोरतरप्रभावः ।
अताडयद्रावणशङ्कया तं तलेन तारातनयस्तदानीम् ॥ ३३ ॥

वनस्पतिं वायुरिवाङ्गदस्तं निपात्य दैत्यं बहुलश्रमार्तैः ।
स्ववाक्यहृष्टैः सह तैर्विचिन्वन् सीतां बिलं तत्र ददर्श किञ्चित् ॥ ३४ ॥

बिलं ततस्तद्विविशुर्जलार्द्रद्विजावलीनिष्क्रमणात् सतोयम् ।
निश्चित्य सर्वे कपयस्तृषार्ता गाढान्धकारं सलिलार्थिनस्ते ॥ ३५ ॥

अप्राप्य तत्राम्बु परिभ्रमन्तश्चिरं निराशा निजजीवितेऽपि ।
यदाभवन् स्वप्रभया हरन्तीं तमस्तदैकां ददृशुः स्त्रियं ते ॥ ३६ ॥

तां तापसीं स्वप्रभया ज्वलन्तीं विलोक्य तं स्वर्गसमं च देशम् ।
सविस्मयः प्रश्रयवान् हनूमान् पप्रच्छ धीमानिति कार्यसिद्ध्यै ॥ ३७ ॥

कस्यैष देशः परमाद्भुतश्रीस्त्वं कासि कस्यासि वदाखिलं नः ।
क्षुत्तृट्श्रमार्ता वयमद्य सर्वे तपस्विनीं त्वां शरणं प्रपन्नाः ॥ ३८ ॥

ततस्तदीयोत्कटशोकभारविलोकनाद्रीकृतचित्तवृत्तिः ।
सा तापसी तान् प्लवगान् बभाषे पीयूषकल्पैः परीसान्त्व्य वाक्यैः ॥ ३९ ॥

सहस्रसंवत्सरसञ्चितेन स्वेनैव सृष्टस्तपसा मयेन ।
विलप्रदेशस्त्रिदिवोपमोऽयं महेशदग्धेषु पुरा पुरेषु ॥ ४० ॥

हते मयेऽथ त्रिदिवेश्वरेण हेमाभिषङ्गात् कुपितेन पूर्वम् ।
हेमाभिधायै स्वयमात्मयोनिः प्रादादमुं दिव्यबिलप्रदेशम् ॥ ४१ ॥

हेमा पुनः साद्भुतनृत्तगीतविशारदा शीलवती सखी मे ।
अदादमुं प्रेमभरेण देशं समस्तभोगैः परिशोभमानम् ॥ ४२ ॥

अतोऽत्र नित्यं निवसामि सर्वमेतद्यथावत् परिपालयन्ती ।
स्वयम्प्रभाख्या नियमेन मेरुसावर्णिपुत्री परमेण युक्ता ॥ ४३ ॥

दिव्यानि मूलानि फलानि भुक्त्वा पीत्वा च पेयानि विनीय खेदम् ।
ब्रूताखिलं तत्वमथ प्लवङ्गाः कुतः प्रवेशोऽत्र कृतो भवद्भिः ॥ ४४ ॥

सैवं निगद्याथ ददौ कपिभ्यः पेयानि भक्ष्याणि बहूनि तेभ्यः ।
परव्यथादर्शननाशने हि विषामृते साधुजनस्य मुख्यम् ॥ ४५ ॥

बिलप्रवेशान्तमशेषवृत्तं सीतापहारादि ततो हनूमान् ।
यथार्थमाह स तपस्विनीं तां कृपार्द्रचित्तां कलयन् नितान्तम् ॥ ४६ ॥

तस्माद्बिलान्निर्गममर्थयन्तो दुर्निर्गमात् पाणितिरस्कृताक्षाः ।
निष्क्रामितास्ते तपसा तयाथ किं तत्तपो यन्न विधातुमीष्टे ॥ ४७ ॥

विन्ध्यस्य ते दक्षिणपार्श्वसंस्था उन्मीलिताक्षा ददृशुः कपीन्द्राः ।
गर्जन्तमम्भोनिधिमप्रमेयं वनं च तत् पुष्पितकुन्दचूतम्

वासन्तिकाचूतमुखान् विलोक्य लतातरूंस्ते कुसुमावतंसान् ।
निशाम्य नादांश्च वनप्रियाणां प्राप्तं वसन्तं स्म वितर्कयन्ति ॥ ४९ ॥

चकार सीतापरिमार्गणे यं कालावधिं प्राक्कपिचक्रवर्ती ।
अतीतमाज्ञाय तमापुरार्तिं भयेन तीव्रामथ यूथपास्ते ॥ ५० ॥

स्वशासनातिक्रमणात् प्रचण्डः स घातयिष्यत्यखिलान् प्रभुर्नः ।
आज्ञामसुल्लङ्घनमुग्रभागो राजा क्षमावानपि कः क्षमेत ॥ ५१ ॥

इत्याकुलास्ते हरयः स्वकृत्यं कर्तुं न शक्ता अपि विन्ध्यपादे ।
प्रायोपविष्टाः कृतकृत्यता वा त्यक्तासुता वा हि महोत्तमानाम् ॥ ५२ ॥

ततस्तु तान् पर्वतकूटतुल्यान् भूमौ शयानान् प्लवगान् विलोक्य ।
तत्रागमत्तत्पिशितानि भोक्तुं सम्पातिरारात् खगलोकवर्यः ॥ ५३ ॥

प्रायोपविष्टेष्वथ यूथपेषु गृध्रेश्वरे तत्पिशितानि भोक्तुम् ।
प्रतीक्षमाणे मरणं च तेषामूचेऽङ्गदो वायुसुतं शुचार्तः ॥ ५४ ॥

वरोऽतिघोरो भरतस्य मातुः स यत्फलं पङ्क्तिरथस्य मृत्युः ।
सीतापहारोऽथ जटायुषोऽस्तत्तातस्य हानेकवनौकसां च ॥ ५५ ॥

धन्यः स पक्षिप्रवरो जटायुर्यत्प्रेतकार्याणि चकार रामः ।
अस्मांस्त्वविज्ञातमृतीनिहायं गृध्रप्रभुर्भोक्ष्यति तीक्ष्णतुण्डः ॥ ५६ ॥

इत्युक्तमाकर्ण्य तदाङ्गदेन जटायुषस्तन्मरणं स गृध्रः ।
भ्रातुः प्रियस्य व्यथितान्तरात्मा सम्पातिरूचे वचनं कथञ्चित् ॥ ५७ ॥

भ्राता यवीयान् मम यो गरीयान् स्वप्राणतोऽपि प्रथितप्रभावः ।
जटायुषस्तस्य मृतिः कथं वा जाता भवन्तः सकलं वदन्तु ॥ ५८ ॥

अष्टस्वरं दुःखभराद्वचस्तत्तत्राङ्गदो गृध्रपतेर्निशम्य ।
जटायुषस्तन्मृतिमूलवृत्तं यथाक्रमं सर्वमुवाच वाग्मी                ॥ ५९ ॥

इक्ष्वाकुवंशप्रभवस्य राज्ञो ज्येष्ठः सुतः पङ्क्तिरथस्य रामः ।
सौमित्रिसीतासहितो महात्मा पितुर्निदेशाद्विपिनं प्रविष्टः                ॥ ६० ॥

अधर्मात्मनस्तस्य वने जहार भार्यां प्रियां पङ्क्तिमुखश्छलेन ।
सन्तः स्वभावादृजुतां प्रपन्ना भवन्त्यसन्तोऽपि हि वक्रभावम्                ॥ ६१ ॥

तां नीयमानां दशकन्धरेण स्नुषां सखा पङ्क्तिरथस्य राज्ञः ।
वीक्ष्य प्रयुध्यन् पतितेन क्रुद्धो हतो जटायुर्विरथेन तेन                ॥ ६२ ॥

रामस्तु संस्कृत्य तमाशु नीत्वा स्वर्गं प्रभुर्मज्जनकं च हत्वा ।
तद्भ्रंशितं वानरराज्यनाथं चकार सुग्रीवमथो सखायम्                ॥ ६३ ॥

तस्याज्ञया सूर्यसुतस्य सीतां विमार्गमाणा वयमत्र देशे ।
बिलप्रवेशाद्विगतोक्तकालाः प्रायोपविष्टा भयतोऽकृतार्थाः                ॥ ६४ ॥

जटायुषः पूर्वभवेन शत्रोः प्रतिक्रिया द्राग्भवता विधेया ।
पदं दशास्यस्य च रामपत्न्यास्त्वं ब्रूहि संप्रेक्ष्य सुपर्णदृष्टे                ॥ ६५ ॥

इत्युक्तवन्तं तमुवाच गृध्रः प्रतिक्रियां भ्रातृरिपोः करोमि ।
अहं न चेदस्मि महाजरार्तः सूर्यानुयात्रापरिदग्धपक्षः                ॥ ६६ ॥

सीतापहारक्षतमङ्गलस्य मद्भ्रातृहन्तुर्निधनाय तस्य ।
त्वदुक्तसाहाय्यकमात्रमद्य करोमि वो विक्रमवारिराशे                ॥ ६७ ॥

पत्युर्नदीनां शतयोजनाग्र्यविस्तारभाजोऽस्य परेऽस्ति पारे ।
लङ्केति नाकप्रतिमा पुरीयं सीता दशास्यश्च वसत्यमुष्याम्                ॥ ६८ ॥

अन्तःपुरेऽत्रोपवने वसन्तीं सीतां परीतां रजनीचरीभिः ।
अहं तु पश्यामि सुपर्णदृष्टिरत्रस्थ एवातिकृशां रुदन्तीम् ॥ ६९ ॥

अतः समुल्लङ्घयितुं यतध्वमपारमम्भोधिममेयवीर्याः ।
वज्रोपमान् राघवयोः कलम्बान् सहेत दंष्ट्रानखरं च वः कः ॥ ७० ॥

इदं च युष्मत्प्रकृतार्थसिद्धिसंसूचकं पश्यत वस्तु चित्रम् ।
निशाकरोक्तं तु पुरैव रामकथाश्रुतेर्जन्म पतत्रयोर्मे ॥ ७१ ॥

इत्युक्तवत्युत्थितनूत्नपक्षतनूरुहैर्द्राग्गगनं प्रविष्टे ।
सम्पातिगृध्रप्रवरे प्रहृष्टाः सविस्मयास्ते कपयो विनेदुः ॥ ७२ ॥

ततः समुत्थाय जवेन सर्वे कीशोत्तमा वायुसुताङ्गदाद्याः ।
तेऽदक्षिणं दक्षिणसागरस्य प्रापुस्तटं तालवनाभिरामम् ॥ ७३ ॥

अधस्तलेनाहिगृहं प्रविष्टो दिवं च तुङ्गैर्विपुलैस्तरङ्गैः ।
यादोभिरुग्रैरभितैर्वृतो यः सर्वैरलङ्घ्यः स्फुटमाविभाति ॥ ७४ ॥

पतिर्नदीनामिह योऽखिलानां भूभृत्सुतानां परमानुरूपम् ।
वातोद्धतोद्दण्डतरङ्गतुङ्गमहीध्ररूपं कुरुते स्वरूपम् ॥ ७५ ॥

आकृष्य भुक्तानिव भूरिलोकान् दधत् स्वकुक्षौ प्रतिबिम्बनाम्ना ।
भूयोऽप्युपाक्रष्टुमिवोद्यतो यः समुत्क्षिपत्याशु तरङ्गबाहून् ॥ ७६ ॥

भियं ददानः स्फुटगर्जितेन प्रचण्डकल्लोलभुजैरसङ्ख्यैः ।
मुहुर्मुहुस्ताडयति प्रकोपाच्छ्रियः स्वपुत्र्या धरणीं सपत्नीम् ॥ ७७ ॥

रत्नाकरत्वाद्भुवनाश्रयत्वाद्यादस्पतित्वात् सरितां पतित्वात् ।
अपारतादेश्च समुत्थितैर्यः सिते यशोभिर्नवफेनपुञ्जैः ॥ ७८ ॥

दग्धुं समस्तानि जगन्ति शक्तं मुहूर्तमात्रादविषह्यवीर्यम् ।
तेजस्तदौर्वं यमवाप्य भीमं शान्तं विषं कान्तमिवाद्रिजायाः ॥ ७९ ॥

प्रवाहवेगाहृतभूरिलोका महापगादारितभूमिपृष्ठाः ।
यदीयतोयेऽस्तमयं व्रजन्ति खद्योतमाला रवितेजसीव ॥ ८० ॥

यो मूर्ध्नि सर्वाणि जयन्ति धत्ते यश्चोदरे तच्छयने स देवः ।
संवेशमिच्छन् शरणं समस्तस्वर्गौकसां यं शरणीकरोति ॥ ८१ ॥

अपारगम्भीरसुदुर्गमाणि यानीह वस्तूनि भवादिकानि ।
कुर्वन्ति तेषां प्रथमोपमानं यमेव सर्वेऽपि महाकवीन्द्राः ॥ ८२ ॥

सर्वाद्रिपक्षव्यपरोपणार्थं कृतः प्रयत्नस्त्रिदशेश्वरेण ।
यमत्यगाधं शरणं गतेषु मैनाकमुख्येष्वफलो बभूव ॥ ८३ ॥

अत्युत्कटक्षोभमवाप्य यो द्रागुद्वेलतां गच्छति यत्र काले ।
समस्तलोकक्षयहेतुभूतः स एव कल्पान्त इति प्रदिष्टः ॥ ८४ ॥

आलोक्य तं वारिधिमप्रमेयं गर्जन्तमुल्लङ्घयितुं न शक्ताः ।
भग्नोद्यमास्ते कपियूथनाथाश्चिन्ताभिधे वारिनिधौ ममज्जुः ॥ ८५ ॥

तेषां तदानीं निजसेवकानां तद्दुःखमुग्रं व्यपनेतुकामः ।
जवादुदस्थाद्युवकीशराजस्तमोभरं नैशमिवोडुराजः ॥ ८६ ॥

अथ प्रवृत्तं युवराजमाशु समुद्रमुल्लङ्घयितुं निवार्य ।
स जाम्बवान् मारुतिमप्रमेयं वृद्धः सुखासीनमुवाच धीमान् ॥ ८७ ॥

एतेष्वसङ्कुचेषु हरीश्वरेषु विषादमूढेषु मृतोपमेषु ।
भवान् बलेनाप्रतिमः किमास्ते तूष्णीमिह स्वान् समुपेक्षमाणः ॥ ८८ ॥

त्वमञ्जनायां पवनेन पूर्वमुत्पादितः केसरिणो महिष्याम् ।
द्राग्योजनानां त्रिशतं प्लुतोऽभूर्बालो जिघृक्षुः फलशङ्कयार्कम् ॥ ८९ ॥

ततस्त्रिलोकीपतिराजघान वज्रेण शक्रः सहसा भवन्तम् ।
भग्नोऽभवद्वामहनुस्तदा ते जातं हनूमानिति नाम वत्स ॥ ९० ॥

त्वां तत्प्रहारेण हतं स्वपुत्रं दृष्ट्वा ववौ नात्र मरुत् सकोपः ।
जगत्यशेषे विवशेऽथ धाता तत्रागमन्मारुतकोपशान्त्यै ॥ ९१ ॥

त्वां जीवयित्वा स तवास्त्रशापाद्यबाध्यनाद्यानपरैरलभ्यान् ।
वरान् प्रदाय स्वयमात्मयोनिः प्रसादयामास भवद्गुरुं तम् ॥ ९२ ॥

एवंविधानेकगुणप्रभाव उत्तिष्ठतां राममहार्थसिद्धयै ।
भवान् हरीशस्य कृतार्थतार्थं सञ्जीवनार्थं च महामते नः ॥ ९३ ॥

इत्थं जाम्बवता यथार्थवचनैः प्रोत्साहितो मोचित-
स्तच्छापाच्छरदीव शीतकिरणः प्राप्तः प्रकाशं परम् ।
उद्युक्तः क्षणदाचरान्धतमसध्वंसे हनूमानभूत्
क्षुब्धं चाम्बुधिवत् प्रहर्षभरितं तद्वानराणां बलम् ॥ ९४ ॥

शोकातिरेकमसतामसितं वितन्वन्
हर्षप्रकर्षमतुलं च सतां स्वकेल्या ।
रामस्य पुण्ययशसामिव राशिरुच्चै-
र्व्याजृम्भते स्म नवकुन्दरुचिर्हनूमान् ॥ ९५ ॥

इति श्रीकोच्चुण्णिराजविरचिते
श्रीरामचरितमहाकाव्यपूरणे
सीतान्वेषणं नाम
एकविंशः सर्गः

# द्वाविंशः सर्गः

ततो दशास्येन हृतां हनूमानन्वेष्टुमार्यां रघुनाथपत्नीम् ।
वियद्विविक्षुः सहसा जजृम्भे सहैव हर्षेण वलीमुखानाम् ॥ १ ॥

स वर्धितुं तत्र तदा प्रवृत्तः स्वल्पान्तरं नालमिदं नभो मे ।
इत्यट्टहासोद्भवनिःस्वनेन प्रास्फोटयत् पद्मभवाण्डभित्तीः ॥ २ ॥

स्वभीमरूपामितभारमात्रश्रान्तां सकम्पां धरणीं स दृष्ट्वा ।
महेन्द्रसंज्ञं धरणीधरेन्द्रं समारुरोहोत्प्लवितुं महात्मा ॥ ३ ॥

अतिप्रभावस्य पदं दधानस्तस्य स्वमूर्ध्नां स गिरिः सकम्पः ।
धातुद्रवाश्रुर्बहुसत्वघोषस्तवोऽर्चनं वृक्षसुमैर्वितेने ॥ ४ ॥

समुत्पतिष्यन्नथ तद्गिरिस्थैः संस्तूयमानः सुरसिद्धसङ्घैः ।
स संयतात्मा हनुमान् महात्मा जगाद तान् जाम्बवदङ्गदादीन् ॥ ५ ॥

यथा विमुक्तो रघुपुङ्गवेन बाणस्तथाहं श्वसनातिवेगः ।
गच्छामि लङ्कां दशकण्ठगुप्तां समागमिष्यामि च सिद्धकार्यः ॥ ६ ॥

एवं समाश्वास्य स बन्धुवर्गमाकाशमाविश्य जवाज्जगाम ।
वहन् महापुच्छमनन्तदैर्घ्यं कर्षन् गरुत्मानिव नागराजम् ॥ ७ ॥

विक्षोभयन् सागरमात्मवेगात् कर्षन् महाभ्राणि वियद्गतानि ।
रामप्रतापानलवृद्धिकारी स मारुतिर्मारुतवच्चकासे ॥ ८ ॥

अथोत्थितं पर्वतमम्बुराशेर्मैनाकमाक्रम्य पितुः सखायम् ।
स मानयामास पुनर्यथावत् सन्तो हि मान्यान् बहुमानयन्ति ॥ ९ ॥

ततः स गच्छन् सुरसां प्रगल्भामाकाशमावृत्य पथि स्थितां ताम् ।
जिगाय वाचा वपुषा च बुद्ध्या किं तादृशां दुष्करमस्ति लोके ॥ १० ॥

व्रजन् पुनश्चाम्बुनिधौ शयानां छायां गृहीत्वा स्वमथात्तुकामाम् ।
स सिंहिकां रात्रिचरीं निहत्य यादोगणान्नं कलयाञ्चकार ॥ ११ ॥

स्वतातवद्वायुसुतः पुनश्च व्योम्नि व्रजन् क्षिप्रमनन्तवीर्यः ।
ददर्श पारं परमम्बुराशेः द्वीपं महाशैलवनाभिरामम् ॥ १२ ॥

स वञ्चयिष्यन्नथ वञ्चकांस्तान् निशाचरांस्तत् सुमहद्वपुः स्वम् ।
क्षणाच्चकाराल्पतरं मनीषी स्यात् किं न्वघं वञ्चकवञ्चनेन ॥ १३ ॥

ततः सुवेलस्य गिरेः स शृङ्गे पपात तुङ्गेऽशनिवत् कपीन्द्रः ।
समस्तनक्तञ्चरचक्रनाशं संसूचयन् द्रागविषह्यतेजाः ॥ १४ ॥

तत्रस्थ एवाथ ददर्श लङ्कां त्रिकूटमूर्ध्नि द्रुतहेमवर्णाम् ।
जाज्वल्यमानाशरवंशनाथप्रतापकालाग्निशिखामिवारात् ॥ १५ ॥

एवं समुल्लङ्घ्य महाम्बुराशिं स विक्रमी गोष्पदमेव मेने ।
श्रमस्य चिह्नेषु न किञ्चनापि स्वेदश्रमश्वासमुखेष्ववाप ॥ १६ ॥

दशाननस्यानुनयाय साक्षात् सुराधिनाथेन विचार्य बुद्ध्या ।
दत्ता किमासीदमरावतीति शङ्कां ददौ वायुसुतस्य लङ्का ॥ १७ ॥

गौरीमिवाङ्के वहतो धरित्रीं सदा गिरीशस्य शिरस्थितां ताम् ।
अनेकरत्नोत्थरुचिप्रवाहयुक्तां स गङ्गां मनुते स्म लङ्काम् ॥ १८ ॥

समीपमासाद्य पुनर्विलोक्य दुर्लङ्घनीयां परिघां स तस्याः ।
मेनेऽमृतान्धोजयिपङ्क्तिकण्ठप्रसादनेच्छुं सरितामधीशम् ॥ १९ ॥

त्र्यक्षाचलोत्क्षेपकराक्षसेन्द्ररूक्षाज्ञया काञ्चनशैलराजम् ।
सदापि लङ्कां परितः स्थितं तममंस्त स प्रेक्ष्य हिरण्यवप्रम् ॥ २० ॥

क्रव्याशनैर्नैकविधोग्ररूपैस्तां रक्षसां वीक्ष्य सुतीक्ष्णदंष्ट्रैः ।
स दुर्गमां नागगणाभिगुप्तां मेने हरालङ्कृतराजधानीम् ॥ २१ ॥

यान्यल्पकेभ्योऽप्यतिभूरिशक्तीर्ददत्यसाध्यारिजयादिकार्ये ।
यन्त्राणि तस्यां पुरि मण्डनानीवालोकयामास स तानि वीरः ॥ २२ ॥

सर्वाप्रधृष्येयमहो पुरीति तदोत्थितां तस्य धियं तमिस्राम् ।
स रामसूर्योऽभ्युदितोऽन्तरङ्गे क्रमात् स्वतेजोभिरपाचकार ॥ २३ ॥

तदाशरीभावमिताथ लङ्कालक्ष्मीश्चिरायाशरवर्गसङ्गात् ।
हरिं तमन्तः प्रविशन्तमुग्रा ददर्श किं किं न करोति सङ्गः ॥ २४ ॥

तां विह्वलाङ्गीं विरचय्य वाममुष्टिप्रहारेण च नष्टशापाम् ।
धीरः प्रदोषे विधिवद्विवेश पुरीं रिपोर्यातुपतेर्विधिज्ञः ॥ २४ ॥

समस्तरक्षोगणवञ्चनार्थं विचिन्त्य भूयोऽपि निजं शरीरम् ।
स कामरूपः कपिरल्पभावादलक्ष्यकल्पं तरसा चकार ॥ २६ ॥

[ युग्मकम् ]

प्राक् पूर्वदेवैर्वनिता नृदेवैस्तथोपदेवैः प्रथितैश्च देवैः ।
संलालिताः पङ्क्तिमुखाहृता यां दृष्ट्वा रमन्ते स्म विनैव सीताम् ॥ २७ ॥

तां पुण्यभाजां सुखवासयोग्यां प्रासादरथ्योपवनादिरम्याम् ।
समस्तरत्नैर्निविडां ददर्श लङ्कापुरीं सम्यगथाञ्जनेयः ॥ २८ ॥

हरेररी सोऽरसहस्रमौञ्झ्यं प्राप्य तं रावणमेत्य लङ्का ।
गुणैः परानन्दकैस्त्रिलोकालङ्कारतां योपगता विभाति ॥ २९ ॥

तपोभिरुग्रैः स्वभुवं प्रसाद्य वरप्रभावेन जगत् समस्तम् ।
सनाथमाक्रम्य धनाधिनाथाज्जहार यां स्वस्थितये दशास्यः ॥ ३० ॥

शीतोष्णवर्षादिभवा न दोषा भवन्त्यहो क्वापि कदापि यक्षीम् ।
सन्त्येव सर्वेन्द्रियतुष्टिपुष्टिप्रदा गुणाः सौख्यमतः परं किम् ॥ ३१ ॥

विसृज्य देवः स्वपदानि येषु कलत्रमित्रादियुता रमन्ते ।
ते पङ्क्तिकण्ठानुनयाय यस्यां प्रासादतां यान्ति कुलांचलेन्द्राः ॥ ३२ ॥

विचित्रशिल्पादिभिरुज्ज्वलानां यन्मन्दिराणामपि तुङ्गभावम् ।
द्रष्टुं न शक्तं नयनं जनानां ह्रियेव मोदाश्रुनिमग्नमास्ते ॥ ३३ ॥

यत्राहिपक्ष्यश्वगजादिकानां रूपाणि यन्त्राद्युपकल्पितानि ।
अकृत्रिमाण्यद्भुतनिश्चलानां निरीक्षकाणां खलु कृत्रिमाणि ॥ ३४ ॥

शचीपतेरप्सरसोऽङ्कशय्यां विसृज्य दास्यं विधिवद्विधातुम् ।
यन्मन्दिरान्तः स्थितिमात्रकामा दशाननाज्ञामिषतः समेताः ॥ ३५ ॥

उत्पादयन्ती प्रतिबिम्बमालागेहेषु या रत्नविनिर्मितेषु ।
निरन्तरं सन्ततमन्तहीना मायेव विश्वं बहुलीकरोति ॥ ३६ ॥

स्थानेषु गेहादिषु सुस्थितानां यन्त्राणि चिन्तामणयश्च यस्याम् ।
ददत्यभीष्टार्थमशेषमाशु परस्परस्पर्धितयेव नित्यम् ॥ ३७ ॥

अनन्तरत्नोज्ज्वलदीपभाभिः स्थातुं तमो यत्र बहिर्न शक्तम् ।
रथ्यादिदेशानपहाय नूनमन्तः स्थितं मेचककौणपानम् ॥ ३८ ॥

सुरायनं यानि विभूषयन्ति तैः कीर्णपुष्पौघमिषेण तारैः ।
सुरेन्द्रजिद्राक्षसवर्यपुर्या वर्त्मानि यस्यां निबिडीकृतानि ॥ ३९ ॥

असङ्ख्यहस्त्यश्वरथाशराणामितस्ततः सञ्चरतां सदापि ।
व्यासेधजः कश्चन नास्ति दोषो मार्गेषु यस्यामतिविस्तृतेषु ॥ ४० ॥

सर्वेन्द्रियानन्ददविव्यवस्तुविचित्रितायामटतां तु यस्याम् ।
अत्यन्तदीर्घा अपि हन्त मार्गा ह्रस्वत्वमायान्ति निशाचराणाम् ॥ ४१ ॥

गन्धर्वपर्यटनभासुराणि चलद्गजेन्द्राम्बुदसंयुतानि ।
रथैर्विमानैरिव शोभितानि वर्त्मान्यनन्तानि लसन्ति यस्याम् ॥ ४२ ॥

रजांसि भूयांसि कुशेशयानां सकेतकानां विकिरन् समन्तात् ।
मन्दोऽप्यमन्दं मकरन्दबिन्दुवर्षी सदा यत्र तु वाति वातः ॥ ४३ ॥

यस्या ध्वजा भान्त्यखिलोर्ध्वलोकसारापहारं सहसा विधातुम् ।
उत्क्षिप्यमाणा इव बाहुदण्डा भर्त्राशराणां समधिष्ठितायाः ॥ ४४ ॥

सौधाग्रदेशेषु यथा सुकेश्यो महीध्रशृङ्गेषु यथा स्रवन्त्यः ।
यथा द्रुमाग्रेषु नवच्छदाल्यो यत्र ध्वजाग्रेषु तथा पताकाः ॥ ४५ ॥

स्वस्वामिना नापहृतं त्रिलोके किं रत्नमस्तीति निरीक्षितुं या ।
उड्डीयमानेव चलत्पताकापक्षाम्बरे चित्रतरं विभाति ॥ ४६ ॥

यत्रोर्ध्वदेशे परिकल्पितानामत्युज्ज्वलानां मणितोरणानाम् ।
जनो न जानाति चलद्ग्रहोडुतारागणानां च विशेषमल्पम् ॥ ४७ ॥

फलैर्मनोज्ञैर्जगतां हितानां द्विजातिभिः साधु निषेवितानाम् ।
उद्यानभूमिः सकलागमानां यत्रैकयोनिर्विधिवल्लभेव ॥ ४८ ॥

समुन्नताः शोभनपत्रपूर्णा रत्नोल्लसद्वेदिनृपासनस्थाः ।
यत्राशु तापं शमयन्ति शाखाभुजा गुणेन क्षितिजाः क्षितीशाः ॥ ४९ ॥

सह प्रसूनाभरणैरभीक्ष्णं वर्षद्भिरिष्टानि फलानि यत्र ।
आरामभूरात्मभवैर्विभाति विनैव तापं तरुभी रसार्द्रा ॥ ५० ॥

दशाननान्तःपुरकेलिशय्याकृते प्रसूनापचयोद्यतानाम् ।
या भाति नानावनदेवतानां करैरिवारामतरुप्रवालैः ॥ ५१ ॥

कालारिशैलोद्धरणैकलीलं मधुप्रियं सेवितुमाशरेन्द्रम् ।
आक्रीडदेशेष्वृतवो वसन्ति मधुं पुरस्कृत्य सदापि यस्याम् ॥ ५२ ॥

नतभ्रुवां वल्गदुरोजकुम्भाः स्मृता विलासाश्च यथा जनैः स्युः ।
यस्यां मनोज्ञोपवनेषु वाति वातस्तथा गुच्छलता विधुन्वन् ॥ ५३ ॥

पलाशिनोऽमी सुमनोविशिष्टा मधुद्रवार्द्राः खलु सेवनीयाः ।
इतीव यस्यां सुमवाटिकासु मदान्धकूजन्मधुपाः स्तुवन्ति ॥ ५४ ॥

दशाननाज्ञामनुसृत्य यस्यां कलाभिपूर्णद्विजसंश्रितायाम् ।
प्रकाशयन्त्याशु कुहूं वनस्थां पिकद्विजाः स्वास्यगुहानिलीनाम् ॥ ५५ ॥

छायाः प्रकामं सुमवाटिकानां जलानि तन्मध्यगदीर्घिकानाम् ।
नेत्राणि लङ्केशविलासिनीनां क्रीडामृगाः साधु भजन्ति यत्र ॥ ५६ ॥

उद्यानलीलासु विलासिनीनां क्रीडाकुरङ्गप्रतिबिम्बवद्भिः ।
मुखैः समग्रं समवाप्य साम्यं पोषं सदा यत्र शशी प्रयाति ॥ ५७ ॥

सदानिमेषव्रजसेवितानि स्वादून्यशेषामयनाशनानि ।
सर्वेन्द्रियाह्लादबलप्रदानि वापीषु यस्याममृतानि भान्ति ॥ ५८ ॥

स्फुरन्ति पीयूषमधूनि मुक्ताबीजानि गारुत्मतपत्रवन्ति ।
वैडूर्यनालानि सरस्सु यस्याममम्लानहेमाम्बुजकाननानि ॥ ५९ ॥

माणिक्यगारुत्मतवज्रमुक्तावैडूर्यनीलोपलविद्रुमाद्यैः ।
सुवर्णयुक्तै रचिता विभान्ति सोपानवीथ्यः सरसीषु यस्याम् ॥ ६० ॥

आक्रान्तयादोधिपराक्षसेन्द्रसंरक्षितायां सलिलेषु यस्याम् ।
विक्रीडतां किङ्करभावमेति यादोगणोऽप्युग्रबलाप्रधृष्यः ॥ ६१ ॥

वहन्ति यत्रोत्स्वनहेमहंसैर्मालाः कृता विद्रुमचञ्चुपादैः ।
वाप्यां स्वभावं दिवि तोरणत्वं गृहेषु गीताद्भुतयन्त्रलक्ष्मीम् ॥ ६२ ॥

समुद्यतानां सततं विचित्रक्रीडास्वहो मत्तमृगद्विजानाम् ।
श्रमक्लमाद्या न भवन्ति जातु वरप्रभावादिव यत्र चित्रम् ॥ ६३ ॥

सङ्गीतघोषैर्मधुपानघोषैर्भूषासुघोषैर्बहुसैन्यघोषैः ।
आम्नायघोषैर्जय रावणेति घोषैश्च या शब्दवती विभाति ॥ ६४ ॥

प्रासादरत्नैर्बहुदीपरत्नैरुद्यानरत्नैर्मणिचित्ररत्नैः ।
निशाचराधीश्वरदाररत्नैः सदापि या रूपवती विभाति ॥ ६५ ॥

रथ्यादिकीर्णैः सुमनःप्रवालैः शय्यासनैरास्तरणोपपन्नैः ।
मन्दानिलैर्वामदृशां वराङ्गैर्विराजते स्पर्शवती सदा या ॥ ६६ ॥

भोज्यैर्विचित्रै रसनानुकूलै रसायनैः पेयमुखैस्तथैव ।
बिम्बाधरैश्चोत्तमकामिनीनामास्ते रसश्रीपरिशोभिता या ॥ ६७ ॥

कस्तूरिकाकुङ्कुमचन्दनानां कह्लारहेमाम्बुजमल्लिकानाम् ।
धूपान्वितानां ललनाङ्गकानां गन्धेन या गन्धवती विभाति ॥ ६८ ॥

अत्यद्भुतानन्दरसातिवृष्टिप्रावृष्यशेषाशरनाथपुर्याम् ।
सीतां स तस्यां परिमार्गमाणश्चचार गूढं निशि तत्र तत्र ॥ ६९ ॥

प्रहस्तदेवान्तककुम्भकर्णनिकुम्भकुम्भेन्द्रजिदादिकानाम् ।
प्रापाञ्जनेयः सविभीषणानां गृहाणि दिक्पालगृहोत्तमानि ॥ ७० ॥

दशाननेनापहृतं कुबेरं विजित्य युद्धे वरदर्पितेन ।
यत् पुष्पकं नाम विमानरुग्र्यं ददर्श तत्तत्र स वानरेन्द्रः ॥ ७१ ॥

प्राग्रावणो दैत्यसुरादिकन्या येनाजहारापि वशीचकार ।
उत्कीर्णरूपच्छलतः सदास्ते यत्र स्वयं मङ्गलदेवता सा ॥ ७२ ॥

सुरासुराणामतिशोभनस्य यस्यावलोकः परमोत्सवोऽभूत् ।
पुरा पुना रावणवाहनत्वं प्राप्तस्य जातो बत कालमृत्युः ॥ ७३ ॥

तत् पुष्पकं कामगकामरूपप्रकामसम्पादितकामकामम् ।
सीतां विचेतुं निशि वायुसूनुश्चचार रक्षोभिरलक्षितात्मा ॥ ७४ ॥

ततो ददर्शाहृतकाञ्चनाद्रिशङ्काकरं सद्मवरं हनूमान् ।
जायासहस्रैः परिवारितस्य रक्षःपतेर्नित्यनिवासयोग्यम् ॥ ७५ ॥

किरीटवद्यन्नवरत्नहेमविचित्रितं संस्थितमुत्तमाङ्गे ।
लङ्कापुरस्यान्यमहापुराणामधीश्वरत्वं स्फुटमातनोति ॥ ७६ ॥

प्रासादपद्माकरपुष्पवाटीसभादिसङ्घैः परिशोभितं तत् ।
स प्राविशद्राक्षसराजगेहं सीतां विचेतुं मतिमान् हनूमान् ॥ ७७ ॥

स तत्र रात्रौ विविधान् प्रदेशानालोकयत् सर्वसमृद्धियुक्तान् ।
चचार सीतां परिमार्गमाणः सुप्तेषु सर्वेषु जनेषु गाढम् ॥ ७८ ॥

तत्राथ नानारुचिरान्नपानसुमाङ्गरागादिसुगन्धवाही ।
इतस्त्वमेहीति वदन्निवामुं वाति स्म मन्दं शिशिरः समीरः ॥ ७९ ॥

प्रहर्षवेगक्षुभितस्ततः स सम्प्रस्थितस्तत्र ददर्श शालाम् ।
कामप्यचिन्त्यामधिकं विशालां श्रियः सखीमिष्टतमामिवारात् ॥ ८० ॥

स तत्र दीपान् बहुरम्यरूपान् सुगन्धवत्स्नेहनितान्तदीप्तान् ।
ददर्श मित्रैरिव भूरिरत्नैः सह प्रतापानिव रावणस्य ॥ ८१ ॥

तस्यां महानीलशिलाततं स ददर्श नानाकुसुमावकीर्णम् ।
क्वचित् क्वचित् स्त्रीपदयावरक्तमभ्रं स सान्ध्याभ्रमिव स्फुटर्क्षम् ॥ ८२ ॥

ददर्श तत्र स्फटिकाभिरामा भित्तीः स कीर्तीरिव रावणस्य ।
यास्वाविभातो बहुचित्ररूपौ जयेतरौ रात्रिचरेतराणाम् ॥ ८३ ॥

अनन्तरत्नोल्लसितं स तत्र व्यालम्बिमुक्तावलिभातिरम्यम् ।
वितानमत्युच्चतयातिदूरस्थितं मुरारेः पदवद्ददर्श ॥ ८४ ॥

विक्रम्य दैतेयसुरादिकानां छित्त्वाहृतान् राक्षसनायकेन ।
महाप्रमाणानिव बाहुदण्डान् स्तम्भानसङ्ख्यान् स ददर्श तत्र ॥ ८५ ॥

अनेकलोकाधिपनामवर्णैर्लङ्कापतेः सन्नयतां प्रभावम् ।
अस्यां महार्हास्तरणोज्ज्वलानां भद्रासनानां स ददर्श पङ्क्तीः ॥ ८६ ॥

क्षीराब्धिना श्रीजनकेन पुत्रीभ्रमात् स्वयं रावणवल्लभाभ्यः ।
स्वफेनकूटानि समर्पितानीवासावपश्यच्छयनानि तत्र ॥ ८७ ॥

माणिक्यगारुत्मतकाञ्चनादिविनिर्मितेषूत्तमभाजनेषु ।
पूर्णान्यभीष्टै रसगन्धवर्णैस्तत्रान्नपानानि स पश्यति स्म ॥ ८८ ॥

अनेकजात्याकृतिवर्णवेषा विस्रस्तवासश्चिकुरावशेषाः ।
शय्यासु सुप्ताः स विनष्टदोषा ददर्श तत्राशरराजयोषाः ॥ ८९ ॥

भुजैर्मृणालैर्वदनैः सरोजैस्तासामुरोजैः शतपत्रकोशैः ।
कचैश्च शैवालचयैर्युतां तां शालां स मेने सरसीं हनूमान् ॥ ९० ॥

लतासमूहैः सुमवाटिकेव नवाब्दमालेव तटित्समूहैः ।
तारागणैर्द्यौरिव राजते स्म सा तत्र शाला निःहैर्वधूनाम् ॥ ९१ ॥

[ विशेषकम् ]

तासां तु मध्ये प्रमदोत्तमानां दशाननं विश्रुतभीमरूपम् ।
सुखप्रसुप्तं स ददर्श तत्र मध्ये वशानामिव वारणेन्द्रम् ॥ ९२ ॥

अनेकदिव्याभरणप्रदीप्तं श्यामच्छविं लोहितचन्दनाक्तम् ।
विडम्बयन्तं तटिदुज्ज्वलाङ्गं सन्ध्याप्रभारञ्जितमम्बुवाहम् ॥ ९३ ॥

दिग्दन्तिदन्ताग्रवलारिवज्रदैत्यारिचक्रोल्लिखितोन्नतांसान् ।
भुजान् दधानं भुजगाधिराजभोगोपमान् द्रावितदेवदैत्यान् ॥ ९४ ॥

तदान्तिके तस्य सुखं शयाना मन्दोदरी श्रीरिव सद्गुणाढ्या ।
सीताभ्रमं कञ्चन वायुसूनोर्हंसीभ्रमं हन्त बकीव चक्रे ॥ ९५ ॥

इति भ्रमोत्पादितरामपत्नीमन्दर्शनः सोऽथ कपिर्जहर्ष ।
ननन्द चिक्रीड मुहुर्मुहुर्द्राक् पुनश्च चिन्तामपरां प्रपेदे ॥ ९६ ॥

क्व रामसूर्यस्तमसां निहन्ता क्व रावणस्तीव्रतमस्समूहः ।
विदेहजा सा विमलातपश्रीर्हरेत्तमो नैव भजेत्तमस्याम् ॥ ९७ ॥

तस्मादेषा जनकतनया नेति निश्चित्य भूयो
भूयस्तस्मिन् निशिचरवरान्तःपुरेऽन्विष्य साध्वीम् ।
हन्तापश्यन्नथ स मनसा रामपादं प्रपेदे
यस्य स्मृत्या भवति जगतां साधु सर्वार्थसिद्धिः ॥ ९८ ॥

इति श्रीकोच्चुण्णिराजविरचिते
श्रीरामचरितमहाकाव्यपूरणे
लङ्कापर्यवेक्षणं नाम
द्वाविंशः सर्गः



# त्रयोविंशः सर्गः

अथ पवनसुतः स तत्प्रदेशाद्द्रुतमपसृत्य विलोकयन् समन्तात् ।
किमपि बहुविचित्रपुष्पवल्लीविलसदशोकवनं ददर्श दूरात् ॥ १ ॥

प्रमदवनमिदं पुरा न दृष्टं न खलु मया परिमार्गितं च रम्यम् ।
सरसमिति स तत्र पुप्लुवे द्राग्रघुपतिबाण इवाप्रधृष्यवीर्यः ॥ २ ॥

दशवदनभटैर्विभूतनिद्रैरुपवनरक्षिभिरप्यलक्षितात्मा ।
पवन इव स तत्र पुष्पनम्रांस्तरुनिकरान् परिकम्पयंश्चचार ॥ ३ ॥

पदकरनखरक्षताङ्ग्यमुष्य प्रतिनवसङ्गचला गलत्सुमौघा ।
सुरतविमृदितेव कामिनी सा श्रियमभजत् परमां प्रसूनवाटी ॥ ४ ॥

स तु बहुलदलानशोकवृक्षान् विकचसितासितपीतरक्तपुष्पान् ।
स्मरनृपलसदातपत्रतुल्यान् दृशि विदधे हरिचदनादिकांश्च ॥ ५ ॥

विमलतरजलाम्बुजालिहंसावलिरुचिरेषु महासरस्सु तत्र ।
स हरिरथ निरीक्ष्य चक्रवाकीं प्रियरहितां मनसा जगाम सीताम् ॥ ६ ॥

तदनु कमपि तत्र केलिशैलं मणिगणकाञ्चनमण्डितं ददर्श ।
पिहितमुपगतैः पटैरिवाभ्रैरुपवनभूस्तनमण्डलोपमानम् ॥ ७ ॥

कमपि सविधतोऽस्य चैत्यसौधं स्वगुणकापरिभूतवैजयन्तम् ।
कपिपतिरवलोक्य तत्र तुङ्गं द्रुतमथ तस्य समारुरोह शृङ्गम् ॥ ८ ॥

हरिवरसचिवः स तत्र तिष्ठन् कमपि स पश्यति शिंशपाङ्घ्रिपेन्द्रम् ।
विविधविटपिसङ्घमध्यसंस्थं सुरगणमध्यगतामरेन्द्रतुल्यम् ॥ ९ ॥

[कुलकम्]

तदनु स तदधःस्थले निषण्णां श्रियमिव चोरहृतां ददर्श सीताम् ।
निशिचरवनिताकुलैः परीतां करटवृतामिव राजहंसजायाम् ॥ १० ॥

रघुकुलवरविप्रयोगतप्तां नवलतिकामिव घर्मकालतप्ताम् ।
अपरिमितशुचा प्रवेपमानां प्रबलनिरन्तरवात्ययेव रम्भाम् ॥ ११ ॥

अविरतविगलद्विलोचनाम्बुप्रकरहतप्रभमाननं दधानाम् ।
सहसि कमलिनीमिवारविन्दं तुहिननिरन्तरवृष्टिनष्टशोभम् ॥ १२ ॥

उरगवरवधूं विडम्बयन्तीं मुहुरपि निःश्वसितैर्नितान्तदीर्घैः ।
असितफणिसमानयैकवेण्या मलयभवामपि गन्धसारवल्लीम् ॥ १३ ॥

प्रियतमविरहव्यथाकृशाङ्गीं घनमलपङ्कमयीं तिरस्कृताभाम् ।
प्रबलतरनिदाघशुष्कतोयां स्फुटबहुपङ्कचयामिव स्रवन्तीम् ॥ १४ ॥

स्वपतिविरहितां चमूमिवार्तामधिकखलैररिभिः प्रपीड्यमानाम् ।
दशवदनधृतां प्रभूतनिद्रां वृषलधृतामिव वारिराशिकाञ्चीम् ॥ १५ ॥

अधमपदमधर्ममार्गनिष्ठैः श्रुतिमिव लोकहितां बलात् प्रणीताम् ।
भृशतरमलिनं तदेव वासः परिदधतीमविलक्ष्यपीतवर्णम् ॥ १६ ॥

रघुपतिकथितानि यानि शिष्टान्यतिरुचिराणि विभूषणानि तस्याः ।
स कपिरथ ददर्श वृक्षशाखा परिकलितान्यखिलानि तानि तत्र ॥ १७ ॥

सकलयुवतिसद्गुणोपपन्ना सुदृढमियं महिषी रघूत्तमस्य ।
इति महितमतिः स निश्चिकाय प्रचुरमवाप च मारुतिः प्रहर्षम् ॥ १८ ॥

द्रुतमथ समभिप्लुतः प्लवङ्गप्रभुसचिवः स ततस्तु चैत्यसौधात् ।
दलनिबिडमवाप्य शिंशपाग्रं निकटगतां समवर्णयत् पुनस्ताम् ॥ १९ ॥

जनकनृपवरेण बाल्यकाले सकुतुकमङ्कतले विवर्धिता या ।
अनुभवति निशाचरालयस्था शुचममितां बत सा विधिर्दुरूहः ॥ २० ॥

दशरथनृपतिप्रियासमक्षं समरमत स्वसखीजनैर्वृता या ।
निशिचरवनितावृता भयं सा भजति परं विषमो हि कर्मपाकः ॥ २१ ॥

अरमत भवने वनेऽपि रामक्षणविरहादतिमात्रकातरा या ।
दशवदनवशं गताद्य सेयं व्रजति शुचं परमां विधिर्न वार्यः ॥ २२ ॥

सकलयुवतिसद्गुणोज्ज्वलेयं खलु सदृशी महिषी रघूत्तमस्य ।
पुरुषकुलशिरोमणिः स रामो भवति पतिः सदृशश्च नूनमस्याः ॥ २३ ॥

सकलगुणमयीमिमामवाप्तुं विनिहतवान् बत बालिनं स रामः ।
समुचितमखिलप्लवङ्गराज्यं रवितनयाय च दत्तवान् महात्मा ॥ २४ ॥

अमलशुभमयीमिमां प्रयत्नाद्दिशि दिशि कीशवरा विमार्गयन्ति ।
सलिलनिधिमतीत्य हन्त पश्याम्यहमधुनात्र पुराणपुण्यपूरात् ॥ २५ ॥

क्षणमपि रहितोऽनयोत्तमस्त्री विमलगुणैर्युतयाखिलैः श्रियेव ।
नयति रघुपतिर्यदद्य रामस्तदधिकदुष्करकालकूटपानम् ॥ २६ ॥

इति जनकसुतां निरूपयन् स स्फुटमुदितं रजनीचरेन्द्रगेहात् ।
कलकलमशृणोद्वराङ्गनानां श्रुतिसुभगं पिकयोषितामिवोच्चैः ॥ २७ ॥

अथ विटपिघनच्छदप्रलीनः स्वनमनुसृत्य स तं निरीक्षमाणः ।
करधृतमणिहेमदीपपात्रं किमपि ददर्श नितम्बिनीसहस्रम् ॥ २८ ॥

दशमुखमपि तुङ्गनीलमूर्तिं धृतबहुदीपवराङ्गनासमेतम् ।
दशशिखरमिवाञ्जनाचलेन्द्रं समुकुलचम्पकवल्लिकापरीतम् ॥ २९ ॥

सरसिरुहदृशां स मध्यभागे मदनवशीकृतधीर्निशाचरेन्द्रः ।
मदललितगतिः परां स्म शोभां भजति गवामिव वीर्यवान् महोक्षः ॥ ३० ॥

कनककलशखड्गराजपङ्क्तिव्यजनसितातपवारणादिकानि ।
अतिरुचिरगुणानि तस्य कान्ता द्रुतमथ पृष्ठगतास्तदोपनिन्युः ॥ ३१ ॥

अथ दशवदनः स रामपत्नीं स्मरपरितप्तमनाः समाससाद ।
द्विरद इव निदाघसूर्यतप्तः सरसिजिनीं बहुपङ्कमात्रशेषाम् ॥ ३२ ॥

परिसरमुपयाति राक्षसेन्द्रे जनकसुता परिवेपते स्म साध्वी ।
निजबलभरकम्पितागमौघे कृशतरदीपशिखेव चण्डवाते ॥ ३३ ॥

अमितभयभराकुलान्तरङ्गां निजवपुषीव भृशं निलीयमानाम् ।
सुमधुरमवदत् पराङ्मुखीं तां दशवदनो मदनोपतप्तचित्तः ॥ ३४ ॥

अयि जनकनरेन्द्रपुत्रि सीते सुदृढगुणैर्बहुभिर्निबध्य मां त्वम् ।
भुजबलपरिकृष्टदेवदैत्यव्रजमुपकर्षसि सर्वदापि गाढम् ॥ ३५ ॥

सततमभिलषन्ति सर्वलोकाः सह पतिभिः खलु यस्य दृष्टिपातम् ।
सकृदपि तव नेत्रकोणपातः समभिलषामि मनोहराङ्गि सोऽहम् ॥ ३६ ॥

सकलजगति सुन्दरत्वलक्ष्मीवृतवपुषां प्रथमोपमानभूतः ।
निजबलविवशीकृतत्रिलोकः स्मर इव सुन्दरि किङ्करस्तवाहम् ॥ ३७ ॥

दिगधिपपरिलालिता भजन्ते सुखमबलास्तु यदीयदास्यभावात् ।
हिमकरमुखि ताः प्रिया ममैतास्तव सकलं सकला भवन्तु दास्यः ॥ ३८ ॥

अयि सुमुखि बहूनि रत्नवस्तून्यतिसुखदानि पुरा समाहृतानि ।
मम बत विपरीतया त्वयाहो सपदि नयन्त्यखिलानि वैपरीत्यम् ॥ ३९ ॥

दृढतरमसवोऽत्र देहभाजां सहजसुहृत्त्वमुपागतास्तु ये ते ।
त्वयि सुमुखि विपक्षतां गतायामहह भजन्ति विपक्षताममी मे ॥ ४० ॥

नतसुरनगरी वशेऽस्ति लङ्का पतिरहमात्मगुणैर्जितामरौघः ।
तव किमपि न नूनमत्र पश्याम्यहमधुना भयशोकयोर्निदानम् ॥ ४१ ॥

शशिमुखि सुभगीकुरुष्व वापीरिह जितनाकनदीः स्वमज्जनेन ।
कनकमणिकृतानि चारुरूपाण्यपि परिभूषय दिव्यभूषणानि ॥ ४२ ॥

अनितरसुलभानि भोज्यपेयान्यतिबलपुष्टिकराणि सद्य एव ।
प्रणयभरसमाहृतानि नानारसरुचिराणि कृतार्थय प्रसन्ना ॥ ४३ ॥

शयनममलदुग्धफेनकल्पं पुनरधिरुह्य मया रमस्व भद्रे ।
स्थिरवनवसतिर्जटी फलाशी न तव समः स्वपदच्युतः स रामः ॥ ४४ ॥

दिगिभपतिमहाविहारयोग्या क्व सुरनदी कनकाम्बुजादिरम्या ।
बहुमलघनफेनिलाम्बुवापीतटरसिकः क्व बको विसारभोगी ॥ ४५ ॥

क्व नु गरुडसमोऽहमुग्रवीर्यः क्व नु धरणीफणिसन्निभः स रामः ।
भजति हि सति तत्वतोऽनुकूले जगदधिपे मयि धर्मतामधर्मः ॥ ४६ ॥

विधुमुखि जनकाय सम्प्रदास्याम्यहममरेन्द्रपदं तव प्रियार्थम् ।
अनितरशरणे पदारविन्दं नमति विधेहि मयि प्रसाददृष्टिम् ॥ ४७ ॥

इति पदपतितं निशाचरेन्द्रं तृणमिव तं परिभाव्य रामपत्नी ।
कृतपतिपरिदूषणं सरोषा परुषमुवाच शिखामणिः सतीनाम् ॥ ४८ ॥

खलतम यतिवेषगूहितात्मा भयभरतरस्त्वमपाहरः पुरा माम् ।
कथयसि कथमद्य रावण त्वं बलरहितं मतिशून्य हन्त रामम् ॥ ४९ ॥

स्मरणमपि तनोति यस्य तीव्रं मरणभयं खलु सर्वदुर्जनानाम् ।
इह तव बत तस्य हस्तसंस्था न कथमहं भयसम्भ्रमं भजामि ॥ ५० ॥

खल तव विकृताखिलाङ्गमुग्रं वपुरिदमुत्कटशोकभीतिदं मे ।
दशरथसुतसम्प्रमुक्तपत्रिव्रजशकलीकृतमुत्सवप्रदं मे ॥ ५१ ॥

इह पिशितभुजां विनाशकालः खलु जगतां समुपागतो विभूत्यै ।
यदधिपतिपदास्थितस्त्वमेवं रघुतिलकेन गतः स्थिरं विरोधम् ॥ ५२ ॥

इह तु खलु न सन्ति किं नु सन्तः स्वमतिगृहीतनयानयस्वरूपाः ।
विधिबलहतधीर्बताथवा त्वं न भजसि किं नु सतां वचोऽमृतानि ॥ ५३ ॥

निशिचरवर मां प्रतिप्रदाय प्रणम रघूत्तमपादपद्ममूलम् ।
समभिलषसि भद्रमात्मनश्चेदिह सकुलस्य दयानिधिर्हि रामः ॥ ५४ ॥

रघुपतिरिव साधुमार्गनिष्ठस्त्यज परदाररतिं प्रभूतदोषाम् ।
कलय च निजदारलालनेन प्रचुरतरां हृदि निर्वृतिं विनीतः ॥ ५५ ॥

परजनपरिपीडने त्यजेच्छां कुरु सततं हृदि सर्वभूतमैत्रीम् ।
स्थिरतरमवतिष्ठ साधुमार्गे परममिदं भजनं हि राघवस्य ॥ ५६ ॥

दशमुख तव यो वरान् ददौ प्राक् स विधिरपीच्छति साधु यत्प्रसादम् ।
तममुमथ भजस्व रामचन्द्रं स्वकुलहिताय गुणेन विष्णुतुल्यम् ॥ ५७ ॥

इति जनकसुतावचोऽमृतं तद्विषमिव तस्य सुदुःसहं बभूव ।
भवति हि विपरीतमेव सर्वं जगति नृणां खलु कालदोषभाजाम् ॥ ५८ ॥

सततमधिकतापकारिणीं त्वां द्रुतमिह दीपशिखामिवोग्रवातः ।
अमितजवबलो विनाशयामीत्यथ निजखड्गमुपाददे दशास्यः ॥ ५९ ॥

अथ जनकसुतावधं चिकीर्षुं मयतनया दशकन्धरं रुरोध ।
गजपतिमिव शृङ्खला रुषान्धं मदतरलं जगतीं निहन्तुकामम् ॥ ६० ॥

सपदि जनकजा वशे स्थिता मे भवति यथाद्य तथाखिलं कुरुध्वम् ।
इति निशिचरकामिनीर्नियुज्य स्फुटमिदमाह स तां पुनर्दशास्यः ॥ ६१ ॥

अयि परवति जीवितस्य कालस्तव विहितः खलु मासयुग्ममेव ।
अपकरुणमतः परं शठे त्वं पशुरिव कृत्तगला भविष्यसीह ॥ ६२ ॥

इति गिरमतिदुःसहस्वरूपामशनिमिवाशरनाथमुद्वमन्तम् ।
प्रलयघनमिवोत्कटेव वात्या मयतनया समपाहरत्ततस्तम् ॥ ६३ ॥

कथमपि विनिवर्तितेऽपमृत्याविव मयदैत्यजया चिकित्सयेव ।
सपदि दशमुखे धृतिं न भूयस्तदुपगमोत्कटशङ्कयाप सीता ॥ ६४ ॥

तदनु निशिचराङ्गनाः करालाः परुषरवाश्चपलातिपिङ्गकेश्यः ।
अमृतकरकलामिवाब्दमाला जनकसुतामभिदुद्रुवुः समन्तात् ॥ ६५ ॥

सरसिजभवपुत्रपुत्रपुत्रं भज दशकण्ठममुं सुखाय सीते ।
द्रुततरमसुखाय वोग्रमृत्युं वचनमथैकजटेत्युवाच रुष्टा ॥ ६६ ॥

तदनु हरिजटा जगाद यस्य त्रिदशवराश्चरणे नमन्ति नित्यम् ।
प्रणमनमुररीकुरुष्व तस्य द्रुतमथवा पदताडनं ममेति ॥ ६७ ॥

असुसममपहाय सर्वमन्तःपुरवनिताजनमाश्रितं दशास्यम् ।
श्रयसि न यदि तेऽसुमोक्षकालस्त्वयमिति तां प्रघसा वचो बभाषे ॥ ६८॥

अनुभव दशकन्धराज्ञया त्वं नवसुमवर्षमृतुव्रजप्रणीतम् ।
निशिचरकृतमुग्रशस्त्रवर्षं द्रुतमथवेत्यथ दुर्मुखी बभाषे ॥ ६९ ॥

त्रिभुवनगतसर्वरत्नभोक्तुस्त्वमिह वधूजनमौलिरत्नभूता ।
शयनतलमलङ्कुरुष्व नो चेद्गृहमनलं कुरु काचिदेवमूचे ॥ ७० ॥

बहुतरमनुभुङ्क्ष्व साधु लङ्कापुरनिलयं वसु रावणाङ्कसंस्था ।
न यदि पलमिहासिनावकृत्य द्रुतमनुभोक्ष्यति राक्षसीजनस्ते ॥ ७१ ॥

अलमलमतिमात्रभर्तृभक्त्या न किमतिमात्रभये विवर्जनीयम् ।
भज दशवदनं त्रिलोकनाथं त्यज मनसा कृपणं कृशाङगि रामम् ॥ ७२ ॥

इति विषसदृशं वचः किरन्तीर्जनकसुता रजनीचराङ्गनास्ताः ।
नयनसलिलवृष्टिनष्टवक्त्राम्बुजरुचिरित्यवदद्विनिःश्वसन्ती ॥ ७३ ॥

अपि चरणनखेन न स्पृशेयं कलुषमयं पिशिताशनाधिनाथम् ।
शुभमयमिह का त्यजेन्नु रामं निगदति शूर्पणखीमुखं तदेतत् ॥ ७४ ॥

इह पिशितभुजामदन्ति यावत् खलु पिशितानि शृगालवायसाद्याः ।
दशरथतनयस्य दृष्टिमार्गे दशवदनः सकुलः क्षणं गतश्चेत् ॥ ७५ ॥

ऋषिसुरमनुजाद्यनेकभूतव्रजपरिपीडनजं प्रभूतमंहः ।
जनयति बहुशोऽत्र दुर्निमित्तान्यखे जनक्षयसूचकान्यमूनि ॥ ७६ ॥

अहमिव नगरीयमाशु लङ्का स्रवदमितास्रपरिप्लुता समन्तात् ।
व्यसनपरवशा भवेद्गतश्रीः पतिरहिता सहितार्तनिःस्वनेन ॥ ७७ ॥

रघुपतिविरहव्यथापहन्त्रीं मृतिमधुना परमां सखीं प्रदातुम् ।
मम वपुरिदमाशु नाशयध्वं रिपुमित्र दुःसहशोकभीतिहेतुम् ॥ ७८ ॥

जनकदुहितृगाढनिश्चयं तं सपदि निवेदयितुं दशास्यगेहम् ।
निशिचरवनिता ययुस्तु काश्चित् पुनरपराः समभीषयन् सतीं ताम् ॥ ७९ ॥

तदनु रुधिरपस्त्रियोऽतिरुष्टा विकृतभयङ्कररूपदुर्निरीक्ष्याः ।
भुजपरिघसमुद्यतोग्रशस्त्रा जनकसुतां परिवव्रुराशु दीनाम् ॥ ८० ॥

अथ जरठतमा चिरं शयाना गतकपटा त्रिजटा निशाटनारीः ।
अतिभयमरकम्पितोत्थितेत्थं गिरमवदत् परिभाव्य यातुनारीः ॥ ८१ ॥

न खलु न खलु रामधर्मपत्न्या विफलमिदं परितर्जनं विधेयम् ।
स्थिरसुमतिरुपस्थितोदयेयं परमगतिर्बत रक्षसां भवित्री ॥ ८२ ॥

दृष्टःस्फुटं परमभीषणतां प्रपन्नः
स्वप्नो मयाद्य विजयं युधि भर्तुरस्याः ।
लङ्कापतेः समचिवात्मजसोदरस्य
संसूचयन्नपि विनाशमधृष्यरूपः ॥ ८३ ॥

मातङ्गदन्तरचितां रघुवंशकेतु-
राकाशगां विमलहंससहस्रयुक्ताम् ।
आरुह्य चारुशिबिकां विचरन् प्रहृष्टः
स्वप्ने प्रियानुजयुतः सितवस्त्रमाल्यः ॥ ८४ ॥

पुष्पके सुरपतीभमस्तके चास्थितं पृथगनल्पतेजसम् ।
निद्रिता सपदि दृष्टवत्यहं राघवं सहजदारसङ्गतम् ॥ ८५ ॥

विमानमारुह्य सहैव सीतया सलक्ष्मणं राघवमुत्तरां दिशम् ।
प्रयान्तमालोकितवत्यहं पुनः सितातपत्रव्यजनादिशोभितम् ॥ ८६ ॥

रामं ससीतं परमासनस्थं प्रीत्याभिषिक्तं विबुधर्षिसङ्घैः ।
स्वप्ने सभायां पुनरप्यपश्यं संस्तूयमानं सकलप्रजाभिः ॥ ८७ ॥

भुजैश्चतुर्भिः सगदाब्जशङ्खचक्रैर्युतं कौस्तुभशोभिकण्ठम् ।
श्रिया समेतं जनकेन्द्रपुत्र्या रामं सनिद्रा पुनरप्यपश्यम् ॥ ८८ ॥

द्विसप्तलोकस्थितसर्वलोकै रामो न जय्यः किमु यातुधानैः ।
तद्रामपत्नीं सपदि प्रणामैः प्रसादयध्वं सदयां प्रकृत्या ॥ ८९ ॥

उच्चैःपदान्निपतनं कथयन्निवस्त-
श्रीः पुष्पकान्निपतितोऽयमवाक्शिराः सन् ।
रक्षःपतिर्बहुलकण्टकगोमयोग्र-
पङ्कह्रदे सपदि मग्न इहाद्य दृष्टः ॥ ९० ॥

काल्या कयापि बत संयमनीश्रियेव
कण्ठे निबध्य सहसा परिकृष्यमाणः ।
याम्यां दिशं तिलजसिक्तवपुः प्रदृष्टः
स्वप्ने मया परमलोहितवस्त्रमाल्यः ॥ ९१ ॥

सर्वैर्निशाचरगणैः सह शिंशुमार-
कोलक्रमेलकखरप्रकराधिरूढैः ।
रक्षःपतिं यमदिशं प्रति यान्तमार्त्तै-
र्निद्राद्य मां स्फुटमदर्शयदस्तवीर्यम् ॥ ९२ ॥

दृष्टो मयात्र तु विभीषण एक एव
स्वप्ने सितातपनिवारणवस्त्रमाल्यः ।
ऐरावतोपरिगतः सचिवैश्चतुर्भिः
साकं व्रजन् धनपतेर्दिशमुज्ज्वलश्रीः ॥ ९३ ॥

रामस्य दूतेन बलीमुखेन प्रतापघोराशनिनेव दग्धा ।
लङ्का समस्ता भसितावशेषा स्वप्ने मया सम्प्रति हन्त दृष्टा ॥ ९४ ॥

पुनश्च रामस्य बलैः कपीन्द्रैः प्रभग्नहर्म्योपवना गतश्रीः ।
लङ्कापुरीयं पतिता समुद्रे दृष्टाद्य निद्रासमये समस्ता ॥ ९५ ॥

एवं लङ्कानगर्या अपि तदधिपते रक्षसां तद्वशाना-
मत्यासन्नः प्रणाशो भवति रघुपतेर्भर्तुरस्या जयश्च ।
तत् सीतां रामपत्नीमकरुणमसकृद्धर्त्सितां तर्जिताम-
प्यार्द्रां प्रेम्णा परेषु प्रणमत मधुरैः सान्त्वयध्वं च वाक्यैः ॥ ९६ ॥

इति श्रीकोच्चुण्णिराजविरचिते
श्रीरामचरितमहाकाव्यपूरणे
सीतादर्शनं नाम
त्रयोविंशः सर्गः



# चतुर्विंशः सर्गः

धीमान् हनूमांस्त्रिजटावचस्तन्निशाचरस्त्रीपरितर्जनानि ।
दशास्यवाक्यानि विदेहपुत्रीसूक्तं च शुश्राव निलीनमूर्तिः ॥ १ ॥

स्वीकृत्य सत्यं त्रिजटामतं तत्ततो विदूरेऽखिलराक्षसीषु ।
सुप्तासु सीतापरिसान्त्वनाय शिष्यो रवेर्मारुतिराबभाषे ॥ २ ॥

इन्द्रोऽग्रजन्मा पुरुषोत्तमस्य सख्यं चकार स्वयमेव येन ।
स सूर्यवंशामृतवारिराशे राजाऽभवत् पङ्क्तिरथो महात्मा ॥ ३ ॥

ज्येष्ठः सुतस्तस्य गुणाभिरामो रामः पितू रक्षितुमेव सत्यम् ।
राज्यं समुत्सृज्य वनं प्रविष्टस्त्याज्यं हि धर्माय सतां समस्तम् ॥ ४ ॥

वीरः सुमित्रातनयोऽनुजन्मा तमाशु भक्तोऽनुजगाम रामम् ।
समुच्चयं धर्ममिवातिरम्या ज्योत्स्नेव चन्द्रं महिषी च सीता ॥ ५ ॥

तेजोमयेनाथ निषूदितानि रामेण तस्मिन् विपिने बहूनि ।
रक्षःसहस्राणि तमोमयानि तमांसि नो तत्र हि यत्र तेजः ॥ ६ ॥

विनाकृते पङ्क्तिरथात्मजाभ्यां तत्राश्रमे तां क्षितिजां वसन्तीम् ।
मायाबलान्मस्करिरूपधारी दशानन तस्करवज्जहार ॥ ७ ॥

सलक्ष्मणस्तामथ मार्गमाणो रामः शरण्यः शरणं गताय ।
सुग्रीवनाम्ने हरये कपीनां राज्यं ददौ बालिनमाशु हत्वा ॥ ८ ॥

तां रामपत्नीं परिमार्गमाणाः सुग्रीववाक्यात् कपिपुङ्गवास्ते।
सर्वेषु लोकेषु चरन्ति येषां वायोरिव क्वापि गतेर्न सङ्गः ॥ ९ ॥

तत्राहमेकः प्लवगो हनूमान् जटायुषः पूर्वभवस्य वाक्यात्।
सम्पातिनाम्नोऽम्बुनिधिं विलङ्घ्य पश्यामि लङ्कानगरेऽत्र सीताम् ॥ १० ॥

एतावदुक्त्वा वचनं हनूमान् स रामदूतो विरराम धीमान्।
सीतोन्मुखी तद्वचनात्तदाऽसीद्धृता निदाघान्त इवाब्दवर्षात् ॥ ११ ॥

तद्वृक्षशाखानिलयं निरीक्ष्य तेजोमयं मारुतिदिव्यरूपम्।
सीता प्रहर्षाद्भुतसिन्धुमग्ना वितर्कयन्त्येवमुवाच मन्दम् ॥ १२ ॥

स्वप्नोऽत्र किं न्वेष न मेऽस्ति निद्रा सोन्मादता किं मम धीः प्रसन्ना।
यदुक्तमेतेन वनौकसा तत् सत्यं वितन्वन्त्वखिलाः सुरेन्द्राः ॥ १३ ॥

ततो हनूमानवतीर्य वृक्षान्नत्वोपसृत्याभ्यवदद्विनीतः।
का त्वं शुभे दुःखभयाभिभूता किं कापि देवोत्तमवल्लभासु ॥ १४ ॥

सीतेत्यहं त्वामिह तर्कयामि या रावणेनापहृता छलेन।
त्वं सैव चेद्ब्रूहि यथार्थतो मां ग्राह्या सदुक्तिर्हि परात् प्रमाणात् ॥ १५ ॥

इत्याञ्जनेयस्य वचो निशम्य सीतात्मतत्त्वं स्फुटमावभाषे।
विदेहजा पङ्क्तिरथस्नुषाहं रामस्य भार्या पुरुषोत्तमस्य ॥ १६ ॥

सत्यप्रतिज्ञं पितरं चिकीर्षुं रामं वनं यान्तमनुप्रयातौ।
भ्राता सुमित्रातनयः प्रियाहं चामुष्य सोढुं विरहं न शक्तौ ॥ १७ ॥

दशाननस्तत्र तु वञ्चयित्वा सलक्ष्मणं राममपाहरन्माम्।
इतः परस्तान्मम दत्तमायुरनेन मासद्वयमात्रकेण ॥ १८ ॥

उक्त्वेति सीतामधिकं रुदन्तीं स सान्त्वयन्मारुतिराबभाषे ।
न तादृशीरोदनदर्शनं हि विषह्यतां गच्छति तादृशानाम्      ॥ १९ ॥

सुग्रीवमन्त्री पवनात्मजन्मा श्रीरामदूतोऽहमिहागतोऽस्मि ।
मा भैः समाश्वस्तमनाः शृणु त्वं भद्रं भविष्यत्यचिराद्भवत्याः      ॥ २० ॥

वेदोपवेदादिसमस्तविद्यापारङ्गतो मङ्गलगात्रि रामः ।
त्वां पर्यपृच्छत् कुशलं महात्मा सकामताप्रणयानुकम्पम्      ॥ २१ ॥

तस्यानुजस्तत्सदृशो गुणेन त्वां लक्ष्मणः स प्रणिपत्य मूर्ध्ना ।
अपृच्छदार्ये कुशलं मुहुस्ते भर्तुः सखा च प्लवगाधिनाथः      ॥ २२ ॥

ततो हनूमानिति सान्त्वितायाः किञ्चित्समाश्वस्तधियश्च तस्याः ।
विनीतवेषोऽन्तिकमाससाद निवेदयिष्यन्नतिगूढवृत्तम्      ॥ २३ ॥

यथा यथा सोऽन्तिकमाससाद सीतातिभीता कपिरूपिणे तम् ।
तथा तथा रावणमेव मेने सर्वं भयाय द्युतिभीतिभाजाम्      ॥ २४ ॥

ततोऽधिकं शोकभयार्दिता सा प्रवेपमाना मिथिलेन्द्रपुत्री ।
पराङ्मुखी मारुतिमानमन्तं मुहुर्मुहुर्नैक्षत भक्तिमन्तम्      ॥ २५ ॥

सोऽथानुभावैरनुमीय भावं तस्याः समुत्पादयितुं प्रहर्षम् ।
पुण्यैर्मनोज्ञैः श्रवणानुकूलै रामस्तवैः स्वास्यमलञ्चकार      ॥ २६ ॥

ये ये गुणाः सन्ति सुरोत्तमेषु जगद्धिता विष्णुशिवादिकेषु ।
परस्परस्नेहवशान्मिलित्वा ते सन्ति रामे सकलाभिरामे      ॥ २७ ॥

सल्लक्षणैः पूर्णमनन्यलभ्यै रामस्य रूपं हृदये निधाय ।
सामुद्रशास्त्रस्य स सूत्रकारः प्रोवाच नूनं शुभलक्षणानि      ॥ २८ ॥

इन्दीवरश्यामरुचिर्जनानां सन्तापहन्ता कमलावलम्बः ।
सदाशुगः कार्मुकचित्ररूपश्चकास्ति रामो नवमेघतुल्यः ॥ २९ ॥

तस्यानुजो लक्ष्मणनामधेयस्तुल्यो गुणैः शङ्खमृणालवर्णः ।
तौ भ्रातरौ तत्र वने प्रणष्टां विचेरतुस्त्वां परिमार्गमाणौ ॥ ३० ॥

तौ बालिना त्याजितसर्वसौख्यं सुग्रीवमासेदतुर्ऋष्यमूके ।
अन्योन्यवृत्तश्रवणेन रामसुग्रीवयोः सख्यमभूच्च मुख्यम् ॥ ३१ ॥

रामोऽकरोत् बालिवधप्रतिज्ञां हरिर्भवन्मार्गणसम्प्रतिज्ञाम् ।
सुग्रींवनामेति परस्परं तौ महोपकारोद्यमिनावभूताम् ॥ ३२ ॥

रामस्ततस्त्वेकशरेण हत्वा द्राग्बालिनं वानरसार्वभौमम् ।
चकार सुग्रीवममेयतेजाः किं दुष्करं देवि महत्तमानाम् ॥ ३३ ॥

ततस्तु सुग्रीवनियोगहेतोराशासु सर्वासु गताः प्लवङ्गाः ।
प्रयत्नतस्त्वां परिमार्गमाणाः समीरनुन्ना इव वारिवाहाः ॥ ३४ ॥

तत्राङ्गदो बालिसुतः प्रयातः सहास्मदाद्यैः कपिभिर्यमाशाम् ।
अथात्यगाद्विन्ध्यगुहां गतानां कालावधिर्नः प्रभुणा कृतो यः ॥ ३५ ॥

ततस्तत्रादर्शनतो विषण्णे प्रायोपविष्टेऽखिलकीशसैन्ये ।
ऊचेऽङ्गदस्त्वद्धरणादिकापत्परम्परां तीव्रशुचा भृशार्तः ॥ ३६ ॥

सम्पातिगृध्रः सहजस्य मृत्युं जटायुषः पङ्क्तिमुखप्रणीतम् ।
श्रुत्वा तदा त्वामवदत् स पश्यन्नत्र स्थितां प्रत्युपकारकामः ॥ ३७ ॥

समुद्रमासाद्य पुनर्विषण्णे स्थितेऽखिले वानरराजसैन्ये ।
उल्लङ्घ्य वाराशिमपारकल्पं प्राप्तोऽहमत्रास्तभयोऽसहायः ॥ ३९ ॥

लङ्कापुरीयं सकला रजन्यां दृष्टा मया राक्षससङ्घपूर्णा ।
अत्यन्तगूढं चरतात्र देवि त्वं चाधुना दुःखभयाभिभूता ॥ ३९ ॥

पुत्रोऽस्मि वायोः पितृतुल्यवीर्यः सुग्रीवमन्त्री रघुनाथदूतः ।
त्वां द्रष्टुमेवात्र समागतोऽहं तन्मुञ्च शोकं भज च प्रहर्षम् ॥ ४० ॥

रामस्य दूतं तव किङ्करं मां पश्याभिभाषस्व च भक्तिनम्रम् ।
एतावदुक्त्वा विरराम सीताभक्तिप्रवाहाकुलितो हनूमान् ॥ ४१ ॥

प्राग्वामनेत्रस्फुरणादिभिर्यः सम्भावितः स्वाभ्युदयस्तयासीत् ।
तैस्तैर्हनूमद्वचनैर्यथार्थैः सुनिश्चितत्वं स तदा प्रपेदे ॥ ४२ ॥

ऊचे च विश्वासयुताथ सीता मन्ये शुभं लौकिकवादस्तदेतत् ।
जीवन्तमानन्दभरोऽभ्युपैति नूनं नरं वर्षशतादपीति ॥ ४३ ॥

ततो हनूमानुपसृत्य सीतां तद्रामनामाङ्कितमङ्गुलीयम् ।
सन्दर्शयन् राममिवाभ्युपेतमुवाच वाग्मी विनयावनम्रः ॥ ४४ ॥

विश्वासमुत्पादयितुं भवत्या रामः स्वनामाङ्कितमङ्गुलीयम् ।
यद्दत्तवान् हस्तपुटे तदा मे पश्यैतदादत्स्व च रम्यमद्य ॥ ४५ ॥

आलोक्य तत् भर्तृकराब्जशाखाविभूषणं मारुतिनोपनीतम् ।
भर्तारमेवागतमन्तरङ्गे सा मन्यमानाऽमितमाप हर्षम् ॥ ४६ ॥

तस्यास्तदास्यं श्रियमाप पुष्टां स्वक्षिभ्रुकेशं सुरदं सुनासम् ।
दलालिशैवालककेसरालीवराटरम्यं शरदीव पद्मम् ॥ ४७ ॥

सात्यादरेण प्रतिगृह्य भर्तुस्तदङ्गुलीयं परमाभिरामम् ।
मेने तदात्मानमलं कृतार्था सीता पुनर्जातमिवातिहृष्टा ॥ ४८

प्रभातवेलेव दिनेशविम्बं सन्तानवल्लीव नवप्रसूनम्।
शशाङ्कलेखेव वलर्क्षपक्षं सीताङ्गुलीयं तदवाप्य रेजे ॥ ४९ ॥

अथाञ्जनेयं प्रशशंस साध्वी सा विक्रमश्लाघ्यतमस्त्वमेव।
येन त्वयाब्धिः शतयोजनातिविस्तारवान् वत्सपदीकृतोऽयम् ॥ ५० ॥

येनाधुनैकेन सलीलमेव प्रधर्षितेयं दशकण्ठगुप्ता।
लङ्कापुरी वानरवर्य तस्मिंस्त्वय्येव पूर्णो भवति प्रतापः ॥ ५१ ॥

नित्यं सुखानामुचितोऽसुखानां नैवोचितः सर्वगुणोपपन्नः।
दिष्ट्याद्य रामः कुशली महात्मा सलक्ष्मणः शस्त्रभृतां वरिष्ठः ॥ ५२ ॥

सलक्ष्मणश्चेत् कुशली महात्मा रामः कुतो नावति दुःखितां माम्।
यस्मिन्ननन्ता विलसन्ति नित्यं सर्वेऽपि कल्याणगुणा हनूमन् ॥ ५३ ॥

सम्पूर्णतां प्राप्तमपि प्रकामं न पौरुषं दैवमहो निहन्ति।
इत्येव मन्ये कपिराजमन्त्रिन् यदद्य मां रक्षति नैव रामः ॥ ५४ ॥

कच्चित् सुखी मत्परिपालनार्थमुद्योगमद्यातनुते स वीरः।
बाणं यदीयं यमदण्डकल्पं सोढुं न शक्तं त्रिजगत् समस्तम् ॥ ५५ ॥

किं मां महादुःखसमुद्रतोऽस्मात् सन्तारयिष्यत्यमितप्रभावः।
सौमित्रिरत्यन्तविशुद्धभावो यो राममत्यादरतोऽनुयाति ॥ ५६ ॥

किं प्रेषयिष्यत्यमितां चमूं स्वां मत्पालनार्थं भरतः स राजा।
यो रामभक्त्याद्य करोति नन्दिग्रामे वसन् राज्यमहो तपस्वी ॥ ५७ ॥

मद्रक्षणार्थं यतते किमार्यः सुग्रीवनामा प्लवगाधिनाथः।
रामेण यः प्रापितवान् कपीनां राज्यं स्वसख्यं च परैरलभ्यम् ॥ ५८ ॥

दशाननं रामशराग्निदग्धं सुहृत्समूहैः सहितं समस्तैः ।
द्रक्ष्यामि कच्चिन्नचिरेण पापं दन्दह्यते यो भुवनं समस्तम् ॥ ५९ ॥

विना मया नष्टरुचिः स रामः कामेन किं न्वद्य गुणाभिरामः ।
दिने दिने हा परिहीयमाणो विना रजन्येन्दुरिवातपेन ॥ ६० ॥

प्रियस्य कर्माणि वदाखिलानि महामते तच्छ्रवणोत्सुकाहम् ।
ममातनोति प्रसभप्रसक्ता तत्सङ्गमाशाद्य सखीव रक्षाम् ॥ ६१ ॥

इतीरयित्वा विरराम सीता सा श्रोतुकामा दयितप्रवृत्तिम् ।
बध्वाञ्जलिं मूर्ध्नि तनो हनूमान् धीमानुवाचोत्तरमुत्तमां ताम् ॥ ६२ ॥

अत्र स्थितां त्वां न तु वेत्ति रामः कल्याण्यतो नानयति क्षणेन ।
त्वद्दर्शनार्थं कुरुतेऽतियत्नं तत् किङ्करेणाद्य मयासि दृष्टा ॥ ६३ ॥

श्रुत्वैव मत्तस्तव वृत्तमेतद्रामः समागत्य सकीशसैन्यः ।
विष्टम्भयित्वा विशिखैः समुद्रं लङ्कां करिष्यत्यपनीतदोषाम् ॥ ६४ ॥

तत्रान्तरायः ससुरासुरर्षिगन्धर्वविद्याधरसिद्धसाध्यः ।
लोकोऽखिलश्चेद्भविताशु रामवह्नौ स संशुष्कतृणोच्चयः स्यात् ॥ ६५ ॥

स्नानाशनस्वापविरोधमाधिमौत्सुक्यमोहारतिकार्श्यदाहम् ।
करोति रामस्य भवद्वियोगः सुदुस्सहो व्याधिरिवोग्ररूपः ॥ ६६ ॥

यतोऽन्तरङ्गेण भवद्गतेन चैतन्यशून्यं शुभगात्रि रामम् ।
चैतन्यवन्तं सततं विधातुं सुग्रीवसौमित्रिमती भजेते ॥ ६७ ॥

रम्याणि वस्तून्यखिलानि हन्त जातान्यरम्याणि रघूत्तमस्य ।
भवद्वियोगे रुचिविप्रयोगे सन्तीव भोज्यानि गदार्दितस्य ॥ ६८ ॥

अल्पावशिष्टासु निशासु दीनः कृच्छ्रेण निद्रामधिगम्य रामः ।
वदन् शुभं नाम मुहुर्भवत्याः प्राप्नोति नित्यं सहसा प्रबोधम् ॥ ६९ ॥

तस्मिन् वियोगे तव योऽप्युग्रः शोकस्ततोऽपि द्विगुणोऽस्ति तस्य ।
कामस्त्वैकः खलु शोकहेतुः कारुण्यकामौ तु रघूत्तमस्य ॥ ७० ॥

श्रुत्वा तु वार्तां निजवल्लभस्य खिन्ना प्रसन्ना च बभूव सीता ।
शोकः प्रियस्येति जगाम खेदं स्वस्मिन् महाकाम इति प्रसादम् ॥ ७१ ॥

पतिव्रता सा पतिशोकतप्ता प्रापातिघोरामथ तामवस्थाम् ।
या मृत्युकल्पा हृदयेऽतिमात्रं हनूमतः सम्भ्रममाततान ॥ ७२ ॥

तथाविधां तां रघुवीरपत्नीं तस्मान्महादुःखभराम्बुराशेः ।
सद्यः समुद्धर्तुमना हनूमान् व्यज्ञापयद्भक्तिभरावनम्रः ॥ ७३ ॥

त्वां योजयामि द्रुतमेव तेन भर्त्रा शुभे प्रस्रवणस्थितेन ।
तीर्त्वाऽम्बराम्भोनिधिमाशुपृष्ठमारोह मे देवि विसृज्य शङ्काम् ॥ ७४ ॥

विज्ञाप्य धीमानिति कामरूपः स सञ्जजृम्भे सहसा हनूमान् ।
सीता तमालोक्य गिरीन्द्रतुल्यं सश्लाघमूचेऽद्भुतहर्षमग्ना ॥ ७५ ॥

लङ्कामपीमां सह रावणेन नेतुं समर्थोऽसि महाबलस्त्वम् ।
तथापि रामान्न परं स्पृशामि बलाद्गृहीतापि दशाननेन ॥ ७६ ॥

सुग्रीवसौमित्रियुतं तदत्र वेगादुपस्थापय राघवं त्वम् ।
स एव कीशेश नयविनतो मां हत्वा दशास्यं युधि युक्तकारी ॥ ७७ ॥

अथाभिनन्द्योत्तरमुत्तमायास्तस्या वचस्तत् पवमानसूनुः ।
पुनर्ययाचे प्रतियातुकामः सीतामभिज्ञानमभिज्ञमौलिः ॥ ७८ ॥

सा सन्दिदेशाथ हरिप्रवीरं सीता प्रयाणाभिमुखं नमन्तम् ।
प्राप्यार्यपुत्रं कुशलानुयोगपुरस्सरं मद्वचनं वदेदम् ॥ ७९ ॥

प्राक् चित्रकूटाद्रिवरस्य पादे पूर्वोत्तरे पुष्पितकाननाढ्ये ।
विहृत्य साकं भवतातिवेलमुपाविशं सश्रममाश्रमेऽहम् ॥ ८० ॥

काकस्तदैकः समुपाजगाम मां स्वेच्छया तं स्म निवारयामि ।
उद्वम्य लोष्टं स कुचान्तरे मां व्यदारयत्तुण्डनखेन रुष्टः ॥ ८१ ॥

दृष्ट्वा ततोऽहं भवतोपहासैः प्रस्तोभिता साश्रुमुखी सरोषा ।
अथानुनीता भवतोऽङ्कमध्ये कृत्वा शिरस्तत्र सुखेन सुप्ता ॥ ८२ ॥

सुप्तोत्थितायाश्च ममाङ्कमध्ये शिरो निधायाथ भवान् प्रसुप्तः ।
काकस्तदाभ्येत्य पुनर्नखाग्रैर्व्यदारयन्मां शितया च चञ्च्वा ॥ ८३ ॥

समुक्षितः शोणितबिन्दुभिस्त्वं ततः प्रबुद्धः प्रविदारितां माम् ।
दृष्ट्वा खगं तं च सरक्ततुण्डनखं क्रुधाभूर्ज्वलितोऽतिमात्रम् ॥ ८४ ॥

दर्भं ततः संस्तरतः प्रगृह्य ब्रह्मास्त्रमन्त्रैर्विधिनाभिमन्त्र्य ।
काकाय तस्मै व्यसृजः करालकालानलाभं तरसा खलाय ॥ ८५ ॥

अनुद्रुतः शक्रसुतः स पक्षी दर्भेण तेनाशनिसन्निभेन ।
अन्यत्र लब्ध्वा शरणं न कश्चित्त्वामेव भूयः शरणं प्रपेदे ॥ ८६ ॥

अपाहरस्तस्य तदेकमक्षि न जीवितं त्वं शरणागतस्य ।
एवं भवान् दृष्टमहप्रभावः कुतो न मां रक्षति राक्षसेन्द्रात् ॥ ८७ ॥

मम प्रणष्टे तिलके त्वयाथ मनःशिलायास्तिलकं कपोले ।
निवेशितं संस्मर राघवेति वाच्यः स वीरो भवता हनूमन् ॥ ८८ ॥

ततः पटान्ते पिहितं स्थितं सा चूडामणिं दिव्यरुचिं प्रगृह्य।
रामाय देयोऽयमिति ब्रुवाणा तस्मै ददौ मूर्तमिवानुरागम् ॥ ८९ ॥

ततः कराभ्यां प्रतिगृह्य दिव्यं चूडामणिं तं पवमानसूनुः।
प्रदक्षिणीकृत्य पुनः पुनस्तां सीतां तपस्सिद्धिमिवाननाम ॥ ९० ॥

विदेहजादर्शनसम्प्रहृष्टस्तत्सान्त्वनाद्यैः स हरिः कृतार्थः।
तेजोविशेषैरभिपूर्यमाणः प्रस्थातुकामः पुनरब्रवीत्ताम् ॥ ९१ ॥

अद्रीन्द्रैर्मलयमहेन्द्रमेरुविन्ध्यैरप्यन्यैः सपदि शपे फलैः समूलैः।
आनेष्याम्यहमिह राघवं तमाशु त्वां नेष्यत्यसुसदृशीमितः पुनर्यः ॥ ९२ ॥

इत्युक्त्वा प्रणतशिरास्तदभ्यनुज्ञां सम्प्राप्य प्रथितयशाः समीरसूनुः।
तद्देशाद्द्रुतमपसृत्य चेतसाऽगाद्रामं तं स्मृतिविषयः सतां सदा यः ॥ ९३ ॥

इति श्रीकोच्चुण्णिराजविरचिते
श्रीरामचरितमहाकाव्यपूरणे
सीतासान्त्वनं नाम
चतुर्विंशोऽध्यायः सर्गः

# पञ्चविंशः सर्गः

अथ सञ्चिन्तयामास कार्यशेषं स मारुतिः ।
अशेषता हि कार्याणां परा काष्ठा हि सम्मता ॥ १ ॥

राक्षसान् मृदुतां नेतुं प्रयोक्ष्येऽत्र पराक्रमम् ।
न हि दण्डात् परः कश्चिद् दुष्टानां दोषनाशनः ॥ २ ॥

रक्षांसि भुक्तदुःखानि देव्यै द्रुह्यन्ति नो पुरा ।
द्रुह्यन्ति नापरेभ्यो हि स्वानुमानेन दुःखिनः ॥ ३ ॥

सर्वथाश्वासनं कार्यमार्याया नात्र संशयः ।
सलक्ष्मणहरीन्द्रस्य रामस्येयं हि जीवितम् ॥ ४ ॥

तत्त्वेन बुद्धिर्विज्ञेया रावणस्य रिपोर्मया ।
सद्बुद्धिः श्रेयसो हेतुर्दुर्बुद्धिर्ह्यपरस्य च ॥ ५ ॥

मम ज्ञेयं बलं चास्य रावणस्य दुरात्मनः ।
बलेषु हि विचित्रेषु जगत् सर्वं प्रतिष्ठितम् ॥ ६ ॥

तस्मादस्य नृशंसस्य मनोनेत्रप्रमोदनम् ।
इदं वनं नाशयामि चित्रं चैत्ररथोपमम् ॥ ७ ॥

उद्यानभङ्गेनानेन क्रोधं यास्यति रावणः ।
अहेतावपि यस्यास्ति क्रोधो हेतौ तु का कथा ॥ ८ ॥

मद्वधाय महत् सैन्यमथादेक्ष्यति रावणः ।
मया हतेऽखिले तस्मिन् स्वयं युद्धं करिष्यति ॥ ९ ॥

तदा मतिं बलं चास्य वचोभिः कर्मभिः स्फुटम् ।
ज्ञात्वा सुखेन यास्यामि हरीश्वरनिवेशनम् ॥ १० ॥

इति निश्चित्य तरसा मारुतिः कपिकुञ्जरः ।
तद्वनं हन्तुमारेभे प्रतापानलदुःसहः ॥ ११ ॥

हतास्तदूरुवेगेन द्रुमाः पुष्पादिशोभिताः ।
पेतुः कूटा इवाद्रीणां वज्रेणोज्ज्वलधातवः ॥ १२ ॥

सपत्रपल्लवलतान् सोऽक्षिपद्विविधान् द्रुमान् ।
वायुश्चण्ड इवाम्भोदान् सन्ध्यारागतटिद्युतान् ॥ १३ ॥

उन्मूलितैर्विदलितैर्भग्नैश्चूर्णीकृतैरपि ।
पलाशिभिरभूत् सा भूमिर्विषमा रणभूरिव ॥ १४ ॥

पतद्वृक्षभ्रमत्सत्त्वपतद्घोररवस्तदा ।
निर्घात इव सञ्जज्ञे लङ्काविध्वंससूचकः ॥ १५ ॥

वनं तद्रावणस्येव मनो भग्नं हनूमता ।
यत्र प्रतिष्ठिता सीता न किञ्चित्सुखमृच्छति ॥ १६ ॥

विक्रमं तं स्वशिष्यस्य न दृष्टं दैवतेष्वपि ।
समीक्षितुमिवादित्यः सरागोऽभ्युदितस्तदा ॥ १७ ॥

ततस्तत्कर्म राक्षस्यो रावणाय न्यवेदयन् ।
भीता भये हि भृत्यानां प्रभुरेव परायणम् ॥ १८ ॥

तन्निशम्याप्रियं घोरं क्रोधाज्जज्वाल रावणः ।
तदास्य रूपमभवद्दुर्दर्शं सुहृदामपि ॥ १९ ॥

अथ तं वानरं हन्तुं रावणः स्वसमान् रणे ।
किङ्करान् प्रेषयामास याम्यानिव स किङ्करान् ॥ २० ॥

तमासाद्याशु ते सर्वे घोररूपा जगद्द्रुहः ।
न किञ्चिद्बाधितुं शेकुर्बलवन्तमित्रामयाः ॥ २१ ॥

हनूमान् रामदासः स्वं मुख्यं बलमघोषयत् ।
शत्रूणां भीतये स्वामिकीर्तिप्रख्यापनाय च ॥ २२ ॥

तोरणस्थं गृहीत्वा स हरिः परिघमायसम् ।
न्यूनेन स्वभुजात्तेन सावज्ञं निजघान तान् ॥ २३ ॥

असृक्गात्रासभूता सा लङ्काऽभूदतिदारुणा ।
अपीतपूर्वं केनापि राक्षसास्रं तदा पपौ ॥ २४ ॥

उक्तं स्वैर्विकृतैरङ्गैर्वाचोचू रावणं पुनः ।
हनूमत्कृततत्सैन्यध्वंसं केऽप्याशराः द्रुताः ॥ २५ ॥

तस्य तत्सैन्यनिधनश्रवणात् कोपपात्रकः ।
तदा जज्वालातिमात्रमाज्यादिव हुताशनः ॥ २६ ॥

आदिदेश हनूमन्तं निहन्तुं जम्बुमालिनम् ।
सोऽथासाध्यं गदं हन्तुं भिषक्पाश इवौषधम् ॥ २७ ॥

हनूमान् किङ्करान् हत्वा चैत्यप्रासादमुत्तमम् ।
बभञ्ज राक्षसेन्द्रस्य यशश्चयमिव स्थितम् ॥ २८ ॥

जम्बुमाली तमासाद्य हनूमन्तं स्वविक्रमैः ।
शशाक नो कम्पयितुं गिरीन्द्रमिव मारुतः ॥ २९ ॥

तेनैव परिघेणाथ राक्षसं जम्बुमालिनम् ।
हनूमांस्तण्डुलमिव चूर्णयामास वेगतः ॥ ३० ॥

पौलस्त्यस्तद्वधं श्रुत्वा सप्त मन्त्रिसुतान् पुनः ।
आज्ञप्तवान् स्वप्रतापवह्निज्वालोपमान् रुषा ॥ ३१ ॥

श्रुत्वा तु तज्जनन्यस्तान् हनुमत्प्रधनोग्रतान् ।
मृतान् मत्वा शुचा शेपुः कामान्धं राक्षसेश्वरम् ॥ ३२ ॥

गन्धोत्कटास्ते निर्जग्मुर्मन्त्रिपुत्रा महौजसः ।
पौलस्त्यहस्तिराजस्य सप्तदानझरा इव ॥ ३३ ॥

ततस्तैः सम्प्रयुक्तानि तस्मिन् शस्त्राण्यशेषतः ।
भाग्यहीनैः कृतानीव कर्माण्यफलतां ययुः ॥ ३४ ॥

पुनस्तं राक्षसगणं दशाननविवर्धितम् ।
क्रीडन् बभञ्ज बलवानुद्यानमिव मारुतिः ॥ ३५ ॥

रावणः सबलान् श्रुत्वा मन्त्रिपुत्रान् हतान् रणे ।
पञ्चप्राणाधिकगुणानादिदेश चमूपतीन् ॥ ३६ ॥

ते तमासाद्य गम्भीरमप्रमेयमिवार्णवम् ।
न शेकुरुल्लङ्घयितुं दुर्बुद्धय इवागमम् ॥ ३७ ॥

बहुशो निर्जितसुरैर्युद्धं तस्य बभूव तैः ।
देवीवाहस्य सिंहस्य दैतेयैरिव दारुणम् ॥ ३८ ॥

पदाभ्यां युधि हस्ताभ्यां नखैर्दन्तैश्च मारुतिः ।
जघान राक्षसान् क्रुद्धः सिंहो मत्तगजानिव ॥ ३९ ॥

सहस्रशोऽस्रसलिलाः स्रवन्त्यस्तत्र सुस्रुवुः ।
रक्षःशरीराद्रिभवाः कङ्कवायसमोददाः ॥ ४० ॥

तत्र गृध्रादयस्तृप्ता मांसै रक्तैश्च रक्षसाम् ।
हनूमद्विक्रमश्लाघां चक्रुर्नैकविधै रवैः ॥ ४१ ॥

तं नाशं रावणः श्रुत्वा दक्षमक्षमुदैक्षत ।
त्वमेव तेन युद्धाय याहीति निगदन्निव ॥ ४२ ॥

तपःप्रसादितविधिर्दिव्यायुधरथादिभृत् ।
पुत्रोऽक्षो राक्षसेन्द्रस्य रराज प्रतिबिम्बवत् ॥ ४३ ॥

तमालोक्य हनूमन्तं विस्मयं परमं ययौ ।
अक्षः किञ्चित् साध्वसं च नरसिंहसमाकृतिम् ॥ ४४ ॥

अक्षं च वीक्ष्य सबलं गुणवन्तमपूजयत् ।
मनसा मारुतसुतो बभूव च रणोत्सुकः ॥ ४५ ॥

युद्धं तयोरभूज्जातलोकम्पमकम्प्ययोः ।
अक्षस्य सप्रयत्नस्य सलीलस्य च मारुतेः ॥ ४६ ॥

अक्षस्य शरवर्षाणि हर्षाज्जग्राह मारुतिः ।
अक्षः शिलादिवर्षाणि दुःखात् सेहे हनूमतः ॥ ४७ ॥

वर्धमानं क्रमेणाक्षं मारुतिर्दीप्ततेजसम् ।
वीक्ष्य नाशयितुं चक्रे मनोऽनलमिव द्रुतम् ॥ ४८ ॥

तं पादयोर्गृहीत्वाथ भ्रामयित्वा सहस्रशः ।
चिक्षेप मारुतिर्दूरे गरुत्मानिव पन्नगम् ॥ ४९ ॥

स निर्मथितसर्वाङ्गः पपात गतजीवितः ।
स्वाङ्गेभ्यः कौणपाक्षिभ्यश्चास्रधाराः प्रवर्तयन् ॥ ५० ॥

तत्रावशिष्टाः सभया दुद्रुवुः पिशिताशनाः ।
मारुतेर्विक्रमाच्चण्डात्तूला इव नभस्वतः ॥ ५१ ॥

अक्षस्य निधनं श्रुत्वा मुमोहाशु दशाननः ।
पुत्रस्य गुणपूर्णस्य नाशं घोरं सहेत कः ॥ ५२ ॥

ततः कथञ्चिदाश्वास्य वीरमिन्द्रजितं सुतम् ।
उवाच रोषकलुषः स भोगीव विनिश्वसन् ॥ ५३ ॥

मत्तोऽपि त्वं विशिष्टोऽसि मायया प्रज्ञया श्रिया ।
तपोवरप्रभावाभ्यां यशसा विक्रमेण च ॥ ५४ ॥

जितामरान् निशिचरान् बहूनक्षं च तेऽनुजम् ।
जघान लीलया योऽत्र सोऽयं न प्राकृतः कपिः ॥ ५५ ॥

बालिसुग्रीवनीलादीन् बहून् जानामि वानरान् ।
न तेष्वेतादृशं वीर्यं न रूपं न च दक्षता ॥ ५६ ॥

अधृष्यस्य शमायास्य तद्भवानेव गच्छतु ।
अम्भोनिधावेव याति शमं हि बडवानलः ॥ ५७ ॥

किरीटमिव मूर्ध्ना स पितुः शासनमुद्वहन् ।
स्वगणैरर्चितो रेजे उपेन्द्र इव निर्जरैः ॥ ५८ ॥

मुञ्चन् सिंहारवं दिव्यं रथमारुह्य कार्मुकी ।
शक्रचापस्तनितवानम्भोद इव सोऽगमत् ॥ ५९ ॥

श्रुत्वा तमिन्द्रजिच्चापघोषं हर्षेण मारुतिः ।
उन्ननादातिगम्भीरं केसरीव घनारवम् ॥ ६० ॥

तयोरथाद्भुतं युद्धं रावणानिलपुत्रयोः ।
महोत्सवमिव द्रष्टुमाजग्मुर्नारदादयः ॥ ६१ ॥

हनूमानिन्द्रजिच्चाथ रणाय रणनिर्भयौ ।
सुरासुरेन्द्राविव तौ बद्धवैरौ समीयतुः ॥ ६२ ॥

दक्षौ लब्ध्वाद्भुतवरौ शौर्यवेगबलोद्धतौ ।
चक्रतुस्तौ रणं घोरं वीरलोकमनोहरम् ॥ ६३ ॥

परस्परान्तरप्रेप्सू परस्परजयैषिणौ ।
बभूवतुस्तौ सङ्ग्रामे परस्परसुदुःसहौ ॥ ६४ ॥

अमोघानेकशस्त्रास्त्रमोघीभावाद्धनूमतः ।
निश्चित्यावध्यतां सोऽथ चिन्तयामास रावणिः ॥ ६५ ॥

सर्वथास्य त्ववध्यस्य बन्धनायाशु दुर्मतिः ।
ब्राह्ममस्त्रं प्रयोक्ष्यामि साध्यमेव हि सिध्यति ॥ ६६ ॥

हनूमन्तमथोद्दिश्य जयाभासेच्छुराशरः ।
शरं पैतामहैर्मन्त्रैर्विससर्जाभिमन्त्रितम् ॥ ६७ ॥

स्वीचक्रे सोऽस्त्रबन्धं तं हरिर्मानयितुं विधिम् ।
मान्यानां माननं यत्तत् सतां हि सुदृढं व्रतम् ॥ ६८ ॥

व्यामोचयन्नस्त्रबन्धाद्रज्जुबन्धैस्तमाशराः ।
कथमप्यन्यबन्धं हि नास्त्रबन्धोऽनुवर्तते ॥ ६९ ॥

तदस्त्रबन्धान्मुक्तं तं ज्ञात्वा तत्त्वविदिन्द्रजित् ।
लङ्का संशयिता सर्वेत्यन्तश्चिन्ताकुलोऽभवत् ॥ ७० ॥

अथ रक्षांसि बद्धं त कपिं रावणसन्निधिम् ।
निन्युर्यत्नात्समाकृष्य मत्तं वन्यमिव द्विपम् ॥ ७१ ॥

रावणं बहुलाधर्मं ददर्श च महाकपिः ।
प्रचुराशीविषाक्रान्तं मलयाद्रिमिवोच्छ्रितम् ॥ ७२ ॥

हनूमांस्तेजसाविष्टं बहुमेने दशाननम् ।
अत्युत्कटेन संयुक्तमधर्मेणाप्यगर्हयत् ॥ ७३ ॥

तं ददर्श च पौलस्त्यस्तेजोवन्तं कृतागसम् ।
भयप्रकम्पितमनाः क्रोधोद्वृत्ताक्षिभीषणः ॥ ७४ ॥

वानरं तमथापृच्छत् प्रहस्तो रावणाज्ञया ।
कपिरूपधरः कस्त्वं तेजसा सर्वतोऽधिकः ॥ ७५ ॥

उद्यानभङ्गे को वार्थो रक्षःसैन्यवधे तव ।
अत्र चागमने ब्रूहि सत्यं मा भूर्भयान्वितः ॥ ७६ ॥

श्रुत्वेत्युक्तं प्रहस्तेन रावणाज्ञानुसारिणा ।
रावणं प्रत्युवाचेदं वचनं मारुतात्मजः ॥ ७७ ॥

भो राक्षसेन्द्र गुणवद्गृहाण वचनं मम ।
उत्साय दोषानन्योन्यं गुणदोषा द्विषन्ति हि ॥ ७८ ॥

रामो दाशरथिः श्रीमान् पितुर्वाक्याद्वनं गतः।
ससीतालक्ष्मणो धर्मः श्रद्धाविधियुतो यथा ॥ ७९ ॥

रामः सीतां वने नष्टां विचिन्वंस्तेजसां निधिः।
सुग्रीवेणाकरोत् सख्यं वायुनेव हुताशनः ॥ ८० ॥

रामेण बालिनं हत्वा सुग्रीवः सम्प्रतिष्ठितः।
राज्ये महति दैत्येन्द्र विष्णुनेव पुरन्दरः ॥ ८१ ॥

येन त्वं मथितः कक्षे बालिनं तं रघूत्तमः।
जघानैकेन बाणेन महतां किं नु दुष्करम् ॥ ८२ ॥

रामप्रसादमूलस्य स्वराज्यस्वस्तरोः फलम्।
सीतागमं दर्शयितुं व्यादिशत् कपिराट् कपीन् ॥ ८३ ॥

चरन्त्याप्तोदयस्यास्य किङ्कराः सूर्यजन्मनः।
प्रत्यक्षयन्तः सकलं करा इव विवस्वतः ॥ ८४ ॥

सुग्रीवकिङ्करेष्वेकः सीतान्वेषणतत्परः।
कपिर्हनूमान् नाम्नाहमुल्लङ्घ्याब्धिमिहागतः ॥ ८५ ॥

अथ रामस्य महिषी मलपङ्कसमावृता।
तेजोमयी शिखेवाग्नेर्दृष्टा धूमावृता मया ॥ ८६ ॥

सुग्रीवस्त्वां दशग्रीव राक्षसेश हरीश्वरः।
भ्रातेवापृच्छ्य कुशलमवदद्यन्निबोध तत् ॥ ८७ ॥

कुले महति जातस्त्वं पुलस्त्यस्य प्रजापतेः।
राजा तपस्वी धर्मज्ञः किमधर्मे प्रवर्तसे ॥ ८८ ॥

जायां रामस्य राजर्षेर्धर्मिष्ठां यदपाहरः।
अत्युत्कटमघं ह्येतत् परदाराभिमर्शनम् ॥ ८९ ॥

आयुर्धर्मं यशः सौख्यं हन्ति दुःखं करोति च।
महात्मनामपि दृढं परदाराभिमर्शनम् ॥ ९० ॥

शिक्षा यमाद्यैर्विहिता ह्यसतां न सतां क्वचित्।
भवांस्तु सत्कुलोत्पन्नः सद्भावं न विमुञ्चतु ॥ ९१ ॥

सर्वसाधुगुणार्हेण त्वयापि मदनार्दितम्।
मनो नियमितं नो चेत् सकलं व्याकुलं जगत् ॥ ९२ ॥

तस्य रामस्य सख्युर्मे जाया सा या त्वया हृता।
येनैपुणा हतो बाली भवता ज्ञातविक्रमः ॥ ९३ ॥

खरादिहन्त्रा रामेण सन्धिः कार्यो न विग्रहः।
प्राक् त्वयार्जुनबालिभ्यां यथा राजन् कृतस्तथा ॥ ९४ ॥

दुर्बलैरपि कर्तव्यः सन्धिः किमु बलीयसा।
आलोच्य हि गुणश्रेष्ठं सन्धिमिच्छन्ति साधवः ॥ ९५ ॥

गुणानामिव दोषाणामपि स्यादेव सङ्क्रमः।
परस्परं सन्धितानामतस्तं दुर्जनैस्त्यजेत् ॥ ९६ ॥

बलवद्दुर्बलान्योन्यसन्धानाल्पतरं बलम्।
बलीयसोऽपि जायेत दुर्बलस्य त्वनल्पकम् ॥ ९७ ॥

बहूनामप्यल्पकानां सन्धेरस्ति महद्बलम्।
यथोर्व्याः सिकतामय्या यथाब्धेः शीकरात्मनः ॥ ९८ ॥

सन्धेर्गुणा न प्रमिताः सद्भिः सह विशेषतः।
तैरेव बलवद्भिश्चेत् कथं वा कथ्यते पुनः ॥ ९९ ॥

विग्रहो विपरीतोऽथ सर्वथा नाशकारणम्।
यथाकथंचिदप्यस्मात् सन्धिं कुर्याद्विचक्षणः ॥ १०० ॥

रामः सत्पुरुषः श्रेष्ठः सत्त्वं यस्य महत्तमम्।
राज्यत्यागारण्यवासौ वदतः पितृभक्तितः ॥ १०१ ॥

आयोध्यकानां सन्त्यक्तनगराणां वने गतिः।
रामेण सह किं नास्य सद्गुणैकप्रकाशिका ॥ १०२ ॥

म्लेच्छा अपि विशुद्ध्यन्ति येषां तु क्षणसङ्गतः।
वाञ्छन्ति तेऽप्यात्मशुद्धिं रामसङ्गात्तपोधनाः ॥ १०३ ॥

कथं वर्णयितुं शक्यस्तस्य रामस्य विक्रमः।
यद्बाल्यलीलाभग्नं तदासीत्त्रैयम्बकं धनुः ॥ १०४ ॥

सोऽप्यर्जुनान्तको रामस्तपस्वी भगवानृषिः।
धनुरारोपमात्रेण रामं शरणमाययौ ॥ १०५ ॥

खरादीनां वधो यस्ते सन्धेर्हेतुः सतां मतः।
रामेण सह जातोऽद्य दुष्कालाद्विग्रहस्य सः ॥ १०६ ॥

नैव यस्य धनं मित्रं कीर्तिरायुः सुखं क्षणात्।
नाशोन्मुखं स बलवद्विग्रहं कः समाचरेत् ॥ १०७ ॥

वालिनो निग्रहं श्रुत्वा रामेणैकेषुणा कृतम्।
कुरुष्व सन्धिं सुखदं दुःखदं न तु विग्रहम् ॥ १०८ ॥

अप्यल्पो बलवत्सन्धि प्राप्योच्चैः पदमेत्यहो ।
अपि गच्छति शैलाग्रं पांसुर्मारुतसन्धितः ॥ १०९ ॥

सन्धिमप्यतितेजस्वी कुर्याद्बलवता सह ।
सर्वं हि दहति क्षिप्रं वह्निर्वायुसहायवान् ॥ ११० ॥

नश्यत्यत्यन्तबलवद्विग्रहाद्बलवानपि ।
करीव हरिविद्वेषाद्दुर्बलस्य तु का कथा ॥ १११ ॥

सञ्जीवनौषधिलतेत्यत्र या स्थापिता त्वया ।
तां त्वं विषलतां विद्धि सीतां लङ्काविनाशिनीम् ॥ ११२ ॥

यासु जातिषु जातेभ्यस्त्ववध्यत्वं त्वया वृत्तम् ।
तासु नामी समुत्पन्ना रामसुग्रीवलक्ष्मणाः । ॥ ११३ ॥

यः सञ्चितस्त्वया धर्मस्तपसा तत्फलं महत् ।
भुक्तमस्याप्यधर्मस्य शीघ्रं त्वमनुभोक्ष्यसे ॥ ११४ ॥

बलवन्तोऽपि जीवन्ति भूतद्रोहकृतो वृथा ।
द्रोहकारीव भूतानां हिरण्यकशिपुर्बली ॥ ११५ ॥

अनागसामपि मुहुर्भूतानां द्रोह उत्कटः ।
हा हन्त करुणालेशविहीनेन त्वया कृतः ॥ ११६ ॥

भूतहिंसाकृते हिंसा न हिंसा स्मर्यते बुधैः
तद्भिन्नसर्वभूतानामहिंसा जायते यतः ॥ ११७ ॥

रामाशुगो जगत्प्राणहेतुरद्भुतविक्रमः ।
रक्षोविषद्रुमारण्यमिदं विध्वंसयिष्यति ॥ ११८ ॥

न शक्ताः प्रमुखे स्थातुं सर्वलोकाः सनायकाः ।
युधि रामस्य चण्डस्य तूला इव नभस्वतः ॥ ११९ ॥

अनन्तकोटिब्रह्माण्डसृष्टिस्थितिलयं स्वयम् ।
कर्तुं रामः समर्थोऽयं साक्षादिव महेश्वरः ॥ १२० ॥

सुग्रीवस्यैति सन्देशः सुहृदः प्लवगप्रभोः ।
सेव्यः सुधारस इव भवता सुखमिच्छता ॥ १२१ ॥

मामुद्दिश्य प्रहस्तोऽयमुक्तवान् यत्तवाज्ञया ।
तस्य मूढप्रलापस्य वक्तव्यं किमिहोत्तरम् ॥ १२२ ॥

सर्वथाहमवध्योऽस्मि सर्वैर्नक्तञ्चरेश्वर ।
पितामहादेव वरः प्राप्त एष मयापि हि ॥ १२३ ॥

अहमेकोऽस्मि पर्याप्तः सर्वै रक्षोगणैर्युताम् ।
लङ्कामिमां नाशयितुं न कुर्वेऽद्य तथापि तत् ॥ १२४ ॥

रामेण हि प्रतिज्ञातस्तव रावण निग्रहः ।
स्याद्धि प्रतिज्ञाभङ्गोऽस्य मयाद्य त्वद्वधे कृते ॥ १२५ ॥

मम त्वद्दर्शने राजन्नत्र जातेऽतिदुर्लभे ।
तल्लाभायेदमुद्यानं भग्नं रम्यतरं मया ॥ १२६ ॥

अथ मां सहसा हन्तुं समादिष्टास्त्वया रुषा ।
राक्षसाः क्रूरकर्माणः स्वरक्षार्थं निषूदिताः ॥ १२७ ॥

मया विधिं मानयता त्वस्त्रबन्धोऽनुवर्तितः ।
तस्माच्चाद्य विमुक्तोऽस्मि बद्धो रज्जुभिराशरैः ॥ १२८ ॥

यद्भृत्यभृत्यभृत्यं न कर्मबन्धोऽपि बाधते ।
मम तद्रामदासस्य रज्जुबन्धः कियानयम् ॥ १२९ ॥

चन्द्रार्कवह्नियमराणूनिऋतिप्रचेतो
वाय्वेकपिङ्गसुरनाथविधातृरुद्राः ।
सर्वेऽपि लोकपतयः खलु मामवध्यं
त्रातुं निशाचरकुलेश्वर नैव शक्ताः ॥ १३० ॥

इति कथितमदीनं रामदूतेन वाक्यं
हितममृतसमानं युक्तियुक्तं निशम्य ।
हतविधिपरिपाकात् क्ष्वेलवन्मन्यमानः
सपदि निशिचरेन्द्रस्तद्वधं व्यादिदेश ॥ १३१ ॥

इति श्रीकोच्चुण्णिराजविरचिते
श्रीरामचरितमहाकाव्यपूरणे
रावणतर्जनं नाम
पंचविंशः सर्गः

# षड्विंशः सर्गः

आज्ञप्ते राक्षसेन्द्रेण वधे तस्य हनूमतः ।
अशक्ये बहुदोषे च तमुवाच विभीषणः ॥ १ ॥

राजंस्त्वय्येव राजन्ते गुणा भानाविवांशवः ।
लोके सर्वपदार्थानां नानाभेदप्रकाशकाः ॥ २ ॥

भवत्प्रसादनं नीतिः कृत्स्ना प्रोक्ताभिवन्दनम् ।
चिकित्सा वस्तिकर्मेव वायोः संशमनं प्रभो ॥ ३ ॥

तत् प्रसीदाग्रज विभो राक्षसेन्द्र महामते ।
भवद्धितपरस्येदं शृणुष्व च वचो मम ॥ ४ ॥

रामसुग्रीवयोरेष कपिः प्रेष्योऽस्तु दुर्मतिः ।
दूतस्य कोऽपराधः स्यादन्यप्रोक्तकथादिनः ॥ ५ ॥

दूतः खलु प्रतिच्छाया प्रतिबिम्बादिवत् स्थितः ।
दृष्ट्वा हि प्रतिबिम्बादौ दोषं हरति बिम्बगम् ॥ ६ ॥

तत्तेषामेव कर्तव्यो वधो यैः प्रेषितस्त्वयम् ।
अपराधिषु योज्यो हि दण्डो नानपराधिषु ॥ ७ ॥

बहूनि सन्ति शास्त्राणि कृतानि विदुषां वरैः ।
तेष्वन्याय्यो दूतवधः सर्वेष्वपि निषिध्यते ॥ ८ ॥

अस्यैकस्य वधाद्राजन् वृद्धिं तव न लक्षये।
न क्षयं नयसारज्ञ रामसुग्रीवयोरपि ॥ ९ ॥

तस्मादयं दूतभावान्नापराधी विमुच्यताम्।
अथवा दूतदण्डेषु कश्चनास्मिन्निपात्यताम् ॥ १० ॥

कशाताडनमङ्गेषु वैरूप्यं लक्ष्मपातनम्।
मुण्डनं चेति दूतानां दण्डनानि स्मृतानि हि ॥ ११ ॥

देवशत्रोर्न भवतः सदृशं कपिमारणम्।
सिंहस्येव गजेन्द्राणां निहन्तुः शशमारणम् ॥ १२ ॥

विज्ञातशास्त्रतत्त्वार्थो भवानपि यदि क्रुधा।
गृह्यते तर्हि कः कुर्यात् शास्त्राभ्यासं श्रमप्रदम् ॥ १३ ॥

तत्प्रसीद महाबुद्धे राक्षसेन्द्र जितेन्द्रिय।
युक्तायुक्तं विनिश्चित्य युक्तमत्र विधीयताम् ॥ १४ ॥

विभीषणस्य वाक्येन स्नेहार्द्रेण दशाननः।
क्रोधात्मा प्राज्ज्वलत्तीव्रमिन्धनेनेव पावकः ॥ १५ ॥

ऊचे चोद्वृत्तताम्राक्षो विकटभ्रुकुटीमुखः।
विभीषणं विनिर्भर्त्स्य क्रोधेनातिविभीषणः ॥ १६ ॥

यः पापं कुरुतेऽत्यर्थं वध्य एव स दुर्मतिः।
राजधर्मभृता वत्स नैव पापं ततो भवेत् ॥ १७ ॥

करोम्यहं पापकृतस्तस्मादस्य कपेर्वधम्।
ममाप्रियं महत् कुर्वन् बहुरक्षांसि योऽवधीत् ॥ १८ ॥

इति ब्रुवत्यतिक्रोधज्वलनात्मनि रावणे।
हनूमान् मन्दहसितं नवमाज्यमिवार्पयत्                ॥ १९ ॥

अग्रजं राक्षसाधीशं क्रोधान्धीकृतमानसम्।
पुनरूचे हिताकांक्षी प्रतिभावान् विभीषणः                ॥ २० ॥

निबोध मद्वचः सारं त्यक्त्वामुं क्रोधमुत्कटम्।
राजन् कोपाकुलमतिर्न किञ्चिदपि वेत्ति हि                ॥ २१ ॥

यया सीता न भजते भवन्तं यद्विबद्धया।
तस्मिन् रामे हते नूनमाशा सा नाशमेष्यति                ॥ २२ ॥

दुर्बलानां बलं वाचि बलं बाह्वोर्बलीयसाम्।
तस्माद्बलप्रकटनं कार्यं तु भवता भुजैः                ॥ २३ ॥

अत्रैव रामस्य वधस्त्वया कार्योऽरिसूदन।
भवत्प्रभावं सीतेयं पश्यतु स्वेन चक्षुषा                ॥ २४ ॥

उपायो ह्ययमेव स्यान्मुख्यः सीतावशीकृतौ।
मुख्ये शक्ये तु को विद्वानमुख्ये कुरुते स्पृहाम्                ॥ २५ ॥

अज्ञातजायावृत्तान्तो रामो नात्रागमिष्यति।
अस्मिन् हते विसृष्टोऽयं त्वानयिष्यति तं जवात्                ॥ २६ ॥

चिरायालब्धयुद्धानाममीषां वीर रक्षसाम्।
रामादिभिः कृतोऽत्रायमागमः स्यान्महोत्सवः                ॥ २७ ॥

एकैकेनापि बहुशो येषु सर्वं जगज्जितम्।
तत्सर्वराक्षसस्थाने सुकरोऽत्रारिनिग्रहः                ॥ २८ ॥

तथापि तीव्रोऽमर्षस्ते शमं नोपैति चेत् प्रभो।
विधीयतां कपावस्मिन् दूतदण्डेषु कश्चन ॥ २९ ॥

स्वकर्मफलदं न्याय्यं यशस्यमुचितं तव।
सुहृदां च प्रियमिदं कुरुष्व वचनं मम ॥ ३० ॥

अथोपस्थितदुष्कर्मसन्निवर्तनकोविदम्।
हनूमानग्रहीद्दृष्ट्या श्लाघमानो विभीषणम् ॥ ३१ ॥

रावणस्तु क्रुधान्धोऽपि सीतासम्भोगकारकम्।
निश्चित्य तस्यानिधनं स्वीचक्रे मदनातुरः ॥ ३२ ॥

सोऽथ पश्यन् राक्षसानां युद्धं प्रार्थयतां चिरम्।
वदनानि प्रसन्नानि प्रसन्नस्तमुवाच च ॥ ३३ ॥

सम्यगुक्तं महाप्रज्ञा भवता नयकोविद।
ईदृग्विधं त्रिलोकेऽन्यः प्रियं पथ्यं च को वदेत् ॥ ३४ ॥

दह्यतामस्य लाङ्गूलं वानरस्य दुरात्मनः।
प्रधानं हि भवत्यङ्गं लाङ्गूलं काननौकसाम् ॥ ३५ ॥

दग्धपुच्छममुं क्लिष्टमीक्षन्तां बान्धवाः पुनः।
मरणादप्यसह्यं हि सुहृदां क्लेशदर्शनम् ॥ ३६ ॥

इत्याज्ञप्ते रावणेन यातुधाना हनूमतः।
लाङ्गूलं वेष्टयामासुर्नानातन्तुभवैः पटैः ॥ ३७ ॥

वस्त्रवेष्टनकालेतु सञ्जजृम्भेऽनिलात्मजः।
शेषभोगसमं तस्य लाङ्गूलं शुशुभे तदा ॥ ३८ ॥

कथञ्चित्तस्य संवेष्ट्य पुच्छं रक्षांस्यशेषतः ।
तस्मिन् बहुस्नेहसिक्ते वह्निं प्रादीपयन् पुनः ॥ ३९ ॥

प्रदीप्तपुच्छमालोक्य हनूमन्तं कृतागसम् ।
रावणः सम्प्रहृष्टात्मा किङ्करानिदमब्रवीत् ॥ ४० ॥

अमुं सर्वत्र लङ्कायां कपिं चारयत द्रुतम् ।
पश्यन्त्वत्र प्रियं सर्वे दण्डं चण्डं कृतागसः ॥ ४१ ॥

हनूमांश्चिन्तयामास तदैतत् परमाद्भुतम् ।
इष्टं मम यदेवाद्य तल्लब्धं परिपन्थितः ॥ ४२ ॥

सम्यङ्न दृष्टवान् लङ्कां विचिन्वन् जानकीं निशि ।
शत्रोर्दुर्गबलं ज्ञातुं पश्याम्यद्य समाहितः ॥ ४३ ॥

तदेभिः क्रियमाणानि पीडनादीन्यशेषतः ।
सोढव्यानि मयार्थाय्यै सा हि सर्वगरीयसी ॥ ४४ ॥

इति तं गूहिताकारं निघ्नन्तः काष्ठमुष्टिभिः ।
राक्षसाश्चारयामासुर्दीप्तपुच्छमितस्ततः ॥ ४५ ॥

त तर्जनैः परीहासैस्ताडनैर्विविधैर्मुहुः ।
मौढ्यक्रौर्यादिदोषान् स्वान् बोधयामासुराशराः ॥ ४६ ॥

स्वदर्शनार्थमायातान् सवृद्धस्त्रीशिशून् जनान् ।
तत्र तोरणयुद्धेनाप्यशान्तान् स त्ववैत् कपिः ॥ ४७ ॥

हनूमद्ग्रहणाद्यात्मजयं घोषयितुं पुनः ।
शङ्खभेरीमृदङ्गादीन् नादयामासुराशराः ॥ ४८ ॥

[ कुलकम् ]

ससागरामिवागाधतटाकपरिखादिभिः ।
प्राकारैरधिकोत्तुङ्गैर्लोकालोकवतीमिव ॥ ४९ ॥

मनोभिरामैरारामैर्नन्दनादिवतीमिव ।
तुङ्गप्रासादमालाभिः शैलमालावतीमिव ॥ ५० ॥

समस्तविद्यानिष्णातस्थानैः सत्यवतीमिव ।
तत्तद्भोगवतां रम्यैः पदैः स्वर्गवतीमिव ॥ ५१ ॥

गह्वरैरतिगम्भीरैः सपातालामिव स्थिताम् ।
सनारकामिवात्युग्रैः कारागारैस्तमोमयैः ॥ ५२ ॥

वदन्तीं रावणोत्कर्षं तत्तद्रत्नैरशेषतः ।
प्रभावै राक्षसेन्द्राणामाकर्षन्तीमिव श्रियम् ॥ ५३ ॥

तर्जयन्तीमिव रिपून् मारुतोद्धूतकेतुभिः ।
स्तुवन्तीमिव पौलस्त्यं सूतमागधवन्दिभिः ॥ ५४ ॥

नृशंसै राक्षसगणैः सर्वाधर्ममयीमिव ।
अनेकचित्रयन्त्राद्यैरिन्द्रजालवतीमिव ॥ ५५ ॥

वीक्षमाणोऽखिलां लङ्कां कृष्यमाणश्च राक्षसैः ।
पुच्छस्थोद्दीप्तसप्तार्चिस्तत्र तत्र चचार सः ॥ ५६ ॥

हनूमत्पुच्छदाहादिमप्रियं राक्षसाङ्गनाः ।
शशंसुः प्राप्य वैदेहीं क्रूरकर्मरताः सदा ॥ ५७ ॥

निशम्य भर्तुर्दूतस्य विपदं तां तु मैथिली ।
अभजत् पावकं देवमदाहार्थं हनूमतः ॥ ५८ ॥

प्रदक्षिणावर्तशिखः प्रसादाद्यैः सुलक्षणैः ।
तामग्निः सान्त्वयामास देवा ह्याश्रितवत्सलाः ॥ ५९ ॥

हनूमतः सुखं सीतां वदन्निव ववौ तदा ।
वायुस्तत्पुच्छदहनस्पर्शचन्दनशीतलः ॥ ६० ॥

मालेयपङ्कशिशिरं स्वपुच्छस्थमहानलम् ।
हनूमाननुभूयाथ विस्मयं परमं ययौ ॥ ६१ ॥

रामसीताप्रभावज्ञः प्राप्तरत्नाकरार्हणः ।
मारुतिः शमयामास विस्मयं तं पुनः स्वयम् ॥ ६२ ॥

दीप्ताग्निपुच्छप्रहृतिद्रावितशेषराक्षसः ।
हनूमान् कामरूपः स्वं मोचयामस बन्धनात् ॥ ६३ ॥

अथ स्वरक्षिरक्षांसि निहत्य परिघायुधः ।
मारुतिः शैलशृङ्गाभं प्रासादाग्रं समारुहत् ॥ ६४ ॥

शैलाग्र इव दावाग्निरुदयाग्र इवांशुमान् ।
प्रदीप्तानललाङ्गूलः प्रासादाग्रे रराज सः ॥ ६५ ॥

अथ तर्पयितुं वह्निं स्वलाङ्गूलप्रतिष्ठितम् ।
पितुः सखायमारेभे लङ्कया स समृद्धया ॥ ६६ ॥

लाङ्गूलस्थप्रदीप्ताग्निः स कालाग्निरिव ज्वलन् ॥
लङ्काया भवनाग्रेषु चरन्नग्निं समार्पयत् ॥ ६७ ॥

महोदरमहापार्श्वप्रहस्तशुकसारणाः ।
कुम्भकर्णेन्द्रजित्कुम्भनिकुम्भब्रह्मशत्रवः ॥ ६८ ॥

येऽन्ये च राक्षसश्रेष्ठा मत्तदेवान्तकादयः ।
तेषां स भवनाग्रेषु वह्निमुत्कटमार्पयत् ॥ ६९ ॥

विभीषणस्य भवनं वर्जयित्वा स बुद्धिमान् ।
सर्वेषु रक्षोगेहेषु दीप्रमग्निं समार्पयत् ॥ ७० ॥

अथ राक्षसराजस्य रावणस्य गृहोत्तमे ।
रत्नसानुसमे वह्निं विन्यस्योच्चैर्ननाद सः ॥ ७१ ॥

स्वभावाद्राक्षसाधर्माद्रुवेगाच्च मारुतेः ।
जातश्चण्डानिलस्तत्र सर्वत्राग्निमवर्धयत् ॥ ७२ ॥

अथ लङ्काखिला वह्निज्वालामालासमाकुला ।
कालाग्निदह्यमानेव त्रिलोक्यासीज्जगत्क्षये ॥ ७३ ॥

मलीमसैरसुखदैधूमैर्बहुभिरुत्थितैः ।
लङ्का तदा व्याकुलासीदधर्मैरिव रक्षसाम् ॥ ७४ ॥

ज्वलज्ज्वलनसन्तापद्रुतहेमास्रविस्रवैः ।
रुरोदेव तदा लङ्का विविधार्तस्वराकुला ॥ ७५ ॥

रक्षःसैन्यरथेभाश्वमदहत् स हुताशनः ।
रामप्रतापाग्निरिव दुःसहः सुबहु द्रुतम् ॥ ७६ ॥

नष्टश्रीरतिसन्तापाल्लङ्कानलसमाकुला ।
कामानलाकुलां सीतां सखीवान्वकरोत्तदा ॥ ७७ ॥

उद्दीप्तदहना भूरिशवधूमसमावृता ।
क्रन्दन्नानाजना लङ्का महतीव चिताऽभवत् ॥ ७८ ॥

निर्दग्धदह्यमानस्त्रीबालवृद्धादिसङ्कुला ।
हतनाथेव चुक्रोश लङ्का शृण्वति रावणे ॥ ७९ ॥

हा पुत्र हा पितर्हाम्ब हा भ्रातर्हा सुहृत्तम ।
इत्याद्यैरशुभैः शब्दैः पूर्णाभूत् सा पुरी ततः ॥ ८० ॥

नानेन्धनानि दहतस्तस्याग्नेरतितेजसः ।
नानावर्णाकृतिध्वानगन्धज्वालाश्चकाशिरे ॥ ८१ ॥

लङ्कापुरं महावीर्यजितलोकत्रयेश्वरम् ।
निर्दग्धं रामदूतेन रुद्रेण त्रिपुरं यथा ॥ ८२ ॥

द्रष्टुं सुरर्षिसिद्धादीन् लङ्कापरिभवोत्सवम् ।
आह्वयन्निव तत्राग्निरुत्थितो विविधै रवैः ॥ ८३ ॥

देवर्षिदैत्यगन्धर्वसिद्धकिन्नरपन्नगाः ।
अन्येऽपि तादृशास्तत्र समाजग्मुरितस्ततः ॥ ८४ ॥

हनूमत्कर्म तद्दृष्ट्वा लङ्कादहनमद्भुतम् ।
मनोरथैरप्यगम्यमन्यैस्ते विस्मिताः स्थिताः ॥ ८५ ॥

ये पुरा पीडिता यैस्ते तेषां दृष्ट्वोत्कटं भयम् ।
निशाचराणां देवाद्याः निर्वृतिं परमां ययुः ॥ ८६ ॥

जयश्रिया सह तदा तं भेजे हरिपुङ्गवम् ।
स्तुतिच्छलेन लोकेशवदनस्था सरस्वती ॥ ८७ ॥

रोषादिदूषितं चेतो रावणस्याञ्जनासुतम् ।
तत्त्वेन नाग्रहीद्बिम्बं वारीव मलदूषितम् ॥ ८८ ॥

ततो हनूमता योद्धुं रावणः स्वयमापतत् ।
न्यपतच्चाशु तद्दीप्तपुच्छताडनमूर्च्छितः ॥ ८९ ॥

तदानीं युद्धविज्ञातहनूमद्घोरविक्रमः ।
इन्द्रजित्तु पुनस्तेन योद्धुं न कृतवान् मनः ॥ ९० ॥

रावणावरणोद्युक्ते रावणे गाढमूर्च्छिते ।
कुम्भकर्णे प्रसुप्ते च रक्षांस्यन्यानि दुद्रुवुः ॥ ९१ ॥

इति रक्षांसि निर्जित्य सर्वाण्यनिलनन्दनः ।
लङ्कां च भस्मीकृत्याशु रामपादं हृदास्मरत् ॥ ९२ ॥

लङ्कया सह सीतापि दग्धेत्यथ मरुत्सुतः ।
निश्चित्य घोरशोकाग्नौ दग्धप्रायो बभूव ह ॥ ९३ ॥

सीता न दग्धेत्याश्चर्यप्रोक्तदिव्यवचोऽम्बुधौ ।
अशीशमत्तं शोकाग्निं स पुच्छाग्निमथाम्बुधौ ॥ ९४ ॥

अथ सीतां द्रष्टुकामस्तत्रोपेत्य मरुत्सुतः ।
तत्पादमूले न्यपतद्दण्डवत् साश्रुलोचनः ॥ ९५ ॥

स्वपादमूले पतितं सीता पवननन्दनम् ।
प्रेमगद्गदया वाचा सहर्षमिदमब्रवीत् ॥ ९६ ॥

ध्रुवोऽत्र युद्धे तन्मृत्युर्येन मृत्युर्न निर्जितः ।
जितमृत्योस्तवाशास्यं किं सर्वश्रेयसां निधे ॥ ९७ ॥

उत्तिष्ठोत्तिष्ठ भद्रं ते वत्स मारुतनन्दन ।
त्वमेव सदृशो दूतस्तस्य रामस्य धीमतः ॥ ९८ ॥

अत्रानयस्वाशु रामं ससुग्रीवं सलक्ष्मणम् ।
सहर्यृक्षमहासैन्यं कार्यस्यास्य प्रभुर्भवान् ॥ ९९ ॥

कथमुल्लङ्घयिष्यन्ति शतयोजनविस्तृतम् ।
सिन्धुं हर्यृक्षसैन्यानि तानि तौ वा नृपात्मजौ ॥ १०० ॥

कम्पयत्येष सन्देहो मां वातः कदलीमिव ।
किमत्रास्ति समाधानं भवान् हि नयवित्तमः ॥ १०१ ॥

इत्युक्त्वा विरतां सीतां मग्नां चिन्तामहार्णवे ।
उद्धर्तुकामो हनुमानुत्तरं वाक्यमब्रवीत् ॥ १०२ ॥

मा देवि त्वं विषण्णा भूरनयास्थानचिन्तया ।
स्वयमत्रागमिष्यन्ति हेकोत्पातेन वानराः ॥ १०३ ॥

अहं सुग्रीवभृत्येषु निकृष्टः कोऽपि वानरः ।
अहमप्यागतोऽस्म्यत्र किं पुनस्ते महौजसः ॥ १०४ ॥

सर्वत्रापि हि दृश्यन्ते निकृष्टाः प्रेष्यतां गताः ।
नोत्कृष्टाः पश्य वैदेहि पश्य मां प्रेष्यमागतम् ॥ १०५ ॥

मत्पृष्ठाधिष्ठितौ तौ च भ्रातरौ रामलक्ष्मणौ ।
अत्रागमिष्यतस्तूर्णं त्वामितश्च नयिष्यतः ॥ १०६ ॥

इतस्ततो भज्यमानां लङ्कां प्लवगयूथपैः ।
शैलमेघप्रतीकाशैस्त्वमाश्वालोकयिष्यसि ॥ १०७ ॥

रामबाणहतानेकररक्षोक्तादिदुर्गमाम् ।
लङ्कामिमां द्रक्ष्यसि त्वं नदीं वैतरणीमिव ॥ १०८ ॥

रामरौद्रशरच्छिन्नहृदयं चात्र रावणम् ।
सामात्यामित्रपुत्रं त्वं दृष्ट्वा यास्यसि निर्वृतिम् ॥ १०९ ॥

यामिदानीं गतासि त्वमितोऽप्यधिकदारुणाम् ।
दशामेता गमिष्यन्ति राक्षस्यो हतभर्तृकाः ॥ ११० ॥

अस्य भर्तृवियोगस्य त्वमन्तं द्रक्ष्यसि द्रुतम् ।
एता पितृभ्रातृमित्रपुत्राणां न कदाचन ॥ १११ ॥

त्वं भद्रे रघुनाथेन सङ्गता यास्यसि श्रियम् ।
दमयन्ती नलेनेव रोहिणीव हिमत्विषा ॥ ११२ ॥

तत् स्वस्था भव वैदेहि तावत्कालं सहस्व च ।
अतिद्रुतगतेर्यावन्मम तत्र गतिर्भवेत् ॥ ११३ ॥

इत्याश्वास्य वचोमृतैर्जनकजां धीमान् हनूमान् पुनः
सम्प्राप्यानुमतिं तया विरचितां संवर्धितश्चाशिषा ।
सिद्धार्थः प्रतियातुमुद्यतमनाः पाथोनिधेर्लङ्घना-
यारिष्टाख्यमथारुहद्गिरिवरं रामं प्रकामं स्मरन् ॥ ११४ ॥

इति श्रीकोच्चुण्णिराजविरचिते
श्रीरामचरितमहाकाव्यपूरणे
लङ्कादहनवर्णनं नाम
षड्विंशः सर्गः

# सप्तविंशः सर्गः

अपारगम्भीरमथाम्बुधिं तं भवाम्बुधिं भक्त इवाञ्जनेयः ।
शीघ्रं समुल्लङ्घयितुं बभाज विष्णोः पदं सिद्धसुरादिसेव्यम् ॥ १ ॥

स विक्षिपन्नभ्रगणान् समन्ताद्विक्षोभयन्नम्बुधिमात्मवेगात् ।
महाबलोऽसङ्गगतिश्चचार वायोः सुतो वायुरिवान्तरिक्षे ॥ २ ॥

मैनाकमद्रिं स पितुः सखायमालोक्य सम्मान्य च मार्गमध्ये ।
भूयो व्रजन् भूरिजवेन दूराद्विलोकयामास गिरिं महेन्द्रम् ॥ ३ ॥

यत्र स्थिता जाम्बवदङ्गदाद्यास्तत्राम्बुराशेस्तट उत्तरस्मिन् ।
महेन्द्रमालोक्य समृद्धहर्षः पयोदवन्मारुतिरुन्ननाद ॥ ४ ॥

हनूमतस्तं निनदं निशम्य ते त्वङ्गदाद्या गुरुशोकतप्ताः ।
निदाघतप्ता इव मेघनादं गम्भीरमापुः परमं प्रहर्षम् ॥ ५ ॥

हृष्टं हनूमन्तमथापतन्तमाकाशमावृत्य महाद्रिकल्पम् ।
दृष्ट्वा प्रहृष्टाः प्लवगोत्तमास्ते तस्थुस्तदा प्राञ्जलयः समस्ताः ॥ ६ ॥

ततः सुहृद्दर्शनजातहर्षभूम्ना हनूमान् परिवृद्धवेगः ।
महेन्द्रशैलोपरि शैलयुग्मसमागमभ्रान्तिकरः पपात ॥ ७ ॥

ते तं चिराद्दृष्टमित्रातिकामात् प्राप्तं परेत्येव सुखाद्भुताभ्याम् ।
सङ्गम्य राजानमिवातिभक्त्या सर्वे पुनः संपरिवार्य तस्थुः ॥ ८ ॥

नत्वाङ्गदं जाम्बवदादिवृद्धानन्यांश्च मान्यान् प्लवगप्रवीरान् ।
स मानयित्वा विधिनाथ दृष्टा सीतेति वाक्यामृतमभ्यवर्षत् ॥ ९ ॥

वैदेह्यनालोकनजातशोकविषान्मृता एव पुराभवन् ये ।
सञ्जीवितास्ते हरयोऽस्य दृष्टा सीतेति वाक्यामृतसेचनेन ॥ १० ॥

हस्तेन हस्तं स ततोऽङ्गदस्य प्रगृह्य तेनैव सहोपविष्टः ।
महेन्द्रशृङ्गे कपिवीरदत्तान् नानोपहारानुररीचकार ॥ ११ ॥

अथाङ्गदाद्यैरतिहृष्टपुष्टैरिष्टैः स पृष्टः प्लवतां वरिष्ठः ।
देवीं नमस्कृत्य विदेहपुत्रीं सविस्तरं सर्वमुवाच वृत्तम् ॥ १२ ॥

विलङ्घनं वारिनिधेः स सीताविमार्गणालोकनसान्त्वनानि ।
रक्षोगणानां स्वकृतं वधं च प्रोचे स लङ्कानगरस्य दाहम् ॥ १३ ॥

अचिन्त्यमन्यैर्मनसापि कर्म तत् सुन्दरं वायुसुतो निशम्य ।
कीशोत्तमास्ते प्रशशंसुरासीद्यत्सङ्गतः सुन्दरमेव काण्डम् ॥ १४ ॥

रक्षांसि हत्वा परिगृह्य सीतां प्रतिप्रयातव्यमितः परं नः ।
इत्यङ्गदस्तत्र स निश्चिकाय वीरास्त्वशेषं कुरुते हि कार्यम् ॥ १५ ॥

विज्ञाप्य रामं सकलं तदाज्ञां लब्ध्वा पुनः कार्यमिदं भवेन्नः ।
भृत्यैस्तु कार्यं प्रभुणा यदुक्तमित्यूचिवान् ब्रह्मसुतोऽथ विद्वान् ॥ १६ ॥

अथाङ्गदाद्या हनुमत्प्रधानाः स्वीकृत्य तज्जाम्बवता यदुक्तम् ।
रामाय विज्ञापयितुं प्रियं तन्महेन्द्रतः पुप्लुविरे प्लवङ्गाः ॥ १७ ॥

शैलाः सपक्षा इव कीशवर्यास्ते खं समावृत्य जवाद्व्रजन्तः ।
गुणैर्विचित्रं ददृशुर्मनोज्ञं किञ्चिद्वनं चैत्ररथोपमानम् ॥ १८ ॥

अप्यप्रधृष्यं मधुकाननं तत् सुग्रीवगुप्तं हरयोऽतिरम्यम् ।
दृष्ट्वाभवंस्ते मधुपानलोलाः सरः सपद्मं शरदीव हंसाः ॥ १९ ॥

अथाङ्गदाज्ञामधिगत्य तत्र प्रविश्य कामं प्रपपुर्मधूनि ।
मत्ता विहङ्गा इव निर्ममन्थुश्चोर्वीरुहान् दन्तिवरा इवैते ॥ २० ॥

पुरा यथा नर्क्षरजोभिधेन न बालिना वा कपिनायकेन ।
सुग्रीवनाम्नापि तथा प्रमथ्य तदा प्रभुक्तं मधुकाननं तैः ॥ २१ ॥

गायन्ति केचित् स्म हसन्ति केचिद्गर्जन्ति केचिद्विनदन्ति केचित् ।
स्तुवन्ति केचित् प्रणमन्ति केचिन्नृत्यन्ति केचिन्मधुपानमत्ताः ॥ २२ ॥

तान् यूथपांस्तद्वनभङ्गलोलान् तद्रक्षिणो ये दधिवक्त्रमुख्याः ।
न्यवारयंस्तेऽतिबलान् प्रचण्डवेगान् प्रमत्तान् कलभा इवेभान् ॥ २३ ॥

अथाङ्गदाद्यैर्हनुमत्प्रधानैर्महाबलैः काननरक्षिणस्ते ।
समाहता मारुतधूततूलन्यायाद्द्रवन्ति स्म तदा समन्तात् ॥ २४ ॥

दध्याननः काननपालकानां प्रभुः स्वभृत्यैः सह मन्त्रयित्वा ।
आप्लुत्य वेगेन जगाम तत्र रामाश्रितो यत्र पतिः कपीनाम् ॥ २५ ॥

भग्नः प्रतीकैः कथयन् प्रचण्डं पराजयं शत्रुकृतं भृशार्तः ।
स मातुलस्तस्य हरीश्वरस्य ननाम पादं सहसा निपत्य ॥ २६ ॥

किं किं भवान् मां प्रणमत्ययुक्तमित्येवमुद्विग्नधिया स तेन ।
पृष्टो जगादाङ्गदवायुसूनुमुख्यैः कृतं तद्वनभङ्गमुग्रम् ॥ २७ ॥

दध्यानने भग्नतनौ भृशार्ते किञ्चिद्ब्रुवाणे कपिभाषयेत्थं ।
पप्रच्छ सौमित्रिरथार्कसूनुं सर्वेङ्गिताकारविशेषवेदी ॥ २८ ॥

अङ्गैः प्रभग्नैरिह दीनदीनः कमर्थमुद्दिश्य वदत्ययं त्वाम् ।
शृण्वन् भवांश्च क्रमशः प्रहर्षमुपैति कस्मात् सुधियां वरिष्ठ ॥ २९ ॥

सौमित्रिसम्प्रश्नममुं यथावत् सखा स रामस्य निशम्य युक्तम् ।
प्रहर्षवेगक्षुभितान्तरात्मा प्रत्याबभाषे प्लवगाधिनाथः ॥ ३० ॥

दिव्यस्य गोप्ता मधुकाननस्य वदत्ययं मां दधिवक्त्रनामा ।
भुक्तं स्वरक्ष्यं वनमङ्गदाद्यैर्निर्जित्य गोप्तॄनखिलान् युधीति ॥ ३१ ॥

दूराद्वदन्ति प्रियमाशु दृष्टा सीतेति मां वायुसुताङ्गदाद्याः ।
विजित्य याम्यां दिशमद्य तावत् प्रत्यागता मद्वनरत्नभुक्त्या ॥ ३२ ॥

यशस्विनां धर्मपथे स्थितानां वातात्मभूवालिसुतादिकानाम् ।
कृते तु कृत्ये मधुभक्षणेच्छा भवेन्न चेद्धारविषाशनेच्छा ॥ ३३ ॥

अतो विषादं परिहृत्य हर्षं युवां प्रयातं रघुवंशदीपौ ।
दृष्टैव देवी जनकेन्द्रपुत्री भवेन्न चान्येन समीरपुत्रात् ॥ ३४ ॥

न मारुतेः स्यादफलः प्रयत्नस्तथाविधास्तस्य गुणा ह्यमेयाः ।
इत्याशु तौ हृष्टतरौ विधाय प्रभुः कपीनां दधिवक्त्रमूचे ॥ ३७ ॥

त्वं भद्र गच्छ त्वरितं हरींस्तान् हनूमदाद्यानिह चानयाय ।
तान् द्रष्टुमिच्छामि कृताखिलार्थान् सह प्रभुभ्यां रघुपुङ्गवाभ्याम् ॥ ३६ ॥

तान् ब्रूहि मद्वाक्यमिदं भवद्भिर्यद्भुक्तमेतन्मधुकाननं मे ।
तन्मर्षितं वः कृतकर्मणां हि भोगार्हमेवाखिलमस्मदीयम् ॥ ३७ ॥

द्रुतं समागच्छत यूयमत्र भवत्समालोकमहोत्सवेऽस्मिन् ।
अहं सुमित्रातनयो महात्मा रामश्च कौतूहलिनो भवामः ॥ ३८ ॥

इति प्रभोः साधु वचो निशम्य प्लवङ्गमानां दधिवक्त्रनामा ।
कृतोपचारः स यथागमत् प्राक् तथा पुनः प्रत्यगमत् प्रहृष्टः ॥ ३९ ॥

प्रविश्य भग्नं मधुकाननं स दृष्ट्वोत्थितांस्तान् विमदांश्च कीशान् ।
प्रशस्य तारातनयं वचोभिस्तद्रूचिवान् यद्रविसूनुनोक्तम् ॥ ४० ॥

श्रुत्वा पितृव्यस्य वचस्तदग्र्यं ज्ञात्वोत्सुकौ तौ रघुपुङ्गवौ च ।
ततो हनूमत्प्रमुखैः प्लवङ्गैः स पुप्लुवे वालिसुतः समेतः ॥ ४१ ॥

आकाशमावृत्य जवाद्व्रजद्भिर्महाशरीरैरतिधीरनादैः ।
तत्राभवंस्तैरपनीततापाः सर्वे निदाघान्त इवाम्बुवाहैः ॥ ४२ ॥

हनूमदादिप्लवगेश्वराणां तेषामनागच्छति तत्र यूथे ।
उत्कण्ठया राममवेक्ष्य दीनमाश्वासयन् सूर्यसुतो बभाषे ॥ ४३ ॥

अमुं विषादं त्यज राम दृष्टा सीता भवेदत्र न संशयो मे ।
धीमन्न चान्येन समीरपुत्रात् स एव हेतुर्ह्यखिलार्थसिद्धेः ॥ ४४ ॥

वातात्मभूवालिसुतैः समेता सेना ममामोघगुणा महात्मन् ।
संसाधयेदेव समस्तकार्यं सद्भाग्यराशेरिव साधुनीतिः ॥ ४५ ॥

कालेऽप्यतीतेऽमितवीर्य तेषामत्रागमः साधु मधुप्रभोगः ।
मनःप्रसादश्च ममात्र सन्ति सद्भूतयोऽर्थागमनानुमाने ॥ ४६ ॥

किञ्च स्फुटं राघव दक्षिणानि स्फुरन्ति चाङ्गानि मुहुर्मुहुस्ते ।
आसन्न एवाभ्युदयस्त्यजामुं विषण्णभावं भज च प्रहर्षम् ॥ ४७ ॥

इति ब्रुवत्यंशुमतस्तनूजे तैः शुश्रुवे हृष्टधियां प्रणादः ।
तेषां जगत्प्राणसुतादिकानां प्रमथ्यमानाम्बुधिनादबन्धुः ॥ ४८ ॥

ततस्तदालोकसमुत्सुकानां तेषामभूद्भास्करिराघवानाम् ।
मार्गे दृशां वानरराजसेना सा चातकानामिव मेघमाला ॥ ४९ ॥

अग्रे प्लवङ्गाधिपतेर्निपत्य वेगात् पुनस्ते हरयोऽङ्गदाद्याः ।
तांस्त्रीन् प्रणेमुः क्षितिगैः शिरोभिर्भक्त्या त्रिमूर्तीनिव सर्वशक्तान् ॥ ५० ॥

उत्कण्ठितांस्तान् कपयोऽथ दृष्टा सीतेत्यवोचन् सरसं समस्ताः ।
रामे तु तद्वृत्तविशेषमाशु पृच्छत्यपश्यन् पवनात्मजं तम् ॥ ५१ ॥

ततो हनूमान् शिरसा प्रणम्य देवीं दिशं तां प्रति रामपत्नीम् ।
प्रहर्षभक्तिप्रसराकुलात्मा बद्धाञ्जलीं राममुवाच धीमान् ॥ ५२ ॥

लङ्कापुरे पङ्क्तिमुखेन रुद्धा दृष्टा मया सा मिथिलेन्द्रकन्या ।
विनिःश्वसन्ती भृशदीर्घमुष्णं फणीन्द्रकन्येव नरेन्द्रकुम्भे ॥ ५३ ॥

सन्तर्ज्यमाना रजनीचरीभिर्व्याधाङ्गनाभिर्हरिणीव नित्यम् ।
अधर्महेतुं भयदं जनानां रक्षःपतिं दुःखमिव द्विषन्तीम् ॥ ५४ ॥

[विशेषकम्]

मलाक्तदेहास्तमितस्वशोभा विषप्रदिग्धेव सुवर्णमाला ।
कामेन शोकेन च तप्यमाना ग्रीष्मेण दावेन च वल्लिकेव ॥ ५५ ॥

एतन्महादुःखगदान्मुमूर्षुस्त्वत्सङ्गमाशौषधिरक्ष्यमाणा ।
दीर्घां दधाना भृशमेकवेणीं कालाहिकन्यामिव पृष्ठभागे ॥ ५६ ॥

मया कथञ्चिद्व्यपनीततापा सान्त्वामृतैः सा तत्र धर्मपत्नी ।
भर्त्रे प्रदेयोऽयमिति स्वचूडामणिं ममादात्त्वममुं गृहाण ॥ ५७ ॥

सम्प्रेषितं तज्जनकेन्द्रपुत्र्या प्रदीयमानं पवनात्मजेन ।
तन्मौलिरत्नं प्रतिगृह्य रामः पर्याकुलोऽभूत् प्रणयेन गाढम् ॥ ५८ ॥

शशाक सम्यक् सहसेक्षितुं तन्न रामभद्रोऽश्रुपरिप्लुताक्षः।
पुनः कथञ्चिच्छनकैर्निरीक्ष्य सुग्रीवमूचेऽवरजं च वीरम् ॥ ५९ ॥

चूडामणिं पश्य हरीश्वरामुं तस्याः प्रियायाः परिपूर्णशोभम् ।
सन्द्रष्टकामस्तनयं भवन्तमत्रादरात् प्राप्तमिवांशुमन्तम् ॥ ६० ॥

पित्रे मणिस्त्वेष मम प्रदत्तस्तुष्टेन यज्ञैः सुरनायकेन।
समुद्रजातस्य कदाप्यमुष्य न विप्रयोगं सहतेऽब्धिकन्या ॥ ६१ ॥

महेन्द्रदत्तो मणिरेष दिव्यस्तेन क्षितीशेन विवाहकाले ।
न्यस्तः पुरालङ्करणाय तस्या मूर्ध्नि स्फुरत्केशबलारिरत्ने ॥ ६२ ॥

विराजमानां मणिनामुना सा तदा निरीक्ष्यात्मभवां प्रहृष्टः ।
राजर्षिवर्यो जनकोऽभ्यनन्ददैन्द्रीमिवाशां दिननायकेन ॥ ६३ ॥

तिग्मांशुना नैव कदापि लभ्यस्तमः समुन्मूलयतातिदूरात् ।
योऽयं मणिस्तं परभागमापत्तत्कुन्तलध्वान्तचयान्तरस्थः ॥ ६४ ॥

भो लक्ष्मणामुं मणिमद्य पश्य तया विनात्रागतमम्बुजाक्ष्या ।
अदर्शनीयं गतसर्वशोभं पुष्पं चिरायेव लतावियुक्तम् ॥ ६५ ॥

किमुक्तवत्यम्बुजपत्रनेत्रा महाकपे मां मिथिलेन्द्रपुत्री।
सञ्जीवयोग्रव्यसनाग्निदग्धं संसिच्य मां तद्वचनामृतेन ॥ ६६ ॥

तदैवमुक्तः पवमानसूनू रघूत्तमेन प्रणयाकुलेन।
सन्देशवाक्यं समुवाच धीमान् विदेहपुत्र्या कथितं महार्थम् ॥ ६७ ॥

दयानिधे राघव देव देव्या निवेद्यमानं वचनं शृणुष्व ।
प्राक् चित्रकूटे भवति प्रसुप्ते सुप्तोत्थितां मां तु ददार काकः ॥ ६८ ॥

पुनस्त्वदङ्के श्रमपीडितायां प्रसुप्तवत्यां मयि दुष्टपक्षी ।
नाभ्यागमत्त्वद्भयतः स सर्वो दृढं बिभेत्येव महाबलेभ्यः ॥ ६९ ॥

भूयो मदङ्के त्वयि तु प्रसुप्ते स वायसः शीघ्रमुपेत्य दुष्टः ।
स्तनान्तरे मां विददार रुष्टस्तुण्डेन तीक्ष्णेन नखैश्च गाढम् ॥ ७० ॥

समुक्षितः शोणितबिन्दुभिस्त्वं ततः प्रबुद्धः प्रचुरक्षतां माम् ।
रक्ताक्तचञ्चूनखरं च काकं व्यलोकयो मेऽभिमुखं स्थितं तम् ॥ ७१ ॥

दर्भं ततः संस्तरतः प्रगृह्य ब्रह्मास्त्रमन्त्रेण च योजयित्वा ।
चिक्षेप काकं प्रति तं सरोषः स चाभिदुद्राव खलं विहङ्गम् ॥ ७२ ॥

स तु त्रिलोक्यामनवाप्य रक्षां त्यक्तश्च पित्रा सुरनायकेन ।
त्वामेव यातः शरणं शरण्यमेकाक्षिनाशेन तमभ्यरक्षः ॥ ७३ ॥

मदर्थमेवं पतगेऽपि तस्मिन् प्रदर्शितोग्राप्रतिमप्रतापः ।
किमद्य मां राक्षसपीड्यमानामुपेक्षसे धर्मभृतां वरिष्ठ ॥ ७४ ॥

प्राङ्मे प्रलुप्ते तिलके यतस्तत् सद्यः पुनश्चारुतरं व्यतानीः ।
तस्यां मयीत्थं परिपीडितायां स प्रेमभारः क्व गतोऽद्य राम ॥ ७५ ॥

अमर्त्यगन्धर्वनिशाचरेषु सयक्षविद्याधरखगोरगेषु ।
न सोऽस्ति श्चिकत् कुपितस्य यस्ते शक्तोऽग्रतः स्थातुमनन्तवीर्य ॥ ७६ ॥

न तेऽस्ति दोषोऽणुतरोऽपि कश्चिन्ममैव किञ्चिद्दुरितं पुराणम् ।
पाकोन्मुखं जृम्भत उग्ररूपं यतो भवानेवमुपेक्षते माम् ॥ ७७ ॥

मासद्वयं हा मम जीवितस्य कालः प्रदिष्टोऽत्र दशाननेन ।
भवद्वियोगे बत जीवितुं मे तदर्धमप्यद्य न शक्तिरस्ति ॥ ७८ ॥

65

त्वमुत्सवो मे सकलेन्द्रियाणां त्वं मे धनं त्वं विजयो यशस्त्वम् ।
त्वं जीवितं मे परमं सुखं चेत्यन्योन्यवाक्यानि न विस्मृतानि ॥ ७९ ॥

इत्यादिवाक्यान्यसकृद्ब्रुवन्तीं ततःसमाश्वासितवानहं ताम् ।
कामेन शोकेन समुद्यमेन तव प्रभावेन च दुस्सहेन ॥ ८० ॥

मद्वर्णितेन त्वमुना विभो ते कामेन कामः सहसैव तस्याः ।
शोकेन शोकश्च समेधितोऽभूद्वृद्धिर्हि सर्वस्य समेन लोके ॥ ८१ ॥

तवामुना वीर समुद्यमेन किञ्चिन्मयोक्तेन धरासुतायाः ।
सन्ताप उग्रः सकलः प्रशान्तः शक्रोद्यमेनेव विभो धरायाः ॥ ८२ ॥

तस्याः पयोराशिविलङ्घनादिसन्देह उग्रोऽधिककम्पहेतुः ।
मत्स्मारितात्यद्भुततेजसा ते शान्तोऽचलेनेव कठोरवातः ॥ ८३ ॥

संस्मृत्य संस्मृत्य शुचं तवेमां मत्कीर्तितामार्तिभरं वहन्ती ।
पुनः पुनस्ते कुशलं प्रियस्य सा पर्यपृच्छत् प्रणयार्द्रचित्ता ॥ ८४ ॥

ममेव रामक्षणविप्रयोगो यस्य त्वसह्यः परिशुद्धबुद्धेः ।
स लक्ष्मणः किं कुशलीति भूयो मां पृच्छति स्माधिकवत्सला सा ॥ ८५ ॥

पप्रच्छ शाखामृगनायकस्य सख्युस्तवार्या कुशलं प्रियस्य ।
त्वत्सेवकानामपि यूथपानां येषां श्रुतं नामबलादि मत्तः ॥ ८६ ॥

मया पुनस्ते कुशलं निवेद्य सौमित्रिसुग्रीवबलान्वितस्य ।
सा सान्त्विता प्राप परं प्रसादं तरङ्गिणीवाम्बुधरान्तकाले ॥ ८७ ॥

इत्याञ्जनेयोक्तवचो निशम्य प्राज्ञोऽब्रवील्लक्ष्मणपूर्वजन्मा ।
हा हा महारण्यनिवाससख्या तया वियोगो मम दुःसहोऽयम् ॥ ८८ ॥

मासं दिनं वा विरहेऽत्र सीता यज्जीवितं धारयितुं समर्था ।
मन्येऽद्भुतं तत् क्षणमप्यशक्तश्चिन्तादिभिर्जीवितधारणेऽहम् ॥ ८९ ॥

एवं प्रियाया विरहाग्निना मां भस्मीकृतं तद्वचनामृतेन ।
आसिच्य सञ्जीवयतस्तवाद्य नाहं हरे प्रत्युपकर्तुमीशः ॥ ९० ॥

एवं वाक्यमुदीरयन् स भगवान् रामः प्रसन्नाशयः
सन्तापं शमयन्तमात्ममहिमोल्लासैर्महासुन्दरैः ।
राकामध्यगशारदामृतकराकारं मरुन्नन्दनं
सान्द्रानन्दमथालिलिङ्ग सुदृढं स्वाङ्गैर्जगन्मङ्गलैः ॥ ९१ ॥

इति श्रीकोच्चुण्णिराजविरचिते
श्रीरामचरितमहाकाव्यपूरणे
रामसान्त्वनं नाम
सप्तविंशः सर्गः

# अष्टाविंशः सर्गः

रामो निशम्यानिलपुत्रवाक्यं रिपुं निहन्तुं सहरीन्द्रसैन्यः ।
सद्यः प्रतस्थे सह लक्ष्मणेन वृथा न कालं गमयन्ति वीराः ॥ १ ॥

निशाचरान् हन्तुमनाः स गन्तुं रामो हनूमन्तमथारुरोह ।
पूर्वाचलं भानुरिवान्धकारान् सौमित्रिरप्यैन्द्रिसुतं शशीव ॥ २ ॥

रामस्य पार्श्वे कपिचक्रवर्ती गच्छन् सुवर्णाचलतुल्यमूर्तिः ।
सैन्यस्य मध्ये शुशुभे प्रवृद्धरामप्रतापाग्निरिवाविषह्यः ॥ ३ ॥

अग्रे बलस्याञ्जनशैलवर्ष्मा नीलो ययौ वानरसैन्यपालः ।
शशङ्किरे यं समवेक्ष्य लोका रामप्रतापानलधूमपुञ्जम् ॥ ४ ॥

अन्ये च मैन्दद्विविदर्क्षराजगवाक्षमुख्याः कपियूथनाथाः ।
चकाशिरे तत्र बले चरन्तः प्रचण्डमत्स्या इव वारिराशौ ॥ ५ ॥

तच्चोदितं वानरनायकेन बलं कपीनां सहसोज्जगाम ।
तापं निहन्तुं क्षितिसम्भवायाः क्षितेर्मरुन्नुन्नमिवाभ्रवृन्दम् ॥ ६ ॥

प्रस्थानकाले रघुनायकस्य सकीशसैन्यस्य मुहुश्चकम्पे ।
भूमिः प्रतीकैः सह दुर्जनानां वामैरवामैः सह सज्जनानाम् ॥ ७ ॥

बलं तदन्यन्करसीमनादमपारगम्भीरमथाप्रधृष्यम ।
विराजमानं पुरुषोत्तमेन प्रापाम्बुधिं दक्षिणमात्मतुल्यम् ॥ ८ ॥

तीरे समुद्रस्य निवेश्य सेनामपारमुल्लङ्घयितुं पयोधिम् ।
प्रचक्रमे मन्त्रयितुं रघूणां पतिः प्रधानैः सचिवैः समेतः ॥ ९ ॥

पापं विसृज्याग्रजमाशु साधुर्विभीषणः पङ्क्तिमुखानुजन्मा ।
रामं तदा धार्मिकमाजगाम पापद्विषो धर्मपरा हि सन्तः ॥ १० ॥

निशाचरत्वेन कपीश्वरेऽपि त्यागोत्सुके तस्य समाश्रितस्य ।
रघूत्तमः स्वीकरणं चकार महात्मनामेष खलु स्वभावः ॥ ११ ॥

सिन्धुं सिषेवेऽरिवधाय गन्तुं लङ्कां ततो मार्गमवाप्तुकामः ।
विभीषणोक्त्या भरताग्रजन्मा सामप्रियत्वं सहजं सतां हि ॥ १२ ॥

पतिर्जलानां शरणं गताय महाप्रतापाय रघूत्तमाय ।
त्रिलोकनाथाय ददौ न मार्गं जलाधिपत्यं क्व विवेकिता क्व ॥ १३ ॥

रामस्ततः कोपपरीतचेता बाणेन कालानलसन्निभेन ।
प्रक्षोभयामास पतिं नदीनां किं तन्न शक्यं महतां यदत्र ॥ १४ ॥

ततस्तु सिन्धुर्भयकम्पितात्मा मार्गं ददौ लक्ष्मणपूर्वजाय ।
निपातयामास च राघवेण स्वदूषके दुष्टगणे तदस्त्रम् ॥ १५ ॥

यातुप्रधानालयमाशु रामो यातुं पुनः कारितवान् समुद्रे ।
सेतुं नलेनाखिलपापनाशहेतुं जना यं प्रवदन्ति सन्तः ॥ १६ ॥

तेनाध्वना दाशरथिः ससैन्यः स प्राप लङ्काममितप्रभावः ।
श्रुतेन तत्सागरबन्धनेन बद्धं भयेनाशरनाथचित्तम् ॥ १७ ॥

बोद्धुं पुनः शत्रुबलस्य तत्त्वं रक्षोधिपः प्रेषयति स्म कौ चित् ।
खचारमुख्यौ शुकसारणाख्यौ मायाविनौ मन्त्रविदां वरिष्ठौ ॥ १८ ॥

तौ मायया स्वीकृतकीशरूपौ ततः प्रविष्टौ कपिसैन्यमध्यम् ।
विचेरतुस्तत्र जनैरबुद्धौ रूपे समे को न्विह वेत्ति भेदम् ॥ १९ ॥

विज्ञातवान् पङ्क्तिमुखानुजन्मा तावल्पमायावतिमात्रमायः ।
विभीषणस्तत्त्वत एव सद्यस्स्वल्पं जितं स्यान्महता हि सर्वम् ॥ २० ॥

विभीषणोक्त्या कपिभिः प्रगृह्य तौ ताडितौ भग्नसमस्तगात्रौ ।
दीनस्वरं भूरि विलप्य वाचा यातः शरण्यं शरणंस्मरामम् ॥ २१ ॥

तयोस्तदाश्रुत्य वचः कपीन्द्रान् न्यवारयद्दाशरथिः कृपार्द्रः ।
सद्यो ददौ चाभयमाश्रितेषु कृपा ह्यनन्ता खलु तादृशानाम् ॥ २२ ॥

यथोचितं दृष्टनिजोग्रसैन्यौ विधाय मुक्तौ रघुनायकेन ।
तौ जग्मतू रावणमाशयेन न चेलतू राघवपादमूलात् ॥ २३ ॥

प्रासादमारुह्य गिरीन्द्रतुङ्गं पृष्टौ पुनस्तौ दशकन्धरेण ।
रामस्य सैन्यप्रवरान् यथार्हं समूचतुर्भीतिविकम्पिताङ्गौ ॥ २४ ॥

नादेन यस्य प्रचलत्यशेषा लङ्कातिभीतेव महाबलस्य ।
कपीन्द्रसैन्याधिपतिः स्थितोऽग्रे स एष नीलोऽग्निसुतोऽञ्जनाभः ॥ २५ ॥

[युग्मकम्]

यः पद्मकिञ्जल्कसमानवर्णस्त्वामाह्वयंस्तिष्ठति सैन्यमध्ये ।
लाङ्गूलविस्फोटनशब्दमेघनिर्घोषवित्रासितराक्षसाहिः ॥ २६ ॥

स बालिसूनुर्युवराज एष रामस्य भक्तोऽङ्गदनामधेयः ।
अस्यैव बुद्ध्या हनुमानपश्यत् सीतां त्वदन्तःपुरगामसङ्गम् ॥ २७ ॥

विभाति यो बालिसुतस्य पृष्ठे तिष्ठन् नलोऽयं कपियूथनाथः ।
रामाज्ञया सेतुरनेन बद्धः सिन्धोस्सुराणां हृदि च प्रहर्षः ॥ २८ ॥

यो नीलजीमूतसमानकायः पराक्रमी ब्रह्मसुतो वराढ्यः ।
दैत्यान्तको विष्णुरिवेन्द्रगोप्ता स जाम्बवानृक्षपतिर्बुधोऽयम् ॥ २९ ॥

[युग्मकम्]

उद्यत्सहस्रांशुसमाननान्तःसंलक्ष्यशुभ्रांशुकलाभदंष्ट्रः ।
य एष कैलाससमानकायो हसन् सुतीक्ष्णैः कुलिशं नखैः स्वैः ॥ ३० ॥

त्वत्सम्मुखो गर्जति भीमनादः स लङ्घिताब्धिर्हनुमानधृष्यः ।
नूनं न शक्यं बलरूपवेगबुद्धिप्रभावादिकमस्य वक्तुम् ॥ ३१ ॥

अन्ये च ये मेघमहीध्रकायाः शैलायुधा दन्तनखायुधाश्च ।
रोषाकुलास्त्वां हृतरामदारं पश्यन्ति गर्जन्त्यभिसम्पतन्ति ॥ ३२ ॥

तेऽमी विभो यूथपयूथपेन्द्रास्तारः समैन्दो द्विविदः प्रमाथी ।
गजो गवाक्षो गवयः सुषेणः प्रख्यातवीर्यास्तनयाः सुराणाम् ॥ ३३ ॥

बलं महत् पश्य बलीमुखानामनन्तमक्षोभ्यमलङ्घ्यमेतत् ।
गम्भीरमुग्रस्तनयित्नुघोषं समुद्रमुद्वेलमिवान्तकाले ॥ ३४ ॥

वनौकसः केचिदिहोत्पतन्ति धावन्ति केचित् प्रचलन्ति केचित् ।
तरन्ति सिन्धुं नलसेतुनान्ये परे तु तिष्ठन्ति समुद्रपारे ॥ ३५ ॥

अमुष्य सैन्यस्य पदाभिमृष्टा श्रीरामसेवोदितपुण्यभूम्नः ।
सद्यो दिवं गच्छति भूमिरेषा समुच्चलद्रेणुचयच्छलेन ॥ ३६ ॥

यन्नेत्रवर्णेक्षणतो न लज्जां जलोद्भवं हा जलभृच्च याति ।
स एष रामः पुरुषोत्तमत्वप्रकाशकानन्तगुणाम्बुराशिः ॥ ३७ ॥

अन्यैरचाल्यस्य शुभावहस्य भक्ताय दत्तस्य शरासनस्य ।
अनेन बाल्ये रचितात्तु भङ्गाद्धरः सदेवर्षिगणः प्रसन्नः ॥ ३८ ॥

तपःप्रतापज्वलने तु यस्मिन् हन्तार्जुनाद्याः शलभत्वमापुः ।
महायुधार्चिःप्रकरे भुजोत्थाः सम्प्राप्य सोऽम्भोदमसुं प्रशान्तः ॥ ३९ ॥

धर्माश्रयोऽसौ जननीसपत्नीवाक्येन वस्तुं विपिनं प्रपन्नः ।
सत्यप्रतिज्ञं जनकं विधातुं प्रार्थ्यं सुरैरप्यपहाय राज्यम् ॥ ४० ॥

खरादिरक्षोगणधूमकेतुः समाश्रितानामभयङ्करहेतुः ।
अत्रागतः शत्रुमसौ विधातुस्त्वां पौत्रजं सागरबद्धसेतुः ॥ ४१ ॥

प्रावृड्घनश्यामतनोरमुष्य शरद्घनश्याम[श्येत]तनुः समीपे ।
गुणैरभेदं गमितः स्थितो यः स लक्ष्मणो दक्षिणबाहुरेषः ॥ ४२ ॥

अधार्मिकं त्वां शुभधीर्विहाय यो धार्मिकं द्राक् शरणं शरण्यम् ।
जगाम रामं श्रुतियोगिनं तं विभीषणं चक्षुरिवास्य पश्य ॥ ४३ ॥

विभाति विद्युल्लतिकेव यस्य ग्रीवास्थले काञ्चनमालिकेयम् ।
वित्रासदा जीवनदा यथार्हं सुग्रीव एष प्लवगाधिराजः ॥ ४४ ॥

दृढातिमृद्वी बहुशास्त्रयोगपटीयसी चर्मपटीव बुद्धिः ।
बलाधिकाद्वालिन उग्रकोपादमुं चिरं पालयति स्म चित्रम् ॥ ४५ ॥

महाबलं बालिनमिन्द्रपुत्रं रामः शरेण प्रसभं निहत्य ।
मित्रात्मजाय प्रददावमुष्मै स्वमित्रभावं सकपीन्द्रराज्यम् ॥ ४६ ॥

प्रसीद राजन् जनकेन्द्रपुत्रीं रामाय देह्याश्रितवत्सलाय ।
आर्यैः स्वकार्यं सचिवैर्विचार्य महारणं वारिकुलान्तकाय ॥ ४७ ॥

इत्याशरेशः शुकसारणोक्तं सम्पत्करं नाशनमापदां च ।
मेने मुमूर्षुर्न हितं विनाशकाले हि पुंसां विपरीतबुद्धिः ॥ ४८ ॥

ऊचे च वाचं परुषां रुषान्धस्तौ पङ्क्तिकण्ठः सचिवौ नयज्ञौ ।
प्राप्तं कुतो राजगुरुत्वमद्य मच्छासनायोद्यतयोरहो वाम् ॥ ४९ ॥

स्तोत्राणि शत्रोर्बहुधा विधातुं ममाग्रतः सर्वनयज्ञमौले: ।
जाता कथं वा युवयोर्न लज्जा महाप्रतापस्य पुनर्भयं वा ॥ ५० ॥

सम्मानितौ भूरितरं भवन्तौ वाचा मुहुः सत्क्रियया धिया च ।
मया पुरा तत्फलमद्य किं नु तेजोवधः शत्रुबलस्तवैर्मे ॥ ५१ ॥

केनाप्यहं चालयितुं न शक्यः स्थिरात्मतौन्नत्यमहत्त्वपूर्णः ।
बहुप्रयत्नैः पुरुषेण जातु समीरणेनेव तुषारशैलः ॥ ५२ ॥

तत्त्वप्रबोधो मम सन्निकर्षान्नष्टोऽधुना किं युवयोर्नु तस्य ।
यज्जिह्वयैव क्रियते जनानां स्थितिर्मृतिश्च त्रिजगत्स्थितानाम् ॥ ५३ ॥

जातं प्रकोपं युवयोरमुं मे पूर्वोपकारस्मरणं करोति ।
मृदुं ततो वां न निहन्मि सद्यस्त्यजामि यातं त्वरितं ममाग्रात् ॥ ५४ ॥

इत्युक्तवन्तं रजनीचरेन्द्रं नत्वा गतौ तौ सभयौ सशोकौ ।
भूयोऽपि रामस्य बलं स पश्यन् स्थितः समुद्विग्नमना दशास्यः ॥ ५५ ॥

रामे भयं रागमिदं प्रियायां संक्षीयमाणं च वहन् विवेकम् ।
उद्यत्तमोरागविलीयमानसूर्यांशुकालप्रतिमोऽभवत् सः ॥ ५६ ॥

भूयोऽपि रामस्य बलं दशास्यस्तत्त्वेन बोद्धुं सहमान्यचारान् ।
सम्प्रेषयामास ययुस्ततस्ते शार्दूलमुख्या दशकण्ठभृत्याः ॥ ५७ ॥

तथा गतास्ते कपिभिर्गृहीता निपीडिता दन्तनखैस्तथैव ।
रामेण मुक्ताश्च तथाद्रभावाद्यथा तु पूर्वं शुकसारणाख्यौ ॥ ५८ ॥

चराः पुनस्ते शुकसारणोक्त्या बद्धं भयं चेतसि रावणस्य ।
स्वया रघूत्तंसमहाबलोक्त्या द्विर्बन्धनेनेव दृढं वितेनुः ॥ ५९ ॥

निशाचरेन्द्रेण पुनर्विसृष्टाश्चारा ययुस्ते भयकम्पिताङ्गाः ।
नयानयज्ञैः सचिवैः सहाथ स मन्त्रयामास महासभायाम् ॥ ६० ॥

तं माल्यवान्नाम कुशाग्रबुद्धिर्मातामहस्तत्र वचो बभाषे ।
समाहितात्मा शृणु वत्स वाक्यं हितं मदीयं महितं नयज्ञैः ॥ ६१ ॥

उल्लासहेतुर्दितिजाशराणां महोत्पलानामिव रात्रिकालः ।
महानधर्मस्त्रिदशर्षिणां तु धर्मो दिनारम्भ इवाम्बुजानाम् ॥ ६२ ॥

हिनस्त्यधर्मं बलवांस्तु धर्मो मरीचिमालीव तमिस्रसङ्घम् ।
तथैव धर्मं विनिहन्त्यधर्मश्चक्षुर्भवं ध्वान्त इव प्रबोधम् ॥ ६३ ॥

महर्षिवर्यैर्विजितान्तरङ्गैस्तेजस्विभिः सम्प्रति साधु धर्मः ।
वृद्धिं प्रणीतस्तपसा प्रकामं किमस्त्यसाध्यं तपसा त्रिलोके ॥ ६४ ॥

यत्तार्जितं प्राग्विपुलं विनष्टप्रायं तपस्तेऽद्य सुदीर्घभोगैः ।
वृन्दं त्विदानीं रजनीचराणां भवत्यहो ग्राम्यसुखप्रसक्तम् ॥ ६५ ॥

प्रसादितात् प्राक् तपसात्मयोनेर्मदादवध्यत्ववरो वृतोऽभूत् ।
न वा नरेभ्यो न च वानरेभ्यस्त्वया विवेकं हि मदो निहन्ति ॥ ६६ ॥

हन्तुं भवन्तं निजमाययाद्य नरत्वमाश्रित्य सुरारिशत्रुः ।
रामाख्यया वानररूपवद्भिः प्रक्षोऽत्र देवैरिति मे वितर्कः ॥ ६७ ॥

त्रैयम्बकं येन धनुः प्रभग्नमृषिर्जितश्चार्जुनकालरात्रिः ।
हतः खरो बाल्यपि वारिराशौ सेतुः कृतस्तस्य कथं नरत्वम् ॥ ६८ ॥

उल्लङ्घितोऽब्धिर्मिथिलेन्द्रपुत्री दृष्टात्र गूढं परिसान्त्विता च ।
अक्षो हतो येन विभो पुरीयं दग्धा कथं तस्य च वानरत्वम् ॥ ६९ ॥

तदद्य रामेण कुरुष्व सन्धिं सीताममुष्मै दयितां प्रदेहि ।
राज्ञा नयज्ञेन हि संविधेयो न विग्रहः शात्रववृद्धिकाले ॥ ७० ॥

इतीरितां माल्यवता हितार्थां निशाचरेन्द्रः स निशम्य वाचम् ।
आबध्य वक्त्रे भ्रुकुटीमदभ्रं निर्भर्त्सयन्नुत्तरमाबभाषे ॥ ७१ ॥

कालेन जीर्णं धनुरैशमद्य शमं प्रपन्नोऽर्जुनहा स चर्षिः ।
तद्भङ्गतस्तज्जयतश्च रामः किं श्लाघनीयोऽत्र नयानयज्ञैः ॥ ७२ ॥

शोकाद्भगिन्यार्तिविलोकनोत्थात् खरः ससैन्योऽतिसमाकुलात्मा ।
स्वयं मृतः स्यान्निहतो न राज्यभ्रष्टेन रामेण वनालयेन ॥ ७३ ॥

बाली समीके विमतप्रहारैरत्युल्बणैर्जर्जरिताखिलाङ्गः ।
श्रान्तश्च दुष्टेन हतो यदासीच्छन्नेन रामेण ततः स्तुतिः का ॥ ७४ ॥

हनूमतस्त्वक्षवधं वदंस्त्वं स्मरस्यहो शक्रजितो न कर्म ।
तद्बन्धनं हन्त महात्मनस्तत् कुतश्च सेन्द्रत्रिगज्जयं मे ॥ ७५ ॥

शूरेषु साधोस्तव नाभ्यसूया मातामहस्याप्यरिपक्षपातः ।
न स्यादिदानीमिदमुक्तमस्मत्प्रोत्साहनार्थं भवतेति मन्ये ॥ ७३ ॥

जीवन् न रामः प्रतियास्यतीतो यथा तथाहं सकलं विधास्ये ।
सकुम्भकर्णः सबलः समित्रः सशक्रजिद्वीतभयो भव त्वम् ॥ ७७ ॥

एतादृशान्येव वदन् वचांसि त्यक्तो मया हन्त विभीषणोऽभूत् ।
गुरुं भवन्तं तु न सन्त्यजामि गुरुर्हि मान्यः खलु सर्वदापि ॥ ७८ ॥

श्रुत्वेति वाक्यं दशकन्धरस्य भीशोकलज्जाभरकम्पितात्मा ।
न माल्यवानुत्तरमभ्युवाच तस्याः सभायाश्च विनिर्जगाम ॥ ७९ ॥

लङ्कानगर्यां विधिवद्विधाय द्वारेषु रक्षामथ राक्षसेन्द्रः ।
कामान्धधीः स्वं कृतकृत्यमेव मेने जलं कं न करोति कामः ॥ ८० ॥

तस्या नगर्याः स ररक्ष पूर्वद्वारं प्रहस्तः सह भूरिसैन्यैः ।
निरीक्ष्य यं सायुधहस्तमग्रे युद्धेषु जातास्त्रिदशा विहस्ताः ॥ ८१ ॥

तस्या महापार्श्वमहोदराख्यौ ररक्षतुर्नैर्ऋतयोधमुख्यौ ।
द्वारं पुरो दक्षिणतोऽतिदक्षौ दशास्यवाचान्तककालकल्पौ ॥ ८२ ॥

द्वारं पुरः पश्चिमतो ररक्ष स शक्रजेता वरविक्रमोग्रः ।
अनन्तचिन्ताधिभयप्रदा यत्स्मृतिर्मृतिर्हन्त सतां जनानाम् ॥ ८३ ॥

द्वारं पुरस्तूत्तरतो ररक्ष रक्षोधिनाथः स्वयमेव तस्याः ।
यत्राभिगन्ता प्रथमं ससैन्यो रामः ससौमित्रिरसह्यवीर्यः ॥ ८४ ॥

ततस्तु रामः सुबलः सुबेलं शैलं समारुह्य ददर्श लङ्काम् ।
वृन्दं च सालोपरि राक्षसानां गुप्त्यै कृतं सालमिवान्यमुच्चैः ॥ ८५ ॥

विलोक्य लङ्कामुदितप्रकोपा जगर्जुरुच्चैः प्लवगप्रवीराः ।
सुपर्णपक्षानिलजप्रणादात् सर्पा इवातश्चकिता निशाटाः ॥ ८६ ॥

दृष्ट्वाथ तस्यां पुरि गोपुराग्रे रक्ताम्बरालङ्कृतिमाशरेन्द्रम् ।
सन्ध्यातपव्याप्तमिवाभ्रराशिं कपीश्वरः कोपवशं जगाम ॥ ८७ ॥

ततः समुत्प्लुत्य निशाचराणां पत्युर्निपत्याग्रभुवि द्रुतं सः ।
चक्रे नियुद्धं सह तेन वीरः सुग्रीव उग्रैः करसम्प्रहारैः ॥ ८८ ॥

स बाहुयुद्धे रजनीचरेन्द्रं निर्जित्य हृत्वा मकुटानि तस्य ।
वीरः शिरांसीव विशालकीर्तिः प्रत्याययौ दाशरथेः समीपम् ॥ ८९ ॥

सम्पातिमुख्यस्वचरोक्तलङ्कारक्षाविशेषं मतिमान् बभाषे ।
विभीषणोऽथ प्रवरो रघूणां रोधं नगर्याः सुदृढं चकार ॥ ९० ॥

अन्तःस्थितं तं नगरस्य पूर्वद्वारे प्रहस्तं बहुयोधयुक्तम् ।
प्रबाधितुं वानरसैन्यपालो नीलः स्थितस्तत्र महाप्रतापः ॥ ९१ ॥

वीरौ महापार्श्वमहोदराख्यौ रामाज्ञया बाधितुमुग्रवीर्यः ।
द्वारे पुरो दक्षिणतः स्थितोऽभूद्वीरोऽङ्गदोऽनेककपीन्द्रयुक्तः ॥ ९२ ॥

अन्तः स्थितं शक्रजितं निरोद्धुं द्वारे पुरः पश्चिमतो हनूमान् ।
कैलासशैलेन्द्रसमानकायः स्थितः सहानेककपिप्रवीरैः ॥ ९३ ॥

अन्तःस्थरक्षःपतिबाधनाय सौमित्रियुक्तः स्वयमेव रामः ।
लङ्कापुरस्योत्तरतः स्थितोऽभूद्दिव्यं समुद्यम्य धनुः सबाणम् ॥ ९४ ॥

दशाननस्येन्द्रजितश्च मध्ये स्थितं विरूपाक्षमसह्यवीर्यम् ।
रोद्धुं स्थितस्तत्र बलीमुखानां पतिः समं जाम्बवदादिवीरैः ॥ ९५ ॥

ततस्तु दूत्याय निरस्तशङ्कः शूरोऽङ्गदः स प्रविवेश लङ्काम् ।
रामाज्ञया तच्चरणेऽखिलाङ्गदानाद्व्यधाद्यः सफलं स्वजन्म ॥ ९६ ॥

सुखप्रदं वाक्यमुदीरितं यद्विपश्चिता सादरमङ्गदेन ।
द्वेषाय जातं बत तन्मुमूर्षोर्दशाननस्यात्ममित्रातुरस्य ॥ ९७ ॥

तमाज्ञया पङ्क्तिमुखस्य भृत्याः शूरा ग्रहीतुं तरसाभ्यधावन् ।
तैर्ग्राहयामास निरस्तशङ्कः स्वमङ्गदो दर्शयितुं प्रतापम् ॥ ९८ ॥

स दुष्टहस्तीव निशाचरांस्तान् स्वगात्रलग्नान् व्यधुनोत्तरस्वी ।
अत्यन्तदूरे पतिताः पुनस्ते सद्यो मृता जर्जरिताखिलाङ्गाः ॥ ९९ ॥

समुत्पतन् बालिसुतोऽतिवीरः पादप्रहारेण बभञ्ज सद्यः ।
प्रासादमीशस्य निशाचराणां मनोरथं चाद्भुतघोरकर्मा ॥ १०० ॥

वाचाङ्गदस्याथ समागतस्य निश्चित्य दण्ड्यं रिपुमात्तकोपः ।
तन्निग्रहाय प्रथितप्रभावानाज्ञपयद्दाशरथिः प्लवङ्गान् ॥ १०१ ॥

इति श्रीकोच्चुण्णिराजविरचिते
श्रीरामचरितमहाकाव्यपूरणे
अङ्गददूत्यं नाम
आष्टाविंशः सर्गः



# एकोनात्रिंशः सर्गः

अथ रघुकुलमुख्यस्याज्ञया कीशमुख्याः
क्षितिरुहगिरिशृङ्गव्रातमुत्पाट्य धीराः।
अविरतमभिपेतुर्मेघवत् प्रोन्नदन्तः
प्रसभमथ बभञ्जुश्चाशु लङ्कामशङ्काः ॥ १ ॥

[ युग्मकम् ]

लसदुपवनसालैर्विस्तृतोत्तुङ्गसालैः
कनकमणिविचित्रैस्तोरणैर्गोपुरैश्च ।
कपिभिरतनुभग्नैर्भज्यमानैः सकम्पा
विकृतविविधनादा सा रुरोदेव लङ्का ॥ २ ॥

निशिचरकुलभर्तुः प्रेरणाद्यातुधानाः
श्रवणपरुषनादैः कम्पयन्तो जगन्ति।
असितविपुलकायच्छादिताशावकाशाः
ज्वलदनलशिखोद्यच्छस्त्रविद्युत्प्रदीप्ताः ॥ ३ ॥

रुचिरविविधवर्णैरिन्द्रचापोपमानै-
र्विमलकनकरत्नैर्भूषणैराचिताङ्गाः ।
त्वरितमथ समन्तान्निर्ययुः स्वोग्रवीर्य-
प्रचलितभुवनस्येवानिलस्याम्बुवाहाः ॥ ४ ॥

अथ रणमतिभीमं राक्षसैर्वानराणां
समभवदसुरेन्द्रैर्निर्जराणामिवोग्रम् ।

भटमृधपटुतेक्षाकौतुकाकृष्टसिद्ध-
प्रकरवदननिर्यत्साधुवादाभिरामम् ॥ ५ ॥

अतिगतिजवहस्तिस्यन्दनाश्वाधिरूढाः
निशितविविधशस्त्रैर्यातुधाना निजघ्नुः ।
शितरदनखवृक्षप्रैस्थरैरस्तशङ्काः
गतिजवजितवाता वानराश्चारिवीरान् ॥ ६ ॥

तिमिरमिव मयूखैः सूर्यचन्द्रौ कलम्बै-
र्दशरथनृपपुत्रौ जघ्नतुर्यातुवृन्दम् ।
रुधिरझरनिषिक्तं युद्धभूमण्डलं त-
द्गगनमिव ससन्ध्याशोभमारक्तमासीत् ॥ ७ ॥

निशिचरकपिकायोत्तुङ्गभूमीधरोद्य-
द्बहुलरुधिरतोयाः केशशैवालकीर्णाः ।
असिभुजगकरालश्चर्मकूर्मा मुखाब्जाः
स्फुरदुरुभुजमीना सुस्रवुस्तत्र नद्यः ॥ ८ ॥

अतिबलभटमत्स्यैर्दुर्विगाह्यः कबन्ध-
प्रकरकृतविचित्रोत्तालनृत्तातिघोरः ।
परिलसदुरुरत्नौघाचितोनन्तपारो
जलधिरिव गभीरः सोऽभवत् सम्प्रहारः ॥ ९ ॥

प्लवगकुलवरिष्ठैर्द्वन्द्वयुद्धोऽतिवेगैः
समिति विमथितानां राक्षसानां समूहैः ।
द्रवति सति सुराणामाननेऽभूद्विकासः
शरदि झटिति वातैरम्बुदानामिवाब्जे ॥ १० ॥

समिति शरदि तस्या मेघनादोऽतिभीमः
सपदि सकललोकत्रासनोऽन्तर्हितोऽभूत् ।
दिवसकृत इवासीदङ्गदस्य प्रतापः
सुजनवदनपद्मोल्लासहेतुः प्रकाशः ॥ ११ ॥

समरधरणिदेशाद्घोररूपात् समन्ता-
द्बहुलरुधिरपूरैरुच्चलद्भिः प्रसिक्तम् ।
गगनतलमशेषं रक्तमासीद्गतोऽब्धि-
निजतनुलगदस्रक्षालनायेव सूर्यः ॥ १२ ॥

नवजलधरनीले रात्रिकाले चरद्भी-
रजनिचरसमानैर्बुद्धिमेभ्यो ददानैः ।
प्रतिहतशुभमार्गालोकनैर्व्याप्त आसी-
न्निबिडतरतमोभिः सोऽथ सङ्ग्रामदेशः ॥ १३ ॥

अमितबलमहिम्ना बालिपुत्रेण घोरे
बलरिपुजिदमर्षी जितो द्वन्द्वयुद्धे ।
अतिवरबलमायो मूलभूतौ रिपूणां
दशरथनृपपुत्रौ हन्तुमन्तर्हितोऽभूत ॥ १४ ॥

सुरपजिदथ नागान् काद्रवेयान् विषोग्रान्
निजशिततरबाणान् मायया संविधाय ।
दशरथतनयौ तैस्ताडयामास मर्म-
स्वनवरतमशङ्कं यैस्तु बद्धः पुरेन्द्रः ॥ १५ ॥

अथ हरिहयजेत्रा तत्र नागास्त्रबद्धौ
दशरथनृपपुत्रौ पेततुर्युद्धभूम्याम् ।

सह नयनजलौघर्दुःखितानां कपीनां
मुदितनिशिचराणां चोत्थिताः सिंहनादाः ॥ १६ ॥

तदनु दशमुखस्तौ दर्शयामास सीतां
रणभुवि रघुवीरौ पातिताविन्द्रजेत्रा ।
स्ववशमशरणेयं यास्यतीति स्मरार्तः
कलयति न हि कं कं कामिलोकः प्रयोगम् ॥ १७ ॥

शरहतिपतितं तं सानुजं वीक्ष्य रामं
रणभुवि विलपन्तीं सान्त्वयामास सीताम् ।
अपि निशिचरजातौ कापि जाता दयार्द्रा
क्व न सुकृतकृतां स्याच्छोकविध्वंसहेतुः ॥ १८ ॥

तदनु जनकपुत्र्यां सान्त्विताया गतायां
स्फुटतरमनुकुर्वन् मानसं वानराणाम् ।
अविरतमतिमात्रं शोचतां चुक्षुभेऽब्धिः
प्रबलतरसमीराघातसञ्जातकम्पः ॥ १९ ॥

तदनिलवसङ्गात् पादपैः कूलजातै-
स्त्रुटितसुदृढशाखामूलकाण्डैः सहैव ।
द मुखसुतबाणाः काद्रवेया भुजङ्गा
विविशुरुदकराशिं राघवावाशु मुक्त्वा ॥ २० ॥

दशरथसुतबाधाकारिणां पन्नगानां
शरणमयमितीव क्षोभयन् पक्षवातैः ।
जलपतिमथ तत्र प्रादुरासीत् प्रतापः
सतनुरिव मुरारेरग्नितुल्यो गरुत्मान् ॥ २१ ॥

अनिलमतिमहान्तं पक्षविक्षेपकेल्या
सपदि विरचयन्तं सादरं मित्रभावात् ।
अनलमिव कपीन्द्रास्ताक्ष्यमारादपश्यं-
स्तनुविगलितबाणावुत्थितौ राघवौ च ॥ २२ ॥

अथ खगकुलनाथः स्पर्शमात्रेण कृत्वा
दशरथनृपपुत्रौ निर्व्रणौ निर्व्यथौ च ।
विकसितवदनानां पश्यतां तत्र तेषा-
मगमदमिततेजःकीर्तिमापृच्छ्य रामम् ॥ २३ ॥

तदनु रघुवरज्याक्षेपजातः प्रणादः
प्रमुदितकपिसेनासिंहनादाभिमिश्रः ।
सपदि समुदितोऽभूत् कम्पिता यं निशम्य
स्तनितमिव भुजङ्गा दारुणा यातुधानाः ॥ २४ ॥

समिति भवति कोपादक्षि धूम्रं यदीयं
तमथ निशिचरेन्द्रस्तत्र धूम्राक्षमुग्रम् ।
सह बहुभिरनीकैः प्रेषयामास सद्यः
प्लवगबलसमेतौ राघवौ तौ निहन्तुम् ॥ २५ ॥

निशिचरपृतनेशः पश्चिमद्वारतोऽस्याः
दशवदननगर्याः सायुधस्यन्दनस्थः ।
सपदि बहुबलैः स्वैर्निर्गतोऽपश्यदुग्रं
जलधिमिव हनूमत्पालितं कीशसैन्यम् ॥ २६ ॥

रघुपतिपदभक्तैर्वानरै राक्षसानां
तुमुलरणमथासीद्रावणाज्ञाकराणाम् ।

अदितिदितितनूजश्लाघनात् सुस्फुटोभू-
जगति सकलयुद्धोत्कर्षभावो यदीयः ॥ २७ ॥

अथ वननिलयानामुन्नतानां तरूणां-
गणमिव दृढशैत्यैराशुगैर्भीमवेगैः ।
कपिकुलतिलकानां कम्पयामास यूथं
घनसमय इव द्राग्यातुसेनधिनाथः ॥ २८ ॥

तदनु सपदि तेषामाशुगानां प्रवेगं
क्षितिधर इव वायोर्वारयामास सूनुः ।
कमपि शिखरिकूटं कालदण्डोपमानं
निशिचरपृतनेशं हन्तुकामोऽक्षिपच्च ॥ २९ ॥

अखिलरुधिपानां कालरात्रिं शिलां ता-
मतिगुरुभयदात्रीं तत्र वीक्ष्यापतन्तीम् ।
समरभुवि रथात् स्वात्तूर्णमाप्लुत्य तस्थौ
विपुलतरगदावान् राक्षसानीकिनीशः ॥ ३० ॥

युधि निजगदया द्राक् ताडितस्तेन गाढं
गजपतिरिव मत्तो मालयो वायुसूनुः ।
अरचयदतिवीर्यः क्रोधतस्तं पलाशि-
प्रवरमथ पलाशिक्षेपसञ्चूर्णिताङ्गम् ॥ ३१ ॥

पवनसुतविशस्ते तत्र धूम्रेक्षणेऽस्मिन्
निशिचरकुलनाथः क्रोधधूम्रेक्षणोऽभूत् ।
कटकटरटितोद्यद्वज्रदंष्ट्रस्ततोऽदा-
द्रघुतिलकवधार्थं वज्रदंष्ट्राय चाज्ञाम् ॥ ३२ ॥

तदनु स शमनाशाद्वारतो वज्रदंष्ट्रः
सह निशिचरसैन्यैर्निर्जगामोर्जितात्मा ।
कनकशिखरिवर्ष्मा यत्र कल्पान्तकाल-
ज्वलन इव रिपूणां दाहकृद्धालिसूनुः ॥ ३३ ॥

समरमथ कपीनां राक्षसैस्तत् सहाभू-
द्धरणिरजसि यत्राभ्युत्थिते शापभेदम् ।
स्थिरमनिमिषभावं योधतत्तत्क्रियेक्षा-
विधिषु च वरभेदं चामरा मेनिरे स्वम् ॥ ३४ ॥

निशितशरसहस्रैर्यूथपानां कपीना-
मवयवदलनं द्राक्कुर्वतस्तस्य चित्रम् ।
सुनिशितकरवालेनाहरद्वालिसूनुः
कनकमकुटजुष्टं वज्रदंष्ट्रस्य शीर्षम् ॥ ३५ ॥

अपतदथ हृदन्तं कम्पयन् राक्षसानां
सह समरधरण्यां वज्रदंष्ट्रस्य कायः ।
तदनु रुधिरपेन्द्रोऽकम्पनं याहि योद्धुं
त्वमिति परुषरोषक्षोभितात्मादिदेश ॥३६ ॥

विपुलबलसमेते राक्षसेऽस्मिंश्च याते
सपदि शलभभावं युद्धनिर्धूतशङ्के ।
पवनजमतितेजोराशिमामाद्य वह्निं
निशिचरपतिरूचे त्रस्तचित्तः प्रहस्तम् ॥ ३७ ॥

रणशिरसि पुरा यैर्निर्जिता निर्जरेन्द्राः
सकलजगदधीशा लीलया वीर्यवद्भिः ।

कपिभिरिह हतास्ते राक्षसा मामकीनाः
विषमममुमतर्क्यं कर्मणां पश्य पाकम् ॥ ३८ ॥

अथ समिति निकुम्भः कुम्भकर्णात्मजो वा
बहुतरवरमायाविक्रमः शक्रजिद्वा ।
सपदि पुनरहं वा तत्र योग्याः प्रयातुं
स्थिरविजय भावन् वा यातु यातुप्रधानः ॥ ३९ ॥

इति निशिचरभर्तुर्वाक्यमाकर्ण्य रक्षो-
वरबलपतिरुद्यच्छस्त्रहस्तः प्रहस्तः ।
निरगमदथ पूर्वद्वारतः सम्प्रकर्षन्
प्रलयजलधितुल्यं राक्षसानामनीकम् ॥ ४० ॥

निशिचरवरपुर्याः प्रेक्ष्य तं निःसरन्तं
त्ववरजमिदमूचे पङ्क्तिकण्ठस्य रामः ।
बलमुदधिसमानं कर्षतोऽत्युग्रमूर्ते-
र्निशिचरकुलकेतोरस्य तत्त्वं वद त्वम् ॥ ४१ ॥

अथ रघुपतिमूचे राक्षसेन्द्रानुजन्मा
दशमुखबलनेता ह्येष नाम्ना प्रहस्तः ।
भयमरचलितेभ्यो मानसेभ्यः सुराणा-
मयममिततरौजा जातुचिन्नापयाति ॥ ४२ ॥

दशमुखपुरपूर्वद्वारतो निःसरन्तं
रुरुधुरखिलरक्षोनायकानीकवन्तम् ।
अहितविधिनियोगाद्दुर्निमित्तानि पूर्वं
रघुतिलकनियोगात् कीशयूथानि पश्चात् ॥ ४३ ॥

धरणिपतितभग्नोद्भ्रान्तनानापलाशि-
प्रकर उरुनिनादोद्गारिभूरिप्लवङ्गः ।
घनसमय इवासीत्तत्र वल्गत्कबन्धः
परिचलदसिविद्युद्दीपितः सम्प्रहारः ॥ ४४ ॥

जलनिधिमिव गभीरं भीमयादःप्रधानैः
प्लवगपतिबलं तद्यूथपैर्दुर्विगाहम् ।
निशिचरपृतनेशः कार्मुकाग्र्यं विधुन्वन्
झषवर इव चञ्चत्तुङ्गशृङ्गो जगाहे ॥ ४५ ॥

इषुभिरतिरयाभिर्दुस्सहाभिः स्वसैन्यं
ज्वलनमिव शिखाभिः काननं निर्दहन्तम् ।
प्रबलतरसमीरोत्कृष्टवेगं प्रहस्तं
शमयितुमुदतिष्ठन्मेघवत्तत्र नीलः ॥ ४६ ॥

अपरिमितमसह्यं तत् प्रहस्ताम्बुदेन
प्रसभमथ विमुक्तं दूरपात्युग्रशैत्यम् ।
विशिखसलिलवर्षं मीलिताक्षःकथञ्चिद्-
वृषभ इव स सेहे वानरानिकिनीशः ॥ ४७ ॥

द्रुततरमभिपत्य स्यन्दनं साश्वसूतं
धनुरपि भुजवीर्यात्तस्य नीलो बभञ्ज ।
शकलितरथचापः सम्प्रहारक्षमाया-
मथ स मुसलहस्तस्तत्र तस्थौ प्रहस्तः ॥ ४८ ॥

मुसलखरनखाद्यैरर्दयन्तौ मिथस्तौ
निशिचरकपिसेनानायकावुन्नदन्तौ ।

अथ समरधरायां रक्तसंसिक्तगात्रौ
दद्दशुरखिललोकाः सान्ध्यमेघाविवाभ्रे ॥ ४९ ॥

गुरुतरमुसलेनाभ्यर्दितं स्वं निहन्तु
विमतममितवेगादापतन्तं विलोक्य ।
क्षितिधरशिखरेणाताडयन्मूर्ध्नि नीलो
न्यपतदथ गतासुर्भिन्नशीर्षः प्रहस्तः ॥ ५० ॥

निशिचरपृतनेशे हन्त तस्मिन् गतेऽस्तं
सततमपि समेते तेजसा दुःसहेन ।
निशिचरनिकुरुम्बं सम्प्रविश्यालयं स्वं
खगकुलमिव सर्वं मूकमासीत् खगेन्द्रे ॥ ५१ ॥

तदनु निजबलानां नायकं वह्निसूनु-
प्लवगविपुलतेजःपुञ्जवह्नौ प्रहस्तम् ।
सपदि शलभभावं प्राप्तमाकर्ण्य रक्षः-
पतिरमितशुचोचे यातुधानप्रधानान् ॥ ५२ ॥

शृणुत मम तु हस्ते दक्षिणेऽस्मिन् प्रहस्ते
ज्वलनतनयशस्तेऽद्यास्मि जातो विहस्तः ।
उदधिसममलङ्घ्यं रुद्धलङ्कं विशङ्क
प्लवगबलमहं तत् सम्प्रवेक्ष्यामि हन्तुम् ॥ ५३ ॥

निरगमदथ पुर्या उत्तरद्वारतः स्वं
रथवरमधिरूढः सर्वशस्त्रास्त्रपूर्णम् ।
पिशितभुगधिनाथस्तेऽनुजग्मुस्तदा तं
तपनमिव मयूखा रक्षसां ये तु मुख्याः ॥ ५४ ॥

परिवृतमतिवीरैः कौणपैर्निर्गतं तं
प्रमथपतिमिवोग्रैर्भूतमुख्यैः परीतम् ।
रघुपतिरवलोक्य स्वान्तिकस्थं दशास्या-
वरजममितशक्तिस्तत्र पप्रच्छ किञ्चित् ॥ ५५ ॥

अयममिततरौजाः को नु संहाररुद्र-
प्रतिभयवपुरस्याः पश्य निर्याति पुर्याः ।
द्रुतममुमनुयान्तो योधमुख्याश्च केऽमी
सकलमपि यथावत्तत्त्वमेषां वद त्वम् ॥ ५६ ॥

इति रघुकुलनाथेनादरात्तत्र पृष्टः
स दशमुखकनिष्ठः पण्डितानां वरिष्ठः ।
सुमधुरतरवाक्यैर्वर्धयन्नस्य तेजः
स्फुटतरमहितानां तत्त्वमेषां बभाषे ॥ ५७ ॥

दवदहन इवोग्रः पादपान् ग्रीष्मशुष्कान्
दुरितविगतमारान् यान् प्रतापस्त्वदीयः ।
रघुतिलक करिष्यत्याशु भस्मावशेषान्
नरवर शृणु तेषां तत्त्वमेषां ब्रुवे त्वाम् ॥ ५८ ॥

उदयशिखरितुङ्गस्थूलदेहस्य यस्य
स्फुरतिवदनमुद्यत्सूर्यबिम्बारुणाभम् ।
गजपतिमधिरूढः कम्पयन् नागशीर्षं
समभिपतति नाम्नाऽकम्पनोऽयं स वीरः ॥ ५९ ॥

द्विरदपतिरिवाग्रे शोभते यो विवृत्त-
प्रतिभयसितदंष्ट्रः स्यन्दनस्थोऽभिगर्जन् ।

तुलितहरिशरासं स्वं शरासं विधुन्व-
न्नमितबरबलोऽयं शक्रजित् सिंहकेतुः ॥ ६० ॥

क्षितिधरवरतुल्यो यस्य कायोऽतिवृद्धः
स्फुरति तदनुरूपोऽस्यातिकायो हयोऽत्र ।
भवति तदनुरूपो विक्रमोऽतिप्रमाणः
परिघशरगदादिः शस्त्रसङ्घश्च सर्वः ॥ ६१ ॥

निजगुणजितविद्युत्पुञ्ज उग्रप्रतापः
प्रभवति विमलार्चिश्छद्मना यस्य कुन्तात् ।
हयवरमधिरूढः स्वर्णभूषं स एषः
स्तनितसमरवैः स्वैः पूरिताशः पिशाचः ॥ ६२ ॥

वृषवरमधिरूढश्चन्द्रशुभ्रप्रकाशं
त्रिपुरहर इवोग्रं पाणिनोद्यम्य शूलम् ।
सपदि मनसि कुर्वन्नन्तकस्यापि भीतिं
निजमहितबलेनायाति सोऽयं त्रिशीर्षः ॥ ६३ ॥

ध्वजवरमतितुङ्गं यस्य नामप्रभाव-
प्रभवभयभरेणेवाश्रितः पन्नगेन्द्रः ।
इषुधिमपि शरौघच्छद्मना नागवर्या-
स्त्रमसुमितवीर्यं राम जानीहि कुम्भम् ॥ ६४ ॥

स्वकरतलगतं यः कालदण्डोपमानं
रणविजयमहः श्रीकेतुशङ्कां ददानम् ।
परिघमतिमहान्तं घूर्णयंस्तूर्णमेति
क्षितिपवर निकुम्भः कुम्भकर्णात्मजोऽयम् ॥ ६५ ॥

निशिचरकुलकीर्तिस्तोमवमवचारु राका-
शिशिरकरसमानं छत्रमुद्भाति यत्र ।
नृवर लसति तत्र प्रौढदेवासुरादि-
प्रमदशमनवीर्यः कौणपाधीश्वरोऽयम् ॥ ६६ ॥

विविधविपुलशस्त्राकारवाहप्रभावाः
निशिचरगणमुख्याः सन्त्यमी येऽत्र वीराः ।
गणयितुमपि शक्या नैव ते यद्वशस्थाः
क्षिप तृणमिव तं त्वं स्वप्रतापानलेऽमुम् ॥ ६७ ॥

इति नृपनययुक्तं पङ्क्तिकण्ठानुजोक्तं
वचनममृततुल्यं हृद्वचोभ्यां गृहीत्वा ।
रघुपतिरथ कर्तुं कर्मणा ज्यानिनाद-
त्रुटितरिपुहृदन्तस्तूर्णमभ्युत्पपात ॥ ६८ ॥

अथ दशवदनस्तत् पत्तनं रक्षितुं स्वं
निशिचरवरयोधांस्तान् समादिश्य मुक्त्वा ।
स्वयमविशदनन्तं वानराणामनीकं
झष इव जलराशिं चापशृङ्गं विधुन्वन् ॥ ६९ ॥

सपदि दलितसेतुर्भूरिपङ्कैकहेतुः
श्रवणपरुषनादः शस्त्रविद्युत्प्रदीप्तः ।
घनसमय इव द्रागाशुगै राक्षसेन्द्रो
जलधिमिव कपीनां क्षोभयामास सैन्यम् ॥ ७० ॥

रणभुवि रविसूनौ पातिते रावणेन
स्वगुरुमथ हनूमान् वीक्ष्य दुष्कीर्तिलिप्तम् ।

दिवसकरममर्षी तत्र रात्रिश्चरेन्द्र-
प्रमथनमथ चक्रे चण्डदोर्दण्डघातैः ॥ ७१ ॥

तनयविजितरक्षोनायकस्यानिलस्य
स्थिरसुहृदनलोऽथ स्वात्मजोग्रप्रभावात्।
रणभुवि दशकण्ठं वीक्ष्य सम्भ्रान्तचित्तं
किमपि मुदितचेता नीलतातश्चकाशे ॥ ७२ ॥

सौमित्रिस्तु तथा चकार न भयं छिन्नायुधस्याशुगै-
र्निर्भिन्नावयवस्य चाशरपतेर्यातस्य मूर्च्छां मुहुः।
अम्भोजासनदत्तशक्तिनिहतः संज्ञाविहीनः समित्-
क्ष्मापृष्ठे पतितः कथञ्चन समुद्धर्तुं न शक्यो यथा ॥ ७३ ॥

बाणैरन्तकदण्डशक्रकुलिशत्र्यक्षत्रिशूलोपमैः
रामेणाशरनायको रणमुखे श्वासावशेषः कृतः।
न त्वां संयमिनीं नयाम्यतिपरिश्रान्तं तु लङ्कां व्रजे-
त्युक्तः शोकभयैर्बहन् समधिके रक्षःपुरीं वेशितः ॥ ७४ ॥

इति श्रीकोच्चुण्णिराजविरचिते
श्रीरामचरितमहाकाव्यपूरणे
युद्धवर्णनं नाम
एकोनत्रिंशः सर्गः



# त्रिंशः सर्गः

गाढावगाढैर्हृदयेऽविषह्यैः यः कामबाणैरतिभीमवेगैः ।
स्थितिं न लेभे विवशीकृतात्मा स रामबाणैश्च तदा तथाभूत् ॥ १ ॥

भयं ममेदं युधि कुम्भकर्णः पतिं नदीनामिव कुम्भजन्मा ।
करिष्यति ध्वस्तमिहेत्यथास्य प्रबोधनं पङ्क्तिमुखश्चकार ॥ २ ॥

प्रबोधिते पर्वतकूटतुल्ये युद्धाय निर्गच्छति कुम्भकर्णे ।
विभीषणो यन्त्रमिदं बतेति वाचा प्लवङ्गानभयांश्चकार ॥ ३ ॥

करप्रहारैश्चरणप्रहारैः शस्त्रप्रहारैश्च स कीशसेनाम् ।
ममर्द सर्वां गिरितुल्यकायः सरोजिनीं मत्त इव द्विपेन्द्रः ॥ ४ ॥

प्रगृह्य दोर्भ्यां स बहून् प्लवङ्गान् क्षिप्त्वा स्ववक्त्रे बलिसद्मतुल्ये ।
रम्भाफलानामिव खण्डकानि चखाद सर्पिःपरिभर्जितानि ॥ ५ ॥

दुद्राव सङ्घः कपियूथपानां समाहतस्तेन महाबलेन ।
महाहवे शुष्क इव प्रचण्डवाताहतः पर्णचयो निदाघे ॥ ६ ॥

गजो गवाक्षो गवयः सुषेणो नीलो नलश्च प्रवराः कपीनाम् ।
पेतू रणे तेन हता विसंज्ञा वृक्षा इवोग्रेण समीरणेन ॥ ७ ॥

अवश्चयद्यद्युधि बालिसूनुस्तत् कुम्भकर्णेन बलीमुखेशम् ।
हन्तुं प्रयुक्तं बलवान् प्रगृह्य शूलं बभञ्ज द्रुतमाञ्जनेयः ॥ ८ ॥

नाथं कपीनामथ शैलशृङ्गप्रहारतः क्ष्मापतितं विसंज्ञम् ।
बली जहाराशु स कुम्भकर्णः पुञ्जं घनानामिव चण्डवातः ॥ ९ ॥

स कीशराजग्रहविस्मितानां शृण्वन् वचांसि त्रिदशोत्तमानाम् ।
सुगन्धिपुष्पाम्बुभिराशरीभिराकीर्यमाणः प्रविवेश लङ्काम् ॥ १० ॥

तस्मिन् हृते संयति वानरेन्द्रे सराघवं तत् कपिवीरसैन्यम् ।
निरर्थकं निश्चितवान् समस्तं तैले हृते कल्कमिवाशरेशः ॥ ११ ॥

स कुम्भकर्णोरसि वर्तमानः पतिः कपीनां शिशिराम्बुसेकात् ।
ससंज्ञ उत्थाय रदैर्नखैश्च " शूर्पणख्या सदृशं चकार ॥ १२ ॥

विदार्य वेगादथ कुम्भकर्णपार्श्वद्वयं पादनखप्रहारैः ।
आकाशमाप्लुत्य दिनेशसूनुर्जगाम रामं कपिसैन्यमध्ये ॥ १३ ॥

प्राणापहारादिव तत्र कर्णनासापहराद्व्यथितान्तरात्मा ।
पुना रणायैव स निर्जगाम क्रव्याशनानामृषभस्तरस्वी ॥ १४ ॥

प्रगृह्य भीमं मुसलं सरोषं गृहीतदण्डान्तकसन्निभं तम् ।
वीक्ष्यापतन्तं ययुराशु भीता रामं शरण्यं शरणं प्लवङ्गाः ॥ १५ ॥

ततः सुमित्रातनयश्चकार वर्षं शराणां युधि कुम्भकर्णे ।
रक्तौघसिक्तेऽरुगनिर्झरौघे शैले जलानामिव वारिवाहः ॥ १६ ॥

ते कुम्भकर्णस्य महाशरीरे शराः शिताग्राः सहसा ममज्जुः ।
प्राणच्छिदो लक्ष्मणबाहुमुक्ता आशीविषेन्द्रा इव वारिराशौ ॥ १७ ॥

ततः सुमित्रासुतमात्तचापं जवादतिक्रम्य महाबलोऽसौ ।
नाथे हते वैरिबलं हतं स्यात् समस्तमित्याशु जगाम रामम् ॥ १८ ॥

रामोऽक्षिपद्धालिखरादिजीवादानक्रियादक्षतरान् शरान् यान् ।
ते कुम्भकर्णस्य महाशरीर आपुङ्खमग्ना न वितेनुरार्तिम् ॥ १९ ॥

रामं निहन्तुं युधि कुम्भकर्णश्चिक्षेप भीमं परिघं महान्तम् ।
सधूमवह्निं सहसैव यन्त्रप्रोत्क्षिप्तदावाग्निवृताद्रितुल्यम् ॥ २० ॥

तस्मिन् शरै रामभुजप्रमुक्तैश्चूर्णीकृते वज्रसमैरमर्षी ।
अभ्यद्रवद्दक्षिणबाहुमुग्रमुद्यम्य शत्रुं युधि कुम्भकर्णः ॥ २१ ॥

चिच्छेद वायव्यमहास्त्रवीर्यसंयोजितेनाशु शरेण रामः ।
तस्योद्यतं बाहुमतिप्रचण्डं वज्रेण वज्रीव गिरीन्द्रशृङ्गम् ॥ २२ ॥

स कुम्भकर्णः पुनरत्यमर्षी वामं भुजं स्वं यमदण्डतुल्यम् ।
उद्यम्य रामं सहसाभ्यधावत् प्रकम्पयन् क्ष्मां कपिवाहिनीं च ॥ २३ ॥

ऐन्द्रास्त्रयुक्तेन शरेण रामः प्रत्यर्थिनस्तं च भुजं चकर्त ।
भग्नं पतद्भ्यां भुवि तद्भुजाभ्यां प्राज्यं बलं वानरराक्षसानाम् ॥ २४ ॥

बाहुद्वयच्छेदभवक्षताभ्यामनर्गलप्रस्रवदस्रपूरः ।
रेजे स पार्श्वद्वयभूरिनिर्यत्सगैरिकप्रस्रवणाद्रितुल्यः ॥ २५ ॥

विबाहुराजावथ कुम्भकर्णः पादप्रहारैरहितं निहन्तुम् ।
अभ्यद्रवन्मेघनिनादघोरैः सिंहारवैः कम्पितसर्वलोकः ॥ २६ ॥

ऊरुद्वयं तस्य शरद्वयेन चिच्छेद रामः सहसा शितेन ।
अथापतत्तत्र तदन्तराधिः समेधितक्रव्यभुगन्तराधिः ॥ २७ ॥

[ आधिः-आधिष्ठानं, चेतःपीडा च ॥ ]

महाभुजङ्गेन्द्रसमानजिह्वं पातालतुल्यं शिततीक्ष्णदंष्ट्रम् ।
विदार्य वक्त्रं ग्रसितुं स राममभ्याक्रमद्राहुरिवांशुमन्तम् ॥ २८ ॥

विदारितं तन्मुखमाशु बाणैरपूरयद्दाशरथिः शितागैः ।
तदाशुगैः पुर्णगुहाभवक्त्रश्चुकूज भूमिध्र इवोत्कटं सः ॥ २९ ॥

दिव्यास्त्रयुक्तेन शरोत्तमेन चिच्छेद शीर्षं कुलिशोपमेन ।
स कुम्भकर्णस्य रघुप्रवीरो वृत्रासुरस्येव पुरा महेन्द्रः ॥ ३० ॥

अथापतत्तत्र सुरोत्तमानां मोदाश्रुवृष्ट्या सह पुष्पवृष्टिः ।
निशाचराणां बहुधार्तनादैः सहोदतिष्ठन् कपिहर्षनादाः ॥ ३१ ॥

तं कुम्भकर्णस्य वधं दशास्यः श्रुत्वान्तकस्येव कदाप्यचिन्त्यम् ।
भयेन शोकेन च पीड्यमानः संहाररुद्रं मनुते स्म रामम् ॥ ३२ ॥

अनन्तपारस्य यथा पयोधेः कल्पान्तकाले रविणाग्निना च ।
भयेन शोकेन च रावणस्य तथाभवत्तत्समयेऽतिशोषः । ॥ ३३ ॥

विनाशिते तत्र तु कुम्भकर्णे स्वाधारभूते भुवि राघवेण ।
कालेन मूले विटपीव रक्षःपतिश्चकम्पे न्यपतच्च भूम्याम् ॥ ३४ ॥

पातं तदानीं तमचिन्त्यरूपं तेजोनिधेर्नैर्ऋतलोकभर्तुः ।
व्यलोकयन्नद्भुतशोकलोभाः सहस्ररश्मेरिव तत्र लोकाः ॥ ३५ ॥

तं सान्त्वयामासुरथातिकायत्रिशीर्षदेवान्तकनामधेयाः ।
वाक्यैर्महापार्श्वमहोदराख्यौ नरान्तकश्चाहवनिर्जितेन्द्राः ॥ ३६ ॥

आज्ञामथादाय दशाननस्य रक्षोबलैरप्रमितैः समेताः ।
सबाणबाणासनवर्मवाहास्ते निर्ययुर्यातुवरा रणाय ॥ ३७ ॥

प्रचण्डकोपानिलतीव्रवेगप्रक्षोभितौ राक्षसवानराणाम् ।
समीयतुस्तौ बलवारिराशी परस्परं घोरतरप्रणादौ ॥ ३८ ॥

तुरङ्गमारुह्य समीरवेगं नरान्तकः प्रासधरोऽरिसैन्यम् ।
व्यनाशयत् संयति शक्तिहस्तः कृशानुजन्मेव मयूरवयम् ॥ ३९ ॥

तत्राङ्गदस्तं शमयाश्चकार नरान्तकं कीशबलं दहन्तम् ।
निशातकुन्तं विपिनं दहन्तं समुज्ज्वलज्ज्वालमिवाग्निमब्दः ॥ ४० ॥

नरान्तकं तं हतमङ्गदेन दृष्ट्वा महापार्श्वमहोदराख्यौ ।
देवान्तकोऽथ त्रिशिराश्च कोपात् क्षुब्धाः समुद्रा इव चण्डवातात् ॥ ४१ ॥

ततश्चतुर्भिः क्षणदाचरैस्तैरभिद्रुतं बालिसुतं विलोक्य ।
आजग्मुराराद्दृषभो हनूमान् नीलोऽग्निपुत्रश्च कपिप्रवीरः ॥ ४२ ॥

प्रचण्डवेगः प्रथमानवीर्यः प्रभञ्जनात्मप्रभवो बभञ्ज ।
त्रिशिर्षदेवान्तकयातुधानौ प्रभञ्जनः क्षोणिरुहाविवाशु ॥ ४३ ॥

आधिप्रदं दुष्कृतपुञ्जहेतुं महोदरं रोगमिवाप्रधृष्यम् ।
विनाशयामास जवेन तीक्ष्णः कपीटयोनिप्रभवप्रतापः ॥ ४४ ॥

नवाम्बुवाहस्तनितातिघोरं गर्जन्तमुच्चैर्ऋषभं बलिष्ठम् ।
आसाद्य सद्यस्तृणराशिसाम्यं ययौ महापार्श्वनिशाचरः सः ॥ ४५ ॥

अथातिकायः कपिवीरसैन्यं जघान यं वीक्ष्य सुरर्षिलोकः ।
बलेन रूपेण च कुम्भकर्णं वरास्त्रशक्त्येन्द्रजितं च मेने ॥ ४६ ॥

शरैर्हतानां कपिपुङ्गवानां देहाचलेभ्यो रुधिरैः स्रवद्भिः ।
चकार तत्र प्रधनेऽतिकायो महानदीं वैतरणीमिवोग्राम् ॥ ४७ ॥

स दिव्यवर्मावृतभीमकायश्चक्रे रणं घोरमथानिकाया ।
सत्रा सुमित्रातनयेन चित्रं वृत्रः सुराणामिव नायकेन ॥ ४८ ॥

ब्राह्मेण सौमित्रिरथाशरं तमस्त्रेण सर्वास्त्रविदां वरिष्ठः ।
व्यधाज्जगत्प्राणसमीरणेन समुज्झितं प्राणसमीरणेन ॥ ४९ ॥

श्रुत्वातिकायादिवधं दशास्यः पपात शोके नरकोपमाने ।
पुत्रस्तु तं त्रातुमथेन्द्रजेता प्रचक्रमे विक्रमवारिराशिः ॥ ५० ॥

रणक्षितिं प्राप्य यथोपदेशं समित्समिद्धे स जुहाव वह्नौ ।
शंसन्निवास्य ज्वलनोऽर्थसिद्धिं प्रदक्षिणार्चिर्हविरावदे तत् ॥ ५१ ॥

ब्रह्मास्त्रमन्त्रैरभिमन्त्र्य सोऽथ सर्वाणि शस्त्राणि रथादिकं च ।
मायाबलाद्ब्रह्मवरप्रभावाच्चान्तर्हितः सर्वरिपून् जघान ॥ ५२ ॥

प्रदीप्ततेजाः स सरोजयोनिवरेण वीरोऽरिबलं समस्तम् ।
ददाह सद्यः प्रबलानिलेन शुष्कं तृणानामिव राशिमग्निः ॥ ५३ ॥

दृष्ट्वा तु तत्कर्म जगाद रामः सर्वं सहस्वेत्यनुजं महात्मा ।
सेहे च पद्मासनमाननार्थं सदापि सन्तो विनयस्थिता हि ॥ ५४ ॥

सुग्रीवनीलाङ्गदजाम्बवन्तः शरैर्हताः शक्रजिता भृशार्ताः ।
मृता निपेतुः समरक्षमायां न जाम्बवान् ब्रह्मसुतो ममार ॥ ५५ ॥

यो विश्वसृष्टिस्थितिनाशहेतुः स मेघनादास्त्रबलेन रामः ।
सलक्ष्मणस्तत्र पपात भूमौ लीला दुरूहा हि महेश्वराणाम् ॥ ५६ ॥

कृत्वाद्भुतं कर्म तदिन्द्रजेता प्रहर्षपूर्णः प्रविवेश लङ्काम् ।
स्वकीयतत्कर्मकथासुधाभिस्तातं मृतप्रायमजीवयच्च ॥ ५७ ॥

मरुत्सुतो जाम्बवतो नियोगादानीय तत्रौषधिपर्वतेन्द्रम् ।
रामप्रियोऽजीवयदात्मसैन्यं किमस्त्यशक्यं भगवत्प्रियाणाम् ॥ ५८ ॥

ये ये मृतास्तत्र निशाचरास्ते क्षिप्ता दशास्यस्य नियोगतोऽब्धौ ।
मानार्थिनो रात्रिचरा न तस्मात् सञ्जीविता ओषधिगन्धवीर्यात् ॥ ५९ ॥

अहो जगत्प्राणसुतस्य शक्तिरचिन्तनीया जयति प्रकामम् ।
प्राणाः प्रयाता अपि देहभाजां यल्लीलया यान्ति पुनर्यथावत् ॥ ६० ॥

निद्रैव येषां खलु दीर्घनिद्रा तेषां विधायाप्रियमेवमुग्रम् ।
किं वा चिकीर्षत्ययमल्पबुद्धिरहो दशास्यस्य दशास्य शोच्या ॥ ६१ ॥

इत्यादितेयप्रवराननेभ्यः सञ्जातमायान्तमथाशु शब्दम् ।
प्रत्युज्जगाम प्लवगाननेभ्यः समुत्थितः सम्मदजः प्रणादः ॥ ६२ ॥

निशाम्य तं वानरहर्षनादं त्रस्ताः समस्ता अपि यातुधानाः ।
पक्षीन्द्रपक्षानिलभीमनादं श्रुत्वेव नागप्रवरा विचेलुः ॥ ६३ ॥

कुम्भं निकुम्भं च स कुम्भकर्णपुत्रौ ततः शत्रुबलं निहन्तुम् ।
सम्प्रेषयामास निशाचरेन्द्रः सहाशराणां महता बलेन ॥ ६४ ॥

विचेरतुस्तावमितप्रभावौ निकुम्भकुम्भौ कपिराजसैन्ये ।
निदाघशुष्के विपिनेऽतिवेगौ समीरणाग्नी इव दुर्निवारौ ॥ ६५ ॥

स्वनामधेयाहरणापराधाद्दिक्कुम्भिकुम्भा दलितास्तु येन ।
सुग्रीवमासाद्य स राममित्रं मृत्कुम्भवद्भङ्गमवाप कुम्भः ॥ ६६ ॥

शृङ्गं महाद्रेरिव भीमरूपं शीर्षं निकुम्भस्य समीरजेन ।
उत्पाटितं वीक्ष्य सुरर्षिलोको मेनेऽधिकं तं पितृतोऽपि शक्त्या ॥ ६७ ॥

ततो निकुम्भादिवधं निशाम्य शोकान्धकूपे पतितं दशास्यम् ।
उद्धर्तुकामः खरभूर्गुणैः स्वैर्योद्धुं प्रतस्थे मकराक्षसंज्ञः ॥ ६८ ॥

कपीन्द्रकायत्रवदस्त्रपूरैर्विनिर्मिते तत्र महाम्बुराशौ ।
रराज बाणार्चिरतिप्रचण्डः खरात्मजो बाडववह्नितुल्यः ॥ ६९ ॥

पुत्रोऽनुकुर्वन् पितरं खरस्य न्यस्येह देहं पितृनाथगेहम् ।
जगाम वेगात् पितृदर्शनार्थी मार्गेण रामाशुगदर्शितेन ॥ ७० ॥

निषूदितं तं मकराक्षमाजौ रामेण रक्षोधिपतिर्निशम्य ।
अपारगम्भीरमहाम्बुराशौ मग्नो बभूव व्यथितान्तरात्मा ॥ ७१ ॥

निमज्जतस्तस्य महाम्बुराशावालम्बनार्थं सुरराजजेता ।
महामरुद्विक्रमवेगपूर्णो ययौ तदानीं बत पोतभावम् ॥ ७२ ॥

हुत्वाग्निमन्तर्हितभीममूर्तिर्मायां समाश्रित्य वरास्त्रशक्त्या ।
प्रचक्रमे पूर्ववदेव सर्वं कर्तुं समासाद्य कपीन्द्रसैन्यम् ॥ ७३ ॥

तत् कर्म दृष्ट्वा तु रुषातितेजा जज्वाल बाणांश्च ववर्ष रामः ।
खद्योततां कल्पशुचौ वितन्वन् संवर्तमेघे शरदभ्रतां च ॥ ७४ ॥

विलोक्य तं तस्य महाप्रभावं दुद्राव भीतो भृशमिन्द्रजेता ।
दृष्ट्वेन्द्रजालं हृदि मेनिरे तल्लङ्कान्तरस्थाः कुणपादनार्यः ॥ ७५ ॥

सुहृद्विनाशस्मृतिजस्त्वमर्षो रणाय गच्छेत्यवदन्मुहुस्तम् ।
रामप्रतापस्मृतिजा तु भीर्निर्मा मेति चिन्तां स परां ततोऽगात् ॥ ७६ ॥

निश्चित्य कृत्यं स पुनः समस्तं संस्थाप्य सीतां स्वरथे भृशार्ताम् ।
मायामयीमाशु जलेश्वराशाद्वारेण पुर्या निरागात् ससैन्यः ॥ ७७ ॥

तमापतन्तं सबलं विलोक्य प्लवङ्गवर्याः पवनात्मजाद्याः ।
उत्पाट्य वृक्षान् शिखराणि चाद्रेः प्रहर्तुकामास्तरसाभिजग्मुः ॥ ७८ ॥

तत्स्यन्दनस्थक्षितिजावलोककालः पुनर्युद्धसमुद्यतानाम् ।
बलीमुखानां हनुमन्मुखानां मोहान्धकारस्य निशामुखोऽभूत् ॥ ७९ ॥

समक्षमेव प्लवगोत्तमानां तेषां पुना रावणिरात्तखड्गः ।
प्रकम्पयामास मुहुर्बलेन सीतां समीरो कदलीमिवोग्रः ॥ ८० ॥

तेषां समभ्युत्पतनोद्यतानां प्रचण्डवेगं कपियूथपानाम् ।
न्यवारयत्तस्य वरास्त्रशक्तिर्वेलेव संक्षुब्धमहार्णवानाम् ॥ ८१ ॥

संपश्यतामेव पुनः कपीनां तेषां कृपाणेन कृपाविहीनः ।
रामस्य पत्न्याः शिर इन्द्रजित् स चिच्छेद मूलं च विशालकीर्तेः ॥ ८२ ॥

मिथोऽथ तेषां शरवर्षमासीद्यत्राम्बुदाः अस्तरशस्त्रसङ्घाः ।
तद्धट्टनेऽग्निश्च रवाश्च विद्युद्धनारवाः प्रस्रवदस्रमम्बु ॥ ८३ ॥

सीतावधालोकनजातशोकमहान्धकारेण विनष्टदृष्टिः ।
विषादभारोद्वहनश्रमार्तो विचिन्तयामास पुनर्हनूमान् ॥ ८४ ॥

रामोऽब्धिमुल्लङ्घ्य समं प्लवङ्गैर्यदर्थमत्रागतवान् महात्मा ।
तस्यां हतायां जनकात्मजायामनेन युद्धेन किमस्ति साध्यम् ॥ ८५ ॥

अतःससुग्रीवविभीषणं तं सलक्ष्मणं राममशेषनाथम् ।
एतत्कथां बोधयितुं व्रजामि शीघ्रं तदाज्ञां च पुनः करिष्ये ॥ ८६ ॥

तदेति निश्चित्य शनैर्निवृत्य युद्धात् ससैन्यः स ययौ हनूमान् ।
तस्मिन् प्रयाते स च होतुकामो निकुम्भिलां रावणिरर्थसिद्ध्यै ॥ ८७ ॥

संरक्षणायाशरचक्रमुग्रं मायान्धकारं च विधाय भीमम् ।
समाहितात्मा स समाहिताग्निरारब्धवान् होमविधिं विधिज्ञः ॥ ८८ ॥

स जाम्बवन्तं प्रसमीक्ष्य मध्ये मार्गं पुनस्तेन सहैव गत्वा ।
रामाङ्घ्रिमूले पतितो हनूमान् कथंचिदार्तोऽकथयत् कथां ताम् ॥ ८९ ॥

प्राणेश्वर्या विपत्तिं वदति पवनजे हन्त रामः प्रयात-
प्रायप्राणः प्रवृद्धव्यसनजलनिधावत्यगाधे ममज्ज ।
सान्त्वं सौमित्रिणोक्तं बत मुहुरशृणोन्नापि यावत्तु तावत्
प्राप्तः संस्थाप्य गुल्मानलघुनिशितधीः पङ्क्तिकण्ठानुजन्मा ॥ ९० ॥

आकर्ण्याथ विभीषणः पवनजप्रोक्तां कथां तां सुधी-
रूचे दाशरथिं शुचं त्यज जवादुत्तिष्ठ धीरो भव ।
होमायाद्य निकुम्भिलां स गतवान् हन्तुं भवन्त विभो
तद्विघ्नानुदयाय तेन तदिदं सर्वं कृतं मायया ॥ ९१ ॥

जीवत्याशरनायके जनकजा न क्षुद्रकेणामुना
शक्या द्रष्टुमपि प्रभो किमु पुनः स्प्रष्टुं निहन्तुं च वा ।
सौमित्रिं मम देहि तस्य निधनं कर्तुं समर्थं न त-
द्यावत् कर्म समाप्यते रिपुरयं तावद्धि वध्यो भवेत् ॥ ९२ ॥

व्यामोहाभ्रचये विभीषणवचोवातैरिति प्रद्रुते
रामश्चन्द्र इवोदतिष्ठदखिलं लोकं समाह्लादयन् ।
सौमित्रिं च हनूमदङ्गदमुखैः साकं प्लवङ्गोत्तमै-
र्हन्तुं शक्रजितं विभीषणकरे प्रादात् प्रमोदाकुलः ॥ ९३ ॥

इति श्रीकोच्चुण्णिराजविरचिते
श्रीरामचरितमहाकाव्यपूरणे
इन्द्रजिद्वधोद्यमो नाम
त्रिंशः सर्गः



# एकत्रिंशः सर्गः

पवनदहनबालिपुत्रमुख्यैः प्लवगवरैः सह लक्ष्मणोऽतिवीरः ।
धृतदृढकवचः शरी शरासी सपदि जगाम विभीषणानुसारी ॥ १ ॥

सरभसमतिलङ्घ्य दीर्घमार्गं पुनरुपगम्य निकुम्भिलां स वीरः ।
घनचयमिव यातुधानचक्रं निबिडतमोसितमग्रतो ददर्श ॥ २ ॥

हरिबलसहितस्य तस्य याने क्वचिदपि तत्र बभूव नान्तरायः ।
निशिचरगणनिर्मितो भवेत् किं तिमिरसमूहकृतः सहस्ररश्मेः ॥ ३ ॥

अथ सपदि विभीषणस्य वाचा विमतबलं विविशुर्बलीमुखास्ते ।
धरणिधरविदारणप्रवीणा रघुतिलकस्य शिताः शिलीमुखाश्च ॥ ४ ॥

पृथुतरहरिविस्फुरत्प्रतापप्रगलितसारमथादहन् समन्तात् ।
विपिनमिव बलं निशाचराणां ज्वलनशिखा इव लक्ष्मणस्य बाणाः ॥ ५ ॥

निजबलमवलोक्य लक्ष्मणास्त्रैः प्लवगवरैश्च मुहुर्निहन्यमानम् ।
द्रुततरमुदतिष्ठदाहवार्थं दशमुखभूरसमाप्तहोम एव ॥ ६ ॥

पवनजमवलोक्य भीमवेगाप्रतिहतमाश्रितसर्वमङ्गलं च ।
रजतगिरिमिवाकरोत् प्रयत्नं सपदि स बाधितुमिन्द्रजित् पितेव ॥ ७ ॥

अथ दशरथपुत्रबाहुवायुप्रचलितजृम्भितचापमेघनादः ।
अनभिहतगतिर्निशाचरं तं सुदृढमकम्पयदाशु मेघनादम् ॥ ८ ॥

रघुकुलपतिमूर्जितप्रतापं पुनरनिलात्मजतुङ्गपृष्ठसंस्थम् ।
उदयगतमिवार्कमालुलोके दशवदनस्य सुतोऽन्धकारवत् सः ॥ ९ ॥

अथ पितुरनुजं विभीषणं तं रघुवरपार्श्वसमाश्रितं विलोक्य ।
सरभसमुपसृत्य मेघनादः परुषतरं वचनं रुषा बभाषे ॥ १० ॥

त्रिजगति न खलस्त्वया समानश्चिरमिह यत्कृपया विबर्धितोऽसि ।
कुलदहन तमग्रजं विसृज्य द्रुतमहितं बत तस्य संश्रितस्त्वम् ॥ ११ ॥

रिपुसदसि परं प्रकाश्य मर्म स्वकुलमहो बत मूलतो निकृन्तन् ।
प्रकटयसि निजं विभीषणत्वं सकलभयावहकर्मणा दुरात्मन् ॥ १२ ॥

तनुमपि परिमुच्य पोषयन्ति स्वकुलमतिप्रणयाज्जना यथावत् ।
तदिह सपदि हन्तुमुद्यतस्य क्षणमपि ते कुशलं कथं नु वा स्यात् ॥ १३ ॥

सकलजनविभीषणस्त्वमेवं निखिलविवर्जित एकतः स्थितः स्याः ।
पुनरखिलजनोऽपरस्थितः स्यादिह परतः फलमेतदाप्नुहि त्वम् ॥ १४ ॥

रघुपतिरयमेव सिद्धकार्यः सकलमहाभयदं वधिष्यति त्वाम् ।
त्रिजगति सकलस्य हन्त नाश्यः खलु भयकृत् फणिवच्च रोगवच्च ॥ १५ ॥

सुमतिरिति निजाग्रजात्मजोक्तिं परुषतरां स विभीषणो निशम्य ।
स्मरणमुपगतैः स्ववंश्यदोषै रघुपगुणैश्च जगाद साश्रुनेत्रः ॥ १६ ॥

शृणु मम वचनानि बालकस्त्वं न तु परिपश्यसि तत्वतोऽर्थसारम् ।
त्यज वरबलमत्ततामिमां द्राङ्मतिरमला हि ददाति साधुबोधम् ॥ १७ ॥

अयि तव जनको मदुक्तकारी स्वकुलमवन् सुखमाप्तवांश्चिराय ।
पुनरयमधुना मदुक्त्यकारी स्वकुललयं कुरुतेऽत्र कस्य दोषः ॥ १८ ॥

त्रिजगति सकलस्य दुःखहेतुर्भवति महान् परपीडनाद्यधर्मः।
निजजनममुना वियोजयेद्यः स खलु सुधीः प्रणयी प्रयत्नवांश्च ॥ १९ ॥

सपदि हि सकलस्य नाशहेतुर्भवति मदान्ध बलीयसा विरोधः।
क्व नु जितकृतवीर्यजाहितर्षेर्बलममितं क्व नु ते बलं पितुश्च ॥ २० ॥

प्रसरति सति यस्य पक्षपाते जलधिमिताः खलु काद्रवेयनागाः।
खगपतिरिह यस्य दासवत् स स्फुटमकरोद्बहुकर्म स त्वचिन्त्यः ॥ २१ ॥

नयविनयनिधिः पितामहास्त्रं तव न निवारितवान् रघुप्रवीरः।
स्वसुमतिबलदर्शनाय किं वा सरसिरुहासनमाननाय किं वा ॥ २२ ॥

निशिचरवर मायया कृतं ते बलमयथार्थमिदं प्रतीतिमात्रम्।
बहुजडजनशर्कराप्रतीत्या किमु विमलं लवणं सितात्मकं स्यात् ॥ २३ ॥

विधिसुतसुतपुत्रपुत्र बाले त्वयि न तथा प्रणयः पितुस्तवापि।
भवति मम यथाद्य भावियुष्मद्व्यसनविचारविदारिताशयस्य ॥ २४ ॥

व्रज शरणमतस्त्वमाशु रामं व्रजतु पिता च तव प्रदाय सीताम्।
रघुपतिरथ पालयिष्यतीदं कुलमवशिष्टमदोषमाशराणाम् ॥ २५ ॥

ऋजु शुभदमिदं विभीषणोक्त वचनमवारयदुज्ज्वलं मुमूर्षोः।
दशमुखतनयस्य भीमचापः स्फुटतरहुङ्कृतिना रणोत्सुकस्य ॥ २६ ॥

दशमुखरथपुत्रयोरथोग्रा निशितशिखा विशिखा ययुः समन्तात्।
गुणतुलितगरुत्मदुग्रनागास्तडिदुपमा यमदण्डचण्डरूपाः ॥ २७ ॥

अविरलगलदस्त्रपूरवर्षं गुणनिनदस्तनितप्रभीतलोकम्।
पिहितखगगणं कृतान्धकारं स्थगितदिगन्तरपुष्करं ततोऽभूत् ॥ २८ ॥

अविरतरचितास्त्रशस्त्रवर्षौ दलिततनू रुधिरप्लुताखिलाङ्गौ ।
अमिततरबलौ जितश्रमौ तौ सुचिरमथाकुरुतां समं समीकम् ॥ २९ ॥

समिति रघुवरस्त्रिलोकशल्यं निशिचरपुण्यफलं सदार्तिमूलम् ।
तमहितमथ हन्तुमैन्द्रमस्त्रं व्यसृजदविस्मृतरामदिव्यशक्तिः ॥ ३० ॥

द्रुतमिषुरभिमन्त्रितः स मन्त्रैः समकुटमिन्द्रजितः शिरो जहार ।
शुचममरपतेर्भयं मुनीनां दशवदनस्य जयाभिलाषितां च ॥ ३१ ॥

विलयमिति गते तु मेघनादे त्रिभुवनभीतिकरे रघुप्रधानः ।
प्रविसृतविमलप्रतापरम्यः शरदि दिनेश इवोज्ज्वलश्चकाशे ॥ ३२ ॥

सुरबलसदृशेन लक्ष्मणोऽथ प्लवगबलेन विभीषणेन चापि ।
सह सपदि जगाम रामपार्श्वं सरसमुपेन्द्र इवामरेन्द्रपार्श्वम् ॥ ३३ ॥

त्रिदशमुनिजनैः प्रशस्यमानं कृतशुभदुष्करकार्यमागतं तम् ।
अनुजमवनतं स्वपादमूले सकलसमुन्नतमीक्षते स्म रामः ॥ ३४ ॥

अमरपतिजिदस्त्रशस्त्रवृष्टिप्रदलितमङ्गमथानुजस्य रामः ।
मृदु मृदु बहुशन् स्पृशः कराभ्यां प्रभुरकरोद्विगतव्यथं यथावत ॥ ३५ ॥

प्लवगकुलपते दुरूहमायाबलरिपुजिह्मवणाब्धयः प्रतीर्णाः ।
इह सपदि विभीषणानुजन्मानिलतनयैरथ गोष्पदं दशास्यः ॥ ३६ ॥

इति वदति जगत्त्रयैकनाथे मुहुरपि हर्षसमाकुले तु रामे ।
जय जय जय भक्तवत्सलेति स्तुतिरुदगान्महती सदाननेभ्यः ॥ ३७ ॥

कनकमकुटकुण्डलप्रदीप्तं दिनकरबिम्बमिवेन्द्रजेतृशीर्षम् ।
रणभुवि पतितं विलोक्य भीताः सपदि विदुद्रुवुराशरा भृशार्ताः ॥ ३८ ॥

दशमुखसचिवान् निशाचरास्ते युधि वधमिन्द्रजितोऽवदन्नचिन्त्यम् ।
यमवधमिव तं निशम्य शङ्काकुलहृदया लघु ते ययू रणक्ष्माम् ॥ ३९ ॥

वलमथनजितं हतं रणक्ष्मापतितमवेक्ष्य च ते विलोचनैः स्वैः ।
भवति किमिदमिन्द्रजालविद्याभवमिति संशयमापुरीषदार्ताः ॥ ४० ॥

अथ कथमपि निश्चयं गतास्ते सचिववराः सुतरां विषण्णचित्ताः ।
प्रणिजगदुरुपेत्य तत्र मृत्योरिव युधि शक्रजितो वधं दशास्यम् ॥ ४१ ॥

श्रततनयवधः स रक्षसेन्द्रः सपदि शुचा मृतवत् पपात भूमौ ।
तदनु बत चिरादवाप्य संज्ञां बहु विललाप गुणान् स्मरन् सुतस्य ॥ ४२ ॥

त्वयि तनय गते विहाय हा माममितबले न हि मे द्विषज्जयाशा ।
निरयनिपतितस्य नो सुखाशा स्थिरतरदुर्यशसो न जीविताशा ॥ ४३ ॥

विमतजनविमोहनाय भो भोः सुनयनिधे निजमाययाऽकरोर्यम् ।
वधमहमधुना विदेहजायास्त्वरिततरं तममायमातनोमि ॥ ४४ ॥

इति विरचितनिश्चयोऽसिपाणिर्दशवदनः सुहृदा निवारितोऽभूत् ।
अमिततरमचोदयच्च योद्धुं सपदि स मूलबलं कृताञ्जलिः सन् ॥ ४५ ॥

द्रुततरमथ निर्ययू रणार्थं निशिचरयोधवरा महाद्रिकायाः ।
वहुलवरबलास्त्रशस्त्रवाहाः परुषरवाः क्षितिपांसुवन्नगण्याः ॥ ४६ ॥

प्रबलतरबलेन तेन योद्धुं प्लवगबलं न यदा शशाक किञ्चित् ।
निजधनुरतुलं प्रगृह्य रामो वनमिव वायुसखस्तदा विवेश ॥ ४७ ॥

तरव इव समीरवेगभग्नाः कुणपभुजो बत रामवीयभग्नाः ।
समरभुवि निपेतुराशु रामं न च ददृशुः परमास्त्रवैभवेन ॥ ४८ ॥

परुषतररुषाथ रामबुद्ध्या सपदि परस्परमाशरा निजघ्नुः ।
इति समिति महास्त्रमोहितानां द्रुतमभवत् प्रलयो निशाचराणाम् ॥ ४९ ॥

अतिपृथुबलमेवमुग्रकालप्रशमितसारमशेषमाशराणाम् ।
ज्वलनइव वनं जवेन दग्ध्वा स्वयमगमत् स विराममाशु रामः ॥ ५० ॥

तुरगरथगजव्रजैरसंख्यैः परिघपरश्वधपट्टिशादिशस्त्रैः ।
निशिचरगिरितुल्यभीमकायैरपि पतितै रणभूरभूदगम्या ॥ ५१ ॥

समरविनिहतावशिष्टशोकक्षुभितपलाशनसङ्घसङ्कुला सा ।
दशमुखनगरी तदा सृगालप्रभृतिपलाशनसम्मदप्रदासीत् ॥ ५२ ॥

प्रथनशिरसि रामविक्रमं तं प्रलयविजृम्भितरुद्रविक्रमाभम् ।
त्रिदशमुनिकपीश्वरा विलोक्य प्रमदमहाद्भुतवारिधौ ममज्जुः ॥ ५३ ॥

सुरमुनिकपिसङ्घहर्षनादप्रदलितमप्यथ रावणस्य चित्तम् ।
प्रसभमदलयन्निशाचरीणां रुदितरवो बत पिष्टपेषरीत्या ॥ ५४ ॥

अनितरशरणां विहाय हा मां जनक पते सुत सोदर क्व यातः ।
कथमिह विषहे वियोगमुग्रं तव न गुणप्रणयानुरूपमेतत् ॥ ५५ ॥

बहुरसदमिदं विलासनृत्तैः पुरमभवद्धि पुरा सकांस्यतालैः ।
प्रतिभयमधुना कबन्धनृत्तैः सयुवति मस्तकताडनोग्रतालैः ॥ ५६ ॥

अनयतरुरिहेन्द्रजित्प्रकाण्डो व्यसनफलः खलु कुम्भकर्णशाखः ।
निशिचरगणपत्रवान् दशास्यो विलसति शूर्पणखावगाढमूलः ॥ ५७ ॥

स्वयमिह हृदये करोति रक्षःपतिरयमुज्ज्वलहेममालिकेति ।
हतविधिबलतः करालकालज्वलनशिखां बत रामधर्मपत्नीम् ॥ ५८ ॥

न खलु खरवधान्न बालिघातात् सलिलनिधौ न पुनश्च सेतुबन्धात् ।
स्फुटतरमविदन्न रामवीर्यं जनकसुताहृतबुद्धिराशरेशः ॥ ५९ ॥

विविधमिति निशम्य राक्षसीनामतिकरुणं परुषं विलापमुच्चैः ।
द्रुततरमथ निर्ययौ स्वपुर्याः पिशितभुजामधिपः पुना रणाय ॥ ६० ॥

समिदुपकरणैर्युतं महार्हैः शरधिशरासशरासिपट्टिशाद्यैः ।
निजरथमथ संश्रितो दशास्यस्तरणिरिवास्तगिरेस्तटं चकाशे ॥ ६१ ॥

अकृतरिपुवधं युधि स्वदेहं शवमिव शष्पमिवाशु मोक्तुकामम् ।
निजपतिमनुजग्मुरात्तशस्त्राः पिशितभुजः सकला हतावशिष्टाः ॥ ६२ ॥

नवजलधरपुञ्जसन्निभं तद्बलमतुलं प्रसमीक्ष्य राक्षसानाम् ।
अभिययुरतिकोपतो हरीन्द्रा द्विरदसमूहमिवोच्चकैर्नदन्तः ॥ ६३ ॥

रिपुषु कपिवरा द्रुमाश्मवर्षं कुणपभुजो विविधास्त्रशस्त्रवर्षम् ।
परुषतररवाश्चिरं वितेनुः सलिलवहा इव भूरिवारिवर्षम् ॥ ६४ ॥

समुदितहरिदुस्सहप्रतापैः स्वबलमवेक्ष्य रणे विशुष्यमाणम् ।
सर इव विपुलं निदाघकाले दशवदनः परितापमाप तीव्रम् ॥ ६५ ॥

द्रुतमथ कपिसैन्यमाकलय्य क्षितिरजसामिव पुञ्जमाशुगैः सः ।
जलधिमिव गभीरमुन्नतं भूधरमिव सानुजमीक्षते स्म रामम् ॥ ६६ ॥

स्वबपुरिषुगणैर्विदारयन्तं कथमपि संयति लक्ष्मणं विलङ्घ्य ।
विमतजनतरोर्विगाढमूलं सपदि चिकर्तिषुराससाद रामम् ॥ ६७ ॥

अथ दशवदनस्य राघवस्याप्यगणितदिव्यमहास्त्रशस्त्रवर्षम् ।
रणमतुलमभूच्चिरं त्रिकालप्रसृमरविस्मयकम्पितत्रिलोकम् ॥ ६८ ॥

अथ दशवदनस्य केतुसूतौ युधि पतितौ भुवि लक्ष्मणेषुभग्नौ ।
नवजलदनिभा विभीषणेन प्रचुररुषा गदया हताश्ववाहाः ॥ ६९ ॥

तदनु युधि विभीषणं निहन्तुं दशवदनं द्रुतमात्तदिव्य[illegible] ।
कथमपि भरतानुजः प्रयुक्तैः शितविशिखैर्विफलीचकार सद्यः ॥ ७० ॥

अथ दशवदनस्तयैव शक्त्या सपदि बिभेद विपक्षकालरात्र्या ।
दृढतरमपि लक्ष्मणस्य वक्षः स च मृतवन्निपपात राजपुत्रः ॥ ७१ ॥

दशमुखभुजमुक्तशक्तिजं द्राग्विकृतभिषक्परिचारका गुणैः स्वैः ।
मृतिकरमपि तं गदं सुमित्रातनयसुषेणमरुत्सुता विजिग्युः ॥ ७२ ॥

ज्वलदनलशिखोग्ररामबाणैरपहृतसारतया लघुर्दशास्यः ।
भयभरचलितस्तदाहवाद्द्रागपसृतवान् विरथो हताश्वसूतः ॥ ७३ ॥

प्रबलतरभयेन वेपमानं द्रुतमपयान्तमवेक्ष्य राक्षसेन्द्रम् ।
हिमगिरिरपयाति मारुतेनेत्यखिलजना जगदुर्महाद्भुतान्धाः ॥ ७४ ॥

अपरमथ सदश्वसूतशस्त्रं रथमधिरुह्य दशाननोऽत्यमर्षी ।
त्वरितमभिययौ रघुप्रवीरं रविमिव तीव्रजवेन सैंहिकेयः ॥ ७५ ॥

रथवरममरेन्द्रशासनेन द्रुतमथ मातलिनोपनीतमग्रे ।
त्रिदशकुलरिपोर्वधाय रामो हरिरिव पत्त्ररथेन्द्रमारुरोह ॥ ७६ ॥

रघुपतिदशकण्ठयोः प्रवृत्ते तरलजयेऽथ रणे सतां विकासः ।
क्वचन जलरुहामिवाह्नि जज्ञे क्वचिदसतां तमसां निशीव चासीत् ॥ ७७ ॥

दशमुखभुजमुक्तमुग्रशूलं समभिपतच्छकलीकृतात्मशस्त्रम् ।
सुरपतिरथसंस्थया तु शक्त्या प्रलयतटित्प्रभया ददाह रामः ॥ ७८ ॥

अथ दशवदनस्य रामबाणत्रुटितगलं पतितं शिरोन्तराधेः।
पुनरुदितमवेक्ष्य वीक्षणाभ्यां चलनमवाप भिया प्रशंसया वा ॥ ७९ ॥

शतमिति शिरसां दशाननस्य क्षितिपतित युधि रामबाणकृत्तम् ।
मनसि न तु भयं चकार किञ्चित् सकलनिरीक्षकविस्मयप्रदायि ॥ ८० ॥

रघुपतिरमरेन्द्रसूतवाक्यात् पुनरिषुणा द्रुहिणास्त्रयोजितेन ।
दशवदनमपातयत् पृथिव्यां कुलिशकठोरतरं विदार्य वक्षः ॥ ८१ ॥

रघुपतिमभितः पपात सद्यः स्रवदतिपुष्परसा प्रसूनवृष्टिः।
नयनगलदमेयबाष्पधारा दशवदनं च ततिर्निशाचरीणाम् ॥ ८२ ॥

भुजवरबलनिर्जितत्रिलोके रघुपतिना निहते निशाचरेन्द्रे ।
विविधरसमयी मुखेभ्य उच्चैर्मुहुरुदगादसतां सतां च वाणी ॥ ८३ ॥

धनवितरणविक्रमोद्यमानामयमगमत्तपसां च राशिरस्तम् ।
अभयमिह सुरेषु सम्प्रवृत्तं भयमपि शाश्वतिकं निशाचरेषु ॥ ८४ ॥

कमलभववरोऽविलङ्घनीयः स्फुटमिह यस्य वशे चकार मृत्युम् ।
रघुतिलकशरस्तमद्य मृत्योः सपदि करोति वशे निशाचरेशम् ॥ ८५ ॥

अपि गिरितनयामकम्पयद्यः शमनरिपोर्गिरिमुत्क्षिपन् भुजाभ्याम् ।
स तु शमनहतोऽद्य हा शयानो रणभुवि कम्पयति स्वकीयजायाः ॥ ८६ ॥

अमितधृतिरिहेन्द्रियाणि जित्वा गुरुतपसा जगदीश्वरोऽभवद्यः ।
सपदि स जित इन्द्रियैरमर्षादिव गमितः श्वसृगालभक्ष्यभावम् ॥ ८७ ॥

इति वदति जने बहूनि रामस्त्रिदशपतेः सरथं विसृज्य सूतम् ।
दशमुखशवसंस्क्रियादि सर्वं द्रुतमथ कारितवान् विभीषणेन ॥ ८८ ॥

लङ्कायामभिषिच्य पावनजलैः सौमित्रिणा संयुतो
रामस्तत्र विभीषणं निशिचराधीशं चकार प्रभुः ।
तेनानाय्य ददर्श तां जनकजां सुस्नापितां भूषितां
तस्यां संसदि रूपिणीं श्रियमिव क्रव्यात्कपीनां स्थिताम् ॥ ८९ ॥

तां दृष्ट्वा पुरुषोत्तमोऽतिपरुषां रोषादिवोचे गिरं
रक्षोनाथगृहोषितां चिरतरं रम्यैर्गुणैरुज्ज्वलाम् ।
रामः सत्कुलसम्भवो न भवतीं स्वीकर्तुमिच्छाम्यहं
गच्छ त्वं तु यथेच्छमेव पुरुषं कञ्चिद्व्रजेत्युच्चकैः ॥ ९० ॥

भर्त्रैवं वचनस्फुलिङ्गनिकरैराकीर्यमाणाविशत्
सीता प्रज्वलितां विरचितां सौमित्रिणात्मोचिताम् ।
रक्षोभिः सह वीक्ष्य तत् कपिवरा हाहेति संचुक्रुशू-
रामस्तापमवाप तन्निशमनान्नाग्निप्रवेशात् सती ॥ ९१ ॥

देवाः शक्रप्रधाना दशवदनवधप्राप्तहर्षप्रकर्षा
रामं तत्राभिजग्मुः शुचिदिनकरवद्भासमानैर्विमानैः ।
त्र्यक्षः साक्षाद्गणैः स्वैः सह गिरिसुतया चाधिरूढो वृषेन्द्रं
प्रीतात्मा चात्मयोनिः शशधरधवलं हंसमारुह्य वाहम् ॥ ९२ ॥

ऊचुस्ते भक्तिनम्रं त्रिदशपरिवृढाः प्राञ्जलिं राममुच्चैः
सीतां ह्योपेक्षसे किं शुभतरचरितामुग्रमग्निं विशन्तीम् ।
साक्षान्नारायणस्त्वं दशवदनवधं कर्तुमत्रावतीर्णः
सीतेयं चाब्धिकन्या किमिदमिह करोष्यज्ञवत्प्राज्ञमौले ॥ ९३ ॥

इत्युक्ते देववर्यैस्तरलितहृदये पृच्छति स्वस्य तत्त्वं
रामे साक्षाच्च धात्रा त्रिभुवनगुरुणा संस्तुते तत्त्ववाक्यैः ।

उच्चैस्तीव्रं ज्वलन्त्याश्चटचटरटितैस्तत्र तस्याश्रितायाः

अङ्कनादाय सीतां स्वयमथ तनुमानुत्पपाताश्रयाशः ॥ ९४ ॥

सीतामङ्गीकुरुष्व स्फुटशुभचरितां मत्प्रवेशाददग्धा-

मेनामाज्ञापयामि स्फुटमहमधुना सर्वसाक्षी भवन्तम् ।

इत्युक्तः पावकेन प्रथितसितयशा राघवः सम्प्रदत्तां

प्राणेभ्योऽपि प्रियां तां विकसितवदनां बाढमङ्गीचकार ॥ ९५ ॥

ऊचे बद्धाञ्जलिं तं तदनु पशुपती राम रामाप्रमेय

प्रीतोऽहं श्लाघनीयैः सततमपि जगच्छर्मदैः कर्मभिस्ते ।

भो भो तीर्णप्रतिज्ञार्णव शृणु भवता साधु सन्तारितो य-

स्तातं तं पश्य पश्य प्रणयमयममुं त्वागतं देवरूपम् ॥ ९६ ॥

दृष्ट्वा सर्वज्ञवाचा प्रणतमवहितं लालयामास रामं

सौमित्रिं तां च सीतां दशरथनृपतिः सूक्तिभिः कर्मभिश्च ।

अशीर्भिर्योजयित्वा भरतमृतिशुचं संस्मरन्नार्द्रचेताः

भूयः प्रस्थापयामास च निजनगरीं गच्छ गच्छेति धीमान् ॥ ९७ ॥

साकं सर्वैः स्वकीयैरथ विबुधवराज्ञीवितैर्निर्व्रणैश्च

प्रायाद्रम्यामयोध्यामतिरयगतिना पुष्पकेणाद्भुतेन ।

यद्यद्दृश्यं सरण्यां मधुरतरवचा दर्शयंस्तत् प्रियां सः

प्रापोल्लङ्घ्योरुदेशान् महिततरभरद्वाजपुण्याश्रमं तत् ॥ ९८ ॥

इति श्रीकोच्चुण्णिराजविरचिते

श्रीरामचरितमहाकाव्यपूरणे

रावणवधो नाम

एकत्रिंशः सर्गः



# द्वात्रिंशः सर्गः

प्रतिप्रयाते नगरीं प्रति स्वां रामे सुराः शम्भुविधीन्द्रमुख्याः ।
वाहाधिरूढाः प्रययुर्गणैः स्वैः स्वं स्वं पदं प्रत्यतिहृष्टचित्ताः ॥ १ ॥

वीर्याणि रामस्य सलक्ष्मणस्य महान्ति सर्वाद्भुतपावनानि ।
आज्ञां कपीन्द्रस्य विभीषणस्य नयं परां वायुसुतस्य शक्तिम् ॥ २ ॥

विधातृपुत्रस्य मतिं परेषां नीलाङ्गदादिप्लवगोत्तमानाम् ।
कर्माणि चित्राण्यपि संस्तुवन्तः प्रापुः पुनः स्वस्वनिकेतनानि ॥ ३ ॥

श्रीरामचन्द्रं हतपङ्क्तिकण्ठमहान्धकारं सितकीर्तिशोभम् ।
दृष्ट्वा भरद्वाजमुनिस्तपोब्धिः प्रत्युद्ययावब्धिरिवाशु चन्द्रम् ॥ ४ ॥

अथावतीर्णं भुवि पुष्पकाग्राद्रामं ससीतानुजमित्रभृत्यम् ।
नमन्तमूचे स तपोधनेन्द्रस्तपोबलज्ञातसमस्तवृत्तः ॥ ५ ॥

ज्ञातं मया ते सकलं चरित्रं तपःप्रभावेन रघुप्रवीर ।
रक्षोवधब्रह्महरादिदेववरप्रियाप्त्यादिकमादरेण ॥ ६ ॥

वदामि किञ्चित् प्रणयेन राजन् भवानुषित्वा सुखमाश्रमेऽस्मिन् ।
स्वीकृत्य सत्कारमपि स्वयं मे गमिष्यति श्वोऽथ पुरीमयोध्याम् ॥ ७ ॥

यद्यत्त्वदीया इह कामयन्ते तत् कल्पवृक्षा इव शाखिनोऽमी ।
दास्यन्ति सद्यस्तपसो बलान्मे तपःफलं तावकपूजनं हि ॥ ८ ॥

तस्यार्थनं तद्वरवद्गृहीत्वा प्रार्थ्य महर्षेः शिरसैव रामः ।
वक्तुं तदेतद्भरतं चरित्रमुवाच पार्श्वस्थितमाञ्जनेयम् ॥ ९ ॥

याया हनूमन्नधुनैव सद्यः पुरीमयोध्यां रविवंशजानाम् ।
पश्येशमस्या भरतं च नन्दिग्रामे स्थितं धर्ममिवात्तदेहम् ॥ १० ॥

स मद्वियोगव्यथितान्तरात्मा न मिष्टमश्नाति सुखं न शेते ।
फलाशनः स्थण्डिलशाय्यजस्रमास्ते मदीयागमनप्रतीक्षः ॥ ११ ॥

शास्त्रस्य सारं विनयस्य सारं धर्मस्य सारं नयवीर्यसारम् ।
श्रियश्च सारं तमवाप्य वीरं सद्यः समाश्वासय मत्कथोक्त्या ॥ १२ ॥

निषादनाथः पथि शृङ्गिवेरे पुरे गुहस्तत्र सखा ममास्ते ।
मद्वृत्तमेतद्भवतं च सर्वं मन्नयस्तचित्तः स सदापि वीरः ॥ १३ ॥

समीरितः स्वप्रभुणेति धीमान् समीरवेगः स समीरसूनुः ।
ययौ समुत्पत्य विहायसाशु ज्याप्रेरितो बाण इवास्तसङ्गः ॥ १४ ॥

रामस्य वृत्तं गुहमेत्य सर्वमुक्त्वा प्रहृष्टं च विहाय सद्यः ।
धर्मप्रधानं भरतं दिदृक्षुर्मरुत्सुतः सत्वरमुत्पपात ॥ १५ ॥

नृरूपमासाद्य पुनः स नन्दिग्रामे स्थितं तं भरतं ददर्श ।
दधानमुत्तुङ्गजटां सचीरं कृष्णाजिनं च व्रतशुष्कगात्रम् ॥ १६ ॥

रामाप्रियं रामकथाप्रसक्तं रामार्पितप्राणमनश्शरीरम् ।
रामाङ्घ्रिसद्भक्तिरसावतारश्शङ्काकरं सर्वगुणाकरं च ॥ १७ ॥

युक्तं समानाकृतिशीलवेषैर्भ्रात्रा वयस्यैः सचिवैर्भटैश्च ।
विज्ञाय रामागमनप्रतीक्षं प्रहृष्टचेताः प्रशशंस धीमान् ॥ १८ ॥

धन्योऽयमेव त्रिजगत्यमुष्य दासोऽपि रामादपरं न वेत्ति ।
कालं नयामोऽधिकसन्निकर्षाद्वृथा वयं नादृतरामपादाः ॥ १९ ॥

भक्तोत्तमस्यास्य मनः प्रसन्नं स्वयं समाकर्षति साधु रामः ।
योगेश्वरस्त्वात्मवियोगयोगाद्देहानहो नो लघुभक्तिभाजाम् ॥ २० ॥

इति प्रशस्य त्वरयोपसृत्य रामानुजं सम्प्रणिपत्य मूर्ध्ना ।
जगाद रामस्य कथामशेषामाकर्ण्य यामेति नरोऽखिलार्थान् ॥ २१ ॥

अथेङ्गितज्ञं पुनरुक्तभीत्या प्रोत्साहिनं केवलमीक्षते स्म ।
शत्रुघ्नमाराद्भरतः स मान्यान् मन्त्रीश्वरांस्ते च जनानशेषान् ॥ २२ ॥

अमात्यदृष्टचर्पणतः प्रहृष्टाः सबालवृद्धप्रमदा जनास्ते ।
चिह्नैः पुरी साकथयत् प्रहर्षं तं मार्जनस्नानविभूषणाद्यैः ॥ २३ ॥

सम्मार्जनैः सा मलपङ्कहीना स्नाता सुगन्धैर्विमलैश्च तोयैः ।
अलङ्कृता तोरणरत्नहेमप्रसूनमालाविलसद्वितानैः ॥ २४ ॥

समुच्छ्रितात्युन्नतकेतुबाहुप्रसक्तचीनांशुकपाणिकम्पैः ।
समाह्वयन्ती नगरी स्वनाथं प्रौढेव कान्ता सुतरां बभौ सा ॥ २५ ॥

ततः शुभां तां रजनीमुषित्वा रामस्य तत्रागतिमादरेण ।
प्रतीक्षमाणो भरतोऽन्तरस्थे वैद्योत्तमस्येव महागदार्तः ॥ २६ ॥

रामं नपश्यन् भरतो बभाषे कपे न पश्याम्यधुनापि रामम् ।
पूर्वेद्युरुक्तं भवता यदस्मांस्त्वज्जातिचापल्यभवं नु किं तत् ॥ २७ ॥

इति ब्रुवाणे भरते तु रामसन्दर्शनोत्कण्ठितचित्तवृत्तौ ।
उवाच धीमांस्तरसा हनूमान् शृण्वन् रवं पुष्पककिङ्किणीनाम् ॥ २८ ॥

आरुह्य यद्दिव्यविमानरत्नं रामः समागच्छति सम्भ्रमात्त्वाम् ।
तस्यैष नादः श्रवणाभिरामः संश्रूयते काञ्चनकिंणीनाम् ॥ २९ ॥

त्वं पश्य चामुं सकलाभिरामं रामं ससीतं सह लक्ष्मणेन ।
मित्रैश्च सत्रा दिवि पुष्पकस्थं चन्द्रं सनक्षत्रमिवोदयस्थम् ॥ ३० ॥

दृष्ट्वाथ रामं भरतादयस्ते चिरेप्सितं ध्वस्तसमस्तखेदाः ।
प्रहर्षभक्तिप्रसराभिभूताः नभो जयेत्युच्चतरं वदन्तः ॥ ३१ ॥

निपत्य भूमौ सहसा प्रणेमुः सर्वे समुत्तुङ्गजटैः शिरोभिः ।
तथाविधांस्तानखिलान् विलोक्य रामः प्रकामं करुणाकुलोऽभूत् ॥ ३२ ॥

ततो विमानात्त्वरसावतीर्य रामः स्वभक्तान् भरतादिकांस्तान् ।
आश्लेषसम्भाषणवीक्षणाद्यैरानन्दयामास यथाप्रधानम् ॥ ३३ ॥

विहाय तं दीर्घतरं वियोगं योगं गतानां निजनायकेन ।
तेषां तदाभून्नरकं विधूय स्वर्गं गतानामिव सम्प्रहर्षः ॥ ३४ ॥

आर्यस्य रामस्य पदाम्बुजाभ्यां संयोज्य सम्यग्वरपादुके ते ।
समृद्धकामः स्रवदश्रुपूरः कृताञ्जलिः सन् भरतो बभाषे ॥ ३५ ॥

न्यस्तं मयि प्राग्भवतार्य राज्यं भवत्प्रसादेन मया सुगुप्तम् ।
प्रत्यर्पयाम्यद्य तवाङ्घ्रिमूलं तीर्णप्रतिज्ञस्य वनागतस्य ॥ ३६ ॥

माता त्वयेव मम मानिताभूद्भक्त्या वचःस्वीकरणान्महात्मन् ।
तातः कृतः सूनृतवाङ्नरेन्द्रः क्रमागतं राज्यमिद गृहाण ॥ ३७ ॥

रक्ष्यं महात्मन् भवतै राज्यं नैतच्चिरं रक्षितुमस्मि शक्तः ।
भारं महोक्षप्रवरेण वाह्यं वहेत् कथं वत्सतरश्चिराय ॥ ३८ ॥

लभेत किं केसरिणो बलं श्वा काकश्च हंसस्य गतिं मनोज्ञाम् ।
अनन्तकल्याणगुणाश्रयस्य तव प्रभावं पर आश्रयेत् कः ॥ ३९ ॥

अतोऽभिषिक्तं कुरु भोः प्रसादादात्मानमाश्वद्य पुरोहिताद्यैः ।
एताः प्रजाः पश्य सबालवृद्धाः सम्प्रार्थयन्ते ह्यद एव कार्यम् ॥ ४० ॥

तथेति तस्याथ वचोऽनुजस्य रामः प्रसादादुररीचकार ।
सर्वाङ्गनांस्तांश्च पुनः कटाक्षैर्भद्रैः कृपार्द्रैः शिशिरीचकार ॥ ४१ ॥

त्वं राजराजं धनदं वहेति प्रस्थाप्य रामोऽथ विमानराजम् ।
भ्रात्रादिभिस्तत्र सहैव सर्वैः संवर्धितश्मश्रुजटश्चकाशे ॥ ४२ ॥

रामस्य तच्छमश्रुविहीनमास्यं कलङ्कहीनोडुपमण्डलाभम् ।
नेत्रैर्निपीयानिमिषैर्न यातास्तृप्तिं जना जानपदाः सपौराः ॥ ४३ ॥

रथं सुमन्त्रेण तदोपनीतं विमानतुल्यं स समारुरोह ।
सभ्रातृजायः सहितः सुहृद्भिः सर्वे जनाः स्वस्वमनोरथांश्च ॥ ४४ ॥

अलङ्कृतां हृष्टजनामयोध्यां प्रविश्य चान्तःपुरमादरेण ।
स कोसलाश्रीसुताप्रधाना ददर्श मातृर्व्रतकर्शिताङ्गीः ॥ ४५ ॥

एषातिधन्या खलु केकयेन्द्रपुत्री यदुक्त्यैव वनं प्रविष्टः ।
रामो दशग्रीवकुलं निहत्य चकार भूतिं भुवनत्रयस्य ॥ ४६ ॥

इत्युच्चकैः काश्यपवामदेववसिष्ठजाबालिमुखा मुनीन्द्राः ।
प्रहर्षयन्तो भरतप्रसूं तामूचुः सलज्जामथ रामहृज्ज्ञाः ॥ ४७ ॥

भक्त्योपसृत्य प्रणनाम रामो मातॄः क्रमात्ताः प्रमदाश्रुपूरैः ।
तस्याभिषेकं विधिवद्वितेनुः पुरो वसिष्ठादिपुरोहितानाम् ॥ ४८ ॥

ततो वसिष्ठप्रहिता हरीन्द्राः सुवर्णकुम्भैः सकलापगाभ्यः ।
तोयं चतुर्भ्यश्च सरित्पतिभ्यः सद्यः समाजह्रुरनल्पवेगाः ॥ ४९ ॥

अथोपवेश्योत्तमरत्नदीप्ते सिंहासने हेममये विचित्रे ।
रामं ससीतं शुभमन्त्रपूतैः समभ्यषिञ्चत् सलिलैः पुरोधाः ॥ ५० ॥

एवं वसिष्ठेन कृताभिषेकः श्रिया प्रजज्वाल नृपासनस्थः ।
रामः ससीतः शुभवेदिसंस्थः कृताज्यहोमोऽग्निरिवामलार्चिः ॥ ५१ ॥

ततः पुरोधा रचयाञ्चकार तस्याभिषेकं विधिवद्विधिज्ञः ।
ऋत्विक्प्रधानैः सचिवप्रधानैर्वर्णप्रधानैश्च वणिक्प्रधानैः ॥ ५२ ॥

रामस्य मूर्ध्न्यर्पितवान् किरीटं दिव्यं मणिस्वर्णमयं वसिष्ठः ।
प्रत्यूषकालस्तमसः क्षयार्थं पूर्वाचलस्येव दिनेशबिम्बम् ॥ ५३ ॥

महर्षयः काश्यपवामदेववसिष्ठमुख्या मणिमण्डनानि ।
अङ्गानि चामुष्य परस्परेण सर्वाणि चक्रुः समलङ्कृतानि ॥ ५४ ॥

आधत्त तस्योपरि चन्द्रशोभं शत्रुघ्ननामा ज्वलमातपत्रम् ।
तेनातिमात्रं विरराज रामो वपुष्मतेवात्मयशश्चयेन ॥ ५५ ॥

रेजे तदास्यं कपियातुनाथगृहीतयोश्चामरयोर्युगेन ।
घनात्यये पार्श्वविलोलराजहंसद्वयेनेव बिसप्रसूनम् ॥ ५६ ॥

सहस्रनेत्रस्य गिरा सहस्रसहस्रपत्रै रचितां मनोज्ञैः ।
कण्ठस्थले काञ्चनदिव्यमालां समार्पयत्तस्य विभोः समीरः ॥ ५७ ॥

तं तुष्टुवुः पेशलसूनृताभिर्वाग्भिस्तदा सर्वसुखावहाभिः ।
स्थिताः सुरास्तत्र महर्षयश्च तद्भक्तिपूर्णं च जगद्धितेप्सुः ॥ ५८ ॥

वाराङ्गनानां युगपत् प्रवृत्तं नृत्तं धरायां च दिवि प्रहर्षात् ।
मृदङ्गशङ्खानकदुन्दुभीनां नादश्च सर्वश्रवणाभिरामः ॥ ५९ ॥

वादित्रनृत्तस्तवनानि चक्रुर्हृष्टा वधूभिः सह वानराश्च ।
श्रीरामभक्त्या सदृशा बभूवुः सुरा नरास्तत्र तु वानराश्च ॥ ६० ॥

निशाचराणामपि तामसानां जात्या परद्रोहमहोत्सवानाम् ।
स्थिरा मुनीनामिव शिष्टताभूद्रामे प्रसन्ने गुणवान् न कः स्यात् ॥ ६१ ॥

एवं गुणं सर्वजनेऽपि गाढं कुर्वाणमत्यूर्जितयात्मशक्त्या ।
रामं पतिं प्राप्य तदातितृप्तः प्राप्यं न किञ्चिन्मनुते स्म लोकः ॥ ६२ ॥

ग्रीवास्थले काञ्चनरत्नमालां सख्युः स्वयं वानरनायकस्य ।
समर्प्य रामः सदसि प्रसन्नः सुग्रीवसंज्ञामकरोद्यथार्थाम् ॥ ६३ ॥

अथाङ्गदायाहितमङ्गदाय ददौ रघूणां प्रवरोऽङ्गदे ते ।
यद्बद्धबाहुः शशिसूर्यसक्तशृङ्गद्वयो मेरुरिवाबभौ सः ॥ ६४ ॥

अलञ्चकाराभरणैर्विचित्रैर्वरैर्दुकूलैश्च विदेहपुत्रीम् ।
रामोऽथ नव्यैश्च दलैः प्रसूनैरारामवीथीमिव पुष्पकालः ॥ ६५ ॥

सा जानकी कण्ठगतेन मुक्ताहारेण दिव्येन तदातिरेजे ।
भर्तृप्रसादस्मितकान्तिभाजा नक्षत्रजालेन निशीथिनीव ॥ ६६ ॥

हारं शरच्चन्द्रमरीचिगौरं सीता समुद्धृत्य तमात्मकण्ठात् ।
आलोकयामास मुहुः कपींस्तान् भर्तारमप्युत्पलपत्रनेत्रा ॥ ६७ ॥

अथेङ्गितज्ञः स्मितपूर्वमूचे रामः प्रियां तां महतां सभायाम् ।
प्रदेहि वैदेहि रसेन तस्मै हारं प्रसादस्तव साध्वि यस्मिन् ॥ ६८ ॥

[कलापकम्]

येनात्मशोकज्वलनाम्बुदेन तूल्लङ्घितो गोष्पदवत् समुद्रः ।
विलोकितासीन्निशि साधु लङ्का वनं च तत् पर्पटवत् प्रभग्नम् ॥ ६९ ॥

अक्षादयो निर्जितनिर्जरेन्द्रा रक्षःप्रवीरा मशकीकृताश्च ।
भस्मीकृता रावणराजधानी तृणीकृतः संयति पङ्क्तिकण्ठः ॥ ७० ॥

द्राक्कन्दुकीकृत्य महौषधीनां निधिं गिरिं शक्रजिता हतानाम् ।
उच्चाटितस्तूलवदेव मृत्युः प्रसादितः साधु गुणैश्च रामः ॥ ७१ ॥

रामागमोर्क्ति च सुधां वितीर्य सञ्जीवितोऽभूद्भरतो महात्मा ।
तस्मै ददौ तं जनकेन्द्रपुत्री हनूमते हारमुदारशीला ॥ ७२ ॥

स तेन हारेण मनोहरेण सत्त्वेन साक्षादिव सद्गुणेन ।
रेजेऽतिमात्रं पवमानपुत्रः शरद्घनेनेव तुषारशैलः ॥ ७३ ॥

[ युग्मकम् ]

विभीषणं राक्षससार्वभौमं पुत्रं विरिञ्चस्य च जाम्बवन्तम् ।
गय गवाक्षं गवयं सुषेणं नीलं नलं सद्द्विविदं च मैन्दम् ॥ ७४ ॥

अन्यांश्च सर्वानथ पूजयित्वा यथार्हमेवाम्बरभूषणाद्यैः ।
प्रस्थापयामास रघुप्रवीरः स्वं स्वं पदं प्रत्यथ ते च जग्मुः ॥ ७५ ॥

ततो विसृष्टा रघुपुङ्गवेन पुष्टाः प्रहृष्टाः सकला जनास्ते ।
तं संस्तुवन्तः स्वपदान्यवापुरूषुः सुखं तेषु च रामभक्ताः ॥ ७६ ॥

यदा नियुक्तोऽपि च यौवराज्ये चक्रे सुमित्रातनयो न योगम् ।
तदाभ्यषिञ्चद्भरतं स रामो ररक्ष च श्रीश इवाखिलक्ष्माम् ॥ ७७ ॥

राजाधिराजे रघुवंशदीपे सर्वं जगच्छासति रामचन्द्रे ।
सुखं वियत्तुल्यमभूत्समस्तव्याप्तं वियत्पुष्पसमं च दुःखम् ॥ ७८ ॥

जितौ प्रतापेन रघूत्तमस्य तटित्कृशानू न हि तत्प्रजानाम् ।
वितेनतुः कामपि हन्त बाधां सर्पाः शरैः पञ्चमुखा बलेन ॥ ७९ ॥

अपारगम्भीरमधृष्यरूपमपां पतिं राघववीर्यबद्धम् ।
आपः समालोक्य न तत्प्रजानां बाधामकुर्वन्नमृतत्वमाप्ताः ॥ ८० ॥

आनीतदिव्यौषधिभूधरेण हनूमता सेवितपादमूले ।
रामे महीं पालयति क्षमाया द्रुता निजागन्तुगदाः कृपालौ ॥ ८१ ॥

सदापि रामस्य महाप्रतापे सहस्रभानौ प्रतपत्यवार्ये ।
न तस्कराणां रजनीचराणां दुरात्मनां क्वाप्यभवत् प्रवेशः ॥ ८२ ॥

दारिद्र्यदुःखं न बभूव किंचिद्वैधव्यदुःखं च तदा धरायाम् ।
न च क्वचिन्मित्रवियोगदुःखं न पुत्रनाशप्रभवं च दुःखम् ॥ ८३ ॥

वृक्षाः सदा पुष्पफलप्रवालैर्नम्रा गुणैः सन्त इवातिमात्रम् ।
चक्रुः सदा सर्वजनस्य पोषं परोपकारैकफलाखिलार्थाः ॥ ८४ ॥

रामे स्वपुत्र्या सह धर्मपत्न्या प्रहृष्टयान्मानमवत्यजस्रम् ।
प्ररूढसर्वोत्तमसस्यपूर्णा रोमाञ्चिताङ्गीव बभूव भूमिः ॥ ८५ ॥

यत्कीर्तनध्वस्तसमस्तपापा प्रयान्त्यसन्तोऽपि परं पदं तत् ।
रामः प्रसन्नः स्वगुणैर्विचित्रैः स्वस्मिन् समाकृष्य बबन्ध लोकान् ॥ ८६ ॥

विनाश्य दुःखप्रदमाशुधर्मं सनातनं सौख्यकरं च धर्मम् ।
निषेवमाणे नृपतौ वरिष्ठे रामे प्रजाः सौख्यमयत्नमापुः ॥ ८७ ॥

पापं सतापं जगतां हरन्ती पद्मोदयं साधुतरं दिशन्ती ।
मन्दाकिनी रामकथा विचित्रं सर्वत्र सम्यक् प्रसृताभिरामा ॥ ८८ ॥

चेटीव लोकस्य मलं हरन्ती रतिं दिशन्ती दयितेव गाढम् ।
मातेव पोषं रचयन्त्यमीक्ष्णं श्रीरामभक्तिर्ववृधे जगत्सु ॥ ८९ ॥

रामस्य दासानकरोदशेषान् न केवलं भक्तिरतिप्रवृद्धा ।
अशेषनाथं करुणारसार्द्रमशेषदास्याभिरतं च रामम् ॥ ९० ॥

भक्तिं परामादिकविः स रामे बाल्मीकिरम्भोरुहभूनियोगात् ।
उत्पाद्य रामायणकल्पवृक्षं तत्पुष्पमाध्वीमिव वर्षतीह ॥ ९१ ॥

स वाजिमेधादिमखान यथावच्चकार सन्तर्पितसर्वदेवान् ।
रामः क्षमामेवमनन्तकीर्तिः संवत्सराणामयुतं शशास ॥ ९२ ॥

भूत्वात यौ रावणकुम्भकर्णौ स्वनिग्रहानुग्रहमत्र कर्तुम् ।
आनीतवन्तौ भुवि रामरूपं हरिं भजे तौ हरिभक्तवर्यौ ॥ ९६ ॥

भृत्यौ हरे रावणकुम्भकर्णौ मुमुर्मुहुश्च प्रणमामि भक्त्या ।
भृत्यप्रसादाद्धि हरिप्रसादस्तस्य प्रसादात् सकलार्थसिद्धिः ॥ ९४ ॥

सुग्रीव नीलाङ्गद जाम्बवान् भो विभीषणौदार्यनिधे हनूमान् ।
श्रीरामभक्तान् भवतो नमामि मुहुर्भवत्सङ्गलवाभिलाषी ॥ ९५ ॥

भक्त्या तातं च मातॄर्जनकनृपसुतां गाढरागेण मैत्र्या
भ्रातॄन् रक्षःकपीन्द्रानथ पवनसुतं साधु संपूजया च ।
यत्त्वं सम्प्रेर्यमाणं खलु नयसि विभो लोचनाम्भोजयुग्मं
तत्कारुण्येन सम्यङ् नय सकरुण मां श्रीपते राम राम ॥ ९६ ॥

विष्णुः साक्षान्निजांशैः सह जयविजयौ रावणं कुम्भकर्णं
भृत्यावुद्धर्तुमिच्छन् दशरथभवने शक्तिपूर्णोऽवतीर्णः ।

यश्चक्रे च स्वकीर्तिं त्रिजगति वितताभिष्टसिद्ध्यै जनानां
स त्वं मां पाहि सीतारमण गुणनिधे राम लोकाभिराम ॥ ९७ ॥

इक्काक्काख्यमहीश्वरीप्रियसुतः कुञ्चुण्णिधात्रीपतेः
शिष्यः शम्भुसुतापदाब्जमधुपः कोच्चुण्णिनामास्ति यः ।
पूर्वं श्रीयुवभूमिपार्धरचितं काल्याः कुरुम्बाटवी-
स्थायिन्याः कृपयैव रामचरितं तेनेदमापूरितम् ॥ ९८ ॥

इति श्रीकोच्चुण्णिराजविरचिते
श्रीरामचरितमहाकाव्यपूरणे
रामाभिषेको नाम
द्वात्रिंशः सर्गः



# उत्तरश्रीरामचरितम्–प्रथमः सर्गः

श्रिया समेतं जनकेन्द्रकन्यया रघुप्रवीरं निहताखिलाहितम् ।
अवाप्तराज्य मुनयोऽभिनन्दितुं समाययुस्तत्र घटोद्भवादयः ॥ १ ॥

अगस्त्यकण्वात्रिपुरस्सरान् मुनीन् समागतांस्तानभिवीक्ष्य राघवः ।
तपःप्रभावेन विधातृसन्निभान् समर्चयामास सपर्यया स्वयम् ॥ २ ॥

अथोपविष्टाः परमासनेषु ते सुखं च पृष्टाः कुशलं महात्मना ।
रघुप्रवीरेण महर्षिसत्तमा भृशं प्रहृष्टा इदमूचुरादरात् ॥ ३ ॥

न रावणस्योग्रबलस्य निग्रहान्न कुम्भकर्णस्य न चान्यरक्षसाम् ।
महाबलानां सुखिनः कृता वयं तथा त्वया शक्रजिता यथा प्रभो ॥ ४ ॥

इतीरितैस्तैः सुखितैस्तपोधनैः स पर्यपृच्छत् कृतविस्मयः स्मयन् ।
महद्बलं किं वदतास्य रावणेर्यतो भयं वोऽभवदुग्रमीदृशम् ॥ ५ ॥

निशम्य रामस्य वचस्तपस्विनस्तदा बुधस्येव समस्तसाक्षिणः ।
अचोदयद्वक्तुमगस्त्यमुत्तमं स चोचिवान् दाशरथिं कृताञ्जलिम् ॥ ६ ॥

अभूत् पुरा हेतिरिति क्षपाचरः प्रहेतिसौदर्यमुपागतो बली ।
स कालनाम्नो भगिनीं महाभयां भयाभिधानां परिणीतवान् स्त्रियम् ॥ ७ ॥

ततोऽभवत् कोऽपि निशाचरोत्तमाच्छिशुस्तटित्पुञ्ज इवाम्बुदान्नवात् ।
स विद्युदादिर्नृप केश आतनोत् स्ववल्लभां सालकटङ्कटां वधूम् ॥ ८ ॥

अजीजनत् सालकटङ्कटोत्कटा सुतं कमप्याशु तमुत्ससर्ज च ।
विहर्तुकामा रमणेन कामिनी तदन्तरायं न ररक्ष राक्षसी ॥ ९ ॥

रुदन् स दृष्टश्चरता पुरद्रुहा वृषाधिरूढेन सहाद्रिकन्यया ।
उमाप्रियार्थं बहुभिः शुभैर्वरैः पुरेण दिव्येन च सोऽथ योजितः ॥ १० ॥

सुकेशसंज्ञः स निशाचरोऽभयश्चचार लोकेषु महेश्वरप्रियः ।
पुरेण सर्वेष्वपि कामगेन तं महेशभक्तं बहुमेनिरे सुराः ॥ ११ ॥

प्रदाय गन्धर्वपतिः सुतां शिवप्रियाय तस्मै कृतकृत्यतामगात् ।
अवाप्य तं देववती रराज सा पतिं सुकेशं नलिनीव भास्करम् ॥ १२ ॥

तयोः सुता वैदगदानलोपमास्त्रयोऽभवंस्तत्प्रथमस्तु माल्यवान् ।
सुमालिसंज्ञस्तदनन्तरं ततो बभूव माली महनीयविक्रमः ॥ १३ ॥

प्रसादयित्वा तपसा पितामहं वरांस्ततः प्राप्य सुदुर्लभान् शुभान् ।
प्रविश्य लङ्कां नगरीं स्थिता अमी कृतां त्रिकूटोपरि विश्वकर्मणा ॥ १४ ॥

निशाचरेन्द्राः परिणीय ते त्रयो मनोज्ञगन्धर्ववरिष्ठकन्यकाः ।
विजह्रुराभिः सह हृष्टमानसा वराप्सरोभिर्विबुधोत्तमा इव ॥ १५ ॥

प्रियाभवन्माल्यवतस्तु सुन्दरी वपुश्रिया तातकृताख्ययापि सा ।
सुतान् विरूपाक्षमहोदरादिकानसूत रम्यामनलां च सा सुताम् ॥ १६ ॥

पतिव्रता केतुमतीति विश्रुता सुमालिजाया तनयान् वरानना ।
प्रहस्तधूम्राक्षमुखान् महाबलानसूत कन्या अपि कैकसीमुखाः ॥ १७ ॥

असूत मालेर्वसुदा सुनायिका सुतान् नयज्ञानलानिलादिकान् ।
अमात्यतां प्राप्य विभीषणस्य ते सुखं वसन्त्यद्य निशाचरोत्तमाः ॥ १८ ॥

निशाचरा माल्यवदादयस्त्रयो महाबलैस्तैस्तनयैर्भटैरपि।
प्रसह्य लोकानखिलानपीडयन्नसाध्यरोगा इव भूर्युपद्रवैः ॥ १९ ॥

जगत्यटन्तोऽनिलवद् दुरासदा रणेषु कालान्तकमृत्युसन्निभाः।
महाबलास्ते वरवीयदर्पिताः शुभक्रियाणां प्रशमं वितेनिरे ॥ २० ॥

सुरर्षयोऽथ प्रबलैरुपद्रुता निशाचरैस्तैः शरण ययुः शिवम्।
उमापतिं भूतपतिं जगत्पतिं पतिं पशूनां करुणासुधानिधिम् ॥ २१ ॥

निशम्य पीडां सुरतापसेरितां सुकेशपुत्रै रचितां महेश्वरः।
उवाच दैत्यारिरिमान् हनिष्यति प्रयात यूयं शरणं तमाश्विति ॥ २२ ॥

सुरर्षयोऽथ प्रणिपत्य शङ्करं जनार्दनं प्राप्य निशाचरार्दिताः।
प्रणम्य सर्वं जगतामुपद्रवं सुकेशपुत्रोद्भवमूचुरुद्धणम् ॥ २३ ॥

सुरर्षिवाचं मधुभिन्निशम्य तामुवाच भीतिं त्यजताश्वसत्तमान्।
अहं हनिष्यामि सुकेशनन्दनानिति प्रहृष्टाः प्रययुश्च तेऽभयाः ॥ २४ ॥

अमुं विदित्वा स्वविनाशकारणं दिवौकसामुद्यममुग्रविक्रमाः।
निहन्तुमाश्वेव सुरान् रणेऽखिलान् सुकेशपुत्राः सबला ययुर्दिवम् ॥ २५ ॥

व्यालोकयन्नापततोऽथ माल्यवत्सुमालिमालीन् क्षणदाचरोत्तमान्।
सुरास्तु कालान्तकमृत्युसन्निभान् बलं च तेषां प्रलयाब्धिभीषणम् ॥ २६ ॥

अथादितेयाः प्रपलाय्य चक्रिणं सुकेशपुत्रोद्यममूचुराशु तम्।
अथाविरासीन्मधुसूदनाम्बुदादमर्ष उग्रस्तडितामिवोच्चयः ॥ २७ ॥

समस्तलोकं ग्रसितुं तदुद्यतं महन्निहन्तु पिशिताशिनां बलम्।
समारुरोहाण्डजनायकं हरिस्तपः प्रचण्डं भगवानिवोदयम् ॥ २८ ॥

ततः प्रवृत्तेऽधिकदारुणे रणे वरोद्धता मालिमुखा महाबलाः ।
निशाचरेन्द्राः शलभत्वमाययुः सुदर्शनाग्नौ भगवद्भुजेरिते ॥ २९ ॥

हतावशिष्टैरथ कैश्चिदाशरैर्विहाय लङ्कामपि तां निजां पुरीम् ।
रसातलं प्राप्य भयेन माल्यवत्सुमालिसंज्ञौ प्रनिलीय संस्थितौ ॥ ३० ॥

यदा भयात् केशवविक्रमोदिताद्रसातलस्था अभवन्निशाचराः ।
अवाप्य लङ्कां पुरमावसत्तदा धनेश्वरो विश्रवसः सुतः सुखम् ॥ ३१ ॥

सुमालिबुद्धिस्त्वथ कैकसीं व्यधात् कुटुम्बिनीं विश्रवसः सुवर्त्मगा ।
निशाचराणां कुशलाय शोचतां सुमार्गगा धीः कुरुते न किं शुभम् ॥ ३२ ॥

अवाप कैकस्यथ सुप्रसादिताद्गुणैरपत्यानि ततस्तपोधनात् ।
सकुम्भकर्णं दशकन्धरं सती विभीषणं शूर्पणखां च कन्यकाम् ॥ ३३ ॥

धनेशमालोक्य पितुः समीपतः श्रिया युतं स्वं च सुतं श्रियोज्झितम् ।
सुमालिपुत्र्यार्तिमागात् सहेत का वधूः सपत्नीतनयाधिकोन्नतिम् ॥ ३४ ॥

स्वमातरं प्रेक्ष्य शुचातुरां भृशं प्रहर्षयन् पङ्क्तिमुखस्तदाब्रवीत् ।
अहं भविष्यामि धनेश्वरोपमस्ततोऽधिको वा शुचमुत्सृजेति ताम् ॥ ३५ ॥

ततः प्रतस्थे तपसे स सानुजश्चचार चोग्रं स्थिरधीः स्थिरं तपः ।
अवाप चेष्टं वरमम्बुजासनात् स्वभक्ष्यमर्त्यादितरैरवध्यताम् ॥ ३६ ॥

जगत्तु निर्देवमिदं चिकीर्षवे स कुम्भकर्णाय पितामहः छलात् ।
वितीर्य निद्रां वरमागतं महज्जगद्भयं किञ्चिदशीशमत् प्रभुः ॥ ३७ ॥

प्रसन्नधीर्धर्मपराय पद्मभूर्विभीषणायामरतां ददौ वरम् ।
ततः प्रहृष्टाः पितरावुपेत्य ते प्रणेमुरूचुश्च निजं विचेष्टितम् ॥ ३८ ॥

सुमालिसम्प्रेरणतोऽथ रावणो विसृज्य सौभ्रात्रममेयविक्रमः।
बलेन लङ्कामपहृत्य वित्तपादुवास तस्यां स्वगणैः समं सुखी ॥ ३९ ॥

अथात्मजां स्वां महिषीं दशाननश्चकार वैरोचकनन्दिनीसुताम्।
ततोऽनुजन्मा सरमां विभीषणो दशास्यजाया सुषुवेऽद्भुतं सुतम् ॥ ४० ॥

स जातमात्रो नृप नीलमेघवन्ननाद लङ्कां सकलां प्रकम्पयन्।
चकार संज्ञामथ मेघनाद इत्यमुष्य पुत्रस्य दशाननः स्वयम् ॥ ४१ ॥

स भक्ष्यभोज्यैर्जननीसमर्पितैः श्रियोज्वले पङ्क्तिमुखस्य मन्दिरे।
अवर्धतात्युत्कटतेजसावृतः सदिन्धनैरग्निरिवातिदुःसहः ॥ ४२ ॥

स कुम्भकर्णोऽथ विधातृदत्तया बलाद्गृहीतो निपपात निद्रया।
दशाननः क्रूरमतिर्निरोद्धतश्चकार देवर्षिगणस्य पीडनम् ॥ ४३ ॥

सुरर्षिसम्पीडनमापदे भवेत् तवेति सं दूतमुखेन वित्तपः।
उवाच वाक्यं स विसृज्य तस्य तद्दशानः पुष्पकमग्रहीद्बलात् ॥ ४४ ॥

निशाचरो रूप्यगिरिं प्रकम्पयन् हराङ्घ्रिगाङ्गुष्ठलवाक्रमार्दितः।
अतिप्रसन्नात् स्तवनैस्ततः प्रभोः स चन्द्रहासाख्यमवाप्तवानसिम् ॥ ४५ ॥

प्रबाधते स्माथ स भूभृतां गणं बली नभस्वानिव भूरुहान् मुहुः।
अनेन भग्ना बहवो निपातिताः प्रणेमुरन्ये तमतीव विह्वलाः ॥ ४६ ॥

तवायशः स्यान्नृपबाधनादिति द्रुतं तदुत्सृज्य स नारदोक्तितः।
ययौ यमं जेतुमवाप चेप्सितं कथञ्चन ब्रह्मवरप्रभावतः ॥ ४७ ॥

दिनेशरात्रीशफणीशपाशिनामवाप्य लोकान् दितिजेश्वरस्य च।
जिगाय रक्षोऽधिपतिस्तदीश्वरान् विरिञ्चिदत्तेन वरेण दुर्जयः ॥ ४८ ॥

विजित्य लोकानिति रावणस्ततस्ततः समाहृत्य वराङ्गना हठात् ।
अवाप्य शापांश्च वरान् बहून् पुनर्निवर्त्य लङ्कां नगरीमवापवान् ॥ ४९ ॥

स तत्र दैतेयगुरूपदेशतः कृताध्वरं वीक्ष्य सुतं दशाननः ।
अनेकमायास्त्रवरप्रभावतः सुदुर्जयं मोदमवाप निर्भरम् ॥ ५० ॥

ततो विजेतुं समरे सुरेश्वरं पयोधितुल्येन बलेन संयुतः ।
सुतेन तेनाप्यमितोग्रतेजसा स निर्ययौ क्रव्यभुजां वरः पुरः ॥ ५१ ॥

अवाप्य वेगादमरावतीं ततः सुरैः सुघोरं समरं चकार सः ।
निपातितो यत्र सुमालिराक्षसो बभूव नष्टश्च पुरन्दरात्मजः ॥ ५२ ॥

वसुप्रधानामरवर्यविक्रमाद्ध्यामिभूते पिशिताशिनां बले ।
बहुप्रहारैरतिजर्जरीकृते महाबले पङ्क्तिमुखे पराङ्मुखे ॥ ५३ ॥

अदृश्यमूर्तिः समरे स रावणिर्वरास्त्रमायाबलमाश्रितोऽभयः ।
विजित्य सर्वां सुरवाहिनीं स्वयं जहार बद्ध्वा तरसा शतक्रतुम् ॥ ५४ ॥

उवाच शृण्वत्स्वथ राक्षसेषु स प्रहर्षयन् रावणमाशु रावणिः ।
अलं रणेनाद्य निबध्य वृत्रजिन्मया हृतः पश्यतु भो भवानिति ॥ ५५ ॥

प्रगृह्य बद्धं बलशासनं ततो ययौ स लङ्कां ससुतः ससैनिकः ।
अवाप्य तत्रोत्तमवाद्यनिस्वनैरघोषयत् पुत्रजयं समन्ततः ॥ ५६ ॥

तपस्विनां भूरितरार्थनेन यः कथंचिदाविर्भवति प्रसन्नधीः ।
स विक्रमेणाप्रतिमेन रावणेः समेत्य धाता पुरतः स्थितः स्वयम् ॥ ५७ ॥

प्रसादितेनाथ वरैः सुदुर्लभैर्विमोचयामास स तेन वासवम् ।
इतीरयित्वेन्द्रजितो महद्बलं ययौ विरामं कलशोद्भवो मुनिः ॥ ५८ ॥

निशाचरोत्पत्तिमिमां सभान्तरे मुनीरितां राममुखा निशम्य ते ।
पराक्रमं दुष्प्रसहं च रावणेर्बभूवुरत्यद्भुतपूर्णमानसाः ॥ ५९ ॥

पुनश्च पप्रच्छ मुनिं रघूत्तमः प्रसङ्गतः काश्चन शोभनाः कथाः ।
सुसाधुसम्भाषणलोलमानसः स चोचिवान् दाशरथिं तथाविधः ॥ ६० ॥

अथोग्रवीर्यं कृतवीर्यजन्मनो रघूत्तमो रावणबन्धकारिणः ।
समाशृणोत् कीशपतेश्च वालिनो हनूमतश्चाप्रतिमं मुनेर्मुखात् ॥ ६१ ॥

अवाप्य ते रामविलोकनामृतं तपस्विनो हर्षमतीव लेभिरे ।
चिराय तत्सङ्कथयोदितः पुनः कथं नु तेषां प्रमदः प्रकीर्त्यते ॥ ६२ ॥

प्रवर्धयामासुरमुं तपस्विनः शुभाभिराशीर्भिरमोघभाषिताः ।
स चार्चयामास मुनीन् यथाविधि प्रहृष्टचित्ताः प्रययुश्च ते ततः ॥ ६३ ॥

दशमुखमुखदुष्टध्वंसहृष्टाशयानां
गतवति कृतपूजे तापसानां समूहे ।
जनकनृपतिमुख्यैर्बन्धुभी रामचन्द्रः
सममधिकसमृद्धामध्यवात्सीदयोध्याम् ॥ ६४ ॥

इति श्रीकोच्चुण्णिराजविरचिते
श्रीरामचरितमहाकाव्यपूरणे
उत्तरश्रीरामचरिते
रामप्रशस्तिर्नाम
प्रथमः सर्गः



## उत्तरश्रीरामचरितम्–द्वितीयः सर्गः

सर्वरत्नचयभासुरे पुरे बन्धुभिर्जनकभूभृदादिभिः ।
संयुतोऽरमत राघवः सुरैर्वृत्रसूदन इव त्रिविष्टपे ॥ १ ॥

श्रीशपादयुगलस्रुतेः शुभा स्वर्णदी क्व सरयूः क्व सा नदी ।
रामरूपधरदानवद्विषन्नित्यमज्जनशुभाभवत्तु या ॥ २ ॥

अब्धिजासहजभावभासुरैः पादपैः क्व सहितामरावती ।
भूमिजासततलालनोज्ज्वलैर्भूरुहैररहिता क्व सा पुरी ॥ ३ ॥

मृग्यते निरुपमं सुधाशनैर्योगिभिश्च सनकादिभिः सदा ।
तत्पुरोत्तमभवं नवं नवं साधु रामचरितामृतं शुभम् ॥ ४ ॥

पार्थिवा जनकजाहृतिश्रुतिक्षुब्धहृद्धरतशासनागताः ।
तत्र रावणमुखाशराहवालाभतः किल न तृप्तिमाययुः ॥ ५ ॥

ध्वस्तहस्तिरथपत्तिघोटकां भग्ननिष्पतितकेतुतोरणाम् ।
रक्षसामधिपतेः पुरीं बलात् कर्तुमुत्सुकतराः समागताः ॥ ६ ॥

पुष्टहस्तिरथपत्तिघोटकामुच्छ्रितोल्लसितकेतुतोरणाम् ।
प्राप्य रामनगरीं समुज्ज्वलां पार्थिवा विमनसः किलाभवन् ॥ ७ ॥

विश्वसंहतिसमुद्यतं प्रभुं मन्मथारिमिव राममीक्षितुम् ।
रावणं प्रति सरोषमागतास्तत्सहायकरणे समुत्सुकाः ॥ ८ ॥

आत्मभृत्यसखिबान्धवान् प्रति स्यन्दमानकृपयार्द्रमानसम् ।
वीक्ष्य मन्मथमिव क्षमाभुजो राघवं विमनसः किलाभवन् ॥ ९ ॥

यातुशस्त्रपरिपातजैरलङ्कर्तुमात्मवपुरस्त्रविस्रवैः ।
आगता न तुतुषुर्महीभृतस्तत्र रक्तमलयोत्थलेपनैः ॥ १० ॥

[ युग्मकम् ]

तीक्ष्णशस्त्रचयतल्पसंस्कृते रूक्षराक्षससमीकभूतले ।
आगताः शयितुमाशु दीर्घया निद्रया किमपि मूर्च्छयापि वा ॥ ११ ॥

तत्र सौधशिखरस्फुरन्महाराजपङ्कशयनं मनोहरम् ।
आश्रिता न सुषुपुः सुखं तदा धैर्यशौर्यबलशालिनो नृपाः ॥ १२ ॥

ते प्रबोधसमये महौषधिक्ष्माधरानयनजीवितोत्थितान् ।
वानरान् सनिजनायकान् मुहुः सस्मरुः सफलजीवितान् नृपाः ॥ १३ ॥

रामभूरिगुणगानसंयुतं तत्र बन्दिवरदुन्दुभिस्वम् ।
शृण्वतां क्षितिभुजां समाविशन्मानसं त्रिदशदुन्दुभिस्वनः ॥ १४ ॥

[युग्मकम्]

बाल्युरःखरशिरोविदारणं रामबाणमुदधेर्विशोषणम् ।
निर्व्यथैरवयवैरधारयन्छुकवत्तुहिनशैलविग्रहः ॥ १५ ॥

कुम्भकर्ण इति तत्र वर्णितां वानरै रणकथां मुहुर्मुहुः ।
शृण्वतां क्षितिभुजामभून्मनस्तच्छिरीक्षणकुतूहलाकुलम् ॥ १६ ॥

[ विशेषकम् ]

यस्तु नागसुमहास्त्रपीडितौ राघवौ युधि बलादपातयत् ।
ब्राह्ममस्त्रमतुलं प्रयुज्य यः शत्रुपक्षमखिलं व्यनाशयत् ॥ १७ ॥

मायया जनकनन्दिनीशिरः पश्यतोऽमितबलस्य मारुतेः ।
योऽसिना युधि विकृत्य लीलया माहमम्यकरोद्द्विषद्गणम् ॥ १८ ॥

तस्य यच्छिखरिभिर्जितो बधद्वारमेकमतिसूक्ष्मतां गतम् ।
तत्र लक्ष्मणमवेक्षयत् सुधीर्यः स एव जयसूत्रमेष नः ॥ १९ ॥

इत्यनुक्षणविजृम्भमाणया श्लाघया नृपतयो हृदिस्थया ।
कम्पमानशिरसो व्यलोकयंस्तत्र रामसविधे विभीषणम् ॥ २० ॥

यश्चकर्त कुसुमातिकोमलं वाक्शरैर्जनकजामना मुहुः ।
तस्य रावणगलस्य सायकैर्युक्तमेव शतवारखण्डनम् ॥ २१ ॥

इत्यतिप्रसृमराद्भुताकुलास्तत्र भूमिपतयो बभाषिरे ।
राघवस्य चरितं रणाजिरे वानरेन्द्रकथितं निशम्य ते ॥ २२ ॥

दारुणप्रकृतिरुग्रतापतः क्रव्यभुग्भिरतिदारुणैर्वृतः ।
ब्रह्मदत्तवरवीर्यदर्पितो योऽभवत् त्रिभुवनैकभीषणः ॥ २३ ॥

तस्य पङ्क्तिवदनस्य निग्रहे रामभुद्यतमुदारकर्मभिः ।
ये रणे गतभया सिषेविरे वानरास्त इह पूज्यतां गताः ॥ २४ ॥

नासुरा न च सुरा न किन्नराः किं पुनः प्रकृतिदुर्बला नराः ।
इत्यनल्पबहुमाननोऽपतन् वानरेषु नरनाथदृष्टयः ॥ २५ ॥

तत्र रावणिरथप्रमाथिनं केऽपि बालितनयं प्रतुष्टुवुः ।
पङ्क्तिकण्ठमकुटापहारिणं सूर्यसूनुमपरे नरेश्वराः ॥ २६ ॥

वाङ्मनोऽविषयभूरिसत्क्रियापात्रभूतमितरे मरुत्सुतम् ।
आत्मलाघवविमोहिताशरा धीवरं कपिवरूथपतिं परे ॥ २७ ॥

आञ्जनेयमतिवीर्यदायिनं जाम्बवन्तमतिकोविदं परे ।
इत्युदारघुनाथतत्सुहृद्विक्रमैः किमपि रेमिरे नृपाः ॥ २८ ॥

सख्युरात्मजनकस्य राघवः प्राप्य तत्र जनकस्य सन्निधिम् ।
दिव्यवस्त्रमणिभूषणाञ्चितं तं विधाय स कदाचिदूचिवान् ॥ २९ ॥

भूरिविक्रम महातपोनिधे चापशापमहितायुध प्रभो ।
राक्षसा दशमुखादयो रणे तेजसैव भवतो हता मया ॥ ३० ॥

ज्ञानयोगबलदग्धकल्मष त्वत्कृपा मयि न चेत् स्थिरा भवेत् ।
त्वादृभुतामिततपोऽजिताखिलो रावणो मम न जय्यतां व्रजेत् ॥ ३१ ॥

विश्वसृष्टिलयपालनक्षमत्वत्तपःसवितृतेजसा लयम् ।
प्रापिते पिशितभुक्पतेस्तपोज्योतिरिङ्गणगणे जयः सुखः ॥ ३२ ॥

सादरागमनसम्भ्रमेण ते मानितोऽस्मि भवता महात्मना ।
आन्तरं जनपदात् पुराच्च मे स्वाङ्घ्रिपद्मरजसा रजो हृतम् ॥ ३३ ॥

भाषितरमृतसारवर्षिभिः कर्मभिश्च परिरम्भणादिभिः ।
मित्रबान्धवकलत्रसंयुता भ्रातरोऽहमपि लालितास्त्वया ॥ ३४ ॥

सज्जनोत्तम सुखावहं भवत्सङ्गमं सकलदुष्कृतापहम् ।
प्राप्य को न्वलमितीह चिन्तयेन्मानुषोऽमृतमिवातिदुर्लभम् ॥ ३५ ॥

त्वद्वियोगजविषादविह्वला नूनमद्य मिथिला न शोभते ।
तद्भवान् व्रजतु सम्प्रहर्षयन् स्वां पुरीं यदि तवापि रोचते ॥ ३६ ॥

ज्ञानयोगनयवीर्यवारिधे सर्वमानित भवन्तमादरात् ।
सेनया सचतुरङ्गयैतया साकमेष भरतोऽनुयास्यति ॥ ३७ ॥

इत्युदीर्य विनयानतं स्थितं प्राञ्जलिं त्रिजगतामधीश्वरम् ।
वीक्ष्य राममवदन्महामतिः संविचिन्त्य जनकक्ष्मापतिः ॥ ३८ ॥

पार्षदौ तव गभीरसद्गुणौ योगिनश्च सनकादयः प्रभो ।
रक्षणे सततदीक्षितो भवान् कैर्नु किन्नु न करोति मङ्गलम् ॥ ३९ ॥

रावणस्तु तव पार्षदो ह्ययं कुम्भकर्णरजनीचरोऽप्यसौ ।
विप्रदत्तवरशापसेवनच्छद्मनात्र कृतसम्भवौ स्वयम् ॥ ४० ॥

रावणादिकृतपीडया जगत्त्वत्पदस्मृतिनिमज्जितं ह्यभूत् ।
रावणादिनीचरा अपि द्वेषभीतिभरतोऽभवंस्तदा ॥ ४१ ॥

एवमाशु सकलं जगत्प्रभो त्वद्वपुःस्मृतिसुधापयोनिधौ ।
मज्जयन्त इह शापयोगतो निर्वृता हि सनकादियोगिनः ॥ ४२ ॥

ज्ञानदाननियमव्रतादिभिस्त्वत्कथाश्रवणकीर्तनादिभिः ।
त्वत्स्मृतिर्न हि भवेत्तथा नृणां द्वेषकामभयमन्युभिर्यथा ॥ ४३ ॥

येन येन तव संस्मृतिर्भवेदुत्कटा सततमेप्यधीश्वर ।
दुःखहन्त्र्यखिलसौख्यदायिनी साध्यते खलु तदेव योगिभिः ॥ ४४ ॥

[ युग्मकम् ]

हारनूपुरकिरीटकुण्डलाद्युत्तमाभरणमीक्षणामृतम् ।
सद्यशोमृतझरप्रवर्षिणां दिव्यकर्मधरणीरुहां पदम् ॥ ४५ ॥

ब्रह्मभूतमखिलार्थसिद्धिदं वर्णनीयममलैः कवीश्वरैः ।
बिभ्रदुत्तममिदं वपुर्विभो किन्न वर्षसि शुभं जगत्त्रये ॥ ४६ ॥

विप्रयोगवरयोगवैभवात् कर्तुमुत्कटतरां तव स्मृतिम् ।
रामभद्र भगवन् जगत्पते भक्तवत्सल हरे व्रजाम्यहम् ॥ ४७ ॥

एवमुन्नतमतिर्निगद्य स स्वाङ्कमध्यमधिरोप्य राघवम् ।
आत्मनोन्तरिव तं प्रवेशयन् गाढगाढपरिरम्भमातनोत् ॥ ४८ ॥

कृच्छ्रतोऽथ वपुषा विसृज्य तं राममश्रुपिहितावलोकनम् ।
स्यन्दनं समधिरुह्य शीघ्रगं स्वां पुरीं जनकभूपतिर्ययौ ॥ ४९ ॥

तत् पुराञ्जनकभूपतौ गते सज्जनप्रवरमौलिभूषणे ।
केकयेशमुपगम्य मातुलं सोऽब्रवीद्रघुपतिर्युधाजितम् ॥ ५० ॥

लालिता विनयिनः कृताः पुनः पालिताश्च विधिवत्त्वया वयम् ।
एवमुत्तमगुणे त्वयि स्थिते नैव शुग् जनकविप्रयोगजा ॥ ५१ ॥

नूनमद्य भवता विवर्जिता केकयक्षितिरतीव दुःखिता ।
नैव राजति तमिस्रपीडिता शर्वरीव शशिना विनाकृता ॥ ५२ ॥

यातु तज्जनपदं निजं भवान् स्वप्रजा गुणगणैः प्रहर्षयन् ।
त्वां स्वबाहुबलनिर्जिताहितं लक्ष्मणः सपृतनोऽनुयास्यति ॥ ५३ ॥

रामचन्द्रमुखचन्द्रनिर्गतं तन्निपीय मधुरं वचोमृतम् ।
केकयक्षितिपतिः सुखी ययौ स्वं पदं प्रति रथं समास्थितः ॥ ५४ ॥

राघवस्त्वथ सुहृत्तमोत्तमं काशिभूवलरिपुं प्रतर्दनम् ।
अभ्युपेत्य परिरभ्य निर्भरप्रेमगाढमिदमूचिवान् वचः ॥ ५५ ॥

किं भवान् नृप भवन्तमुत्सृजेत् सन्त्यजेयमथ किन्नु मामहम् ।
इत्यशेषविदितावयोः स्थितिः प्रेमभाररचिताधिकैक्ययोः ॥ ५६ ॥

सन्ततारचितसर्वमङ्गलो राजमौलिमणिरास्थितो वृषम् ।
तत्र काशिनगरे प्रभो परो विश्वनाथ इव भासतां भवान् ॥ ५७ ॥

त्वां प्रयान्तमयमिष्टबान्धवं शत्रुहा सपृतनोऽनुयास्यति ।
उक्त एवममुनाहितार्दनः स्वालयं प्रति ययौ प्रतर्दनः ॥ ५८ ॥

जानकीं हृतवतश्छलाद्वनाद्रावणस्य निधनार्थमागतम् ।
भूरिसैन्यसहितं शतत्रयं भूभुजामथ जगाद राघवः ॥ ५९ ॥

नैतच्चित्रं दशमुखकुलं यत् समस्तं निरस्तं
तेजोभाजां सपदि भवतामागमैः प्राङ्मयासीत् ।
अर्कांशूनां जगति महतामागतेः पूर्वमेव
द्रागालोकः किमु न कुरुते ध्वान्तवंशप्रणाशम् ॥ ६० ॥

अपरिमितजनानां पार्थिवा हन्त तत्तज्जनपदनिलयानां युष्मदीये वियोगे ।
गतसकलरुचीनां पङ्कजानां निशीव स्मृतिरियमतिमात्रं व्याकुलं मां करोति ॥ ६१ ॥

तद्भूरितेजोनिधयो भवन्तः स्वं स्वं पदं यान्तु नृलोकपालाः ।
अनुग्रहं मेऽत्र मदर्पितानां परिग्रहं सादरमाकलय्य ॥ ६२ ॥

इति सुमधुरं रामेणोक्ता यथाविधि चार्चिताः
समुचिततरं तत्तद्द्रव्यैर्नृपारित्रदशार्थितैः ।
जगदधिपतिं नत्वा कृत्वा च तं हृदये प्रभुं
सह निजगणैः स्वं स्वं राष्ट्रं प्रहृष्टतरा ययुः ॥ ६३ ॥

इति श्रीकोच्चुण्णिराजविरचिते
श्रीरामचरितमहाकाव्यपूरणे
उत्तरश्रीरामचरिते
राजविसर्गो नाम
द्वितीयः सर्गः

# तृतीयः सर्गः

वैकुण्ठलोके रमयेव विष्णुः कैलासशैले शिवयेव शम्भुः ।
उवास साकेतपुरेऽभिरामः सत्रा दुहित्रा जनकस्य रामः ॥ १ ॥

तदा कदाचित् सकलर्तुलक्ष्मीसमुज्ज्वलं स्वोपवनं विचित्रम् ।
रामः सदारः प्रविवेश रम्यं कलत्रयुक्तैः सहितः स्वमित्रैः ॥ २ ॥

महीपतिस्तत्र समं महिष्या पश्यन्निजोद्यानरुचिं चचार ।
स्वाभिः प्रियाभिः सह तत्र तत्र चेरुर्मुदा तस्य च ते वयस्याः ॥ ३ ॥

स कान्तयालङ्कृतचारुमूर्तिर्लतागृहं किञ्चिदलञ्चकार ।
मनोगृहं चास्य मनोभिरामं रत्या समाश्लिष्टतनुः सुमेषुः ॥ ४ ॥

आरामलक्ष्मीं भ्रमराक्षिपातैर्मनोरमां माधवसङ्गपुष्टाम् ।
संश्लाघयन् वाचमुवाच सीतां स चन्द्रिकासुन्दरमन्दहासः ॥ ५ ॥

अपाङ्गनिर्धूतकुरङ्गबाले शृङ्गाररङ्गाङ्गि वरोरुमाले ।
आराममेतन्मदनस्य धाम विलोकयालोलविलोचनाभ्याम् ॥ ६ ॥

अस्पष्टवर्णैः परपुष्टनादैः समुल्लसत्सुन्दरकुन्दहासैः ।
आरामदेशोऽयमशेषरम्यश्चन्द्रानने नन्दनवद्विभाति ॥ ७ ॥

शुभाङ्गि पापावरणेन नूनं भृङ्गव्रजो मेचकतां प्रपन्नः ।
तथा ह्ययं हा मधुपानमत्तो लतावधूर्गच्छति पुष्पयुक्ताः ॥ ८ ॥

पश्यायमुद्यानसभान्तराले स्थितः स्तुतः षट्पदवन्दिवृन्दैः ।
सुवर्णपुष्पाभरणोऽद्य वेदिसिंहासने राजति राजवृक्षः ॥ ९ ॥

वाताहतेर्भूपतितं सुपक्वं जम्बूफलौघं हरिणाक्षि शङ्के ।
वनश्रिया चर्वितमुक्तचारुताम्बूलवल्लीदलपिण्डकाण्डम् ॥ १० ॥

फलस्तनं चारु बिभर्ति शाखावधूर्मनोज्ञा पनसद्रुजाता ।
वसन्तवक्षःपरिरम्भणेन सकण्टकं पश्य मनोहराङ्गि ॥ ११ ॥

अमुं वटद्रुं मदनस्य पत्न्या विभूषणागारमितीह शङ्के ।
बिम्बारुणा पक्वफलालिनाम्ना विराजते विद्रुममालिकास्मिन् ॥ १२ ॥

राजन्ति चिञ्चाद्रुफलान्यमूनि नवेन्दुवक्राण्ययि वक्रकेशि ।
युवद्विपाकर्षणनिर्मितानि मनोभवस्येव नवाङ्कुशानि ॥ १३ ॥

द्विरेफरुद्राक्षपरिष्कृतात्मा भुजङ्गवृन्दैः परिवेष्टिताङ्गः ।
गिरीशवद्राजति गन्धसारः स्मरस्य शत्रुर्न च किन्तु बन्धुः ॥ १४ ॥

विराजमानं विटपैरनेकैः श्रितं मनोज्ञैर्गणिकासमूहैः ।
अमुं महाश्वत्थतरुं हृदन्ते शङ्केतरां सुन्दरि वेशवाटम् ॥ १५ ॥

छन्नः स्फुरत्पुष्पसटाछटाभिर्भृङ्गावलीहुंकृतिसिंहनादैः ।
विभाति बाले विरहिद्विपेन्द्रान् विभीषयन् सालमृगाधिराजः ॥ १६ ॥

रसालजं पल्लववृन्दमेतन्मन्येऽतिमान्ये मकरध्वजस्य ।
वस्त्रं वसन्ताभिधतन्तुवायविनिर्मितं सन्मृदु शोणशोभम् ॥ १७ ॥

यद्दृश्यतेऽशोकतरौ सुरक्तमिदं न पुष्पं कुसुमायुधेन ।
रतेः कुचालङ्करणाय रागात् समार्जितं कुङ्कुमपङ्कमेव ॥ १८ ॥

सुवर्णवर्णा मुकुलाः कृशाङ्गि विभान्त्यमी चम्पकवृक्षजाताः ।
कृशानुतप्ता इव मन्मथस्य शिलीमुखास्तीक्ष्णशिखा ज्वलन्तः ॥ १९ ॥

शशिप्रकाशं मुकुलं शिताग्रं मनोहरं केतकजातमेतत् ।
शङ्के हृदा मन्मथबालदन्तिदन्ताङ्कुरं पङ्कजपत्रनेत्रे ॥ २० ॥

विराजते कुन्दलतानिशान्तमेतद्द्विरेफौघसुमप्रतानैः ।
महेन्द्रनीलोपलचारुमुक्तामालावितानैरिव वासगेहम् ॥ २१ ॥

देवोपमैर्देववधूसमानाः समं स्वकान्तैरतिकान्तरूपाः ।
मनोहरे निन्दितनन्दनेऽस्मिन् क्रीडन्ति पश्योपवने वधूट्यः ॥ २२ ॥

एषा कृशाङ्गी पुरुषव्रजानां हृतेऽपि हावैः सुमनस्समूहे ।
पुनश्च मुग्धा सुमनोग्रहाय प्रयाति पार्श्वं पुरुषस्य पश्य ॥ २३ ॥

अग्रस्थपुष्पग्रहणार्थमस्या मुखं रसादुन्नमितं विलोक्य ।
अन्यानि पुष्पाणि विसृज्य तस्मिन् पयोजशङ्की पतति द्विरेफः ॥ २४ ॥

आमोदलोलैरलिपोतजालैर्वृतां प्रियां स्वां विवशां विलोक्य ।
अस्या गलं चम्पकमालयायं कान्तः समर्थः समलङ्करोति ॥ २५ ॥

समुन्नतस्थानि सुमानि हर्तुमारोहतीयं सुमुखी प्रियांसम् ।
अप्यानतं तत्कुचभारतोंऽसं स्वं निश्चिनोत्युन्नतमेव कामी ॥ २६ ॥

तामेवमुक्त्वा जनकेन्द्रपुत्रीं स तत्र चिक्रीड वधूसमेतः ।
ये तद्वयस्या दयितासमेतास्ते चापि चिक्रीडुरतिप्रहृष्टाः ॥ २७ ॥

अपारयन्त्याऽग्रसुमग्रहे तु सकोपया मञ्जुलशिञ्जितेन ।
अशोकवृक्षो निहतः कयापि पादेन चक्रे कुसुमान्यधस्तात् ॥ २८ ॥

उत्सङ्गदेशे सरसं निवेश्य प्रियेण पुष्पैर्मधुगन्धपूर्णैः ।
रराज काचित् समलङ्कृताङ्गी सुपुष्पिता चारुतरा लतेव ॥ २९ ॥

प्रियोत्तमाङ्गं नवपल्लवेन सकौतुकं मण्डयति स्म काचित् ।
स पल्लवं तन्मृदुलं प्रियायाः सिन्दूरशोणं पदमेव मेने ॥ ३० ॥

रसेन काचिन्मृदुलं स्वहस्तं यदार्पयत् पुष्पचये तदैव ।
महाव्यथात्याकुलितोऽभवत् स किं वा सुमानां स्मरसायकत्वात् ॥ ३१ ॥

इत्यादिनानाविधकेलितान्ताः कान्ताःसकान्तास्तरसाबलास्ताः ।
श्रमाम्बुहारैः समलङ्कृताङ्ग्यः सरोवगाहे सरसा बभूवुः ॥ ३२ ॥

[कलापकम्]

मदोल्लसन्मञ्जुलमल्लिकाक्षस्त्वनोपमालङ्कृतिचारुनादा ।
परिस्फुरत्पङ्कजकोरकाभपयोधरा फुल्लसरोजवक्त्रा ॥ ३३ ॥

लसन्महासैकततुल्यपीननितम्बबिम्बा वरशङ्खकण्ठी ।
चलद्द्विरेफौघकटाक्षमाला मनोज्ञवीचीसदृशभ्रुरम्या ॥ ३४ ॥

राजन्महावर्तगभीरनाभिरन्तरस्थमुक्ताफलदन्तपङ्क्तिः ।
निजाधरान्तःप्रसृतामृतार्द्रा विजृम्भमाणातनुतापहन्त्री ॥ ३५ ॥

वरस्त्रियां शैवलकेशपाशा ततिः समानां सरसीं सिषेवे ।
विकस्वराम्भोरुहसङ्गसङ्गसुगन्धिनं गन्धवह च तत्र ॥ ३६ ॥

अथावगाढासु वराङ्गनासु नितम्बवक्षोरुहभारसङ्गात् ।
उल्लङ्घ्य वेलां सरसी सहेलं सुस्राव किं वा प्रमदाश्रुपूर्णा ॥ ३७ ॥

कान्तैस्तदा तत्र नितान्ततां ताः सुलोचनाः पङ्कजरेणुमिश्रैः ।
सिक्ता बभूवुः शिशिराम्बुपूरैरहो परिस्पष्टतराखिलाङ्ग्यः ॥ ३८ ॥

करीन्द्रकुम्भप्रतिमैरुरोजैरताडयंस्तत्र तरङ्गमालम् ।
स्वभ्रूलताश्रीरनया प्रमुष्टेत्यारूढकोपा इव तास्तरुण्यः ॥ ३९ ॥

पारं सरस्या रमणेन सार्धं प्राप्तुं प्रवृत्ताथ तदन्तराले ।
अतिश्रमार्ता किल वल्लभस्य कण्ठस्थलीं कापि समाललम्बे ॥ ४० ॥

कस्याश्चनाम्भोरुहचारुहस्तद्वयाम्बुसन्ताडनजं प्रणादम् ।
निशाम्य कामिप्रकरो रतीशमृदङ्गगम्भीररवं शशङ्के ॥ ४१ ॥

अगाधमग्ने रमणे जवात्तं काचिन्निगूढं परिरब्धुकामा ।
ततो निमग्ना विफलप्रवृत्तिरुन्मज्जिता श्वासनिरोधखिन्ना ॥ ४२ ॥

निजाक्षिलक्ष्मीमपहृत्य सर्वां मग्नं जले वीक्ष्य तु मत्स्यवृन्दम् ।
ग्रहीतुकामेव ममज्ज काचिदत्यन्तदीर्घाततकेशजाला ॥ ४३ ॥

सुशीकरा मौक्तिकतुल्यरूपा विलासिनीहस्तपुटैरुदस्ताः ।
जपारुणाभिर्नखरप्रभाभिर्नभस्थले विद्रुमवद्विरेजुः ॥ ४४ ॥

वराङ्गनातुङ्गतरातिपीनस्तनोल्लसत्कुङ्कुमसङ्गशोणम् ।
सरस्तदालोक्य तदा मनोज्ञं युवव्रजः शोणनदं शशङ्के ॥ ४५ ॥

एवं महामोहनहावभावाः कान्तैः समं कान्ततराङ्गयष्टयः ।
मनोज्ञयाना वरटा इवातिहृष्टा विजह्रुर्वनिताः सरस्याम् ॥ ४६ ॥

नासुन्दरं नासदृशस्वभावं नान्योन्यरागाविवशान्तरङ्गम् ।
नाबुद्धिमन्नातरुणं च किंञ्चिन्नाकेलिलोलं मिथुनं ततोऽभूत् ॥ ४७ ॥

नीलाम्बुदश्यामलकोमलाङ्गः श्रीरामचन्द्रोऽपि समं महिष्या ।
मनोहरारामसरोवरेषु चिरेण चिक्रीड करेणुतुल्यः ॥ ४८ ॥

परस्परस्योत्तमभूरिलीलाविदग्धभावं मुहुरीक्षमाणौ ।
विदेहकन्यारघुनायकौ तौ कालं गतं नाविदतां हृदन्ते ॥ ४९ ॥

अस्तक्ष्माधरतुङ्गशृङ्गजमहाबिम्बीफलभ्रान्तिदं
याद्रोनाथहरिद्वधूमुखलसत्सिन्दूरबिन्दुप्रभम् ।
प्राप्तं साधु पितृप्रसूतरलदङ्माणिक्यताटङ्कतां
प्रत्यक्पर्वतशृङ्गमम्बरमणेर्बिम्बं ललम्बेतराम् ॥ ५० ॥

सरोजानां गर्भं सपदि विशति स्मालिनिवहो
विटङ्कं गेहानां सपदि च कपोतद्विजगणः ।
प्रदोषे दोषज्ञो रघुकुलपतिः स्त्रीपरिवृतै-
र्वयस्यैः प्रेयस्या सह च सदनं तापशमनम् ॥ ५१ ॥

एवं नृपः स्ववचनामृतभूरिलीलासन्तुष्टया दयितया सममेत्य गेहम् ।
संस्पर्शमात्रसकलाशयकल्मषघ्नीं सन्ध्यामुपासितुमनाः सरयूं प्रपेदे ॥ ५२ ॥

इति श्रीकोच्चुण्णिराजविरचिते
श्रीरामचरितमहाकाव्यपूरणे
उत्तरश्रीरामचरिते उद्यान
सलिलक्रीडावर्णनं नाम
तृतीयः सर्गः



# चतुर्थः सर्गः

बालामसौ दलितविद्रुमपाटलाङ्गीं
वाणीमिव द्विजगणैः समुपास्यमानाम् ।
तारामयस्फटिकमालिकयोल्लसन्तीं
सन्ध्यामुपास्य निजसौधमवाप तुङ्गम् ॥ १ ॥

तत्रानया विकचमेचकपङ्कजाक्ष्या
सत्रा विदेहसुतया नृवरोऽध्युवास ।
वातायनान्तिकविराजितरत्नडोला-
खट्वातलं विपुलदुग्धजफेनशय्यम् ॥ २ ॥

दृष्ट्वा महाकविवचोऽमृतदुग्धसिन्धुं
सन्ध्यां स्फुटोत्पलसुगन्धभरान्धभृङ्गाम् ।
रामोऽतिकोमलमरुत्तरलालकान्तां
कान्तामुवाच हसितेन सिताननेन्दुः ॥ ३ ॥

व्याकोचमेचकसरोरुहशोभमान-
मीषत्स्फुरद्विमलतारमिदं मनोज्ञम् ।
रात्र्या मुखं तव मुखं स्मितलक्ष्यदन्त-
मुत्फुल्लनेत्ररुचिरं सदृशीकरोति ॥ ४ ॥

सम्भावयासिततरैस्तरलाक्षिपातैः
सन्ध्यारुणं गगनमण्डलमञ्चिताङ्गि ।

आश्वेतदस्त्वलिकदम्बकसक्तरक्त-
पुष्पव्रजस्थगिततुङ्गपलाशतुल्यम् ॥ ५ ॥

पश्यादरात् सुमुखि विष्णुपदाश्रितत्वा-
न्मत्वागवां पतितयापि च मत्सराढ्यम् ।
रत्नाकरं सपदि शोषयितुं किमद्य
कोपारुणीकृततनुस्तपनोऽभियाति ॥ ६ ॥

धात्रीतले प्रविततं परितः प्रभूतं
सन्ध्यारुणार्ककिरणंक्षतजप्रवाहम् ।
पातुं जवेन रजनीरजनीचरीय-
मागच्छतीह कुतुकेन कुरङ्गनेत्रे ॥ ७ ॥

आसन्नघोरतरसूरकरप्रतप्त-
प्रत्यग्गिरिस्थरविकान्तमहामणिभ्यः ।
उद्गच्छतः सरभसं शिखिनः शिखाभिः
पश्यातिमात्रमरुणां वरुणस्य काष्ठाम् ॥ ८ ॥

देवेन मर्त्यनिग्रहान् प्रति भूरिमुक्तै-
र्बाणैरशोककुसुमैः कुसुमाशुगेन ।
देवालयात् क्षितितलाभिमुखं पतद्भिः
किं वारुणं गगनमण्डलमद्य शोणम् ॥ ९ ॥

आसन्ननाशमरुणैर्विकृतं मयूखै-
र्मित्रं खगेन्द्रमवलोक्य कृतार्तनादाः ।
नीडान्तरे खगगणास्तरसा पतन्ति
तन्नाशवीक्षणविमोक्षणकाङ्क्षया किम् ॥ १० ॥

अभ्रस्थले किमपि विभ्रममाकलय्य
पाथोनिधौ पतति पाटलितः पतङ्गः ।
तद्गर्भवर्तिबडवावदनान्तराल-
निर्गत्वरानलशिखामिव यातुकामः ॥ ११ ॥

पश्याभितः क्षितितले विततान्यमूनि
ध्वान्तानि तर्कय च किञ्चन चञ्चलाक्षि ।
पत्यौ मृतेऽधिकशुचा परिखण्डितानि
कैश्यानि मेचकतराणि दिनश्रियः किम् ॥ १२ ॥

पश्योल्लसन्त्यभिनवस्फटिकच्छवीनि
ताराणि कोमलतनो गगनप्रदेशे ।
अभ्रङ्कषान्धतमसद्विरदाधिराज-
गण्डोद्गतानि मदवारिपृषन्ति किन्तु ॥ १३ ॥

यानि स्फुरन्ति गगने स्फुटकुन्दभानि
ताराण्यमूनि न मरुत्तरलाम्बुजाक्षि ।
पाथोनिधेस्तरणिपातसमुद्गतानि
व्योमस्थितानि जलबिन्दुकदम्बकानि ॥ १४ ॥

लोकस्य चन्द्रमुखि मित्रविनाशजात-
मोहान्धकारनिकरं परिहर्तुमद्य ।
गोसञ्चयोऽमृतमयोऽखिलसेवनीयः
पूर्वक्षमाधरवरादयमाविरस्ति ॥ १५ ॥

मन्दोल्लसत्कुमुदगर्भसमानवर्णा
प्राच्यां विराजति दिशि द्युतिरैन्दवीयम् ।

ध्वान्तद्विपौघदलनोद्यतपूर्वशैल-
सिंहाट्टहासविकसद्विशदप्रभेव ॥ १६ ॥

निश्शेषदेहिनिवहेक्षणभागधेय-
पुञ्जायमानमरुणं तरुणं प्रसन्नम् ।
चन्द्रस्य बिम्बमयि सुन्दरि नन्दनीय-
माराधयोल्लसितनेत्रनवोत्पलाभ्याम् ॥ १७ ॥

शङ्के लसत्स्फटिकवर्तुलशीधुपात्रं
कामस्य पूर्णमुदितं सितरश्मिबिम्बम् ।
अस्मिन् सुगन्धभरलोलतयान्तराले
सक्तं द्विरेफनिकरं च कुरङ्गशावम् ॥ १८ ॥

औपासनानलविराजितवृत्तकुण्डं-
कामस्य नैतदरुणं तरुणेन्दुबिम्बम् ।
नाप्येव बालहरिणः पथिकव्रजस्य
होमेन किञ्चिदुदितोऽत्र नवीनधूमः ॥ १९ ॥

नायं शशी गगनचारपटुर्मुनीन्द्रः
श्रीनारदः स्फटिकभङ्गसितप्रकाशः ।
नायं शशः सततभावनयान्तरङ्गे
चित्ते स्थितं मधुरिपोरसितं स्वरूपम् ॥ २० ॥

शङ्खोपमद्युतिरयं त्रिदशारिवीर-
शस्त्राहतिव्रणकिणौघकलङ्किताङ्गः ।
एतत्तमश्श्यतमालवनं करेण
चन्द्रेन्द्रवाहनकरी दलयन् विभाति ॥ २१ ॥

दुग्धाम्बुराशिजनितो रजनीकरोऽयं
दुग्धाम्बुधिं जनयति स्वकरच्छलेन ।
पुत्रः कथं नु जनकं जनयेदितीह
चिन्ताकुलं विरचयन्नखिलं च लोकम् ॥२२॥

एणाङ्करूप्यकलशेन पयःपयोधे-
रादाय चन्द्रकिरणाभिधदुग्धपूरम् ।
तेनात्र रात्रिवनिता रवितापतप्तां
भूमिं जलेन परिषिञ्चति चञ्चलाक्षि ॥ २३ ॥

पश्याद्य शीतलकरः सुरवर्त्मशाणे
पिष्ट्वातिशुभ्ररुचिचन्दनपङ्कपुञ्जम् ।
तेनादरात् क्षितिवधूं तपनांशुतप्तां
ज्योत्स्नाभिधेन परिलिम्पति शीतलेन ॥ २४ ॥

पूर्णेन्दुसुन्दरमुखीं मिथिलेन्द्रपुत्री-
मुक्त्वैवमुत्तमगुणः स रघुप्रवीरः ।
जालान्तरागतनिशाकरकान्तिसङ्गा-
दत्यन्तशुभ्रमनया शयनं सिषेवे ॥ २५ ॥

तस्याः कुचौ मदनतद्दयिताभिषेक-
कर्मार्थिकोचितमहागुणपूर्णकुम्भौ ।
संयोज्य साधु हृदये परिरम्य राम-
स्तीव्रानुरागसुखपूरितमानसोऽभूत् ॥ २६ ॥

कान्तस्य तस्य रघुवंशविभूषणस्य
रागालयाधररसं सरसं निपीय ।

रागातिरेकपरिपूर्णतरान्तरङ्गा
सासीत्तदा जनकभूवलयेन्द्रपुत्री ॥ २७ ॥

रत्नाकरं किल बबन्ध रुषा धरण्याः
काञ्चीगुणं प्रसभमप्रतिमप्रभावः ।
यः सोयमुत्तरलितोत्कटरागभारा-
द्रामो व्यमोचयदमुं धरणीसुतायाः ॥ २८ ॥

उद्यद्द्विरेफरवमुत्तरलान्धकार-
मुन्मीलिताम्बुकणमुच्चलिताचलेन्द्रम् ।
उद्भ्रान्तकोरकमुदञ्चितपञ्चबाण-
मुल्लासितं तदनु कर्म तदुत्तमाङ्ग्याः ॥ २९ ॥

रागातिरेकविवशीकृतचित्तरङ्ग-
मुद्दामकामरणखेदनिमीलिताक्षम् ।
तत्राभवत्तदनु तन्मिथुनं विसंज्ञं
किं निद्रयामितसुखोदितमूर्च्छया वा ॥ ३० ॥

कल्येऽथ चारुपटहध्वनिमिश्रितेन
गानेन मागधकुलं स्तुतिसङ्गतेन ।
कान्ताघनस्तनयुगं परिरभ्य सुप्तं
पृथ्वीपतिप्रवरमौलिमबोधयत्तम् ॥ ३१ ॥

श्रीरामचन्द्र धरणीन्द्रकुलावतंस
निद्रां विमुञ्च विजयी भव विश्ववीर ।
पश्य प्रभातसमयं नयनाभिरामं
देव्या समं स्फुटसरोजसुगन्धरम्यम् ॥ ३२ ॥

अथोदयं रविरुपैति निशाकरोऽथ-
मस्तं च मुञ्च हृदयस्थितशोकभारम् ।
कोकेति सान्त्ववचनानि समुद्गिरन्ति
पादायुधा युवजनश्रुतिपाठनानि ॥ ३३ ॥

पूर्वाचलेन्द्रभवतुङ्गरसालसाल-
चारुप्रवालनिवहभ्रममादधानाः ।
प्राच्यां दिशीह वनिताधरविम्बशोणाः
आविर्भवन्ति किरणास्तरुणारुणस्य ॥ ३४ ॥

आत्मप्रियाः शुचितराः समवेक्ष्य तारा-
स्तीक्ष्णांशुतीक्ष्णतरदीधितिवह्निदग्धाः ।
शोकातुरो मरणमेव वरं ममेति
किं वास्तमेष समुपैति शशी विवर्णः ॥ ३५ ॥

अत्यन्ततीक्ष्णनिजगोप्रकरैर्हतानां
कोपारुणेन रविणा तिमिरासुराणाम् ।
सद्यः स्नुतैर्दिशि दिशि क्षतजप्रवाहैः
पश्यारुणं गगनमण्डलमम्बुजाक्षि ॥ ३६ ॥

पत्युर्वियोगविधुरं बत पद्मिनीनां
म्लानाननाब्जमिह भाति न वृन्दमेकम् ।
लब्ध्वा पतिं समुदितं स्फुटपङ्कजास्य-
मामोदपूर्णमितरन्नितरां विभाति ॥ ३७ ॥

सद्यः स्रवद्विमलपुण्यजलान्वितायां
स्नात्वा समन्त्रमिह विप्रगणाः सरय्वाम् ।

तोयं यथाविधि निजाञ्जलिना विशुद्धं
मन्देहवृन्दशमनाय समुत्क्षिपन्ति ॥ ३८ ॥

उत्कृष्टवंशधरमम्बुदनीलवर्णं
माणिक्यरत्नकिरणारुणचारुकोशम् ।
धात्रीन्द्र हस्तिनिवहं भवता समान-
मुत्थापयन्ति शयनादिह हस्तिपालाः ॥ ३९ ॥

पूर्वाचले रविकरैर्विततेऽतिशोणै-
रस्ताचले च धवलैः शशिकान्तिपूरैः ।
सन्ध्येयमद्य नवकुङ्कुमचन्दनाम्बु-
सङ्गोल्लसत्कुचतटी वनितेव भाति ॥ ४० ॥

हंसस्वरूपकलनागतशान्तभावं
मुक्त्वा समस्तमिदमाशु पदं मुरारेः ।
गन्तुं समुद्यतमवेक्ष्य पतिं द्विजानां
हर्षस्वनैर्द्विजकुलानि समुत्पतन्ति ॥ ४१ ॥

स्नात्वोद्गतो जलनिधेरयमंशुमाली
नक्षत्रलाजनिकरं स्वकरेण सर्वम् ।
बालोऽपहृत्य कुतुकेन च भक्षयित्वा
पूर्वाचलाङ्गणतले रमतेऽब्जबन्धुः ॥ ४२ ॥

पूर्वास्ताचलतुङ्गशृङ्गसविधं बिम्बे समालम्बिते
सूर्याचन्द्रमसोर्जपासुमशरत्काशप्रकाशे इमे ।
माणिक्योपलवज्ररत्नकृतयो रम्यां श्रियं निष्कयोः
कण्ठप्रान्तनिबद्धयोः कलयतः प्राचीप्रतीचीस्त्रियोः ॥ ४३ ॥

चिरंविरहनितान्तखेदपूर्णं
सलिलनिधिं जनकं निजाङ्गसङ्गात् ।
किमु सुखयितुमद्य शीतरश्मिः
परिपतति स्वयमन्तरस्य वेगात् ॥ ४४ ॥

मन्हेद्रनिलयामरीकरहतातिवेगोत्पत-
त्तदीयकररक्तिमारुणितकन्दुकभ्रान्तिदम् ।
तमिस्रकुलखण्डनं हरिदिगङ्गनामण्डनं
नवीनरविमण्डलं गगनमार्गमुद्गच्छति ॥ ४५ ॥

तेजसा हतमहातमश्चये भास्वति प्रशमितान्यतेजसि ।
उद्गते सति विनिद्रतां गताः स्वस्वकर्मसु समुद्यता जनाः ॥ ४६ ॥

समुदितबहुतोषैर्नष्टसर्वाभिलाषै-
र्विगलितमतिदोषैर्ऋग्यजुस्सामघोषैः ।
विततकिरणपीनः क्ष्मासुरैः स्तूयमानः
सकलसुरमयात्मा राजते द्वादशात्मा ॥ ४७ ॥

एतद्वासगृहायतेऽतिविततं दिक्चक्रवालान्तरं
वातोऽयं व्यजनायतेऽतिसुरभिर्भानुः प्रदीपायते ।
भास्वद्भानिचयश्च शोणविलसद्वासोवितानायते
मालाकारपतद्बकावलिरियं मुक्तौघमालायते ॥ ४८ ॥

भास्वान्नायमशेषश शमनो युष्मत्प्रतापानलो
लोकानां परिपालनाय सततं लोके भ्रमन् भ्राजते ।
अस्योग्राः परितश्चरन्ति हरयो ध्वान्ताशरध्वंसने
दक्षः स्वां सरणिं मुदा द्विजगणो यस्योदये सेवते ॥ ४९ ॥

इत्थं तेषां वचनमिलितं भूरिभेरीनिनादं
रामः श्रुत्वा जनकतनयां वल्लभां स्वां विमुच्य ।
रम्यं प्रायादतिशुचि सरो मेघनादं निशम्य
त्यक्त्वेवारात् सपदि नलिनीं मानसं राजहंसः ॥ ५० ॥

इति श्रीकोच्चुण्णिराजविरचिते
श्रीरामचरितमहाकाव्यपूरणे
उत्तरश्रीरामचरिते
रात्रिवर्णनं नाम
चतुर्थः सर्गः



# पञ्चमः सर्गः

अथ स्नातानुलिप्ताङ्गः कृतसर्वविधिर्नृपः ।
सभां प्राप महाबुद्धिः सुधर्मामिव वासवः ॥ १ ॥

स तत्र राज्यकार्याणि निश्चित्यादिश्य च क्षणात् ।
पूर्ववत् प्रियया सार्धं रेमे गीष्पतिसन्निभः ॥ २ ॥

एवं दयितया साकं वत्सराण्ययुतानि सः ।
अवियुक्तः सुखं रेमे शिवयेव स्मरान्तकः ॥ ३ ॥

अलक्षयत्ततो रामः सीतां गर्भस्थितार्भकाम् ।
सम्यक् पाण्डुरुचा प्राचीमिव गर्भस्थितोडुपाम् ॥ ४ ॥

अवापतुस्तदा तस्या वक्षोजौ कृष्णचूचुकौ ।
सुवर्णकुम्भयोः शोभां मध्यप्रोतेन्द्रनीलयोः ॥ ५ ॥

आसन्नप्रसवा जाता सा पाण्डुरकलेबरा ।
फलप्रसव आसन्ने चूतवल्लीव पुष्पिता ॥ ६ ॥

यथा यथालसाङ्ग्याः स गर्भस्तस्या व्यवर्धत ।
इक्ष्वाकुवंशनाथस्य तस्यानन्दस्तथा तथा ॥ ७ ॥

सगर्भां तां समालोक्य मुमुदू राममातरः ।
कादम्बिनीं वारिपूर्णां मयूर्य इव तत्क्षणे ॥ ८ ॥

अभवन् मातरो वृद्धाः पूर्णे गर्भेऽतिकातराः ।
अपायभूरिचिन्तानां वार्धक्यं हि परं पदम् ॥ ९ ॥

अप्येकपदविन्यासं मेने सा सिन्धुलङ्घनम् ।
अप्यङ्के पुष्पपतनं गिरिपातं च जानकी ॥ १० ॥

अपि तां रेणुपतनाद्ररक्ष स रघूत्तमः ।
समीपस्थः पक्ष्मसङ्घः सर्वदा तारकामिव ॥ ११ ॥

सम्पूर्णगर्भभारेण क्लिष्टां तां वीक्ष्य वल्लभाम् ।
स्वयं कारुणिको रामः सुखेनोपचचार ताम् ॥ १२ ॥

तस्या मन्दानिलस्पर्शकातरायाा रघूत्तमः ।
प्रियः स्वेदं स्वनिश्वासैः सुखस्पर्शैरपाहरत् ॥ १३ ॥

अपि फुल्लकुसुमस्पर्शात् सव्यथाया महीपतिः ।
निजाङ्कं कल्पयामास प्रेयस्यास्तल्पमुत्तमम् ॥ १४ ॥

एवं शुश्रूषणं कुर्वन् प्रेयस्याः स रघूद्वहः ।
अङ्के शयानां तां प्राह कदाचित् सम्मृदुस्मितः ॥ १५ ॥

मनोहराङ्गि लोकेषु त्रिषु यद्यत्तवेप्सितम् ।
तद्वद त्वं महाभागे प्रियं मां प्रति सम्प्रति ॥ १६ ॥

सीतोवाच त्वया सार्धं ततनीवारराजिषु ।
सैणशावकलीलासु पूर्वं परिचितासु च ॥ १७ ॥

तापसानां विशुद्धासु रम्यास्वाश्रमपङ्क्तिषु ।
दण्डकारण्यसंस्थानां प्रिया मे दयित स्थितिः ॥ १८ ॥

स सद्यः प्रेषयामास कञ्चिल्लक्ष्मणसन्निधिम् ।
सुखयानः सुमन्त्रेण रथ आनीयतामिति ॥ १९ ॥

काममस्याः पूरयितुं कामदेवसमद्युतिः ।
भृत्यं रामः प्रेषयित्वा पुनस्तामिदमब्रवीत् ॥ २० ॥

इतो गन्तुं न शक्तोऽहं राज्यकार्यनियन्त्रितः ।
शुश्रूषणं रक्षणं च लक्ष्मणस्ते करिष्यति ॥ २१ ॥

ततः सीतातिशोकेन प्रियं राममुवाच सा ।
अवसन्तं वनं प्राप्य किं रमेत पिकाङ्गना ॥ २२ ॥

तस्याः स्नेहातिरेकेण प्रहृष्टात्मा रघूद्वहः ।
ऊचे तां सान्त्वयन्नेवं शीतलीकृत्य सुस्मितैः ॥ २३ ॥

निक्षिप्य भरते राज्यमनुयास्यामि भामिनि ।
त्वां त्वद्भक्त्या पुना राज्यं पालयिष्यति स ध्रुवम् ॥ २४ ॥

सद्यानरता भर्तुरनुयानं कथञ्चन ।
सानुमेनेऽथ साध्व्यो हि भर्तृविप्रियकातराः ॥ २५ ॥

किञ्चित् संल्लापतान्ता सा कान्ता कान्ताङ्कशायिनी ।
सुष्वाप रामं बाहुभ्यां मृदुभ्यां परिरभ्य सा ॥ २६ ॥

अथ रामस्य पस्पन्दे दक्षिणेतरमीक्षणम् ।
आसन्नप्रसवा सीतेत्यन्तरङ्गं च चिन्तया ॥ २७ ॥

विदेहतनये पातु सशिवस्त्वां सदा शिवः ।
यदधीनमिदं विश्वं सपालं सकलं सदा ॥ २८ ॥

अथायात्तत्पुरः किञ्चिच्चाराख्यं मुख्यमीक्षणम् ।
राजा लोकान्तरं सर्वं येन योगीव पश्यति ॥ २९ ॥

स भद्रनामा पुरुषो रामभद्रं महीपतिम् ।
प्रणिपत्य जयेत्युक्त्वा प्राञ्जलिः पुरतः स्थितः ॥ ३० ॥

भद्र को वाद्य वृत्तान्तः पुरे जनपदेऽपि च ।
कुतस्ते वदनं म्लानं हिमाक्रान्तमिवाम्बुजम् ॥ ३१ ॥

स चोवाच महाराज न काचिन्नूतना कथा ।
गुणै रमन्ते सर्वे ते वसन्तस्येव कोकिलाः ॥ ३२ ॥

रामस्तस्येङ्गितैस्तैस्तैरतुष्टहृदयस्तदा ।
अप्यप्रियं मे वृत्तान्तं कथयेत्यब्रवीत् पुनः ॥ ३३ ॥

गर्भालसाङ्गीं वैदेहीमङ्के सुप्तां विलोक्य ताम् ।
रामेण वक्तुं नुन्नोऽपि स पेचक इव स्थितः ॥ ३४ ॥

गुप्तान्तरङ्गं चारं तं विलोक्यारक्तलोचनः ।
पुनरप्यवदद्धीमान् धीरोदात्तो रघूत्तमः ॥ ३५ ॥

साधु रे साधु ते वृत्तं यतस्त्वत्तो न किञ्चन ।
फलं भवति चारेन्द्र मालतीकुसुमादिव ॥ ३६ ॥

मद्दत्तं जीवनं व्यर्थं गूढचित्तस्य चार ते ।
प्रसुप्तस्य नरस्येव पादसंवाहनं बत ॥ ३७ ॥

इति घोरतरं वाक्यं श्रुत्वा राज्ञो मनीषिणः ।
भयप्रणयशोकार्तो रुदन् भद्रस्तमब्रवीत् ॥ ३८ ॥

यद्दुर्वाच्यतरं लोके यद्दुःश्राव्यतरं वचः ।
तद्वक्ताहमभद्रोऽस्मि भद्रो नाम्नैव भूपते ॥ ३९ ॥

अयोमुखैरिव शरैर्भवद्वाक्यैर्विघट्टितः ।
अशीर्णो ग्रावबदहमुद्गिरामि वचोनलम् ॥ ४० ॥

या वन्द्या सर्वलोकानां वृत्तशीलगुणादिभिः ।
तस्यामेवं सापवादो जानक्यां कोपि पूरुषः ॥ ४१ ॥

लङ्कायामग्निशुद्धौ तु शङ्कामाधाय मानसे ।
जानक्यां सापवादोऽस्मिन् पुरे भवति दुर्जनः ॥ ४२ ॥

असमर्थैरधीरैश्च दुष्करं राजसेवनम् ।
मृत्युदा यत्र बाधन्ते सर्पाः शोकभयादयः ॥ ४३ ॥

ममेदं वदतः शुष्का जिह्वा देहः प्रवेपते ।
मूर्च्छासन्ना ततो गन्तुमनुजानीहि मां प्रभो ॥ ४४ ॥

इति प्रयाते तस्मिंस्तु रामः प्रचलितेन्द्रियः ।
चिन्तामनन्तामगमन्मुमूर्च्छ च मुहुर्मुहुः ॥ ४५ ॥

पुनर्धैर्यं समालम्ब्य रामश्चिन्तापरोऽभवत् ।
विशिखः कालकूटोऽग्नेः कणो वा मे श्रुतिं गतः ॥ ४६ ॥

विशुद्धां गर्भिणीमिष्टामिमां मुञ्चाम्यहं कथम् ।
वहामि वा कथं दुष्टां वृद्धां दुष्कीर्तिमुल्बणाम् ॥ ४७ ॥

स्वैरिणीति भ्रमात् कैश्चिदुक्तापीय परं शुचिः ।
किं धूलिः सैन्धवस्येति सितोक्ता स्वादुतां त्यजेत् ॥ ४८ ॥

इयं वर्तेत मृद्वङ्गी मया विरहिता कथम् ।
सुधाकरेण रहिता ज्योत्स्नेव ललिताकृतिः ॥ ४९ ॥

आसन्नपुत्रप्रसवा त्याज्येयममला कथम् ।
वापीं कः पूरयेन्मृद्भिरासन्नजलदर्शनाम् ॥ ५० ॥

कथं न पालयाम्येतां गर्भक्लिष्टां मदाश्रयाम् ।
दीनः समाश्रितः पाल्यः परोऽपीति मया श्रुतम् ॥ ५१ ॥

शरज्ज्योत्स्नासमानेयं मया न त्यज्यते यदि ।
तर्हि दुष्कीर्तिनारी मां न मुञ्चेद्ध्वान्तमेचका ॥ ५२ ॥

कृपापवादभीतिभ्यामित्यासीच्चञ्चलं मनः ।
तस्य लज्जानुरागाभ्यां स्त्रीणामिव दृगञ्चलम् ॥ ५३ ॥

अथेक्ष्वाकुकुलोत्तंसः स रामो विदुषां वरः ।
तस्यां क्रूरां मतिं चक्रे धीरोऽपि विलपन् मुहुः ॥ ५४ ॥

राक्षसीं बुद्धिमापन्नं मुञ्च मां मुग्धलोचने ।
हस्तेन मा स्पृशाङ्गारं माणिक्यमणिशङ्कया ॥ ५५ ॥

इत्युत्सङ्गतलाज्जायामवारोप्य रघूत्तमः ।
शाययित्वा मृदौ तल्पे निश्वस्योत्थाय मन्दितः ॥ ५६ ॥

चिन्ताशोकान्धहृदयः सिञ्चन्नश्रुझरैर्वपुः ।
धीरंधीरोऽपि सुचिरं विललापाकुलेन्द्रियः ॥ ५७ ॥

क्वेयं शिरीषमृद्वङ्गी पूर्णगर्भभरालसा ।
क्व वा स्याद्विपिने त्यागः सिंहव्याघ्रनिषेविते ॥ ५८ ॥

पतिव्रतामौलिरत्नमुज्ज्वलं त्यज्यते मया ।
रत्नगर्भे क्षमे धात्रि रक्षेदं त्वद्भवं सदा ॥ ५९ ॥

सर्वलोकक्रिया ये ये पश्यन्ति ज्ञानचक्षुषा ।
वाल्मीकिमुख्यास्ते पान्तु साध्वीमेनां तपोधनाः ॥ ६० ॥

विलप्यैवं बहुविधं बहिर्निर्गत्य लक्ष्मणम् ।
सरथं समुपायान्तं ससुमन्त्रं ददर्श सः ॥ ६१ ॥

मदाज्ञामवलम्ब्यायं समागच्छति लक्ष्मणः ।
अनेनैव रथेनाहं वनं नेष्यामि जानकीम् ॥ ६२ ॥

इति निश्चित्य सौमित्रिमुवाच प्रणतं स्थितम् ।
कुमारेति समाभाष्य सुमन्त्रे शृण्वति प्रभुः ॥ ६३ ॥

आज्ञापयाम्यहं राजा रामस्त्वामनुजं प्रभुः ।
यो निषेधवचो ब्रूयाद्विफलं दण्ड्य एव सः ॥ ६४ ॥

सीतायामग्निशुद्धायामपि दुर्भाग्यतो मम ।
लोकोऽयं सापवादोऽद्य दैवं को वा निवारयेत् ॥ ६५ ॥

इत्यनेनापवादेन सीतां त्यक्तां मयाधुना ।
कुत्रापि विपिने मुञ्च रथेनानेन सत्वरम् ॥ ६६ ॥

इत्यादिश्य महाधीरः श्रीरामः प्राविशत् सभाम् ।
स्वकृत्यकरणे विघ्नः को वीराणां भवेदिह ॥ ६७ ॥

बाष्पस्तम्भितकण्ठौ तौ लक्ष्मणामात्यपुङ्गवौ
प्रतप्तनेत्राम्बुझरैश्चक्रतुस्तत्र दुर्दिनम् ॥ ६८ ॥

ततः प्रबुद्धा वैदेही पार्श्वस्थं वीक्ष्य लक्ष्मणम् ।
सुमन्त्रं च मुदा प्राह मन्दहासमनोहरम् ॥ ६९ ॥

नेतुं मां दण्डकारण्यमानीतः किम रथः ।
इति तस्या वचः श्रुत्वा तयोः प्रचलितं मनः ॥ ७० ॥

आरोह रथमित्येव ताभ्यामुक्ताथ जानकी ।
आरुह्याध्यवसच्चान्द्री लेखेवास्तगिरेस्तटम् ॥ ७१ ॥

अथाश्वांश्चोदयामास सुमन्त्रः साधु वाजितान् ।
अनन्तचिन्ताक्रान्तात्मा हस्तच्युतकशं मुहुः ॥ ७२ ॥

वाल्मीकेर्मुनिवर्यस्य तपोवनसमीपतः ।
प्रचक्रमाते तां त्यक्तुं लक्ष्मणामात्यपुङ्गवौ ॥ ७३ ॥

तामवारोपयत्तस्माद्रथाद्रामानुजः शनैः ।
भूम्यां भूमिसुतां मातः पाहीत्युर्वीं हृदा वदन् ॥ ७४ ॥

तस्यास्तदाक्षि पस्पन्दे दक्षिणं हरिणीदृशः ।
ततस्तौ म्लानवदनौ दृष्ट्वोवाच भयेन सा ॥ ७५ ॥

स्पन्दते लक्ष्मणात्यर्थं मम दक्षिणमीक्षणम् ।
किमिदं भवतोश्चापि लक्ष्यतेम्लानमाननम् ॥ ७६ ॥

इति देव्या वचः श्रुत्वा लक्ष्मणेक्षणशासनात् ।
कृच्छ्रेण घोरं वृत्तान्तं सुमन्त्रस्तां न्यवेदयत् ॥ ७७ ॥

शुद्धाशया सा नृपमन्त्रिणोक्तं श्रुत्वात्मनो घोरजनापवादम् ।
त्यागं च रामेण कृतं सकम्पा पपात वाताभिहतेव रम्भा ॥ ७८ ॥

चिरात् प्रबुध्याश्रुझरं क्षरन्ती भूरेणुपङ्काङ्कितगात्रवल्ली ।
श्रान्ता महागर्भभरेण दीर्घं निश्वस्य मन्दं महितोदतिष्ठत् ॥ ७९ ॥

सौमित्रिमाभाष्य रुदन्तमुच्चैरुवाच साध्वी मिथिलेन्द्रपुत्री ।
इत्थं स वाच्यो भवता मदर्थे भर्ता प्रजानां तव पूर्वजन्मा ॥ ८० ॥

या शैशवे घोरवनं प्रयान्तं दृष्ट्वा प्रियं त्वां पुरतः किलागात् ।
तस्याः शुचेर्गर्भभरालसाङ्ग्यास्त्यागस्त्वया युक्ततरः कुतोऽयम् ॥ ८१ ॥

स्वस्मिन् स्वयं यां पतितां हुताशः पुरा नृपेयं शुचिरित्यदात्ते ।
तस्याः पुनर्मूढजनस्य वाचा त्यागस्त्वया युक्ततरः कुतोऽयम् ॥ ८२ ॥

मत्क्लेशनान्मे त्वयि कोऽपि कोपो नैवावयोरस्ति हि सर्वथैक्यम् ।
दृशि प्रकामं स्वनखक्षतायां तस्मिन् भवेत् कस्य नरेन्द्र कोपः ॥ ८३ ॥

भवद्वियोगे मरणं वरं मे तच्चाप्ययुक्तं तव बीजमार्यम् ।
यतोऽस्ति गर्भे मम हा हतास्मि दैवेन मत्पातकजृम्भितेन ॥ ८४ ॥

अतस्त्वहं पातकनाशनार्थं तपश्चरिष्येऽत्र वने चिराय ।
पतिं भवन्तं सततावियुक्तमवाप्तुकामा सकले भवेऽपि ॥ ८५ ॥

इत्थं स तस्या वचनं तथेति स्वीकृत्य भक्त्या भरतानुजन्मा ।
आर्याज्ञया मत्कृतमेतदागो मातः क्षमस्वेत्यथ तां ननाम ॥ ८६ ॥

कुमार भूयात्तव दीर्घमायुर्धर्मो जयः श्रीः सुयशः सुखं च ।
इति प्रसन्ना तमथानुगृह्य सीता कथञ्चिद्रुदती मुमोच ॥ ८७ ॥

तस्मिन् सुमन्त्रेण सह प्रयाते वीरे सुमित्रातनयेऽतिदूरम् ।
सीता त्वनाथा विपिने वत्तैका चुक्रोश हा हेति नितान्तदीना ॥ ८८ ॥

तदीयमाक्रन्दितमाकलय्य श्रोत्रैर्हरिद्वीपिकिटिद्विपाद्याः ।
चक्रुर्यथाशक्त्युपचारमस्याः पतिव्रतानां महिमा ह्यचिन्त्यः ॥ ८९ ॥

तस्याः पुरस्तत्र तथा रुदन्त्या अथाविरासीदमितप्रभावः ।
वल्मीकजन्मातिकृपाकुलात्मा तपोधनेन्द्रः सकुशाग्रहस्तः ॥ ९० ॥

यस्य स्फुटं वक्ति तपःप्रभावं वाल्मीकिरित्याह्वय एव सर्वम् ।
यो रामवृत्तामृतसेकपूरैर्जगद्वितापं सकलं करोति ॥ ९१ ॥

विलोचनाभ्यामतिविस्तृताभ्यां पीत्वा मुनिं त परिपूर्णभक्तिः ।
शनैः शनैर्गर्भभरेण तान्ता सोत्थाय तत्पादयुगे पपात ॥ ९२ ॥

स तां मुनीन्द्रः करुणाम्बुपूरैः स्वनेत्रजैः शीतलयन्नुवाच ।
तपोबलज्ञातसमस्तलोकवृत्तोऽविषह्योत्कटदुःखपूर्णम् ॥ ९३ ॥

सीते त्वदीयं चरितं समस्तं ज्ञातं मया दिव्यविलोचनेन ।
विमुञ्च शोकं सकलं सुशीले मया सहैवाश्रममेहि वत्से ॥ ९४ ॥

इत्येवमुक्त्वा स्वकरद्वयेन स्वयं समुत्थाप्य तपोधनेन्द्रः ।
आनीय तामाश्रममश्रमेण पत्न्यामवेत्यर्पयति स्म सीताम् ॥ ९५ ॥

निष्कामता निर्गततापता च निर्वैरता यत्र मृगद्विजानाम् ।
तदाश्रमं तस्य मुनीश्वरस्य संप्राप्य सीतातिशुचं मुमोच ॥ ९६ ॥

परमसुखनिदानैर्ब्रह्मतत्त्वोपदेशैर्मुनिकुलवरपत्न्या सादरं सान्त्विता सा ।
सततमखिललोकं राममेवेक्षमाणा पतिविरहविहीना तत्र रेमेऽभिरामे ॥ ९७ ॥

इति श्रीकोच्चुण्णिराजविरचिते
श्रीरामचरितमहाकाव्यपूरणे
उत्तरश्रीरामचरिते
सीतापरित्यागो नाम
पञ्चमः सर्गः

## षष्ठः सर्गः

क्षुभितो जनदुर्वचोभिरेवं व्यतनोत्त्यागमसौ विदेहपुत्र्याः ।
नरलोकपतिः सुरासुराणां मथनैरब्धिरिवोत्कटैः सुधायाः ॥ १ ॥

अथ लक्ष्मणवेदितात्मजायावचनोऽसौ करुणार्द्रमानसोऽभूत् ।
न सतां सततार्द्रमन्तरङ्गं न फलानामिव नालिकेरजानाम् ॥ २ ॥

स कलानिलयोऽखिलाभिरामः सुयशःकान्तिचयः सुवृत्तरम्यः ।
नृवरोऽथ शशीव तत्र रेजे धृतसर्वज्ञशिरोविभूषणश्रीः ॥ ३ ॥

भरतस्य मतिं विशुद्धबुद्धेरनुसर्तुं जनपीडनैकहेतुम् ।
नृपतिर्न चकार राजसूयं हयमेधं च विधातुमुद्यतोऽभूत् ॥ ४ ॥

अथ सर्वगुणोज्ज्वलं महान्तं परिरक्षोद्यतभूरिसैन्ययुक्तम् ।
स हयं विससर्ज हेमभूषापिहितं मूर्तमिव स्वकं प्रतापम् ॥ ५ ॥

कुशचीरजटाधरं तदोद्यद्दिवपाधीशसहस्रतुल्यशोभम् ।
लवणासुरपीडितं मुनीनां शरणं मण्डलमाशु तं प्रपेदे ॥ ६ ॥

ऋषिवर्यगणं स पूजयित्वा कुशलप्रश्नमथाकरोन्नरेन्द्रः ।
नरनाथ जयेति वर्धयित्वा तमृषीन्द्राः पुनरूचुरात्मपीडाम् ॥ ७ ॥

परिपीडयति प्रभो नृपास्मान् लवणाख्यस्त्रिदशारिरुग्रवीर्यः ।
शृणु यद्धततापमास्थिसङ्घो रजतक्ष्माधरमप्यधःकरोति ॥ ८ ॥

इति तापसभाषितं निशम्य प्रबलं तं लवणं प्रति प्रकोपात् ।
क्षतजाधिकशोणदृष्टिरासीदथ शत्रुघ्नमुवाच चान्तिकस्थम् ॥ ९ ॥

अयि वीर सहोदराशु याया लवणं हन्तुमृपीन्द्रनाशहेतुम् ।
दितिजं त्वमितः सहैव सैन्यैस्तिमिरं रश्मिगणैरिवांशुमाली ॥ १० ॥

शुभमग्रजशासनं बली तन्निजशीर्षे स किरीटवद्दधार ।
अभिषेणनलालसोऽथ रामं भरतं तत्र ननाम लक्ष्मणं च ॥ ११ ॥

लवणं दितिजाधमं निहन्तुं स समादत्त धनुः शरं च घोरम् ।
शशिमौलिरिवाद्रिराजचापं हरिबाणं च पुरत्रयक्षयाय ॥ १२ ॥

ऋषयोऽस्य तथाविधं विलोक्य प्रथनोद्योगमथाधिकं ननन्दुः ।
अयि राजकुमारभो यथार्थः खलु शत्रुघ्नसमाह्वयस्तवेति ॥ १३ ॥

अथ तत्र समागमद्विपक्षक्षयदं तच्चतुरङ्गमुग्रसैन्यम् ।
इह येन जितः शुचाश्रुपूर्णो जलराशिः स्फुटमप्यतिर्बभूव ॥ १४ ॥

लवणं विनिहन्तुमात्तशूलं शमनस्यापि न शक्तिरस्ति धीमन् ।
तदमुं जहि सङ्गरे विशूलं नृपपुत्रेत्यवदन्महर्षयस्तम् ॥ १५ ॥

मखवेदिगताग्निसन्निभास्तान् स तथेति प्रणनाम शत्रुहन्ता ।
अथ तेषु गतेषु तापसेषु स्वरथं शोभनमारुरोह वीरः ॥ १६ ॥

प्रणयाकुलितैः स्वपूर्वजातैर्विहिताशीर्वचनः क्षमासुरैश्च ।
स रराज रथे धनुर्विधुन्वन् विपुलं दण्डमिवान्तकोऽन्तकाले ॥ १७ ॥

अथ तं परिवार्य राजपुत्रं नृपसैन्यं तदनन्तमप्रधृष्यम् ।
रुरुचे मथनाय मन्दराख्यं त्रिदशक्षिप्तमिवाम्बुधिर्महाद्रिम् ॥ १८ ॥

रुरुचेऽथ ततिर्महाभटानां घनकालायसकञ्चुकावृतानाम् ।
सृजतां श्रुतिदुस्सहं निनादं जलदानामिव गर्जतां नवानाम् ॥१९॥

असितं करवालमुग्रधारं तरसोद्धृत्य ममार्ज कोऽपि कोशात् ।
स्वकरेण मुहुर्विकारमस्मिन् परिमृज्येव करालतां निनीषुः ॥ २० ॥

अपरस्य भटस्य पीनबाहुश्चलसंस्थः परिघस्तदा चकम्पे ।
अहमस्य भुजेन हा गृहीतः सुदृढं मत्परिणेति किं भयेन ॥ २१ ॥

मरुतोऽतिजवा महातुरङ्गास्तरलाः सिन्धुभवा यथा तरङ्गाः ।
निबभुर्गमनं भवेद्यथेच्छं सुखतो येष्वनुकूलतां गतेषु ॥ २२ ॥

अथ कश्चन तत्र निर्जराणां पथि गन्धर्ववरः समुत्पपात ।
निजनामधरान् सुरालयस्थान् किमु गन्धर्ववरान् रुषा विजेतुम् ॥ २३ ॥

स्वपरं लवणं निजाभयालं विहसत्सैन्धवरत्नमिन्दुशुभ्रम् ।
विजयं मरुतोऽतिदुर्जयस्य स्वगुणैः किश्चन कुर्वदाबभासे ॥ २४ ॥

धरणीतलतोऽश्व सिन्धुनातो द्रुवमुन्प्लुत्य चिरं चचार नाके ।
धृतरश्मिरधःकृताब्जकान्तिस्तुरगः कश्चन सुन्दरः शशीव ॥ २५ ॥

वलभिन्मणिशैलसन्निभानां द्विरदानां निकरोऽधिकं चकाशे ।
इह येन जितो लघुर्घनौघः प्ररुदन् वर्षमिषाद्भ्रमत्यनन्ते ॥ २६ ॥

रिपुभेदनसक्तरक्तबिन्दुभ्रमदं बिन्दुचयं वहन् मुखेन ।
विपुलेन रराज कोऽपि नागस्तरुणार्कांशुमिवोदयाचलेन्द्रः ॥२७॥

मदतोयझरेण सम्प्रसिक्तः शिरसा कुम्भयुगं वहन् निजेन ।
गजराजपदाभिषेकलक्ष्मीं स्पृहणीयां लभते स्म कोऽपि नागः ॥ २८ ॥

रुरुचे प्रकरो महारथानां रभसाकृष्टरणद्गुणोत्कराणाम् ।
इह यच्छरतामवाप्तुकामास्तप उग्रं पवनाशनाश्चरन्ति ॥ २९ ॥

स्वकरेण दधार तत्र चापं पुरुषः कोपि रथी गुणाभिरामम् ।
यमवेक्ष्य मुमोच लज्जयेन्द्रः स्वधनुर्हन्त घने जलौघपूर्ण ॥ ३० ॥

उदभूदपरस्य किङ्किणीनां निनदः कार्मुककर्षणेन रम्यः ।
समशङ्कत यं निशम्य लोको जयलक्ष्मीमणिनूपुरप्रणादम् ॥ ३१ ॥

इति तच्चतुरङ्गयुक्तमुग्रं बलमादाय ययौ नृपानुजन्मा ।
सुखकृत् पवनो ववौ तदानीमनुकूलः प्रणुदन्नमुं ससैन्यम् ॥ ३२ ॥

[युग्मकम्]

गतभङ्गमृदङ्गशङ्खभेरीभवधीरध्वनिरुद्धदिक्कटाहाम् ।
तुरगद्विपपत्तिकस्य नादैरथ घोषैश्च रिपून् विभीषयन्तीम् ॥ ३३ ॥

ध्वजशृङ्गलसच्चलत्पताकाकलितर्षिव्रजहृत्स्थशुङ्निषेधाम् ।
समवाप महाचमूं विकर्षन् स तु वाल्मीकितपोवनस्य पार्श्वम् ॥ ३४ ॥

स्वतपोवनमागत मुनीन्द्रो रघुनाथं सबलं विलोक्य हृष्टः ।
निजभूरितपःप्रभावजातैर्विभवैः सत्कृतवान् नरेन्द्रयोग्यैः ॥ ३५ ॥

तमथर्षिवरो निजाश्रमस्थां मिथिलेन्द्रस्य सुतां रहो बभाषे ।
स निपीय शिवां कथासुधां तां परमं स्वास्थ्यमवाप पूर्णकामः ॥ ३६ ॥

परिपूर्णमनोरथः स यस्यामवसत्तत्र शुभाश्रमे महर्षेः ।
जनकस्य सुता सुखेन तस्यां तनयौ रामसमावसूत रात्र्याम् ॥ ३७ ॥

उषसि श्रुतरामचन्द्रजायासुतसूतिः स सुधाब्धिपूरमग्नः ।
प्रणिपत्य मुनिं तदाज्ञयाथ प्रययौ वैरिपुरं रघुप्रवीरः ॥ ३८ ॥

रथनागपदातिवाजिसंङ्घैर्निबिडेन स्वबलेन संयुतोऽसौ ।
यमुनातटमाप यत्र घोरो लवणस्तापसमण्डलद्विडास्ते ॥ ३९ ॥

अवबुध्य स तापसेन्द्रवाक्यात् पुरतोऽरण्यगतं रिपुं विशूलम् ।
निजदिव्यधनुर्गुणप्रणादैः सकलं लोकमकम्पयत् सपालम् ॥ ४० ॥

सद्यस्तत्नादिकर्माधिककठिनमहापृष्ठमन्थाद्रितीव्रा-
घातोत्थध्वानवृद्धाम्बुधिमथनभवह्रादददायादवर्यैः ।
भेरीशङ्खादिशब्दैः सकलमपि जगत् पूरयामास धीरा
सङ्ग्रामायाह्वयन्ती लवणसुररिपुं कोसलेन्द्रस्य सेना ॥ ४१ ॥

तावत्तद्वाद्यनादप्रतिरसितसखैरट्टहासैस्त्रिलोक-
क्षोभं कुर्वन्नमर्षी मुनिजनरुधिरासिक्तरक्ताखिलाङ्गः ।
उद्धृत्योत्तुङ्गबाहू शिखरयुगधरो गैरिकाम्बुप्रवाही
यस्त्रोत्क्षिप्तपक्षमाभृद्वर इव लवणः सैन्यमभ्यद्रवत्तत् ॥ ४२ ॥

स राघवो घोरतरं वनान्तात् समापतन्तं लवणासुरं तम् ।
दृष्ट्वा विशूलं निशितैः पृषत्कैर्निवारयंस्तीव्ररुषा बभाषे ॥ ४३ ॥

रे रे दुरात्मन् दितिजाधम त्वं निपीतवान् येन महर्षिरक्तम् ।
निरर्गलं तं गलमप्रधृष्यैः शरैः शिताग्रैः शकलीकरोमि ॥ ४४ ॥

ऊचेऽसुरस्तेऽल्पगलं मृणालं छेत्तुं सलज्जो मम बाहुरेषः ।
स्तम्भाकृतिः प्रेरयति प्रकामं कनिष्ठिकायाः शिखरं नखस्य ॥ ४५ ॥

इत्याशु धिक्कृत्य समापतन्तं शरैः सुमित्रातनयोऽसुरं तम् ।
विदारयामास सुरारिनाथः सुदुस्सहं तं हृदयेन मेने ॥ ४६ ॥

विशालमुत्पाट्य भुजेन सालं चिक्षेप सौमित्रिमसौ निहन्तुम् ।
तस्राशुगै राघवसम्प्रयुक्तैः पपात भूम्यां शतधा स भग्नः ॥ ४७ ॥

चिक्षेप कामप्यमितप्रभावां शिलां रिपुं हन्तुमथासुरेन्द्रः ।
अस्त्रेण तां दाशरथिर्विलूय तत्सर्वमर्माणि बिभेद बाणैः ॥ ४८ ॥

शरैः शिताग्रैर्दलिताखिलाङ्गः स रक्तवर्षी त्रिदशारिराजः ।
उद्यम्य बाहुं यमदण्डतुल्यमभ्यद्रवद्राघवमुग्रवीर्यः ॥ ४९ ॥

विलोक्य देवर्षिगणानशेषान् स्वसैनिकांश्च व्यथितांस्तदानीम् ।
ऐन्द्रेण तस्याशु चकर्त कण्ठमस्त्रेण दैत्यस्य रघुप्रवीरः ॥ ५० ॥

अथाभिवृष्टः कुसुमैः स दिव्यै रामानुजस्तत्र भृशं रराज ।
अकारयत्तत्र पुरीं च सद्भिः संसेवनीयां मथुराभिधानाम् ॥ ५१ ॥

तदनु मथुराधीशौ कृत्वा सुबाहुबहुश्रुतौ
निजतनुभवौ शत्रुघ्नोऽसौ महर्षिगणस्तुतः ।
पृथुशुभयशाः प्राप्यायोध्यां प्रणम्य मुहुर्मुहु-
र्दशमुखरिपुं रामं पृष्टः स्वकर्म तदब्रवीत् ॥ ५२ ॥

इति श्रीकोच्चुण्णिराजर्षिरचिते
श्रीरामचरितमहाकाव्यपूरणे
उत्तरश्रीरामचरिते
लवणासुरवधो नाम
षष्ठः सर्गः

# सप्तमः सर्गः

प्राप्तं सुमित्रातनयं हतारिं पौरा जना जानपदाश्च सर्वे ।
मुहुः प्रमोदाश्रुतिरोहितत्वान्नवं नवं वीक्ष्य न तृप्तिमापुः ॥ १ ॥

रामः परिष्वज्य हतर्षिशत्रुं तं कैकयीनन्दनलक्ष्मणौ च ।
ममज्जुरानन्दमहाम्बुराशौ कृतार्थतां च प्रययुः प्रकामम् ॥ २ ॥

युधाजिदभ्यर्थितरामवाक्याद्गन्धर्वराजेन हृतं बलेन ।
राज्यं तदीयं भरतोऽतिवीरः प्रत्याजहारारिगणं निहत्य ॥ ३ ॥

राष्ट्रस्य तस्याम्बुधितीरदेशे विराजमानस्य गुणोज्ज्वलस्य ।
तक्षाह्वयं पुष्कलनामकं च चकार नाथौ स्वसुतौ महात्मा ॥ ४ ॥

कर्मेदमग्रयं भरतो विधाय रामस्य लोकत्रयनायकस्य ।
समीपमासाद्य ननाम भक्त्या पादारविन्दं सकलाभिवन्द्यम् ॥ ५ ॥

गुणोन्नतावङ्गदचक्रकेतू राष्ट्रस्य तारापथनामकस्य ।
चकार नाथौ स्वसुतौ सुमित्रापुत्रो महेन्द्रस्य जितो निहन्ता ॥ ६ ॥

तुरङ्गमेधं विधिवद्विधातुमुद्युक्तमाकर्ण्य रघुप्रवीरम् ।
पौलस्त्यरक्षःकुलधूमकेतुं समाययुस्तत्र जवेन सन्तः ॥ ७ ॥

सुग्रीवतारेयसमीरपुत्रास्त्रिशक्तिसारा इव राघवस्य ।
पुरीमयोध्यां सहसा समेत्य प्रापूरयन् सानुचरा महार्थैः ॥ ८ ॥

सत्रामलैः पुण्यजनैः सदर्थैः सत्रानुकूलैः सहितो महात्मा ।
विभीषणो धर्मभृतां वरिष्ठः समेत्य रामं शिरसा ननाम ॥ ९ ॥

अगस्त्यवाल्मीकिपराशरात्रिधौम्याङ्गिरोगाधिजनारदाद्याः ।
समेत्य रामं जगतामधीशं महर्षयो हर्षमवापुरग्र्यम् ॥ १० ॥

तस्याध्वरे तस्य तु धर्मपत्नी सौवर्णसीताप्रतिमा बभूव ।
तथा ह्यलाभे जगतीश्वराणां कुर्वन्ति तत्तत्प्रतिमां हि सन्तः ॥ ११ ॥

मुक्तस्तुरङ्गोऽथ मखाङ्गभूतः सरक्षिवृन्दः क्षितिनायकेन ।
राष्ट्रेषु नानानृपपालितेषु रम्येषु बभ्राम विनैव सन्धाम् ॥ १२ ॥

रामाज्ञया रक्षितुमन्वगच्छद्धयं स सैन्यैः सह चन्द्रकेतुः ।
येनोर्मिला लक्ष्मणवल्लभाभूद्वीरप्रसूर्गमिशुवेव गौरी ॥ १३ ॥

अथागमत्पुत्रविनाशशोकसमाकुलः कश्चन भूमिदेवः ।
द्वारे पुरो राममभद्रवाक्यैरुच्चैर्विनिन्दन्नधिकं रुदंश्च ॥ १४ ॥

भो राम मान्योऽसि नरेन्द्रमौले कर्मेदमत्यन्तशुभं त्वदीयम् ।
यः कारयस्यद्य मृतस्य सूनोर्मयाम्बुदानं शिशिरेतरास्रैः ॥ १५ ॥

श्रुत्वेति वाक्यं परुषं द्विजस्य स ध्यानमात्रागतपुष्पकस्थः ।
यमालयं शस्त्रधरः प्रतस्थे तनूजमानेतुमिलासुरस्य ॥ १६ ॥

अथाविरासीदशरीरिणी वाक्शम्बूकसंज्ञो वृषलः पृथिव्याम् ।
तपश्चरत्युग्रममुं निहत्य क्ष्मादेवपुत्रं नृप जीवयेति ॥ १७ ॥

निशम्य वाणीमशरीरिणीं तां बभ्राम सर्वत्र स पुष्पकस्थः ।
करेण रामः करवालमुग्रं कृतान्तजिह्वाप्रतिमं विधुन्वन् ॥ १८ ॥

स दण्डकारण्यमवाप्य तत्र धूम्रेक्षणं वृक्षशिखावलम्बम् ।
कमप्यधश्शीर्षमवेक्ष्य धीमांस्तपःस्थितं वाक्यमिदं बभाषे ॥ १९ ॥

को वा भवान् ब्रूहि तपोधनेन्द्र किमर्थमेतच्च तपस्तवेति ।
ऊचे स शूद्रोऽस्म्यहमार्यबुद्धे मोक्षार्थमेतच्च तपो ममेति ॥ २० ॥

अथाब्रवीत्तं रघुवंशनाथः शूद्रं तपः कर्तुमनर्हमाशु ।
वीरः कृपाणेन कृपाविहीनः कृपारसार्द्रो मृतविप्रपुत्रे ॥ २१ ॥

शम्बूकसंज्ञो वृषलस्ततः स दिव्याम्बरालङ्कृतिरूपरम्यः ।
नेपथ्यमाविश्य यथान्यरूपधारी नटस्तत्र तथा रराज ॥ २२ ॥

ततः स नत्वा पुरुषोत्तमं तं मूर्ध्ना लसद्रत्नकिरीटभासा ।
तपःप्रभावोपनतैर्महार्हैः सम्पूज्य नानाविभवैरुवाच ॥ २३ ॥

अद्येश सम्यक्फलितं तपो मे यद्विष्णुनाहं भवता हतोऽस्मि ।
अभ्यर्थनीयं त्रिदशोत्तमानामवाप्तवानस्मि भवत्पदं तत् ॥ २४ ॥

दशाननेनाधिकपीडितानां सम्प्रार्थनान्निर्जरतापसानाम् ।
वंशे रवेः पङ्क्तिरथस्य राज्ञः पुत्रोऽवतीर्णः पुरुषस्त्वमद्य ॥ २५ ॥

यत्सङ्गतः सङ्गतपुण्यपूरा गङ्गा पदं शम्भुशिरः प्रपेदे ।
ते सुन्दरे त्वच्चरणारविन्दे वन्दे मुकुन्देति वदन्नसङ्गः ॥ २६ ॥

सत्सङ्गिता सर्वजनेषु मैत्री निस्सङ्गता निर्मलबोधता च ।
यया भवेत्तां त्वयि भक्तिमेव स्थिरां हृषीकेश वरं वृणे त्वाम् ॥ २७ ॥

तमित्यभिष्टूय तदाज्ञयासौ पुमान् पुनर्दिव्यपदं प्रपेदे ।
स रामभद्रोऽप्यथ दण्डकां तां विलोक्य चिन्तामगमद्दुरन्ताम् ॥ २८ ॥

प्राग्यत्र सत्रा मिथिलेन्द्रपुत्र्या मुदावसं कोमलचारुगात्र्या ।
विनाद्य तां तद्विपिनं कठोरः कथं नु पश्यामि कथं व्रजामि ॥ २९ ॥

यत् काननं मे दयितासखस्य सम्प्रीणनं नन्दनवत् पुराभूत् ।
घोरासिपत्रप्रतिमं तदद्य सङ्क्लेशनं नाशितवल्लभस्य ॥ ३० ॥

सेयं स्थली यत्र सुखोपविष्टः प्रियान्वितोऽपश्यमशेषदृश्यम् ।
नृत्तं मुहुर्यस्य मुदा स एव विभाति सोल्लासमयं मयूरः ॥ ३१ ॥

यया तु वासन्त्यभिधानया यत्परिष्कृतं नित्यमभून्मदर्थे ।
सख्या प्रियायास्तदिदं निकुञ्जं सेयं सुशीला वनदेवता च ॥ ३२ ॥

अजानतीं राममथातिकार्श्यात्तां बोधयामास वचस्तदीयम् ।
वासन्ति रामस्य महापराधं साध्वि क्षमस्वोग्रतरं ममेति ॥ ३३ ॥

क्षमापयन्तं रघुपुङ्गवं तं रुषा बभाषे वनदेवता सा ।
क्षमेत का गर्भभरालसाङ्ग्यास्त्यागं शुचे राघव धर्मपत्न्याः ॥ ३४ ॥

या शैशवे घोरवनं प्रयान्तं दृष्ट्वा प्रियं त्वां पुरतः किलागात् ।
जायां प्रियां गर्भभरातिखिन्नां तां कस्त्यजेन्निष्कृपमग्निशुद्धाम् ॥ ३५ ॥

उद्वेयजन् सज्जनमानसानि प्रभो भवान् दुर्जनरञ्जनार्थम् ।
यत्त्यक्तवांस्तां मिथिलेन्द्रपुत्रीं ततो यशो वा तव दुर्यशो वा ॥ ३६ ॥

तदीयदुर्भाषितकालकूटप्रबाधया प्राप्तविवर्णभावः ।
तां रोषशोकक्षुभितामुवाच चूडामणिर्व्योममणेः कुलस्य ॥ ३७ ॥

ननोऽत्र लङ्काभववह्निशुद्धौ विश्वासहीनः सखि सापवादः ।
तस्यामहं किन्चितरत् करोमि वंशे विशुद्धे महति प्रसूतः ॥ ३८ ॥

श्रुत्वा वचस्तस्य महार्थयुक्तं यथार्थमेवं रघुनायकस्य ।
पुनर्बभाषे मिथिलेन्द्रपुत्रीसखी सशोकं वनदेवता सा ॥ ३९ ॥

मदाश्रयेऽस्मिन् विपिने मनोज्ञे सति प्रभो कुत्र च नातिदूरे ।
भयङ्करे हन्त सखीं प्रियां मे विमुक्तवान्निष्करुणः कुतस्त्वम् ॥ ४० ॥

इतीरयित्वाश्रुझरं किरन्तीं तां निःश्वसन्तीं स नृलोकनाथः ।
स्वपारवश्येन कृपाकुलां तां कुर्वन् बभाषे विदुषां वरिष्ठः ॥ ४१ ॥

ज्ञात्वा मया तां त्वदरण्यमुक्तां वदेज्जनोऽयं मम दुर्यशांसि ।
या वह्निशुद्धा किल तां न रामस्तत्याज गूढं विपिनेऽवतीति ॥ ४२ ॥

आरब्धयागोऽस्म्यहमद्य तस्माद् गन्तुं शुभे मे वितराम्यनुज्ञाम् ।
इति ब्रुवन्तं तमुवाच भूयः सरोषशोकं वनदेवता सा ॥ ४३ ॥

अन्या किं वा त्वयोढा बत न हि न हि का तेऽध्वरे धर्मपत्नी
 सीता त्यक्ता न किं वा जनवचनभयात् साधु देवी विमुक्ता ।
सीतान्या वर्तते किं नरवर सविधे तावके वर्तते का
 नैषा तस्या अभावात् कनकविरचिता शोभनं सर्वमेतत् ॥ ४४ ॥

याहि याहि दयितां कमकाङ्क्षीं सा हि भो हितकरी तव मान्या ।
देहि देहि मखभुग्जनतृप्तिं पाहि पाहि जगदेतदशेषम् ॥ ४५ ॥

इति प्रहर्षस्रवदस्रपूरसंसिक्तगात्र्या वनदेवतायाः ।
निशम्य वाचं स रघुप्रवीरः कुबेरयानेन ययावयोध्याम् ॥ ४६ ॥

रामः पुरं स्वं तरसा प्रविश्य सजीवपुत्रस्य धरासुरस्य ।
पादौ सभार्यां प्रणिपत्य भक्त्या कृताञ्जलिस्तस्य पुरःस्थितोऽभूत् ॥ ४७ ॥

स्वपरुषवचनानि प्राक्प्रयुक्तानि शुद्धः
　　स तु मुहुरपि विप्रः संस्मरंस्तापमाप ।
शितशरमिह मौर्वीसप्रयुक्तं रसज्ञा-
　　गलितमपि दुरुक्तं सम्प्रयाति ह्यभेदम्　　॥ ४८ ॥

समर्थाः सन्त्रातुं परुषमृगचोरादिनिकरा-
　　द्भवन्ति क्ष्मापाला जगति बहवः पार्थिवगणे ।
कृतान्ताद्रक्षन्तं मम शिशुममुं त्वां बलभरा-
　　दसामान्यं मन्ये परमिति नुतस्तेन स बभौ　　॥ ५९ ॥

इति श्रीकोच्चुण्णिराजविरचिते
श्रीरामचरितमहाकाव्यपूरणे
उत्तरश्रीरामचरिते
शम्बूकवधो नाम
सप्तम सर्गः



# अष्टमः सर्गः

तत्राश्वमेधमखमान्यसभान्तराले रामस्तमःप्रशमनः शुचिरूर्जितश्रीः ।
सत्राशनप्रकरतृप्तिकरोऽतिमात्रं रेजे कृशानुरिव दुष्प्रसहप्रतापः ॥ १ ॥

शत्रुघ्नरावणिरिपू भरतोऽर्कपुत्रस्तारेयवायुतनयौ रजनीचरेन्द्रः ।
ते सप्त तस्य रघुनायकपावकस्य ज्वाला इवातिमहसा सहिता विरेजुः ॥ २ ॥

राजत्समुन्नतजटाजिनचीरमौञ्जीयज्ञोपवीतजलपात्रकुशाक्षमालाः ।
श्रीरामवह्निमभितो विमला मुनीन्द्रा होमादिकर्मनिरताः प्रचकाशिरे ते ॥ ३ ॥

मन्त्रीश्वराः सदसि जानपदाः सपौरास्ते भेजिरे नरपतिप्रवरं यथार्हम् ।
शत्रुघ्न इत्थमवदत् सकलेष्वथैषु शृण्वत्सु शोभनतरादिकवीप्सितज्ञः ॥ ४ ॥

वाल्मीकिशिष्यतिलकौ नृपबालकौ द्वौ
विद्यासु साधु कुशलौ च कुशीलवौ च ।
अत्रागतौ तव महोत्सवमग्रयशोभ-
मालोकितुं कुशलवावतिसुन्दराङ्गौ ॥ ५ ॥

सर्वप्रकारमधुरं कृतिमुद्गिरन्तौ कस्याप्यदःपुरवरे चरतः सुरागैः ।
यन्नादमाप्तुमिव माधव एव नूत्नपर्णाशनाः परभृता रतिमुद्वहन्ति ॥ ६ ॥

त्वं द्रष्टुमर्हसि तयोर्मधुरं शरीरं सल्लक्षणैररहितं महितं महद्भिः ।
गानं समस्तजनकर्णसुधायमानं श्रोतुं च मान्यसदसीह महीन्द्रमौले ॥ ७ ॥

शत्रुघ्नभाषितमिदं स निशम्य सम्राडानीतवान् कुशलवावथ तौ कुमारौ ।
सम्प्राप्य तौ रघुवरस्य सभां महद्भिरध्यासितां सपदि नेमतुरादरेण ॥ ८ ॥

एतौ वसन्तमदनावनिलानलौ किं
स्नेहोऽनयोर्मम महान् प्रसरत्यदः किम् ।
इत्येवमुत्सुकतयाऽऽकुलचित्तवृत्तिः
पप्रच्छ तौ कुशलवौ नरलोकनाथः ॥ ९ ॥

कौ वां कृतातिसुकृतौ पितरौ कुमारावित्यादरेण सदसि क्षितिपेन पृष्टौ ।
तावूचतुर्न पितृबोधयुतौ नृपावां मन्यावहे पितरमादिकविं गुरुं च ॥ १० ॥

तत्र स्थिताविति निगद्य जना मुहुस्तावालोक्य रामसदृशौ सकलैश्च भावैः ।
सीतासुतौ किमिति संशयमुद्गिरद्भिर्नेत्रैः परस्परमथो ददृशुः प्रफुल्लैः ॥ ११ ॥

राजाज्ञया सदसि तावथ मङ्गलश्री-
रामायणस्य मधुराद्भुतदिव्यगानैः ।
मोदामृताम्बुनिधिपूरनितान्तमग्ना-
स्तब्धान् जनानकुरुतामखिलान् सलीलम् ॥ १२ ॥

तद्गीतमात्मचरितं स निशम्य काव्य-
माजानकीवनविमुक्तिकथं महीन्द्रः ।
तत्तत्त्वबोधकुतुकादथ पर्यपृच्छत्
काव्यस्य को रचयितास्य पुमानितीति ॥ १३ ॥

कर्तास्य काव्यतिलकस्य महार्थदस्य
वाल्मीकिरित्यथ तयोर्वचनं निशम्य ।
सम्माननं धनदुकूलविभूषणाद्यैः
कृत्वा ददौ रघुपतिर्गमनाभ्यनुज्ञाम् ॥ १४ ॥

वाल्मीकितापसवरं रहसि स्थितं तं तत्रोपसृत्य नृपतिः स्वहृदि प्ररूढम् ।
पप्रच्छ संशयमशेषमगाधबोधः सर्वं स योग्यकथयच्चरितं यथावत् ॥ १५ ॥

गङ्गेव या सकलपावनतां प्रपन्ना
सा जानकी कुशलवौ सुषुवे सुतौ ते ।
यः पीड्यतेऽत्र तु रुजा विचिकित्सया तं
कल्यं करोमि सहसाद्य चिकित्सयाहम् ॥ १६ ॥

एवं स तापसवरः क्षितिनाथमुक्त्वा
सीतां निजाश्रमपदादथ शिष्यवर्गैः ।
आनीय तत्सहित एव सभां नृपस्य
मान्यैर्जनैः परिवृतां प्रविवेश सद्यः ॥ १७ ॥

तद्दृष्टिपातचकितानतिदूरयातान्
पश्यन् स पौरनिकरानवसत् सभायाम् ।
रामश्चिकीर्षितममुष्य तपोधनस्य
किं स्यात् प्रभोरिति मुहुर्विमृशन् स्वबुध्या ॥ १८ ॥

सुधांशुलेखेव नितान्तरम्या तेजोमयी वायुसुहृच्छिखेव ।
निजाङ्गमात्राभरणा नदीव ग्रीष्मेण याता नियमेन कार्श्यम् ॥ १९ ॥

स्वयंकृतात्प्राग्ज्वलनप्रवेशात्तत्कुङ्कुमाभारुणहेतिवृन्दम् ।
गात्रे स्वके सक्तमिवादधाना काषायवस्त्रं विधृतैकवेणिः ॥ २० ॥

आनम्रशीर्षा जनकस्य पुत्री तस्यां सभायां रघुनायकस्य ।
अरुन्धतीवाखिलपूज्यमाना पतिव्रतानां प्रवरा रराज ॥ २१ ॥

उवाच तां तत्र स तापसेन्द्रः कल्याणि सीते विमले सुशीले ।
स्वं मण्डनं साध्वि पतिव्रतात्वं जनानिमान् सम्प्रति दर्शयेति ॥ २२ ॥

सा तत्सभायां मुनिनायकाज्ञां स्वीकृत्य तच्छिष्यवरोपनीतम् ।
तोयं समाचम्य गिरं सतीमामुदीरयामास विशुद्धभावा ॥ २३ ॥

रागश्च भक्तिश्च यथास्ति रामे ममायपुत्रे न च तत्परत्र ।
तथाद्य मामम्ब धरित्रि नाथे त्वदन्तरं देवि जवान्नयेति ॥ २४ ॥

अथाविरासीद्धरणीं विभिद्य दूर्वादलश्यामलकोमलाङ्गी ।
भोगीन्द्ररत्नावलिमण्डनोद्यत्फणासना काचन दिव्यनारी ॥ २५ ॥

सा तां भुजाभ्यां परमाद्भुतश्रीरादाय सीतां महतां समक्षम् ।
मा मेति रामे वदति प्रकामं जवाद्धरित्र्यन्तरमाविवेश ॥ २६ ॥

[युग्मकम्]

अत्यद्भुतं तत् प्रसमीक्ष्य सर्वे जना नितान्तं विवशा बभूवुः ।
शोकेन केचित् परमाद्भुतेन केचिन्महाभक्तिभरेण केचित् ॥ २७ ॥

केचित् प्रहर्षेण भयेन केचित् खलेषु रोषेण जुगुप्सयान्ये ।
हासेन मूढेष्वपरेऽनुतापभरेण लज्जातिशयेन केचित् ॥ २८ ॥

रामस्तु राजा स्वकधर्मपत्न्या हर्त्रीमनादृत्य निजं निषेधम् ।
क्षमां निहन्तुं क्षमया विहीनः कृपाणमादत्त कृपां विमुच्य ॥ २९ ॥

वसिष्ठवाक्यैः परिसान्त्वितः स प्रेम स्वजायाविषयँ नरेन्द्रः ।
तत्पुत्रयोर्भूरितरं चकार कुशे लवे चाथ कुशाग्रबुद्धिः ॥ ३० ॥

अथाश्वमेधे विधिवत् समाप्ते तस्मिन् स सुग्रीवविभीषणादीन् ।
सम्पूज्य बन्धून् विभवैर्यथार्हमन्यांश्च सर्वान् विससर्ज मान्यान् ॥ ३१ ॥

पुनश्च यागानपरान् प्रभूतान् सुदक्षिणाहर्षितविप्रसङ्घान् ।
स राजमौलिर्विधिवच्चकार पीना अभूवन्नखिलाः सुरा यैः ॥ ३२ ॥

अनन्तकीर्तेर्हतदुर्जनस्य तस्यान्तिकं स्थापितधर्मभूम्नः ।
वैकुण्ठयानावसरं विवक्षुर्विप्राकृतिर्दण्डभृदाजगाम ॥ ३३ ॥

निगूढसंलापपराय तस्मै स प्रति श्रुत्य समादिदेश ।
अन्तर्गृहं न प्रविशेद्यथान्यो द्वारं तथा लक्ष्मण पालय त्वम् ॥ ३४ ॥

अवेहि कश्चित् प्रविशेद्यदीह गमिष्यसि त्वं मम वध्यभावम् ।
इत्यग्रजाज्ञां प्रतिगृह्य वीरस्तस्थौ स तद्वारि समाहितात्मा ॥ ३५ ॥

स तावदालोकयदग्रदेशे दुर्वाससं वह्निमिव ज्वलन्तम् ।
सहस्रवर्षं विधिवत् समाधिं कृत्वोत्थितं किञ्चन भोक्तुकामम् ॥ ३६ ॥

अथात्रिपुत्रस्तरसोपसृत्य जगाद सौमित्रिमतित्वरावान् ।
अत्रागतं मां नृपतेः समिपं रामस्य गत्वा त्वरितं वदेति ॥ ३७ ॥

सौमित्रिराकर्ण्य वचस्तदूचे रामस्य कार्यान्तरसक्ततां ताम् ।
घोरां प्रतिज्ञां च ततोऽतिकोपाज्जज्वाल योगी स घृतादिवाग्निः ॥ ३८ ॥

पुनस्तमूचे स मुहुर्नमन्तमत्रागतं मां वद भूपमाशु ।
नो चेद्भवन्तं सकुलं सबन्धुं कोपानलेऽहं शलभीकरिष्ये ॥ ३९ ॥

इति ब्रुवत्यत्रिसुते मुनीन्द्रे त्रस्तः सुमित्रातनयो व्यचिन्तीत् ।
नाशो ममैवास्तु महत् कुलं मे मा भूत् पुनः शापहतं बतेति ॥ ४० ॥

सोऽन्तः प्रविष्टोऽथ ददर्श रामं शृण्वन्तमारात् स्थितमादरेण ।
पितामहप्रेरणयात्मलोकप्रयाणकालं मुनिकथ्यमानम् ॥ ४१ ॥

रामं प्रणम्यागतमत्रिपुत्रं निवेद्य सौमित्रिरुदारबुद्धिः ।
ततोऽपचक्राम तपस्विवेषधारी स कालोऽपि कृतात्मकृत्यः ॥ ४२ ॥

अथार्घ्यपाद्यादिभिरादरेण सम्पूज्य दुर्वाससमाशु रामः ।
यथेष्टमन्नं प्रददौ विशुद्धं भुक्त्वा स चाथ प्रययौ प्रहृष्टः ॥ ४३ ॥

अथ स्थित लक्ष्मणमग्रभागे न शक्नुवन् द्रष्टुमपि प्रहृष्टम् ।
उपप्लुतश्चन्द्र इवोत्कटाधिग्रस्तोऽभवत्तत्र स रामचन्द्रः ॥ ४४ ॥

सौमित्रिरुग्रप्रलयार्कतापाच्छुष्यन्तमम्भोधिमिवाग्रजं तम् ।
दृष्ट्वा प्रहृष्टोऽभ्यवदत् प्रभो मां हत्वा प्रतिज्ञां परिपालयेति ॥ ४५ ॥

धीरोऽपि रामः प्ररुदन्नथोच्चैः सद्यो वसिष्ठप्रमुखान् मुनीन्द्रान् ।
आनाय्य भृत्यैर्भरतं च सर्वान् निजामवस्थामवदत् समस्ताम् ॥ ४६ ॥

अथाखिलेषूग्रशुचाकुलेषु कर्तव्यतानिर्णयमप्रयात्सु ।
पुरोहितो भूमिपतिं वसिष्ठः कर्तव्यमूचे विदुषां वरिष्ठः ॥ ४७ ॥

धीमन् प्रतिज्ञा खलु पालनीया सुहृन्न वध्यश्च नरेन्द्रमौले ।
त्यागो वधः स्यात् सुहृदां न वादस्त्यज्यतां लक्ष्मण एष सद्यः ॥ ४८ ॥

इत्युक्तवत्यार्यमतौ वसिष्ठे रामे च चिन्ताविवशे समौने ।
सौमित्रिरुज्झित्य गृहादि सर्वं सद्यः सरय्वाः पुलिनं जगाम ॥ ४९ ॥

जितासनस्तत्र कृतासनस्सन् प्राणान्नियम्याद्भुतयोगशक्त्या ।
ध्यायन् दृढं रामपदारविन्दं देहं विसृज्यात्मपदं प्रपेदे ॥ ५० ॥

निशम्य तां योगगतिं सुमितापुत्रस्य मुख्यस्य सुहृत्तमानाम् ।
ततोऽनुगन्तुं तमियेष रामः सुहृद्वियोगो हि सतां न सह्यः ॥ ५१ ॥

कुशे लवे चात्मजयोः स राज्यं समार्पयत् कालमतानुसारी ।
नेयेष शक्तोऽपि रघुप्रवीरः कालं समुल्लङ्घयितुं महात्मा ॥ ५२ ॥

विज्ञाय रामस्य सुनिश्चयं तं तस्यानुयात्रां भरतश्चिकीर्षुः ।
शत्रुघ्नसुग्रीवविभीषणादींस्तद्बोधयामास नृपस्य वृत्तम् ॥ ५३ ॥

ते दूतवाक्यैरवगम्य रामं स्वर्यातुकामं कृतसर्वकृत्याः ।
स्वं स्वं तदर्हेषु समर्प्य राज्यं समाययुस्तं तरसानुगन्तुम् ॥ ५४ ॥

स्वानुप्रयाणाय समागतांस्तानालोक्य हृष्टानभिनन्द्य रामः ।
विभीषणं राक्षससार्वभौमं भक्तं हनूमन्तमपीदमूचे ॥ ५५ ॥

दिश्युत्तरस्यामपि दक्षिणस्यामेतस्य वर्षस्य सतां वरिष्ठौ ।
युवां चिरं तिष्ठतमप्रकम्प्यौ धर्मस्य पादाविव पूरुषस्य ॥ ५६ ॥

यशस्स्वरूपस्य ममावियोगात् सुनिर्भरः स्याद्भवतोः प्रमोदः ।
तावूहतुः शासनमीश्वरस्य प्रसादवद्भक्तिनतोत्तमाङ्गौ ॥ ५७ ॥

ततः पुरोधा रघुनायकस्य विज्ञाय भावं भगवान् वसिष्ठः ।
वैकुण्ठयानोचितमस्य कर्म निर्वर्त्य सर्वं पुरतः प्रतस्थे ॥ ५८ ॥

सद्ब्रह्मघोषैः परिपूरिताशे ततः प्रयाते द्विजवर्यसङ्घे ।
जगाम रामः सह भृत्यमित्रैः सर्वैः प्रहृष्टैः सरयूं स्रवन्तीम् ॥ ५९ ॥

युक्तः स भक्तैर्विरराज गच्छन् भ्रात्रोस्तयोर्मध्यगतः स रामः ।
शङ्खस्य चक्रस्य च मध्यवर्ती शार्ङ्गीव देवैः सहितः समस्तैः ॥ ६० ॥

अथ त्रिलोकैकपतेः स्वलोकप्रयाणदिव्योत्सवमादरेण ।
मर्त्या अमर्त्यैः सह घोषयन्तो हृद्यानि वाद्यानि मुहुर्निजघ्नुः ॥ ६१ ॥

अथोदतिष्ठज्जयशब्द उच्चैर्मुहुर्नमश्शब्दयुतः सुराणाम् ।
भक्तिप्रमोदप्रभवाश्रुपूरैः सहापतच्चाद्भुतपुष्पवृष्टिः ॥ ६२ ॥

ह्रदं विवेशाथ हरिः सरय्वा रामः स्वभक्तैः सह निर्जरांशैः ।
पुनश्च तैः स्वीकृतदिव्यरूपैः स्वरूपमास्थाय ययौ स्वलोकम् ॥ ६३ ॥

त्रैलोक्यं परिपालित दशमुखत्रस्तं समस्तं त्वया
कीर्तिः कल्पलताथवा सुरसरित् सर्वत्र च स्थापिता ।
विष्णो राम नमो नमो जयजयेत्युच्चैर्मुहुस्तुष्टुवु-
र्वैकुण्ठं प्रति केशवाकृतिधरं यान्तं प्रभुं ते सुराः ॥ ६४ ॥

सरसिजनयनस्य राममूर्तेश्चरितमिदं पठितं श्रुतं स्मृतं वा ।
कलिशमलजयं करिष्यति द्राक् सकलजनस्य तथा यथाम्बु गाङ्गम् ॥ ६५ ॥

इक्कावाख्यमहीश्वरीप्रियसुतः कुञ्जुण्णिधात्रीपतेः
शिष्यः शम्भुसुताङ्घ्रिपद्ममधुपः कोच्चुण्णिनामास्ति यः ।
एतत् पश्चिमसागराधिपतिना तेनोत्तरं निर्मितं
भूयात् सच्छ्रवणेषु रामचरितं प्रीत्यै च काल्याः शुभम् ॥ ६६ ॥

इति श्रीकोच्चुण्णिराजविरचिते
श्रीरामचरितमहाकाव्यपूरणे
उत्तरश्रीरामचरिते
रामनिजधामगमनं नाम
अष्टमः सर्गः

इति श्रीरामचरितं समाप्तम्



# श्लोकशुद्धिपत्रम्

| पृष्ठसङ्ख्या | श्लोकसङ्ख्या | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| 17 | ८१ | घृत | धृत |
| 44 | २ | अशेषकर्ता | अशेषकर्त्री |
| 50 | २७ | पष | एष |
| 54 | ४२ | पोषणाम् | पोषणम् |
| 55 | ४६ | प्रसुप्तया | प्रसृप्तया |
| 56 | ४९ | जावाद | जवाद् |
| | | यापिताः | यापितः |
| 61 | ७१ | समुत | समुद्द्रुत |
| | ७३ | सति | सती |
| 62 | ७६ | त्रिलोचनो | विलोचनो |
| 65 | ९१ | तथा | प्तया |
| 70 | ११ | रुहापणाद् | रुहार्पणाद् |
| 71 | १३ | बहुल | बकुल |
| 75 | २९ | प्रियः | प्रियैः |
| 84 | ६४ | कसल | कमल |
| 90 | ८४ | करीररशरीरम् | करीरशरीरम् |
| 97 | ३ | विशङ्किकित | विशङ्कित |
| 98 | ६ | प्रसूनैः | प्रसूतैः |
| I12 | ४४ | अतर्प्सीत् | अताप्सीत् |
| 132 | ६ | पत्यै | पत्यौ |
| 135 | १६ | दीपान्यासन् | दीप्तान्यासन् |
| 157 | ९३ | अभ्रमाण्डे | अभ्रभाण्डे |
| I61 | ३ | धावल्ये | धावल्यं |

| | | | |
|---|---|---|---|
| 163 | १० | सैव त्वं | सैव त्वां |
| 172 | ४२ | आसान्न | आसन्न |
| 175 | ५२ | विधाय | पिधाय |
| | | गोपायेत्ययम् | गोपायत्ययम् |
| 179 | ६७ | सम्भ्रान्ता | सम्पर्कं |
| 195 | २३ | सर्वा . . न् | सर्वान् |
| 196 | २९ | सुतः | सुताः |
| 208 | ८७ | राज्ञी | राज्ञि |
| 233 | ६० | रवेविन्ध्यः | रवेर्विन्ध्यः |
| 251 | ४१ | कायः | कार्यः |
| 267 | ३ | निरस्यदयं | निरस्तदयं |
| | | उच्चितत‌छच्चुति | उच्छ्रितत‌च्छुति |
| 268 | ४ | शृङ्गशिव | शृङ्गमिव |
| 281 | ४७ | साधारणे | साधारणं |
| | ४८ | सार्थैक | स्वार्थैक |
| 282 | ५१ | ग्राहकम् | ग्राहकस्- |
| 304 | ४४ | विसारिणो | विसारिणौ |
| 305 | ४७ | दृष्टरधरो | दृष्टेरधरो |
| 308 | ५९ | दर | पर |
| 310 | ६४ | कोमलध्य | कोमलमध्य |
| 334 | १७ | मतिर्न | भीतिर्न |
| 347 | ४२ | नवोन्नव | नवोन्नम |
| | ४५ | दावाग्निशिखं | दावाग्निशिखां |
| 348 | ४९ | तं | तां |
| | ५० | त्वं कासि | त्वं क्वासि |
| 349 | ६० | शरीरादपि | शरीरादति |
| 354 | ९७ | पदस्याज्ञया | पदस्थाशयः |
| 357 | २५ | शरणं | चरणं |
| | २७ | भूमिजाम् | भूमिजान् |

